ततस् तम् अक्षोभ्य-बलं राक्षसा[1]ऽधिपतिं चराः ।[2]
N] सु-वेले राघवं शैले नि-विष्टं प्रत्य्-अवेदयन् ॥१॥ [१
चारेभ्यो रावणः श्रुत्वा प्राऽऽप्तं रामं महा-बलम् ।
१] जाताऽऽ[3]त्रासोऽभवत् किं-चित् सचिवांश् चेदम् अब्रवीत् २ [२
श्री-मन्तो मन्त्रिणोऽभ्य्-आशे ममाऽऽयान्तु समा-हिताः ।
N] आ-सन्नो मन्त्र-[4]कालो हि[4] सम्प्राऽऽप्ता रिपवो मम ॥३॥ [३
तस्य तच् छासनं श्रुत्वा मन्त्रिणोऽभ्या-गता द्रुतम् । [४पू
२] शिरसा तं प्र-णम्याऽथ तस्थुः प्राऽञ्जलयोऽग्र-तः ॥४॥ [N
ततः स मन्त्रयामास सचिवैस् सह रावणः । [४उ
N] मन्त्रयित्वा च दुर्-धर्षः क्षमं यत् सम्-अनन्तरम् ।
४उ] वि-सर्जयित्वा सचिवान् आ-विवेश स्वम् आ-लयम् ॥५॥ [५
ततो राक्षसम् आ-नाय्य विद्युज्-जिह्वं महा-बलम् ।
५] मायाविनं महा-घोरम् अब्रवीद् राक्षसाऽधिपः ॥[5]६॥[6] [६
६उ] मोहयिष्यामहे सीतां मायया जनकाऽऽत्मजाम् । [७उ
माया-मयं राम-शिरो गृहीत्वा [7]राक्षस [7]क्षणात् ।[8]
७] मां त्वं सम[9]नु-तिष्ठेथा महच् च स-शरं धनुः ॥७॥[10] [८
९पू] तस्मै तुष्टोऽभवद् राजा प्र-ददाव् अथ भूषणम् ।
८पू] एवम् उक्तस् तथेत्य् आह विद्युज्-जिह्वो निशा-[11]चरः ॥८॥[12] [९

---

१. रा२ फ-लंकाधिपतये । २. म-नास्ति ॥ ३. प्र रा२ फ-जातत्रासो० ॥ ४. रा२ फ-०कालोऽयं ॥ ५. रा१ ल१ ल२ ब अ प्र-महाघोरं प्रविश्याथ न्यवसद् यत्र मैथिली । ६. अतः परमधिकः पाठः—रा१ल१ल२ब अ प्र म-विद्युज्जिह्वं तदानीं स प्राब्रवीद् राक्षसेश्वरः ॥ ७. रा२ फ-राक्षसाऽद्भुतं । ८. म-नास्ति ॥ ९. फ-समुपति० । १०. अतः परमधिकः पाठः—रा२ फ-संप्रहृष्टो विवेशाथ अशोकवनिकां शुभां । ११. रा२ फ-महाबलः । १२. म-नास्ति ॥

ततो दीनाम् अ-दीनाऽङ्गीं ददर्श धनदाऽनुजः । [११पू
१०] चिन्तयन्तीं स्व-[1]भर्तारम् अशोक-वनिकां गताम् ।
उपाऽऽस्यमाना घोराभी राक्षसीभिर् अदूर-तः ॥९॥ [१२
११] उप-सृत्य ततः सीतां प्र[3]-हर्ष[3] नाम पूरयन्[3] ।[2]
इदं च वचनं हृष्ट उवाच जनकाऽऽत्मजाम् । [१६
१२] अधो-मुखीं स्थितां बालाम् उर्द्ध[4]-आसीनां पराङ्-मुखीम् १० [११उ
सान्त्व्यमाना मया भद्रे मां[5] मेति प्रति-जल्पसि[5] ।
१५] खर-हन्ता स ते भर्ता राघवः सम्-अरे हतः ॥११॥ [१७
छिन्नं ते सर्व-था मूलं दर्पस् ते नि-हतो मया ।
१६] व्य्-असनेनाऽऽत्मनः सीते [6]मम भार्या भविष्यसि[6] ॥१२॥ [१८
N] अल्प-पुण्ये निवृत्ताऽर्थे मूढे पण्डित-मानिनि ।[6]
१८उ] शृणु[6] भर्तुर् वधं सीते[6] घोरं वृत्र-वधं यथा ॥१३॥ [२०
उपाऽऽगतः समुद्राऽन्ते मां हन्तुं किल राघवः ।
१९] वानरेन्द्र-प्रणीतेन बलेन महता वृतः ॥१४॥ [२१
सन्नि-विष्टः सम्-उद्रस्य तीरम् आ-साद्य दक्षिणम् ।
२०] बलेन महता रामो व्रजत्य् अस्तं दिवा-करे ॥१५॥ [२२
अथाऽध्वनि[7] परि-श्रान्तम् अर्ध-रात्रे स्थितं बलम् ।
२१] सुख-सुप्तं समा-साद्य चारितं प्रथमं चरैः ॥१६॥ [२३
तत् प्रहस्त-प्रणीतेन बलेन महता मम ।
२२] बलम् अभ्या-हतं रात्रौ यत्र राजा स राघवः ॥१७॥ [२४
पट्टिशाः[8] परि-घाश्[8] चैव गदा दण्डा[9] महाऽऽयसाः[10] ।

---

१. प्र रा₂फ-भर्तारमनुध्यायन्तीं। २. म-नास्ति ॥ ३. रा₂फ-हृष्टेनांतरात्मना। ४. रा₁ ल₁ ल₂ अ-उपासीनां । रा₂ फ म-उपविष्टां ॥ ५. प्र-मा मामिति प्रज० । रा₂ फ म-यमाश्रित्य प्रज० ॥ ६. म-नास्ति ॥ ७. म-यथाध्वनः ॥ ८. रा₂ फ-०शान् परिघांश् । ९. रा₂ फ-०दण्डान् । १०. रा₂-महाजवान् ॥

२३] बाण-जालानि शूलानि भास्वराः[1] कूट-मुद्गराः[1] ॥१८॥ [२५
N] शक्ती(?)श् च तोमराश् चित्रां(?त्रा)श् चर्माणि[2] मुसुलानि च ।
उद्-यम्योद्-यम्य रक्षोभिर् वानरेषु[3] नि-पातिताः ॥१९॥ [२६
२५] अथ सुप्तस्य रामस्य प्र-हस्तेन प्र-माथिना ।
अ-सकृत् कृत-हस्तेन शिरश् छिन्नं महाऽसिना[4] ॥२०॥ [२७
२६] उत्[5]-पतंस् ताडितः[5] पृष्ठे नि-पतंश् च यद्-ऋच्छया ।
२७पू] दिशं वि[6]प्र-द्रुतः पूर्वां[7] लक्ष्मणः प्लव-गैः सह ॥२१॥ [२८
सु-ग्रीवो ग्रीवया शान्तो भग्नयाँ प्लवगाऽधिपः ।
२८] निरस्त-हनुर् आ-काशे हनु-मान् राक्षसैर् हतः ॥२२॥ [२९
इन्द्रजानु-सुजानुभ्यां जानुभ्यां पातितो[8] भुवि ।
२९] पट्टिशैर् बहु-धा[9] छिन्नः पतितः पाद-पो यथा ॥२३॥ [३०
मैन्दश् च द्वि-विदश् चोभौ नि-हतौ वानरौ रणे ।
३०] प्र-ध्वंसन्तौ[10] नदन्तौ च रुधिरौघ-परिप्लुतौ ॥२४॥ [३१पू
युधि वि-क्रम्य पुत्रेण मम शक्र-जिता किल ।[11] [N
३१] असिनाऽभ्या[12]-हतश् छिन्नः प्रकीर्ण-सुमहाबलः । [३१उ
वि-चेष्टते[13] च[13] मेदिन्यां पनसः पनसो[14] यथा ॥२५॥ [३२
३२] नाराचैर् बहुभिर् भिन्नः शेते[15] दधि-मुखः पुरा ।
कु-मुदः[16] कुमुदाऽऽकारो[16] नि-कुञ्जः सायकैः कृतः[17] ॥२६॥ [३३
३३] अङ्ग-दो बहुभिर् भिन्नः [18]शूलैः शेषैश् च राक्षसैः ।[17]
पतितो रुधिरोद्गारी मृतो[19] नि-पतितोऽङ्ग-दः ॥२७॥ [३४

१. रा$_2$ फ-०रान् कूटमुद्गरान् ॥ २. रा$_2$ फ-चक्राणि । ३. रा$_2$ फ-वानराश्च ॥ ४. ल$_1$ ब रा$_2$-महात्मना ॥ ५. रा$_1$-उत्पतन् खाण्डितः । ६. म-च विद्रुतः ॥ ७. प्र-मृतोसौ ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-निहतो । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-बहुभिश् ॥ १०. रा$_2$ फ-निस्वनन्तौ ॥ ११. म-नास्ति । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०ना व्याहतश् । फ-०ना निहतश् । म-०ना च हतश् । १३. रा$_2$ फ म-अभितिष्ठति । १४. म-पन्नगो ॥ १५. म-शूरैर् । १६. रा$_2$ फ-कुमुदश्च महातेजा । १७. म-नास्ति ॥ १८. रा$_2$ फ-शूलैरासाद्य । १९. रा$_2$ फ म-क्षितौ ॥

३४] हयैर् अन्यैस्(?न्ये) तथा नागै रथैश् चक्रैस् तथा परे।
शयाना मृदितास् तत्र कपयः कुलिशैर् अपि ॥२८॥ [३५
३५] प्र-हताश्[2] चाऽपरे[3] तत्र हन्यमाना जघन्य-तः ।
अनु-प्रपन्ना रक्षोभिः सिंहैर् इव महा-द्विपाः[4] ॥२९॥ [३६
३६] सागरे पतिताः केचिद् गगनं केचिद् आ-श्रिताः ।
ऋक्षा वृक्षान् समा-रुह्य वानरैर् व्यति-मिश्रिताः ॥३०॥ [३७
३७] सागरस्य तु[5] तीरेषु सागरोपवनेषु च ।
पिङ्गाऽक्षास् ते विरूपाऽक्षैर् बहुभिर् बहवो हताः ॥३१॥ [३८
३८] एवं तेऽभि-हतो भर्ता स-सैन्यो मम सैनिकैः[6] ।
प्र-म्लानं[7] च रजो-ध्वस्तम् इदं तस्याऽऽहृतं शिरः ॥३२॥ [३९
३९] ततः परम-दुर्धर्षो रावणो राक्षसेश्वरः ।
शृण्वन्त्यास् तत्र वैदेह्या राक्षसीर् इदम् अब्रवीत् ॥३३॥ [४०
४०] राक्षसं घोर-कर्माणं विद्युज्-जिह्वं प्र-वेशय(?थ) ।
तेन तद् राघव-शिरः सं-ग्रामात् स्वयम् आ-हृतम् ॥३४॥ [४१
४१] एवम् उक्तास् तु राक्षस्यो रावणेन दुर्-आत्मना ।[10]
N] निर्-जग्मुस् त्वरिताः शीघ्रं विद्युज्जिह्व-निवेशनम् ॥३५॥[11] [N
४२उ] विद्युज्[12]-जिह्वो गृहीत्वाऽथ शिरस्[12] तत् स-शराऽऽसनम् ।[13]
प्र[14]-णामं शिरसा कृत्वा[14] रावणस्याऽग्र-तः स्थितः ॥३६॥ [४२
४३] तम् अब्रवीत् ततो राजा रावणो राक्षसं स्थितम् ।
विद्युज्[15]-जिह्वं समा-लोक्य समीपे परि-वर्तिनम् ॥३७॥ [४३

---

१. रा₂ फ-प्रचारा गोगणैरिव । म-प्राकारैर्गोगणैरिव ॥ २. रा₂ फ-असिभिस्त्वपरे । ३. रा₁ ल₂-०द्विपैः । ४. प्र-नास्ति ॥ ५. ल₂ रा₂ फ म-च ॥ ६. प्र रा₂ फ म-सेनया । ७. रा₂ फ म-प्रस्तताक्षं ॥ ८. रा₂ फ-शृण्वन्त्यां तत्र वैदेह्यां ॥ ९. श्र-नास्ति । १०. रा₂ फ म-नास्ति । ११. श्र रा₂ फ म-नास्ति ॥ १२. रा₂ फ-०जिह्वस्ततो गृह्य सशिरस् । १३. श्र म-नास्ति । १४. श्र-नास्ति ॥ १५. रा₂ फ-महाजिह्वं ॥

४४] अग्र-तः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ।
अव-स्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु ॥३८॥ [४४
४५] एवम् [1]उक्तं [1]तु तद् रक्षस् तच् छिरः प्रिय-दर्शनम् ।
[2]पुरो नि-क्षिप्य सीतायाः क्षिप्रम् अन्तर् अधीयत ॥३९॥ [४५
४६] रावणश् चाऽपि चिक्षेप [3]भास्वरं [3]कार्मुकं तदा ।
त्रिषु लोकेषु वि-ख्यातं रामस्यैतद् इति ब्रुवन् ॥४०॥ [४६
[4]तद् रक्षसा [4]तेन शिरः स-कार्मुकं
[5]वि-शीर्यमाणं स-शरं मही-तले ।
नि-वेद्य तस्याः सम्-अरे हतं पतिं
N] ततोऽब्रवीत् तां भव मे वशाऽनुगा ॥४१॥ [४८
स रावणश् चारु-दतीं पति-व्रतां
निर्-ईक्ष्य भर्तुर् व्य्-असने चिकीर्षिताम् ।
उवाच सीतां किम् अवेक्ष्यम् अस्ति ते
४८] भवस्व भार्या मम मत्त-काशिनि ॥४२॥ [N

इत्या[7]र्षे रामायणे [6]युद्ध-काण्डे माया-शिरो-दर्शनं नाम सप्तमः सर्गः ॥७॥

---

## [वं-८]= [अष्टमः सर्गः] =[दा-३२]

१पू] सा सीता तच् छिरो दृष्ट्वा तच् च कार्मुकम् उत्-तमम् । [१पू
२पू] नयने [8]मुख-वर्णं च पत्युस् तत् सदृशं शनैः ॥१॥ [२पू
N] मुखम् इन्दु-प्रभं सौम्यं भर्तुः कमल-लोचनम् । [N

---

१. प्र-उक्तश्च । २. रा₁ ल₁ ल₂ ब श्र प्र-उपनि० ॥ ३. प्र-स शरं भास्वरं ॥ ४. रा₁ ल₁ ल₂ ब श्र-स र० । प्र म-स विद्युज्जिह्वेन । ५. रा₂ फ-विकीर्य० ॥ ६. ब श्र प्र-लंकाकाण्डे । म-लंकापर्वणि ॥ ७. अतः परमधिकः पाठः—रा₁ ल₁ ल₂ ब श्र प्र-सुग्रीवप्रतिसंसर्गमाख्यातं च हनूमता । ८. रा₁ ल₁ ल₂ श्र प्र रा₂ फ म-मुखवर्णं ॥

२उ] केशान् केशाऽन्त-देशं च तं च चूडा-मणिं शुभम् । [२उ
N] सु-श्लि[1]ष्टांश् च सु[1]-समांश् चैव पाण्डरा[2]न् दशनांस् तथा ॥२॥ [N
एतैः सर्वैर् अभि-ज्ञानैर् अभि-ज्ञाय सु-दुःखिता ।
३] वि-जगर्हाऽथ कैकेयीं क्रोशन्ती कुररी यथा ॥३॥ [३
स-कामा खलु कैकेयी ममाऽऽर्या सा[3] भविष्यति ।
४] कुलम् उत्-सादितं सर्वं यया[4] कलह-शीलया ॥४॥ [४
आर्यायाः किं नु कैकेय्याः कृतं रामेण वि-प्रियम् ।
५] यद् गृहाच् चीर[5]-संवीतो राघवो[6] विप्र[6]-वासितः ॥५॥ [५पू
एवम् उक्त्वा (?क्ता) तु वैदेही वेपमाना तपस्विनी ।
६] जगाम जगतीं बाला छिन्नेव[7] कदली यथा ॥६॥ [६
सा मुहूर्तात् समुत्था(द्-स्था)य प्रति-लभ्य च चेतनाम् ।
७] तच् छिरः समुपाऽऽघ्रा[8]य वि-ललापाऽऽयतेक्षणा ॥७॥ [७
हा हताऽस्मि महा-बाहो वीर-व्रतम् अनु-व्रता ।
८] इयं ते पश्चिमाऽवस्था मम हेतोर् उप-स्थिता ॥८॥ [८
९पू] प्र[9]थमं मरणं नार्याः प[10]त्युः पु[10]ण्यम् इति स्मृतम् ।
म[11]यि कस्मात् त्व् अ[11]-वृत्तायां कालेनाऽसि नि-पातितः ॥९॥ [९
१०] दुःखाद् दुःखं प्र-पन्नाया मानायाः शोक-सागरे । [१०पू
राक्षसैर् वीर सं-सक्तो हतस् त्वं मम कारणात् ।[12] [९उ
११] योऽपि माम् उद्-यतस् त्रातुं सोऽपि त्वं किल पातितः १० [१०उ
हा श्वश्रूर् मम कौस[13]ल्या त्वया वत्सेन राघव ।

---

१. रा१ ल१ ब अ-श्रेष्ठांश्च सुस० । ल२-श्रेष्ठांश्चैव समांश् । २. रा१ ल२ ब अ प्र रा२ फ म- पांडुरान् ॥ ३. रा१ ल१ ल२ ब अ प्र-चं । ४. रा१ ल१-यथा ॥ ५. रा१ ल१ ल२ ब अ प्र रा२ म-वीरसंभूतो । ६. म-०वोऽयं विवासितः ॥ ७. रा२ फ-कुंतेव ॥ ८. रा२ फ-समुपादाय ॥ ९. म-प्रमाणं । १०. प्र-पश्चात्पत्युर् । ११. रा१ ल१ ल२ ब अ-जीवंत्यां मयि कस्मात्त्वं ॥ १२. अ-नास्ति ॥ १३. रा२ फ म-कौशल्ये ।

१२] वत्सेनेव विना धेनुर् वि-वशा[1] वत्सला कृता ॥११॥ [११
आ-दिष्टं दीर्घम् आयुस् ते यैर् अचिन्त्य-पराक्रम ।
१३] अनु-कृतं वचनं तेषाम् अल्पाऽऽयुर् असि[2] राघव ॥१२॥[3] [१२
अ-दृष्टं मृत्युम् आ-पन्नः कस्मात् त्वं नय-शास्त्र-वित् ।
१४] व्य्-असनानाम्[4] उपाय-ज्ञः कुशलः परि-वर्जने[5] ॥१३॥ [१४
१५पू] अथ-वा वि-नश्यते[6] प्र-ज्ञा प्राज्ञस्याऽपि समन्त[7]-तः ।
१६पू] पचत्य् एव महान् कालो भूतानि प्र-भुर्[8] अ-व्ययः ॥१४॥ [१३
१७उ] उप[9]-शेषे महा-बाहो मां वि-हाय सु-दुःखिताम् ।
१८पू] प्रियाम् इव प्रियां नारीं[10] पृथिवीं[11] पृथिवीऽऽश्वरः ॥१५॥ [१६
१६उ] स[12] तया त्वं परि[12]-ष्वज्य रौद्रया सु-नृशंसया ।
१७पू] काल-रात्र्या समा-छिद्य नीतः कमल-लोचन ॥१६॥ [१५
क्व गतस् त्वं महा-बाहो मां वि-हाय तपस्विनीम्[13] ।
N] हृ (?ह्व) ताम्[14] इव रणे भूमिं बलिना पार्थिवर्षभः ॥१७॥ [N
१८उ] सुखोचितं शरीरं ते सु-रूपम् अपि[15] राघव । [N
अर्चितं सर्व[16]-दा यत् तद् गन्ध-माल्याऽनुलेपनैः ।
१९] इदं तव शरीरं तु वि-प्र-कीर्णं मही-तले ॥१८॥ [१७
आर्येण ननु पित्रा त्वम् आर्य प्रा(?आ) यै (? यैश्) च राजभिः
२०] पुण्य-वद्भिः[17] क्रिया-वद्भिर्[17] नूनं स्वर्गे समा-गतः ॥१९॥ [१८
दिवि नक्षत्र-भूतं च[18] तथा[19] क्रतु-कृत-पूर्वम् ।

---

१. रा$_2$ फ म-विवत्सा ॥ २. प्र-अपि । म-इति । ३. श्र-नास्ति ॥ ४. श्र-नास्ति । ५. म-परिवर्तने ॥ ६. रा$_2$ फ म-नश्यते । ७. रा$_2$ फ म-सततस्तव । ८. रा$_2$ ब प्र-प्रभवोव्ययः ॥ ९. ल$_2$-उपदेशे । १०. रा$_2$ फ म-शुभां । ११. रा$_1$-पृथिव्यां ॥ १२. फ म-तया त्वं संपरि० । १३. श्र-सुदुःखितां । १४. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-प्रियां ॥ १५. रा$_2$ फ-तव । १६. रा$_2$ फ म-सततं ॥ १७. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-०द्भिस् तूर्णं ॥ १८. म-त्वां । १९. प्र-तथा सर्वक्रतुप्रवम् । रा$_2$ फ म-महाक्रतु० ।

२१] पुण्यं राजर्षि-वंश-त्वम् आत्मनः समवेक्षसे ॥२०॥ [१९
किं मां न प्रेक्षसे राजन् किं च मां नाऽभि-भाषसे ।[1]
२२] बालां बालस्य सम्प्राऽऽप्तां[2] स-वर्णां सह-चारिणीम् ॥२१॥[२०
सं-श्रुतं गृह्णता पाणिं भजिष्यामीऽति यत् त्वया ।
२३] स्मरं[3] तन्नूं[3] मम काकुत्स्थ नय माम् अपि दुःखिताम् ॥२२॥ [२१
कस्मान् मां त्वं वि-हायैको गतो मति-मतां वर ।
२४] अस्माल् लोकात् परं लोकं दुःखितां[4] इह धार्मिक[4] ॥२३॥ [२२
चन्दनाऽगुरु-दिग्धं यत्[5] परि-ष्वक्तं पुरा मया[6] ।
२५] क्रव्याऽद्भिस् तच् छरीरं ते नूनं हि[7] परि-कृष्यते[7] ॥२४॥ [२३
अग्निष्टोमाऽऽदिभिर् यज्ञैर् इष्टवान् आप्त-दक्षिणैः ।
२६] अग्नि-होत्रेण सत्[9]-कारम् अर्हस् त्वं नोप-लप्स्यसे ॥२५॥ [२४
प्र-व्रज्याम् उप-पन्नानां त्रयाणाम् एकम् आ-गतम् ।
२७] [10]परि-प्रक्ष्यति कौसल्या लक्ष्मणं शोक-लौलसम्[11] ॥२६॥ [२५
तस्याः सम्परि-पृच्छन्त्या हरणं मम रक्षसा ।
२८] तव चाऽऽख्यास्यते वीर सौप्तिके राक्षसैर् वधम् ॥२७॥ [२६
सा त्वां वि[12]नि-हि(?ह)तं श्रु[12]त्वा मां तथा राक्षसैर् हृताम् ।
२९] [13]हृदयेन वि[13]-दीर्णेन कौ[14]सल्या न भवि[14]ष्यति ॥२८॥ [२७
मम हेतोर् अन्-आर्यायास् त्वं हतः पार्थिवाऽऽत्मज ।[15]
N] राम सागरम् उत्-तीर्य भवान् किं नि-हतो निशि ॥२९॥[16] [२८

---

१. म-नास्ति । २. प्र-संत्रासां ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-संस्मरन् ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-त्यक्त्वा मां मन्दभागिनीं ॥ ५. म-कल्याणरुचिरं । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-ते कस्माद्विपरिवर्तते । ७. प्र रा$_2$ फ म-विपरिकृष्यते ॥ ८. म-०होत्रादि । ९. प्र फ म-संस्कारम् ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-एकं प्रक्ष्यति । ११. म-०लालसा ॥ १२. रा$_2$ फ म-श्रुत्वा हतं पुत्रं । १३. रा$_2$ फ-हृदयेनावदानेन । १४. म-न भविष्यति वत्सला ॥ १५. प्र-नास्ति । १६. रा$_2$ फ म-नास्ति ॥

साधु घातय मां शीघ्रं रामस्योपरि रावण ।
३०] स्व-प्रियस्य प्रियां भार्यां कुरु कल्याणम् उत्-तमम् ॥३०॥ [३१
शिरस्य् अस्मिंश् छिरो धेहि काये कायं नि-वेशय ।
३१] रावणाऽनु-गमिष्यामि गतिं भर्तुर् महाऽऽत्मनः ॥३१॥ [३२
मुहूर्तम् अपि नेच्छामि जीवितुं पाप-जीवितम् ।[३३पू
३२] समा-नय त्वं पतिना कुरु कल्याणम् उत्-तमम् ॥३२॥ [N
श्रुतं मया वेद-विदां ब्राह्मणानां पितुर् गृहे ।
३३] यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः॥३३॥ [३३
क्षमा यस्मिन् दया त्यागः सत्यं धर्मः कृतज्ञ-ता ।
३४] अ-हिंसा चैव भूतानां तम् ऋते का गतिर् मम ॥३४॥ [३४
इति सा दुःख-सन्तप्ता वि-ललापाऽऽयतेक्षणा ।
३५] भर्तुः शिरो धनुश् चैव सम्प्रेक्ष्य जनकाऽऽत्मजा ॥३५॥ [३५
एवं वि-लप्यमानायां सीतायां तत्र रावणम् ।
३६] अभि-चक्राम भर्तारं बलाऽध्यक्षः कृताऽञ्जलिः ॥३६॥ [३६
एतस्मिन्न् अन्तरे द्वाः-स्थो रावणाय न्य्-अवेदयत् ।
३७] कार्यम् आत्ययिकं घोरं सं-ज्ञया भ्रान्त-लोचनः ॥३७॥ [N
वि-जयस्वाऽऽर्य-पुत्रेति सोऽभि-भाष्य प्र-णम्य च ।
३८] आ-चचक्षे तदा कृत्यं राक्षसेन्द्राय वि-स्मितः ॥३८॥ [३७
अमात्यः संहितः सर्वैः प्र-हस्तस् त्वाम् उप-स्थितः ।[३८पू
३९] किं-चिद् आत्ययिकं कार्यम् आ-चिख्यासुर् इहाऽऽगतः ३९[३९उ
४०पू] एवम् उक्तस् ततस् तेन रावणो गृहम् अभ्य्-अगात् ।[९] [N

---

१. अ रा२ फ-सुप्रि० ॥ २. रा१ ल१ ल२ ब प्र रा२-लोके महोदयः । अ-लोको महोदयः॥ ३. रा१ ब म-भ्रान्तचेतनः ॥ ४. रा१ ल१ ल२ ब अ-क्षन्ता ॥ ५. ल२ म-सहितैः । ६. प्र-त्वाजिज्ञासुर् ॥ ७. रा२ फ म-तस्माद् । ८. ल१-०णो गृहमागतः। रा२ फ म-निर्जगाम महाबलः ॥ ९. प्र-नास्ति ।अतः परमधिकः पाठः—रा२ फ म-स ह्यमात्यप्रहस्तं च ददर्श दूरतः स्थितं । सर्वैः समेत्य रक्षोभिर्मन्त्रिभिः कृतनिश्चयः ॥

सभां प्र-विश्य वि-दधे विदित्वा राम-विक्रमम ॥४०॥ [४१उ
४२] अन्तर्-धानं तु तच् छीर्षं तच् च कार्मुकम् उत्-तमम् ।
जगाम राक्षसे तस्मिन् निष्-क्रान्ते सम्-अनन्तरम् ॥४१॥ [४२
४३] राक्षसेन्द्रस् तु भवनात् [1]स्वयं निष्-क्रम्य सं-त्वरः ।
स मन्त्रयामास तदा मन्त्रं तैर् मन्त्रिभिः सह ॥ [2]४२॥ [४३
४४पू] अति-दूरान् स्थितान् ह्य् अस्य बलाऽध्यक्षान् हितैषिणः।
४५पू] अब्रवीत् तान् नि-शाम्यैव रावणो राक्षसेश्वरः ॥४३॥ [2] [४४
४४उ] शीघ्रं भेरी-निनादेन [3]स्फुट-कोलाहलेन मे[3] ।
४५उ] समा-[4]नयध्वं सैन्यानि वि-[5]मर्षो न क्षमो हि [5]नः ॥४४॥ [४५
[6]बलाऽधिपास् ते बल-योगम् आत्मनः
ततस् तथेति प्रति-गृह्य तद् वचः ।
[7]समा-हिता भर्तृ-[8]हिताय नैर्ऋता
N] जयाय [9]घोषान् परि-[9]गृह्य धि-ष्ठिताः ॥४५ [४६

इत्यार्षे रामायणे युद्ध-[10]काण्डे सीता [11]सम्मोहनं नामाऽष्टमः सर्गः ॥८॥

---

## [वं–९]= [ नवमः सर्गः ] =[दा–३३]

तां [12]त्व् [12]एवं मोहितां [13]दृष्ट्वा सरमा नाम राक्षसी ।
१] आ-ससादाऽ[14]थ वैदेहीं प्रियां [15]समयिनीं सखीम् ॥१॥ [१

---

१. फ-निष्क्रम्य कृतसत्वरः । २. रा$_1$-नास्ति ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र रा$_2$-परं कौतूहलेन च । ४. प्र-०नयित्वा । ५. म-वेगेन महता भृशं ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-बलांध्रिया । ७. फ-समास्थिता । म-समागता । ८. म-भर्तृवधाय । ९. फ-योधाः परिवार्य । म-योधान् प्रतिगृह्य ॥ १०. ब प्र-लंकाकाण्डे । रा$_2$-नास्ति । म-लंकापर्वणि । ११. प्र रा$_2$ फ-०हनो ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र फ-चैव । १३. रा$_2$ फ म-ज्ञात्वा । १४. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र म-०दाशु । १५. रा$_2$-प्राणसमां ॥

सा हि तत्र च कृता मित्रं सीतया रक्ष्यमाणया ।
२] राक्षसी रावणाऽऽदिष्टा साऽनुक्रोशा[1] दृढ-व्रता ॥२॥ [३
सा ददर्श सखीं सीतां सरमा नष्ट-चेतनाम् ।
३] उप[3]-विश्योत्थि(द्-स्थि)तां ध्वस्तां वडवाम् इव पांसुभिः ॥३॥ [४
४पू] ताम् उवाच तथा[4] दृष्ट्वा सरमा प्रिय-वादिनी ।[5] [२उ
मा वि-षादं विशालाऽक्षि कुरुष्व[6] जनकाऽऽत्मजे[6] ॥४॥
५] उक्ता यद् रावणेन त्वं प्रत्यू[7]-अयो यस् त्वया कृतः[7] ।
सखि[8] स्नेहेन ते[9] भीरु[9] मया सर्वं[10] स्वयं श्रुतम्[10] ॥५॥ [६
६] लीनया[11] गहने शून्ये भयम् उत्-सृज्य रावणात् ।
तत्र हेतोर् विशालाऽक्षि नहि मे जीवितं प्रियम् ॥६॥ [७
८] सं-भ्रान्तश् चोपनिष्-क्रान्तो यद्[12] इतो[12] राक्षसेश्वरः ।
तच् च मे विदितं सर्वम् उपनिष्-क्रम्य मैथिलि ॥७॥ [८
९] न शक्यं[13] सौप्तिकं[13] कर्तुं रामस्य विदिताऽऽत्मनः ।
वधश् च पुरुष-व्याघ्रे तस्मिन् नैवोप-पद्यते ॥८॥ [९
१०] ते[14] च शूरा[15] हरि-व्याघ्रा वि-क्रान्ताः पादपाऽऽयुधाः[15] ।
पुरा देवेश्वरेणैव रामेण परि-पालिताः ॥९॥ [१०
११] दीर्घ-वृत्त-भुजः श्री-मान् महोरस्कः प्रताप-वान् ।

---

१. रा१ ल१ ल२ ब अ प्र-सा तदा तु ॥ २. प्र म-सतीं । ३. रा१ ल१ ल२ ब अ प्र-उपावृत्योद्धतां ॥ ४. रा१ ल१ ल२ प्र-तदा । रा२ फ-ततो । ५. अतः परमधिकः पाठः—रा२ फ-स्नेहवैक्लव्या वाचा सांत्वयित्वा प्रियां सखीं । ६. प्र फ-नास्ति । ७. रा२ म-प्रत्युक्तं यत्त्वया सकृत् । ८. रा१ ल१ ल२ ब अ-सखीस्ने० । ९. रा१ ल१ ल२ ब अ-तत्सर्वं । म-यद्भीरु । १०. रा१ ल१ ल२ ब अ-भीरु प्रतिश्रुतं । ११. रा१ ल१ ल२ ब अ- लीलया । १२. ल२ रा२-यदि ते ॥ १३. रा१ ल१ ल२ ब अ प्र-शक्ताः स्माप्रियं ॥ १४. रा२-वानराः । १५. रा१ ल१ ल२ ब अ प्र-०पा यथा ॥

१२पू] धन्वी संहत-वृत्तोरुर् भर्ता ते भुवि वि-श्रुतः ॥१०॥ [११
N] अ-क्षय्यो[1] रक्षिता नित्यम् आत्मनश् च बलस्य च ।
लक्ष्मणेन सह भ्रात्रा कुशली शास्त्र-तत्त्व-वित् ॥११॥ [१२
१३] हन्ता[2] पर-बलौघानां पौरुषे[3] धन्य-लक्षणः ।
न हतो राघवः सीते श्री-मान् शत्रु-निबर्हणः ॥१२॥ [१३
१४] अ-युक्ता बुद्धि-हीनेन सर्व-भूत-विरोधिना ।
इयं तेन नृ-शंसेन माया[4] मायाविना कृता ॥१३॥ [१४
१५] शोकस् ते वि-हतः[5] सद्यः कल्याणं त्वाम् उप[6]-स्थितम् ।
ध्रुवं ते भजते लक्ष्मीः प्रियं प्रीति-करं शृणु ॥१४॥ [१५
१६] सं-तीर्णः सागरं रामः सह वानर-सेनया ।
सन्नि-विष्टः सम्-उद्रस्य तीरम् आ-साद्य दक्षिणम् ॥१५॥ [१६
१७] सं-हृष्टः परिपूर्णाऽर्थः काकुत्स्थः स[7] महा-बलः ।
सं-हितः[8] सागरोपाऽन्ते[9] राक्षसैर् उप-लक्षितः ॥१६॥ [१७
१८] तैस् तथा[10] प्रेक्षिता गुल्मैर् हरयस्[11] ते प्र-दक्षिणाः[12] ।
प्र-वृत्तिस् तैर् उपाऽऽनीता[13] श्वोऽभि-सारः[14] पुरस्य च ॥१७॥ [१८
१९] एतां श्रुत्वा तु[15] सु-श्रोणि प्र-वृत्तिं राक्षसाऽधिपः ।
एष मन्त्रयते सर्वैः सचिवैः सह रावणः ॥१८॥ [१९
२०] इति ब्रुवाणा सरमा मैथिलीं नष्ट-चेतनाम् ।
सर्वोद्-योगेन योधानां शब्दं[16] शुश्राव दारुणम् ॥१९॥ [२०

---

१. फ-अक्षतो ॥ २. रा$_{2}$ फ-भेत्ता च परसैन्यानां । ३. म-पुरुषो ॥ ४. म-मायया परिमोहिता ॥ ५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र फ म-विहितः । ६. रा$_{2}$ फ-त्वां समुपा० ॥ ७. प्र-सहलक्ष्मणः । रा$_{2}$ म-सुसमाहितः । ८. रा$_{1}$ ल$_{1}$ ब अ प्र-सहितैः । रा$_{2}$-प्रहृतैः । ९. रा$_{2}$ फ-सागरान्तेषु ॥ १०. रा$_{2}$ फ-ततः । ११. रा$_{2}$-हरिदूताः । १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-०क्षिणैः । १३. म-इहानीता । १४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-सोभिहारपुरस्सरः ॥ १५. रा$_{1}$ ल$_{1}$ ल$_{2}$ अ प्र-एतत्तु श्रुत्वा ॥ १६. म-सर्वं ॥

२१] ताडितायास् तथा भेर्याः श्रुत्वा प्रति-भयं स्वनम् ।
उवाच सरमा सीताम् इदं[1] मधुरया[2] गिरा ॥२०॥ [२१
२२] संनाह[3]-जननी ह्य् एषा भेरी वै भीम-नादिनी[5] ।[4]
एषा नदति[6] गम्भीरं शृणु तोयद-संनिभा ॥२१॥ [२२
२३] कल्यन्ते[7] मत्त-मातङ्गा युज्यन्ते रथ-वाजिनः । [२३पू
तत्र तत्र च सं-नद्धाः सं-पतन्ति[8] पदातयः ॥२२॥
२४] अनीकैः पूर्यते सर्वै राज-मार्गः समन्त-तः ।
वेग-वद्भिर् महा-वेगैर्[9] महौघैर्[10] इव सागरैः[11] ॥२३॥ [२४
२५] शस्त्राणां च प्र-सन्नानां वर्मणां चर्मणां तथा ।
N] रथानां भूषितानां च भूषितानां च[12] रक्षसाम् ॥२४॥ [२५
प्र-भां वि-सृजतां पश्य नाना-वर्ण-समुच्छ्रितां[12] ।
२६] वनं निर्-दहतो घर्मे यथा रूपं विभा-वसोः ॥२५॥ [२६
घण्टानां चण्ड[13]-निर्घोषं रथानां शृणु[14] निः-स्वनम् ।
२७पू] हयानां हेषमाणानां[15] शृणु तूर्य-स्वनं तथा ॥२६॥ [२७
उद्यताऽऽयुध-शस्त्राणां[16] राक्षसेन्द्रा[17]ऽनुयायिनाम् ।
२८] रक्षसां सं-भ्रमो ह्य् एष तुमुलो लोम-हर्षणः ॥२७॥ [२८
श्रीस् त्वां भजतु शोक-घ्नी[18] रक्षसां भयम् आ-गतम् । [२९
२९] रामात् कमल-पत्राऽक्षि दैत्यानाम् इव वासवात् ॥२८॥

---

१. रा₁ ल₁ ल₂ ब अ प्र-नास्ति । २. रा₁ ल₁ ब अ प्र-मधुरवादिनी । ल₂-मधुरवादिनीं ॥ ३. रा₂ फ-संमोह० । ४. अ-नास्ति । ५. रा₁ ल₁ ल₂ ब अ प्र-०दनिःस्वनं । ६. म-नास्ति ॥ ७. रा₂ ब-काल्यन्ते । ८. प्र-समुद्यन्ति ॥ ९. ब-महाभागैर । १०. रा₁ ल₁ ल₂ ब अ प्र-मेघैरिव महार्णवः ॥ ११. प्र-तु ॥ १२. रा₁ ल₁ ल₂ ब अ प्र म-०समुत्थितां ॥ १३. फ-शृणु निर्घोषं । १४. म-चैव । १५. रा₂-हेष० ॥ १६. म-०धसत्त्वानां । १७. रा₁ ल₁ ल₂ ब अ प्र-राममेवानु० ॥ १८. म-शोकघ्ना ॥

अव-जेतुं जित-क्रोधस् तां[1]न् अचिन्त्य-पराक्रमः ।
३०] अ[2]-चिराद् विद्धि पूर्वेण[2] लङ्काम् अधि-गमिष्यति ॥२९॥ [३०
वि-क्रमिष्यति रक्षःसु भर्ता ते सह-लक्ष्मणः ।
३१] यथा शत्रुषु वि-क्रान्तो विष्णुना सह वासवः ॥३०॥[3] [३१
आ-गतस्य[4] हि[4] रामस्य क्षिप्रम् अङ्क-गतां[5] सखि[5] ।
३२] अहं द्रक्ष्यामि सिद्धाऽर्थां त्वां शत्रौ विनि-पातिते ॥३१॥ [३२
अश्रूण्य् आनन्द-जानि त्वं वर्तयिष्यसि शोभने ।
३३] समा-गम्याऽचिरेण त्वां नन्दयिष्यति राघवः । [३३
N] अ-वर्षाद् इव शुष्यन्तीं महा-मेघो वसुन्धराम् ॥३२॥ [N
अ-चिरान् मोक्ष्यसे सीते वि-पुलं ब[6]न्धनं ग[6]ता ।
३४] वृत्ताम् एकां व[7]हन्त्य् अ[7]द्य वेणीं ते[8]न शुभाऽऽनने ॥३३॥ [३४
३९उ] तस्य दृष्ट्वा मुखं देवि पूर्ण-चन्द्रम् इवोदितम् ।
३६पू] मो[9]क्ष्यसे सहसा शोकं निर्-मोकम् इव पन्न-गी ॥[10]३४॥ [३९
३७उ] रावणं सम्-अरे हत्वा न चिराद् इ[11]व मैथिलि ।
त्वया सम्-अग्रं प्रियया राघवो लप्स्यते सुखम् ॥३९॥[10] [३६
समा-गता त्वं रामेण शोभि[12]ष्यसि वराऽऽनने ।
३८] अवर्ष-शुष्केव पुरा नव-स[13]स्या वसुन्ध[13]रा ॥[14]३६॥ [३७
गिरि-वरम् अभि-तो वि-वर्तमानो
हय इव मण्डलम् आशु यः करोति ।
त्वम् इह शरणम् अभ्युपै(?पे) हि सीते

---

१. रा₂ फ म-त्वां । २. रा₂ फ-रावणं समरे हन्तुं ॥ ३. अतः परमधिकः पाठः—रा₁ ल₁ ल₂ ब श्र प्र-सुग्रीवसहितः श्रीमान् वानरैश्च महाबलैः ॥ ४. रा₂ फ म-आगतस्येह । ५. ल₁-०गतामपि ॥ ६. रा₂ फ म-जघने गतां । ७. रा₂ फ म-बह्वन्मासान् । ८. रा₂ फ म-रामः ॥ ९. रा₁ ल₁ ल₂ ब श्र प्र रा₂-मोक्ष्यते । १०. म-नास्ति ॥ ११. रा₁ ल₁ ल₂ ब श्र प्र-देवि ॥ १२. रा₂ प्र-भविष्यसि । १३. रा₂-नवसस्येव मेदिनी । १४. म-नास्ति ॥

३९] दिवस-करं प्रभत्रोऽप्ययं प्र-जानाम् ॥३७॥ [३८

इत्यार्षे रामायणे युद्ध-काण्डे सरमा-वाक्यं नाम नवमः सर्गः ॥९॥

---

[वं-१०]= [ दशमः सर्गः ] =[दा-३४]

अथ तां जात-सन्तापां तेन वाक्येन मोहिताम् ।
१] सरमा ह्लादयाञ्चक्रे पृथिवीं द्यौर् इवाऽम्भसा ॥१॥ [१
ततस् तस्या हितं भूयश् चिकीर्षन्ती सखी वचः ।
२] उवाच काले काल-ज्ञा स्मित-पूर्वाऽभिभाषिणी ॥२॥ [२
उत्-सहेयम् अहं गत्वा त्वद् वाक्यम् असितेक्षणे ।
३] नि-वेद्य सकलं रामे प्रति-च्छन्ना नि-वर्तितुम् ॥३॥ [३
न हि मे क्रममाणाया निरा-लम्बे वि-हायसि ।
४] सम्-अर्थो गतिम् अन्व्-एतुं वायुर् अप्य् अति-शीघ्रगः ॥४॥[११] [४
एवं ब्रुवाणां तां सीता सरमाम् अब्रवीद् वचः ।
५] मधुरं श्लक्ष्णया वाचा पूर्व-शोकाऽवदीर्णया ॥५॥ [५
[१३]सम्-अर्था गगनं गन्तुम् अपि वा [१४]त्वं रसा-तलम् ।
६] अव-गच्छामि कर्तव्यं [१५]कर्तव्यं ते मद् अन्तरे ॥६॥ [६
स्निग्धा त्वम् अनु-रक्ता च भगिनीऽव सहोदरा ।
७] त्वं प्र-सन्ना मम हिता सं-शयो मे न विद्यते ॥७॥[१६] [N

---

१. अ-प्रभयाप्ययं । रा$_2$ फ-०वाव्ययं । २. ल$_1$ ल$_2$ अ प्र फ-प्रज्ञानां ॥ ३. फ म- नास्ति । ४. ब अ प्र-लंकाकांडे । फ-लंकापर्वणि । ५. ब-सरसावा० ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-वाक्यं चिकीर्षन्तीं सखीं तदा ॥ ७. रा$_1$ ल$_1$ ल$_2$ अ प्र-तद् ॥ ८. म-विक्रम० । ९. प्र-अन्वेष्टुं । १०. प्र-अभ्येति शी० । फ-०शीघ्रतः । ११. अ-नास्ति ॥ १२. प्र-०वकीर्णया ॥ १३. प्र-सर्वथा । १४. रा$_1$ ल$_1$ ल$_2$ ब प्र-तं । १५. रा$_2$ फ-सर्वं यत् ॥ १६. रा$_2$ फ म-नास्ति ॥

मत्-प्रियं यदि कर्तव्यं यदि मैत्री स्थिरा[1] तव ।
८] [2]त्वत्-तोऽहं ज्ञातुम् इच्छामि किं करोति स रावणः ॥८॥ [७
स हि माया-बलो रौद्रो रावणः सर्व-रावणः ।
९] मां मोहयति दुष्टाऽऽत्मा पीत-मात्रेव वारुणी ॥९॥ [८
सं-तर्जयति मां नित्यं भर्त्सयत्य् अपि चाऽसकृत्[4] ।
१०] राक्षसीभिः सु-घोराभिर् यो मां रक्षति [5]सर्व-शः ॥१०॥ [९
उद्-विग्ना शङ्किता चाऽस्मि न च स्व-स्थं मनो मम ।[6]
११] यद् भयं प्राऽऽ[7]भवत्य् [7]उच्चैर् अशोक-वनिकां [8]गता ॥११॥[9] [१०
१२उ] [10]एतम् इच्छाम्य् [10]अहं त्वत्-तो वरं सत्य-प्रतिश्रवे ।
१३पू] लघु यद् रावणस्याऽहं सर्वं विद्यां वि-चेष्टितम् ॥१२॥ [N
१४पू] ताम् एवं वादिनीं सीतां सरमा वल्गु-[11]वादिनी ।
उवाच वचनं तस्याः श्रुत्वा सा [12]वाक्य-विक्लवम् ॥१३॥ [१२
१५] एष ते [13]सख्य् [13]अभि-प्रायस् तद् [14]गच्छामि जानकि ।
[15]दृष्ट्वा शत्रोर् अभि-प्रायम् उपाऽऽ[16]वर्ताम्य् अहं [16]पुनः ॥१४॥ [१३
१६] एवम् उक्त्वा [17]ततोऽभे(?भ्ये)त्य [17]समीपे तस्य रक्षसः ।
[18]शुश्राव कथितं सर्वं रावणस्य स-मन्त्रिणः ॥१५॥ [१४
१७] सा श्रुत्वा निश्-चयं तस्य तस्मिन् काले दुर्-आत्मनः ।

---

१. रा₁ ल₁ ल₂ ब अ प्र म-स्थिता । २. रा₂ फ- ततोहं ॥ ३. रा₁ ल₁ल₂ ब-नास्ति ॥ ४. रा₁-चाकृतं । ५. रा₁ ल₁ल₂ ब अ प्र म-नित्यशः ॥ ६. म-नास्ति । ७. प्र-च प्राप्नुवती । रा₂ फ म-मामनुप्राप्तं । ८. प्र रा₂ फ म-गतां । ९. अतः परमधिकः पाठः—रा₂ फ म-तदीच्छामि कथं तस्य निश्चयो वास्य यो भवेत् । निवेदयेथाः सर्वं मे यतो मे स्यादनुग्रहः । यं यं पश्याम्यहं किंचित्तं तं मन्येद्य रावणं ॥ १०. रा₁ ल₁ ल₂ ब अ प्र-तादिच्छामि परं । रा₂-एतादिच्छा० ॥ ११. रा₂ फ म-वल्गुभाषिणी । १२. रा₁ ल₁ ल₂ ब अ प्र-वाक्यविक्लवा ॥ १३. रा₂ फ म-यद्यभि० । १४. रा₁ ल₁ ल₂ ब अ प्र-वक्ष्यामि । १५. रा₁ ल₁ल₂ ब अ प्र-पृष्ट्वा । १६. रा₁ल₁ल₂ ब अ प्र-०वर्तें पुनः पुनः ॥ १७. रा₂ फ म-ततो गत्वा समीपं । १८. रा₁ ल₁ ल₂ ब अ प्र- श्रुत्वा च ॥

पुनर् [1]अप्य् आऽगमत् क्षिप्रम् अशोक-वनिकां शुभाम् ॥१६॥ [१.५
१८] [2]सा प्र-विश्य ततस् तत्र समी[3]त्य (?ये) जनकाऽऽत्मजाम् ।
प्रतीऽऽक्षमाणां ताम् एव पद्म-हीनाम् इव श्रियम् ॥१७॥ [१.६
१९] तां तु सीता पुनः प्राऽऽप्तां सरमां प्रिय-वादिनीम् ।
२०पू] परि-ष्वज्य च सु-स्निग्धं प्र-ददौ स्वयम् आसनम् ॥१८॥ [१.७
इहा[4]ऽऽस्यतां सुखं सर्वम् आ-ख्याहि मम तत्त्व-तः ।
२१] क्रूरस्य निश्-चयं तस्य रावणस्य स-मन्त्रिणः ॥१९॥ [१.८

को हि नाम महा-भागे मम पुण्य-विपर्यये ।
२२] अनु-रक्षति माम् अन्यस् त्यक्त्वा त्वां पुण्य-भाषिणीम् ॥२०॥[5] [N
सम्-अर्थः [6]सर्वलोके को भद्रो वै शरणाऽर्थिनः ।
२३] त्वं तु निष्-कारणाद् देवि प्री[7]यसे वर-वर्णिनि ॥२१॥ [N
त्वं तु युक्ताऽभिजानी(?ती)थाः(?या) शुक्ल-वासाश् च नित्य-दा ।
२४] सर्वेषां रक्षसां मध्ये गङ्गेव निर्-अपायिनी ॥२२॥ [N
कश् चि(?चो)द्-गच्छेद् द्रुतं चाऽस्य वचनस्याऽन्तम् आप्नुयात् ।
२५] सर्व-स्निग्धाम् ऋते त्वां तु तस्माद् आ-ख्याहि मा चिरम् २३ [N

एवम् [8]उक्ता तु सरमा सीतया तत्त्वम् [9]उत्-तमम् ।
२६] कथितुं सर्वम् आ-रेभे रावणस्य स-मन्त्रिणः ॥२४॥[10] [१.९
२७उ] जनन्[11]यां राक्षसेन्द्रोऽ[12]सौ मोक्षाऽर्थं तव याचितः ।
अ-वि[13]न्ध्येन च वैदेहि मन्त्रि-मुख्येन [14]यत्न-तः ॥२५॥ [२०

१. रा$_2$ फ म-एवाग० ॥ २. रा$_2$ फ म-सम्प्रविष्टा । ३. ल$_1$ ब ञ-समेत्य । प्र-प्राविश्य । रा$_2$ फ म-ददर्श ॥ ४. रा$_2$ फ म-इहासीना ॥ ५. रा$_2$ फ म-नास्ति ॥ ६. ब-भिन्ना:—सकलो लोको । ७. प्र-प्रेयसी ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब-उक्त्वा । ९. ल$_1$-उत्तरं । १०. रा$_2$ फ म-उपविष्टा तु सा तत्र विष्टरे स्वर्णभूषिते । वक्तुं विनिश्चय तस्य रावणस्योपचक्रमे ॥ ११. म-राजत्या । १२. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-०न्द्रो वै । फ म-०न्द्रोऽद्य । १३ रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-अवगम्य । १४. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-तत्त्वतः ॥

२८] दीयताम् अभि-सत्कृत्य कोसलेन्द्राय मैथिली ।
निर्-दर्शनं ते[1] परमं जन-स्थाने महाऽद्भुतम्[2] ॥२६॥ [२१
२९] लङ्घनं च सम्-उद्रस्य दर्शनं चाऽस्य[3] रूपिणः[3] ।
वधं च रक्षसां युद्धे कः कुर्यान् मानवो भुवि ॥२७॥[4] [२२
३०] एवं स मन्त्रि-मुख्ये(?न)[5] मात्रा च बहु-भाषितः ।
न त्वाम् उत्-सहते त्यक्तुम् अर्थम् अर्थ-परो यथा ॥[6]२८॥ [२३
३१] नोत्-सहेताऽहतो मोक्तुं युद्धे त्वाम् इति मैथिलि ।
साऽमात्यस्य नृ-शंसस्य निश्-चयोऽयं सु-निश्चलः ॥[7]२९॥ [२४
३२] एषा तस्य स्थिरा बुद्धिर् मृत्यु-भावाद् उप-स्थिता ।[8]
न तेन शक्या[9] त्वं[10] मोक्तुम् अ-निरस्तेन सं-युगे ॥३०॥ [२५
३३] मा चिन्तां कुरु वैदेहि सर्व-था राघवः शरैः । [N
३४पू] नि-हत्य रावणं सीते त्वां प्रियाम् उप-लप्स्यते ॥३१॥ [२६पू
३५पू] एतस्मिन्न् अन्तरे शब्दो भेरी-शङ्ख-समाऽऽकुलः । [२७पू
N] उत्थि(द्-स्थि)तो वानर-बले हर्षेण च सं[11]मन्व्-इतः(?तम्) । [N
३५उ] राघवस्याऽऽ[12]पतत् सैन्यं कम्पयन् सर्व-राक्षसान् ॥३२॥ [२७उ

श्रुत्वा नू(?च) नं(?तं) वानर-सैन्य-नादं[13]
लङ्का-गता राक्षस-राज-भृत्याः ।
भ्रष्टौजसो दैन्य-परीत-चित्ताः[14]
३६] श्रेयो[15] न पश्यन्ति नृपस्य देवि[16] ॥३३॥[17] [२८

ततो महा-वात-समीरितेन

---

१. रा१ ल१ ल२ ब अ प्र- च । २. रा१ ल१ ल२ ब अ प्र-महद्भयं ॥ ३. रा२ फ म-च स्वरूपिणः । ४. ल२-नास्ति ॥ ५. रा१ ल१ ल२ ब प्र रा२ फ म-०मुख्यैश्च । ६. ल२ अ-नास्ति ॥ ७. रा२ फ म-शुचिस्मिते । ८. अ-नास्ति ॥ ९. म-शक्यते ॥ १०. रा१ ल१ ल२ ब अ प्र-शान्तां ॥ ११. रा२ फ-समुत्सुके । प्र म-समुत्सुकः । १२. रा१ ल१ ल२ ब अ-राघवस्याग्रतः । प्र-०स्यागतं ॥ १३. रा१ ल१ ल२ ब अ प्र-समाकुला राघवबाणभीता । १४. रा१ ल१ ल२ ब अ प्र-०तचेतसः । १५. रा१ फ-शेषं । १६. रा२ फ-दोषैः । १७. म-नास्ति ॥

घोरेण शब्देन समुच्-छ्रितेन ।
वि-षादम् आऽगात् सकला महा-पुरी
३७] वनौकसां शब्दम् अ-मृष्यमाणा ॥३४॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे सरमा-वाक्यं नाम दशमः सर्गः ॥१०॥

---

[वं-११]= [एकादशः सर्गः] =[दा-३९]

तेन शङ्ख-विमिश्रेण भेरी-शब्दाऽनुवादिना । [१पू
N] राव(?घ)ण(?व)स्याऽऽगमत् सैन्यं नाना-प्रहरणाऽन्वितम् १ । [N
समा-गतं तु तस्याऽथ राव(?घ)ण(?व)स्य महा-बलम् ।
N] अशोभत तदा सर्वं स्तिमितः सागरो यथा ॥२॥ [N
N] सम्-आसीनस् तदा राजा दृष्ट्वा सैन्यम् अव-स्थितम् । [N
२उ] मुहूर्तं ध्यानम् आ-स्थाय सचिवान् अभ्युद्-ऐक्षत ॥३॥ [२उ
अथ तान् सचिवांस् तत्र सर्वान् आ-भाष्य रावणः ।
३] जगत् सं-नादयन् सर्वम् अब्रवीद् राक्षसेश्वरः ॥४॥ [३
तरणं सागरस्याऽस्य वि-क्रमं बल-सञ्चयम् ।
४] यद् उक्त-वन्तो रामस्य भवन्तस् तन् मया श्रुतम् ॥५॥ [४
तीर्णश् च सागरं रामः सेतुना वानरैः सह ।
५] अ-मर्षी स-गणः सोऽयं साऽमात्यो न भविष्यति ॥६॥ [N
निर्-यान्तु राक्षसाः सर्वे निशिताऽऽयुध-पाणयः ।

---

१. रा१ ल१ ल२ ब अ म-समन्वितेन । फ म-समुत्थितेन ॥ २. ब अ प्र-लंकाकाण्डे । म-लंकापर्वणि । ३. म-रावणाभिप्रायो ॥ ४. प्र-भेरीशंखानुनादिना । ५. रा२ फ म-नास्ति ॥ ६. रा१ ल१ ल२ ब अ-तदा तस्य । ७. रा१ ल१ ल२ ब अ-सैन्यं ॥ ८. रा१ ल१ ल२ ब अ फ-०सगंम ॥ ९. म-विविधायुध० ।

६] नि-घ्नन्तु वानर[1]-बलं तौ चोभौ[2] राम-लक्ष्मणौ ॥७॥ [N
ततः प्राऽऽप्तः सु-हृत्[3] स्निग्धो माल्य-वान् नाम राक्षसः ।
९] उवाच रावणं मन्त्री वृद्धाऽमात्यो बहु-श्रुतः ॥८॥ [६
विद्याऽविद्या[4]-विनीतो यो राजा राजन्[5] नयाऽनुगः ।
१०] प्र-शास्ति[6] चिरम्[7] ऐश्वर्यम् अरींश् च कुरुते वशे ॥९॥ [७
सं-दधानो हि कालेषु वि-ग्रहं चाऽरिभिः[8] सह ।
११] स्वपक्ष-वचनं कुर्वन् महद् ऐश्वर्यम् अश्नुते ॥१०॥ [८
हीयमानेन पर्य्-एष्यो राज्ञा सन्धिः समेन च ।
१२] न शत्रुर् अव-मन्तव्यो ज्यायान् कुर्वीत वि-ग्रहम् ॥११॥ [९
१३पू] तन् मह्यं रोचते सन्धिस् तत्र रामेण रावणः(?ण)[9] । [१०पू
१४उ] वि-रोधं मां गमस्[10] तेन सन्धिस् ते तेन रोचताम् ॥१२॥ [N
१३उ] यद्-अर्थम् अभि-युक्तोऽसौ साऽस्मै सीता प्र-दीयताम् । [१०उ
१४पू] तस्य देवर्षयः सर्वे गन्धर्वाश् च जयैषिणः ॥१३॥[11] [११पू
असृजद् भग-वान् पक्षौ द्वाव् एव हि पिता-महः ।
१५] सुराणाम् अ-सुराणां च धर्माऽधर्मौ ऋताऽनृतौ ॥१४॥ [१२
धर्मो[12] हि श्रूयते पक्षः सुराणां हि[13] महाऽऽत्मनाम्[14] ।
१६] अ-धर्मो रक्षसां पक्षः सुराणाम् एष निश्-चयः[15] ॥१५॥ [१३
१७उ] धर्मो[16] वै ग्रसतेऽधर्मं तत्र त्रेता प्र-वर्तते । [१४उ
स त्वया चरता लोके धर्मो विनि-कृतः पुरा ।
१८] अ-धर्मः प्र-गृहीतश्[17] च[17] तेनाऽसि तमसाऽऽवृतः ॥१६॥ [१५

१. ब-राघवबलं । २. प्र-तावुभौ ॥ ३. रा₁ ल₂ अ प्र-पुरः । ल₁ ब-पुनः ॥ ४. रा₂-विद्यास्वतिवि० । ५. म-राजन० । ६. रा₂ फ म-स शास्ति । ७. म-स्थिरं ॥ ८. रा₂ फ म-वारिभिः ॥ ९. अतः परमधिकः पाठः—रा₁ ल₁ ल₂ ब अ प्र-भवतश्चाप्यहं वेद्मि युद्धे सत्य-पराक्रमान् । युद्धे नाम रिपोस् तन्त्रमित्युक्ता(?क्त)स्ते क्रियान्वितः ॥ १०. रा₁ ल₁ ल₂ ब अ प्र-अगमंस् ॥ ११. म-नास्ति ॥ १२. रा₁ ल₁ ल₂ ब अ-धर्मे । १३. ब अ-एष निश्चयः । १४. फ-नास्ति । १५. अ फ-नास्ति ॥ १६. फ म-अधर्मो । १७. म-०हीतेन ॥

१९पू] स प्र-सादाद् वि-वृद्धश् च धर्मो राम-व्यपाऽऽश्रयः ।
वि-वर्धयति तत् पक्षं स सुराणां शुभाऽऽवहः ॥१७॥ [१६
२०] विषयेषु प्र-सक्तेन यत्-किंचित्-कारिणा त्वया ।
ऋषीणाम् अग्नि-कल्पानाम् उद्-वेगो[1] जनितो महान् ॥१८॥ [१७
२१] ते सम्प्रति दुरा-धर्षाः प्र-दीप्ता इव पावकाः ।
तपसा भाविताऽऽत्मानो धर्मस्याऽनु-ग्रहे स्थिताः[2] ॥१९॥ [१८
२२] अ-विघ्नेन यजन्ते च यज्ञैः स्वैः-स्वैर्[3] द्वि-जातयः ।
जुह्वत्य् अग्नींश् च विधि-वद् वेदांश् चोच्चैर् अधीयते ॥२०॥ [१९
२३] अभि-भूय च रक्षांसि ब्रह्म-घोषो[5] नि-नादयन्[4] ।
दिशोऽपि प्रथते[6] सर्वाः स्तनयित्नुर् इवोष्ण-गे ॥२१॥ [२०
२४] ऋषीणाम् अग्नि-शरणेष्व[7] अग्निहोत्र-समुत्थि(द्-स्थि)तः ।
आ-दत्ते[8] रक्षसां तेजो धर्मौघो[9] व्य्-आप्नुवन्[10] जगत् ॥२२॥ [२१
२५] तेषु तेषु च देशेषु पुण्येषु सु-दृढव्रतैः ।
क्रियमाणं[11] तपस् तीव्रं सं-तापयति राक्षसान् ॥२३॥ [२२
२६] उत्-पातान् उत्थि(द्-स्थि)तान् दृष्ट्वा सु-घोरान् बहु-धा बहून्[12] ।
वि-नाशम् अनु-पश्यामि सर्वेषां रक्षसाम् अहम् ॥२४॥ [२५
२७] खराऽभिस्तनिता घोरा मेघा भृश-भयंकराः[13] ।
२८पू] शोणितेनाऽभि-वर्षन्ति लङ्काम् उष्णेन सर्व-तः ॥२५॥ [२६
३०पू] चरतां वाहनानां च प्र-पतन्त्य् अश्रु-बिन्दवः । [२७पू
N] अ-यथावच् च शोभन्ते न सङ्ग्रामाऽभिनन्दिनः ॥२६॥[14] [N

---

१. रा$_1$-उद्योगो ॥ २. ब प्र रा$_2$ फ म-रताः ॥ ३. रा$_2$-यज्ञैस्तैस्तैर् । ४. म-उदीरयन् ॥ ५. रा$_1$ श्र-०घोनुनाद० । ६. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-व्यथितास्सर्वास्तेन जिष्णुरिवोदितः ॥ ७. रा$_1$ ल$_1$ ल$_2$ श्र प्र-०शरणे ह्यग्निहोत्रसमन्वितः । ब-०शरणे साग्निहोत्रसमन्वितः । ८. ल$_2$-आधत्ते । ९. रा$_2$ फ म-धूमौघो । १०. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-व्यप्लुवज् ॥ ११. रा$_2$ फ म-चीयमानं ॥ १२. रा$_2$ फ म-उत्पातांश्चोद्गतान् दृष्ट्वा घोरान्बहुविधान् बहून् ॥ १३. रा$_2$ फ म-प्रतिभयं० ॥ १४. रा$_2$ फ म-नास्ति ॥

३०उ] [1]रजो-ध्वस्ता दिशः [1]सर्वा न प्र-भान्ति यथा पुरा । [२७उ
३१पू] [2]सर्वं नष्ट-श्रियं मन्ये [2]सैन्यं ते राक्षसेश्वर[2] ॥२७॥ [N
३२उ] [2]विष्णुं रामम् अहं [2]मन्ये मानुषं देहम् आ-[3]श्रितम् ।
[4]न च [4]मानुष-मात्रो वै राघवो दृढ-विक्रमः ॥२८॥ [N
३३] येन बद्धः सम्-उद्रेऽस्मिन् [5]स सेतुः सु-महाऽद्भुतः[5] ।
३४पू] कुरुष्व नर-राजेन सन्धिं रामेण रावण ॥२९॥ [N
N] कुरुष्व वचनं मेऽ[6]द्यं हितम् उक्तं निशा-चर ।
३४उ] सीता-कृते महा-प्राज्ञ महद् भयम् उप-स्थितम् ॥३०॥ [N
[7]तथेमानि नि-मित्तानि [8]लक्ष्यन्ते राक्षसाऽधिप । [N
N] चण्डा गोमायवो गृध्रा वाशन्ति च सु-भैरवम् ।
प्र-विश्य लङ्कां समये समवायांश् च कुर्वते ॥३१॥ [२८
३७] काली स्त्री पाण्डुरैर् दन्तैः प्र-हसत्य् अग्र-तः स्थिता ।
स्त्रियः स्वप्नेषु [9]मुह्यन्ति(?न्ती)गृहाणि प्रति-धावति[10] ॥३२॥ [२९
३८] रथ्यासु बालकैर् नित्यं कलहः परि-[11]षज्यते । [N
गृहेषु बलि-कर्माणि प्रेताः [12]पर्युप-भुञ्जते ॥३३॥
३९] खरा [13]गोषु प्र-[13]जायन्ते मूषका [14]न-कुलेषु च । [३०
मार्जारा द्वीपिभिः सार्धं सूकराश् च श्वभिः सह ।
४०] किं-नरा राक्षसां[15]श् चैव समेता मानुषैः सह[16] ॥३४॥ [३१
पाण्डुरा रक्त-पादाश् च विह-गाः काल-चोदिताः ।
४१] राक्षसानां वि-नाशाय कपोता गृह-चारिणः[16] ॥३५॥ [३२

---

१. रा₂ फ म-ध्वजा ध्वस्ता विवर्णाश्च । २. प्र-नास्ति ॥ ३. प्र-आ-स्थितं । ४. रा₂ फ-न स मानु० । म-स त्वमा० ॥ ५ रा₁ ल₁ ल₂ ब ञ प्र-सेतुः स महदद्भुतः ॥ ६. रा₁ ल₁ ल₂ ञ-मह्यं ॥ ७. प्र-तेषां यानि । ८. रा₂फ म-लक्षये राक्षसेश्वर ॥ ९. प्र-भिन्नाः—मुष्णन्ति ॥ १०. रा₂ फ म-नास्ति ॥ ११. ल₂-परिष्वज्यते । प्र-प्रतिसज्यते । रा₂ फ म-परिकल्प्यते । १२. रा₁ ल₁ ल₂ ब ञ प्र-एवोपभुञ्जते ॥ १३. रा₁ ल₂ ञ-मेषेषु जा० । ल₁ ब प्र-मेषीषु जा० । १४. ल₁ ब प्र-नकुलीषु । १५. प्र-राक्षसैश् । १६. ब-नास्ति ॥

चीची कूची[1] च वाशन्ति शारिका वेश्मसु स्थिताः । [३३
४२] पतन्ति[2] व्यथिताश् चैव निर्-गताः[3] कलहैषिणः । [३४पू
N] मूषिकाश् चाऽपि रथ्यासु वि-अश्वं प्र-सरन्ति च॥[4] ३६॥ [N
करालो वि-कटो मुण्डः पुरुषः कृष्ण-पिङ्गलः ।
४३] रक्षो-गृहाणि सर्वाणि कालैः[5] कालेऽन्ववेक्षते[6] ॥३७॥ [३५
अत्यु-उग्रं[7] हि प्र-वाशन्ति[8] द्वि-जा क्षुद्राऽभिनन्दिनः ।
४५] क्रव्याऽदा भक्षयिष्यन्ति मांसानि गज-वाजिनाम्॥३८॥ [३६
इदं वचस् तस्य[9] नि-वेद्य माल्य-वान्
निर्-ईक्ष्य रक्षोऽधिपतेः स्थितोऽग्र-तः ।
अनुत्-तमम् उत्तम-पौरुषो बली
४६] बभूव तूष्णीं समवेक्ष्य रावणम् ॥३९॥ [४१
स तद् वचो माल्य-वता[10] सु-भाषितं[10]
दशाऽऽननो न प्र-शशंस मौर्ख्य-तः[11] ।
भृशं जगर्हैव[12] सुदुष्ट-मानसो[12]
N] मुमूर्षुर् अन्यच् च वचोऽभ्युद्-ईरयन्[13] ॥४०॥[14] [४२

इत्यार्षे रामायणे युद्ध-काण्डे[15] माल्यवद्-वाक्यं[16]
नामैकादशः सर्गः ॥११॥

---

१. रा₂ फ-कूचीति । २. रा₂-पचन्ति । ३. रा₂ फ म-निर्जिताः । ४. रा₂ फ म-नास्ति ॥ ५. फ-कानि । ६. रा₂-काले त्ववे० । म-काले ल्यवे० ॥ ७. ल₁-अभ्यग्रं । ८. रा₂ फ म-प्रपश्यन्ति ॥ ९. रा₂ फ म-तत्र ॥ १०. म-मान्यतयाभिभाषितं । ११. रा₁ ल₁ ल₂ ब श्र प्र-मूर्खवत् । १२. प्र-जगर्हे सुदृढबद्धमानसो । १३. रा₁ ल₂ श्र प्र-वचोभ्यधासीत् । १४. ल₁ ब-नास्ति ॥ १५. ल₂ ब प्र-लंकाकांडे । रा₂ म-लंकापर्वणि । १६. म-माल्यवद्वचो ॥

ततो माल्य-वतो वाक्यं हितम् उक्तं दशाऽऽननः ।
१] नाऽ[1]मर्षयत दुष्टाऽऽत्मा कालस्य वशम् आ-गतः ॥१॥ [१
स बद्ध्वा [2]भ्रुकुटीं वक्त्रे क्रोधस्य प्रति-लक्षणम् ।
२] अ-मर्षात् परिवृत्ताऽ[3]क्षो माल्य-वन्तम् अथाऽब्रवीत् ॥२॥ [२
हित-बुद्ध्या यद् अप्य् एतत् तत्-[4]पौरुषम् इहो[5]च्यते ।
३] पर-पक्षं प्र-शस्यैव न तच् छ्रो[6]त्र-सुखं मम ॥३॥ [३
मानुषं कृपणं रामम् एकं शाखामृगाऽऽश्रयम् ।
४] सम्-अर्थं मन्यसे केन त्यक्तं पित्रा वनाऽऽ[7]लयम् ॥४॥ [४
रक्षसाम् ईश्वरं मां च देवतानां भयं-करम् ।
५] अ-हीनं मन्यसे केन हीनं मां [8]जं(?जा)तु विक्रमैः ॥५॥ [५
वीर-द्वेषे[9]ण वा सन्धेः पक्ष-पातेन वा रिपोः ।
६] त्वयाऽहं परुषाण्य् उक्तः पर-प्रो[10]त्सा हितेन [11]वा ॥६॥ [६
प्र-भवन्तं पद-स्थं हि [12]परुषं कोऽभि-[13]धास्यति ।
७] पण्डितः शास्त्र-तत्त्व-ज्ञो विना प्रोत्साहनाद् रिपोः ॥७॥ [७
आ-दाय च वनात् सीतां पद्म-हीनाम् इव श्रियम् ।
८] किम्-अर्थं प्रति-दास्यामि राघवाय भयाद् अह[14]म् ॥८॥ [८
वृतं वानर-कोटीभिः स-सुग्रीवं स-लक्ष्मणम् ।
९] पश्य कैश्-चिद् अहोभिस् [15]त्वं नि-हतं राघवं मया ॥९॥[16] [९

---

१. प्र-न मर्षयति ॥ २. रा$_2$-भ्रुकुटिं चक्रे । ३. रा$_1$ ल$_1$ ल$_2$ ब अ फ-०त्तास्यो । म-०त्तात्मा ॥ ४. प्र रा$_2$ फ म-परुषं । ५. प्र- तदिष्यते । ६. म-चैव सुखं ॥ ७. रा$_2$-वनाश्रयं ॥ ८. रा$_2$ फ म-सत्त्ववि० ॥ ९. प्र-वीरदोषेण । १०. प्र-यदत्रोत्सा० । ११. रा$_2$-च ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-पुरुषं । १३. ल$_1$ ल$_2$ ब अ प्र-को हि भ्राम्यति ॥ १४. रा$_2$ म-इव ॥ १५. रा$_2$-तं । १६. अ-नास्ति ॥

द्वन्द्वे यस्य न तिष्ठन्ति देवता अपि सं-युगे ।
१०] रावणो मानुषं प्राऽऽप्य भयम् आ-हारयेत् कथम् ॥१०॥ [१०
द्वि-धा भज्येयम् अप्य् एव न नमेयं तु कर्हि-चित् ।
११] एष सह-जो दोषः स्व-भावो दुर्-अतिक्रमः ॥११॥ [११
१२पू] यदि तावत् सम्-उद्रस्य सेतुर् बद्धो यदृ-ऋच्छया ।
N] रामेण वि-स्मयः कोऽत्र यतस् ते भयम् आ-गतम् ॥१२॥ [१२
कामं राम इहोत्-तीर्ण(?र्णः) सह वानर-सेनया ।
१३] प्रति-जानामि सत्यं ते न जीवन् प्रति-यास्यति ॥१३॥ [१३
एवं ब्रुवाणं सं-रब्धं क्रुद्धं वि-ज्ञाय रावणम् ।
१४] व्रीडितो माल्य-वान् तूष्णीं तस्माद् देशाद् अपाऽक्रमत् ।१४। [१४
जयाऽऽशिषा च राजानं वर्धयित्वा वि-मृश्य च ।
१५] माल्य-वान् अभ्यनु-ज्ञातो जगाम स्वं नि-वेशनम् ॥१५॥ [१५
रावणस् तु सहाऽमात्यैर् मन्त्रयित्वा वि-मृश्य च ।
१६] लङ्कायाम् अ-तुलां गुप्तिं कारयामास राक्षसः ॥१६॥ [१६
प्र-हस्तं चाऽऽदिदेशाऽथ पूर्व-द्वारेऽरि-सूदनम् ।
१७] दक्षिणे तु महा-वीर्यौ महापार्श्व-महोदरौ ॥१७॥ [१७
पश्चिमे तु तथा द्वारे पुत्रम् इन्द्र-जितं स्वयम् ।
१८] व्या-दिदेश महा-काय[12]ं राक्षसैर् बहुभिर् वृतम् ॥१८॥ [१८
उत्-तरेऽपि च स द्वारे व्या-दिश्य शुक-सारणौ ।
१९] स्वयम् अत्र भ[13]विष्येऽहम् इति तान् मन्त्रिणोऽब्रवीत् ॥१९॥ [१९
राक्षसं तु विरूपाऽक्षं महा-बल-पराक्रमम् ।

---

१. अ-किमर्थं प्रतितिष्ठन्ति ॥ २. रा$_1$ ल$_1$ ल$_2$ अ-भजेयमो वा मां । ३. रा$_2$ फ म-कस्यचित् । ४. रा$_1$ ल$_1$ ल$_2$ ब अ-द्वेषः ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-रामं । ६. रा$_2$ फ म-नत्सत्यं ॥ ७ रा$_1$ ल$_2$-सीतार्थं । ल$_1$ ब अ प्र-सेनास्थं । म-तर्जन्तं ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-विसृज्य । ९. रा$_1$ ल$_1$ ल$_2$ ब अ-रावणः ॥ १०. प्र-तौ ॥ ११. रा$_1$ प्र-महाद्वारे । १२. रा$_2$ फ म-महामायं ॥ १३. प्र म-भविष्यामि ॥

२०] मध्ये सं-स्थापयमास बहुभिः सह राक्षसैः ॥२०॥ [२०

एवं वि-धानं लङ्कायां कृत्वा राक्षस-पुङ्गवः ।

२१] मेने कृताऽर्थम् आत्मानं[1] कृताऽन्त-वशम् आ-गतः ॥२१॥ [२१

वि-सर्जयामास ततः स मन्त्रिणो

वि-धानम् आ-ज्ञाप्य पुरस्य पुष्कलम्[2] ।

जयाऽऽशिषा मन्त्रि-जनेन पूजितो

२२] जगाम सोऽन्तः-पुरम् ऋद्धि-मत् तदा ॥२२॥ [२२

इत्यार्षे[3] रामायणे युद्ध[4]-काण्डे लङ्का-विधानं नाम द्वादशः सर्गः ॥१२॥

---

[वं-१३]= [ त्रयोदशः सर्गः ] =[दा-३७]

नर-वानर-राजौ[5] तु स च वायु-सुतः कपिः ।

१] जाम्ब-वान् ऋक्ष-राजश् च रावणाऽवरजस् तथा ॥१॥ [१

२पू] अङ्ग-दो द्वि-विदो मैन्दो लक्ष्मणो नील एव च ।[7] [२

N] अन्ये च वानर[6]-श्रेष्ठाः शत-शोऽथ सहस्र-शः । [N

अमित्र-विषयं प्राऽऽप्ताः समम् एवाऽभ्य्-अमन्त्रयन् ॥२॥ [३उ

४] इयं सा लक्ष्यते लङ्का पुरी रावण-पालिता ।

५पू] मानुषाऽसुर-गन्धर्वैर् अ-मरैर्[8] अपि दुर्-जया ॥३॥ [४

N] पुर्याम्(?र्या) एवं-विधायां(?यास्) तु मन्त्रयध्वं विनिर्-जये।

५उ] नित्यं संनि-हितो यत्र[9] रावणो रावयन्[10] प्र-जाः ॥४॥ [५

६उ] तथा तेषु ब्रुवाणेषु रावणाऽवरजोऽब्रवीत् ।

वाक्यं हेत्वर्थ-संयुक्तं पुष्कलाऽर्थं वि-भीषणः ॥५॥ [६

---

१. फ-कृतार्थं मन्यसे च त्वं ॥ २. ल$_2$ अ-दुष्करं ॥ ३. फ-नास्ति । ४. ल$_1$ अ प्र-लंकाकाण्डे । म-लंकापर्वणि ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०राजानौ ॥ ६. रा$_1$ ल$_1$ ल$_2$-वानराः श्रेष्ठाः । ७. रा$_2$ फ-नास्ति ॥ ८. म-अमरैश्चापि ॥ ९. रा$_2$-०तो ह्यत्र । म-शापविहितोत्र । १०. फ- रजयन् ॥

८] अनलश् च हरश् चैव सं-पातिः प्र-घसस् तथा ।
९उ] गत्वा लङ्काम् अमात्या मे पुरीं पुनर् इहाऽऽगताः ॥६॥ [७
भूत्वा शकुनयः सर्वे प्र-विष्टास् तां महा-पुरीम् ।
१०] वि-धानं वि-हितं यच् च दृष्ट्वा तत् समुप-स्थिताः ॥७॥ [८
सं-विधानं यद् आहुस् ते रावणस्य दुर्-आत्मनः ।
११] राजंस् तैः[2] कथितं सर्वं यथा-तथ्यं[3] तु तच् छृणु ॥८॥ [९
पूर्वं प्र-हस्तो बल-वान् द्वारम् आ-वृत्य तिष्ठति ।
१२] दक्षिणं तु महा-वीर्यौ महापार्श्व-महोदरौ ॥९॥ [१०
१३पू] इन्द्र-जित् पश्चिमं द्वारं राक्षसैर् बहुभिर् वृतः[4] ।

N] पट्टिशाऽसि-भुशुण्डीभिः शूल-मुद्गर-पाणिभिः ॥१०॥[5] [N
१३उ] नाना-प्रहरणैः शूरैर् आ-स्थितो रावणाऽऽत्मजः । [११उ

१४] उत्-तरं नगर-द्वारं रावणः स्वयम् आ-स्थितः ॥११॥ [१२
विरूपाऽक्षस् तु महता शूल-शक्ति-धनुष्-मता ।
१५] बलेन राक्षसैः सार्धं[6] मध्यमं गुल्मम् आ-श्रितः[7] ॥१२॥[8] [१३
एताम् एवं-विधां गुप्तिं लङ्कायां[9] समुद्-ईक्ष्य ते ।
१६] मामकाः सचिवाः सर्वे शीघ्रं पुनर् इहाऽऽगताः ॥१३॥ [१४
सहस्रं कुञ्जराणां च रथानाम् अ-युतं तथा ।
१७] हयानां चाऽयुतं तत्र साऽग्रा कोटी च रक्षसाम् ॥१४॥ [१५
वि-क्रान्ता लब्ध-लक्ष्याश्[10][11] च सं-ग्रामेष्व् अ-निवर्तिनः ।
१८] इष्टा राक्षस-राजस्य नित्यम् एते निशा-चराः ॥१५॥ [१६
एकैकस्य तु युद्धाऽर्थं रा(?र)क्षसां[12] च विशां-पतेः ।
१९] परिवार-सहस्राणां सहस्रम् उप-तिष्ठते ॥१६॥ [१७

१. रा$_1$ ल$_1$ ल$_1$ ब अ प्र-प्रस्रवस् ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ म-ते । ३. रा$_2$ फ-०तत्त्वं ॥ ४. म-सह । ५. रा$_1$ ल$_1$ ल$_2$ ब अ फ-नास्ति ॥ ६. प्र-सर्वैर् । ७. अ प्र रा$_2$ फ-आस्थितः । ८. म-नास्ति ॥ ९. प्र-लंकायाः । १०. रा$_2$ फ-कामगाः ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-०लक्षाश् ॥ १२. रा$_2$ फ म-राक्षसस्य ॥

एतां प्र-वृत्तिं लङ्कायाम् अनु-प्रोच्य[1] वि-भीषणः । [१८पू
२०] रामं कमल-पत्राऽक्षम् इदं पुनर् उवाच ह ॥१७॥ [१९पू
कुबेरं तु[2] यदा राजन् रावणः प्रत्य्-अयुध्यत ।
२१] षष्टि[3]-शत-सहस्राणि[3] तदा निर्-यान्ति रक्षसाम् ॥१८॥ [२०
परा-क्रमेण वीर्येण ते[4]जसा स[4]त्त्व-गौरवात् ।
२२] सदृशानि स्म सर्वाणि रावणस्य दुर्-आत्मनः[4] ॥१९॥ [२१
अत्रा[5]ऽमर्षो न कर्तव्यो रोषये त्वां[6] न भीषये[6] ।
२३] सम्[5]-अर्थो ह्य् असि वीर्येण[4] सुराणाम्[7] अपि शातने[7] ॥२०॥ [२२
तद् भवान् हरि-वीर्याणां[8] बलेन महताऽऽवृतः ।
२४] सं[9]-क्षोभ्य राक्षसीं[10] सेनां सं[11]-वधिष्यति रावणम्[12] ॥२१॥ [२३
रावणाऽवरजे वाक्यम् एवं ब्रुवति राघवः ।
२५] शत्रूणां प्रति-घाता[13]ऽर्थम् इदं[14] वचनम् अब्रवीत् ॥२२॥[12] [२४
कपीनाम् उग्र-वीर्याणां सहस्रैर् बहुभिर् वृतः । [२५उ
२६] नीलः प्र-हस्तं प्लवं[15]-गो राक्षसं[15] प्रति धावताम्[16] ॥२३॥[12] [N
अङ्ग-दो वालिनः पुत्रो बलेन महताऽऽवृतः ।[12]
२७] दक्षिणे बाधतां[17] द्वारि महापार्श्व-महोदरौ ॥२४॥ [२६
हनु-मान् पश्चिमं द्वारं निर्-यातु[18] पवनाऽऽत्मजः ।
२८] इन्द्रजित-प्रतियुद्धाऽर्थं वृतो वै वानरैः सह [13] ॥२५॥ [२७

१. रा$_1$ ल$_1$ ल$_2$ ब प्र-०शोध्य । अ-०शोच्य ॥ २. म-च । ३. रा$_1$ ल$_1$ ल$_2$ ब अ-षष्टिः शतसहस्राणां ॥ ४. प्र-नास्ति ॥ ५. रा$_2$ फ म-अत्र मन्युर् । ६. फ-न विभीषये । ७. ल$_1$-०णामपि शांतये । ब-तेजसा सत्त्वगौरवात् ॥ ८. रा$_2$ फ म-०वीराणां । ९. रा$_2$ फ म-विक्षोभ्य । १०. प्र-महतीं । ११. रा$_2$ फ-तं वधि० ॥ १२. ल$_1$ ब-नास्ति ॥ १३. प्र-इव घा० । रा$_2$ फ-प्रतिबाधार्थं । १४. रा$_2$ फ-एवं ॥ १५. रा$_1$ ल$_2$ अ प्र-प्रवरं प्लवंगो । १६. रा$_1$ ल$_2$ अ प्र-राक्षसं प्रति ॥ १७. रा$_2$ फ म-धावतां ॥ १८. रा$_2$ फ म-निपीड्य । १९. रा$_2$ फ-निविशत्वप्रमेयात्मा कपिभिर्बहुभिः सह । म-नास्ति ॥

दैत्य-दानव-संघानाम् ऋषीणां च महाऽऽत्मनाम् ।
२९] विप्रकारं[1]-प्रियः क्षुद्रो वरदान-बलाऽन्वितः ॥२६॥[2] [२८
परा-क्रमति यः सर्वाँल् लोकान् सं-तापयन् प्र-जाः ।
३०] तस्य राक्षस-राजस्य रावणस्य वधे वृतः ॥२७॥ [२९
उत्-तरं नगर-द्वारम् अहं सौमित्रिणा सह ।
३१] नि-पीड्योप-निवेक्ष्यामि[3] स-बलो यत्र रावणः ॥[4]२८॥ [३०
वानरेन्द्रस् तु बल-वान् ऋक्ष-राजस् तु जाम्ब-वान् ।
३२] राक्षसेन्द्राऽनुजश् चैव गुल्मे भवतु मध्यमे ॥२९॥ [३१
न चैव मानुषं रूपं कपिभिः कार्यम् आ-हवे ।
३३] [दृष्ट्वा नश्येत[5] बै[6] संज्ञा युद्धे वा मानुषे[7] बले । ?] [३२
वानरो ह्य् एव नश् चिह्नं स्व-जनेऽस्मिन् भविष्यति ॥[7]३०॥ [३३
३४] वयं तु भवतां मध्ये[8] सप्त योत्स्यामहे नराः ।
अहं चैव सह भ्रात्रा लक्ष्मणेनाऽमितौजसा ।
३५] आत्मनः[9] पञ्चमश् चाऽयं[10] सखा मम वि-भीषणः ॥३१॥ [३४
सर्वकार्य-प्रसिद्ध्यर्थम् एवम् उक्त्वा वि-भीषणम् ।
३६] सुवेलाऽऽरोहणे बुद्धिं चकार लघु[11]-विक्रमः ॥३२॥ [३५
ततः[12] स रामो महता बलेन
प्र-च्छाद्य सर्वां पृथिवीं महाऽऽत्मा ।
प्रहृष्ट-रूपोऽभि-जगाम लङ्कां

---

१. रा$_1$ ल$_1$ ब ञ प्र-विप्रकारी च यः । २. ल$_2$-नास्ति ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-०वेश्यामि । ४. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-तान्पुरद्वाःस्थिताञ्शक्तः समर्थः परिरक्षितुं । रामेणाधिष्ठितं चैतद्वरुणोनेव सागरं ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-नश्यति । ६. रा$_2$ म-पुरुषं संज्ञेयं वानरे । फ-पुरुषः संज्ञेयं वानरे । ७. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र म-नास्ति ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-भवंतो मध्ये च । ९. प्र रा$_2$ फ-आत्मना । १०. प्र-पंचमोयं मे ॥ ११. प्र रा$_2$ फ म-मतिमांस्तदा ॥ १२. म-तेन ।

N] वि-भीषणं चार-विधौ नि-योज्य ॥३३॥[1] [३६

इत्यार्षे[2] रामायणे युद्ध-काण्डे[3] विभाग[4]-चिन्ता नाम त्रयोदशः सर्गः ॥१३॥

[ वं–१४ ]= **[ चतुर्दशः सर्गः ]** =[ दा–३८ ]

स तु कृत्वा सु-वेलस्य बुद्धिम् आ-रोहणं प्रति ।
१] लक्ष्मणाऽनुगतो[5] रामः सु-ग्रीवम् इदम्[6] अब्रवीत् ॥१॥ [१
वि-भीषणं च धर्म-ज्ञम् अनु-रक्तं निशा-चरम् ।
२] मन्त्र-ज्ञं च कृत-ज्ञं च मधुरं श्लक्ष्णया गिरा ॥२॥ [२
सु-वेलं साधु शैलेन्द्रम् आशु सानु-शतैश् चितम्[7] ।
३] अधि-रोहामहे सर्वे वत्स्यामोऽत्र निशाम् इमाम् ॥३॥ [३
लङ्काम् आ-लोकयिष्यामो नि-लयं रावणस्य च ।
४] येनाऽऽत्म-जीविताऽन्ताय[8] हृता भार्या यशस्विनी ॥४॥ [४
येन धर्मो न वि-ज्ञातो न कुलं कुल-शालिना ।
५] राक्षस्या[9] नीचया बुद्ध्या येनैतद् गर्हितं कृतम् ॥५॥ [५
तस्माद् वि-वर्धते रोषः स्मृत्वैतं[10] पाप-राक्षसम् ।
६] यस्याऽप-चारान्[11] नीचस्य सर्वान् धक्ष्यामि[12] राक्षसान् । [६
बाणैर् वज्राऽशनि-प्रख्यैर् अ-सुरान् इव वासवः ॥६॥ [N
७] एकश्[13] च कुरुते[13] पापं काल-पाश-वशं[14] गतः[14] ।
नीचस्[15] तस्याऽप-चारेण कुलं येन वि-नश्यति ॥७॥ [७
८] एवं सं-मन्त्र्य काकुत्स्थः सं-क्रुद्धो रावणं प्रति ।

---

१. ल₂-नास्ति ॥ २. फ म-नास्ति । ३. ब अ प्र-लंकाकांडे । म-लंकापर्वणि । ४. रा₂ फ-सैन्यप्रभागो । म-सैन्यविभागो ॥ ५. रा₂ फ म-०नुमतो ॥ ६. रा₂ फ म-इमं । ७. रा₂-सानुशतान्वितं । फ-सानुशतोच्छ्रितं ॥ ८. रा₂ फ म-येन मे जीवि० ॥ ९. प्र-रक्षसा ॥ १०. रा₁ ल₁ ल₂ अ-श्रुत्वैतं । ११. रा₂ म-०पराधान् । १२. रा₁ल₁ ल₂ अ प्र-हन्यामि ॥ १३. रा₁ल₁ ल₂ ब अ प्र-को हि तत्कुरुते । १४. रा₁.ल₁ ल₂ अ प्र-कालस्य वशमात्मनः । ब-कालस्य वशमागतः । म-कलहस्य वशं गतः । १५. रा₁ ल₁ ल₂ ब अ प्र-नीचस्यात्माप० ॥

शीघ्रं[1] सु-वेलम् आऽरोहद् वासाऽर्थं चित्र-काननम् ॥८॥ [८
१०] पृष्ठ-तो लक्ष्मणश्[2] चैनम् अन्व्-अगच्छत् समा-हितः ।
स-शरं धनुर् उद्-यम्य सु-महद् वि-क्रमोपमम् ॥९॥
११] अन्वाऽरोहच् च सु-ग्रीवः साऽमात्यः स-विभीषणः । [९
हनु-मान् अङ्ग-दो नीलो मैन्दो द्वि-विद एव च ॥१०॥
१२] गजो गवाऽक्षो गवयः शरभो गन्ध-मादनः । [१०
१३पू] पनसः[3] कु-मुदश् चैव पृथुश् च हरि-यूथपः ॥११॥ [११पू
१४उ] एते चाऽन्ये च बहवो वानराः शीघ्र-गामिनः[5] । [१२उ
अन्वाऽरोहन्[6] शैलोदग्राश्[7] चालयन्तो[7] महा-शिलाः ॥१२॥ [N
१५] ततः सु-वेलम् आ-रुह्य रामस् तैर् वानरैः सह ।
नि-षसाद गिरेस् तस्य शृङ्गे सम-शिला-तले[8] ॥१३॥ [१४
१६] ततः कपि-गणाः सर्वे समा-वृत्य त्रि-योजनम् ।
आ-रोहन्ति सु-वेलं[9] तु प्लवन्तो[10] दक्षिणा-मुखाः ॥१४॥ [१५
१७] ते वायु-वेगाः प्लव-गास् तं गिरिं गिरि-चारिणः ।
अध्याऽरोहन्त श-तशः सु-वेलं यत्र राघवः ॥१५॥ [१३
१८] ते त्व् अ-दीर्घेण कालेन गिरिम् आ-रुह्य सर्व-तः[11] ।
ददृशुः शिखरात्[12] तस्माद् वि-भक्ताम् इव खे पुरीम् ॥१६॥ [१६
१९] तां सु-वप्रां वर-द्वारां[13] प्राकार-वर-शोभिताम् ।
२०उ] लङ्कां राक्षसैः पूर्णां ददृशुर् हरि-यूथपाः ॥१७॥ [१७
प्राकार-वलभी[14]-संस्थैस् तमो-नीलैर् निशा-चरैः ।
२२] ददृशुस् ते हरि-श्रेष्ठाः प्राकारम् अपरं[15] कृतम् ॥१८॥ [१८

---

१. रा२ फ-रामः ॥ २. रा२ फ म-लक्ष्मणस्त्वेनं ॥ ३. रा२-पवनः । ४. प्र-नास्ति ॥ ५. रा२ फ-शीघ्रविक्रमाः । ६. रा२-अध्यारोहन् । ७. रा२ फ म-इवोदग्राः शातयन्तो ॥ ८. रा२ फ-०तटे ॥ ९. रा१ ल१ ल२ ब श्र प्र-सुवेलस्य । १०. म-पतन्तो ॥ ११. फ-सर्वशः । १२. रा१ ल१ ल२ ब-विवरात् ॥ १३. प्र-नवद्वारां ॥ १४. रा२ फ म-प्राकारधरणीसं० । १५. रा१ ल१ ल२ ब-परमं ॥

ते दृष्ट्वा वानराः सर्वे राक्षसान् युद्ध-काङ्क्षिणः ।
२३] ससृजुर् वि-पुलान् नादांस् तत्र रामस्य पश्यतः ॥१९॥ [१९
ततोऽस्तम् अगमत् सूर्यः सन्ध्यया प्रति-रंजितः[1] ।
२४] पूर्ण-चन्द्र-प्रदीपा[2] च क्षपा[3] समभि(?भ्य) वर्तत[4] ॥२०॥ [२०
स-चन्द्र-ग्रह-नक्षत्रं नभोऽदृश्यत सागरे ।
२५] द्वितीयम् इव चाऽऽकाशं स-चन्द्र-ग्रह-तारकम् ॥२१॥ [N
ततः स रामो हरि-वाहिनी-पतिर्
वि-भीषणश् चर्क्ष-पतिश् च जाम्ब-वान् ।
स-लक्ष्मणो यूथप[5]-यूथ-संवृतः
N] सुवेल-पृष्ठे न्य्-अवसन्[6] यथा-सुखम् ॥२२॥ [२१

ततः सु-वेलस्य गिरेश् च वासं(?से)
शृङ्गे च तस्थौ स हित(?तैः) समेतः ।
सं-भ्राजयन् वै रजनी-मुखे(?खं) तं
N] प्र-भाभिर् ईड्याभिर् अतीऽव भाति ॥२३॥[7] [N
ततः प्र-भाते सचिवांस् तु राघवः
प्र-याणम् आ-ज्ञापयतेत्य् अभाषत ।
प्रवीऽऽक्षमाणस् त्व् अथ दक्षिणा-मुखस्
N] ततश् च लङ्कां ददृशे महा-पुरीम् ॥२४॥[8] N

---

इत्यार्षे रामायणे युद्ध-काण्डे[9] सु-वेलाऽऽरोहणं नाम चतुर्दशः सर्गः ॥१४॥

[वं – १८ ]= [ पञ्चदशः सर्गः ] =[ दा – ३९ ]

ते रात्रिम् उषिताः[10] सर्वे सु-वेले हरि-यूथपाः ।
१] लङ्काया ददृशुर् दूराद् वनान्य् उप-वनानि च ॥१॥ [१

---

१. म-प्रतिरक्षितः । २. प्र-०प्रदीपेव । रा$_2$-०प्रतीपा च । ३. रा$_1$-क्षमा । ४. ल$_2$-०वर्तते । म-०वर्त्तताम् ॥ ५. म-यूथपतिस्तु सं० । ६. रा$_1$ ल$_1$ ल$_2$ ब-न्यवसद् । प्र-त्ववसद् ॥ ७. रा$_2$ फ म-नास्ति ॥ ८. फ म-नास्ति । ९. अ प्र-लंकाकांडे । म-लंकापर्वणि ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-रात्रिसुखिताः ॥

सम-[1]भौमानि रम्याणि विशालाऽऽ[2]यतनानि च ।
२] दृष्टि-रम्याणि ते दृष्ट्वा बभूवुर् जात-विस्मयाः ॥२॥ [२
चम्पकाऽशोक-[3]वकुल-साल-ताल-वनाऽऽयुता ।
३] तमाल-वन-संच्छन्ना रक्त[4]मालक-संवृता ॥३॥ [३
हिन्ता[5]लैर् अर्जुनैः सर्क्षैः(?ज्जैः)सप्त-पर्णैश् च पुष्पितैः ।
४] तिलकैः कर्णिकारैश् च तथा पाटलिभिर् द्रुमैः ॥४॥ [४
५पू] शुशुभे पर्वताऽग्रैश् च लता-परिकरैर् [6]घनैः ।
६पू] लङ्का-काननजैः [8]पुष्पैर् यथेन्द्रस्याऽमरावती ॥५॥ [५
५उ] विचित्र-कुसुमोपेतै रक्त-कोमल-पल्लवैः ।
६उ] शाद्-वलानि च नीलानि चित्राश् [9]च वन-राजयः ॥६॥ [६
७उ] जालकं मञ्जरी-पुष्पं फलं किसलयानि च ।
[10]धारयन्ति नगास् तत्र नरा इव वि-भूषणम् ॥७॥ [७
८] [11]तंच् चैत्र-रथ-संकाशं मनो-ज्ञं नन्दनोपमम् ।
वनं सर्व-[12]भृंगं रम्यं शुशुभे षट्-पदाऽऽकुलम् ॥८॥ [८
९] [13]दात्यूहकैः पक्षि-गणैर् नृत्यमानैश् च [14]बर्हिभिः ।
तथा पर-भृतैश् चैव शुशुभे तद् वनं महत् ॥९॥ [९
१०] तानि [15]मत्त-विहंगानि भ्रमराऽऽचरितानि च ।
कोकिला-कुल-षण्डानि विहंगाऽभि[16]रुतानि च ॥ [17]१०॥ [१०
११] भृङ्ग-राजाऽभिलीनानि कुररी-सेवितानि च ।[18]
काकोलूक-विघुष्टानि सारसाऽभिरुतानि च ।[17] [११

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-समसौम्यानि । २. रा$_2$ फ म-०लान्यायतानि ॥ ३. रा$_2$ म-०कबहुलां शाल···युतां । ४. प्र-०मालाभिसंयुतां ॥ ५. रा$_2$- हरितालैर् ॥ ६. रा$_2$ फ-द्रुमैः । ७. म-नास्ति । ८. रा$_2$ फ म-फुल्लैर् ॥ ९. म-विचित्रा ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-धारयंत्यङ्गनास् ॥ ११. प्र-तैश् । १२. रा$_2$ फ-सर्वतुंगं ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-दात्यूहकोयष्टिरुतैर् । १४. म-बर्हिणैः ॥ १५. अ प्र-तन्निमित्तवि० । १६. रा$_1$ ल$_1$ ल$_2$ प्र-०भिमतानि ॥ १७. ब-नास्ति ॥ १८. ब अ-नास्ति ।

१२] विविशुस् ते ततस् तानि हरयः[1] काम-रूपिणः ॥११॥ [१२पू
१३] तेषां नि-वसतां तत्र वानराणां तरस्विनाम्[2] ।
पुष्प-संसर्ग-सुरभिर् ववौ घ्राण[3]-सुखोऽनिलः ॥१२॥ [१३
१४] तेषां नि-र्घोषस् तत्राऽऽसीत् प्रवि-भागैर् अनेक-शः । [N
अकम्पयंस् ते लङ्कां वै स्वैर्[4] नादैर्[4] नदतां वराः ॥१३॥
१५] सर्पद्भिश् च महा[5]-यूथैर् मही चरण-पीडिता । [१५उ
उत्-पपात रजश् चोर्ध्वं[6] कपोताङ्गरुहोपमम् ॥१४॥ [१६
१६] अन्ये तु हरि-यूथानां[7] वि-क्रान्ता हरि-यूथपाः ।
सु-ग्रीवेणाऽभ्यनु-ज्ञाता लङ्कां जग्मुः पताकिनीम् ॥१५॥ [१४
१७] वि-त्रासयन्तो वि-हगांस् त्रासयन्तो मृगांस्[8] तथा । [१५पू
आ-स्फोटयन्तो खेलन्तः[9] सर्वे रण-समुत्सुकाः ।
१८] कम्पयन्तश् च लङ्काया वनान्य् उप-वनानि च ॥१६॥ [N
ऋक्षाः सिहा वराहाश् च महिषा भ्रमरा गिराः(?मृगाः) ।[10]
१९] तेषां शब्देन वि-त्रस्ता जग्मुर्[11] भीता[11] दिशो दश ॥१७॥ [१७
शिखरस् तु त्रि-कूटस्य प्रांऽशुर् एको नभः स्पृशन् ।
२०] समन्ताद्[12] द्रुम-संच्छन्नो महा-जलद्[13]-सन्निभः ॥१८॥ [१८
श्वेतश् चोर्ध्वं च वि-स्तीर्णो विमलो[14]ऽऽदित्य-सन्निभः[15] ।
२१] श्लक्ष्णः श्री-मान् महांश् चैव दुष्प्राऽऽपः शकुनैर् अपि ॥१९॥
मनसाऽपि दुरा[16]-रोहः स शैलः किमु कर्मणा । [१९
२२] नि-विष्टा यस्य शिखरे लङ्का रावण-पालिता ॥२०॥ [२०पू
सा पुरी गो-पुरैश् चित्रैर् विविधा[17]ऽऽकार-तोरणैः ।

१. रा२ फ म-वनान्युपवनानि च ॥ २. प्र रा२ फ-महौजसां । ३. फ-घ्राणसु० ॥ ४. रा२फ म-नादैस्तैर् ॥ ५. रा२ फ म-तथा यूथैर् । ६. प्र रा२ फ म-कपोतारुणसन्निभं ॥ ७. प्र रा२ फ म-हरिवीराणां ॥ ८. रा२ म-मृगद्विपान् । फ-मृगद्विजान् । ९. रा२-वल्गंतः । १०. रा१ ल१ ल२ ब श्र प्र-नास्ति । ११. रा१ ल१ ल२ ब श्र प्र-जग्मुस्तेपि ॥ १२ रा२-राजतद्रुम० । १३. रा२ फ-०महारजतसं० ॥ १४. म-०लादर्शस० ॥ १५. प्र-नास्ति ॥ १६. प्र-न चारोहः । १७. म-प्राकारैस्तोरणैरपि ।

२३] काञ्चनेन च जालेन राजतेन च शोभते ॥[1]२१॥ [२१
प्रासादैश् च वि-मानैश् च लङ्का परम-शोभिता ।
२४] घनैर् इव तपाऽपाये मध्यमं वैष्णवं पदम् ॥२२॥ [२२
यस्यां स्तम्भ-सहस्रेण प्रासादः सर्व-[2]काञ्चनः ।
२५] कैलास-शिखराऽऽकारो दृश्यते खम् इवोल्[3]-लि[3]खन् ॥२३॥ [२३
चैत्यै[4]ः स राक्षसेन्द्रस्य रावणस्य दुर्-आत्मनः ।
२६] शतेन रक्षसां नित्यं यै[5]ः सम्-अग्रेण र[5]क्ष्यते ॥२४॥ [२४
तां सम्-ऋद्धां स[6]मृद्धाऽर्थो लक्ष्मी-वांल् लक्ष्मणाऽग्रजः ।
२८] रावणस्य पुरीं रामो ददर्श सह वानरैः ॥२५॥ [२७
तां रत्न-पूर्णां[7] बहु-संविधानां ।
प्रासाद-मालाभिर् अलङ्कृतां च ।
पुरीं महा-यन्त्र-कपाट[7]-युक्तां
N] ददर्श रामः स[8]ह ल[8]क्ष्मणेन ॥२६॥ [२९

इत्यार्षे रामायणे युद्ध-का[9]ण्डे लङ्का-द[10]र्शनं नाम पञ्चदशः सर्गः ॥१५॥

---

## [वं-१६]= [षोडशः सर्गः] =[दा-४१]

अथ तत्र नि-मित्तानि दृष्ट्वा लक्ष्मण-पूर्व[11]जः ।
१] [11]लक्ष्मणं सम्परि-ष्व[11]ज्य त[12]तो वचनम् अ[12]ब्रवीत् ॥१॥ [१
[परि-ग्रा[13]ह्योदकं तूर्णं[13] वनानि फलवन्ति च ।
२] ब[14]लं च[14] प्रवि-भ[15]ज्येदं व्यू[16]-ऊहे तिष्ठाम लक्ष्मण ॥२॥ ] [१०

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ-नास्ति ॥ २. रा$_2$ फ-समलंकृतः । ३. फ-इहोल्लि० । ४. रा$_1$ अ-दैत्यः ॥ ५. म-स यत्नेन च र० ॥ ६. रा$_1$ ल$_2$ ब अ प्र-०द्धार्थो ॥ ७. म-०कपाटगुल्मां । ८. रा$_2$फ म-सहितो बलेन ॥ ९. रा$_1$-सुन्दरकाण्डे । ब अ प्र रा$_2$-लंकाकाण्डे । म-नास्ति । १०. रा$_2$फ-लंकादर्शनो ॥ ११. प्र-नास्ति । १२. रा$_2$ फ ब-वचोवददतन्द्रितः ॥ १३. रा$_2$ फ-प्रविग्रा० । १४. ल$_2$-फलं च । ब-बलानि । १५. रा$_1$ ल$_1$ ल$_2$ ब अ-प्रविसृज्येदं । १६. रा$_2$-ब्रूहि ॥

लोक-क्षय-करं भीमं भयं पश्याम्य् उप-स्थितम् ।
३] नि-बर्हणं [1]सु-वीराणां मृधे पश्यामि [1]रक्षसाम् ॥३॥ [११
वाता हि परुषा वान्ति कम्पते च वसु-धरा ।
४] पर्वताऽग्राणि वेपन्ते नदन्ति धरणी-धराः ॥४॥ [१२
५पू] मेघाः क्रव्याद्-प्रतीकाशाः परुषाः परुष-स्वनाः ।[2]
क्रूरा वारि प्र-वर्षन्ति मिश्रं रुधिर-बिन्दुभिः ॥५॥ [१३
६] रक्त-चन्दन-सङ्काशाः [3]सन्ध्या-परम-दारुणाः ।[2]
ज्वलन्त्यो नि-पतन्त्य् [4]एव महोल्काः सूर्य-मण्डलात् ।[5] [N
N] आदित्य-पथम् आ-[6]वृत्य [7]जनयन्त्यो महद् भयम् ॥६॥
७उ] दीना दीन-[8]स्वना घोरास् [9]त्व् अ-प्रशस्ता मृग-द्विजाः ।[10] [१५
रजन्याम् अ-[11]प्रशस्तश् [11]च सं-तापयति चन्द्रमाः ।
८] क्षि[12]प्त-रक्तांऽशु-पर्यन्तो यथा लोकस्य सं-क्षये ॥७॥
ह्रस्वो रूक्षोऽप्रशस्त[13]स् [13]तु परि-वेष[14]श् च लोहितः । [१६
९] आदित्य-मण्डले [15]नीलः पश्य लक्ष्मण दृश्यते ॥८॥
चन्द्रमा न यथा-वच् च नक्ष*त्राण्य् अभि-पद्यते ।
१०] युगाऽन्त इव लोकानां पश्य लक्ष्मण दृश्यते ॥९॥[16] [१७
[17]कङ्काः श्येनास् तथा गृध्रा नीचैः परि-[18]चरन्ति [19]च ।

---

१. रा$_2$ फ म-प्रवीराणां मृधे वानरर० ॥ २. फ म-नास्ति ॥ ३. रा$_2$-मेघाः पर० । ४. रा$_1$ ल$_1$ ल$_2$ ब अ-एषु । ५. अतः परमधिकः पाठः—रा$_1$ ल$_1$ल$_2$ ब अ रा$_2$ फ-ज्वलच्च निपतत्येतदादित्यादग्निमंडलं । म-नास्ति । ६. म-आविश्य । ७. रा$_1$ ल$_1$ल$_2$ ब अ प्र म-०यन्तो ॥ ८. प्र रा$_2$ फ म-०स्वरा । ९. म-नास्ति । १०. अतः परमधिकः पाठः—म-सैंहिकेयेन च तथा गृहीतौ चन्द्रभास्करौ । अपर्वणि त्रयोदश्यां सपरिवेषमण्डलौ ॥ वक्रमंगारकश्चक्रे विशाखासु सुभैरवं । अशरीरास्तथा वाचो श्रूयन्ते ह्यशुभावहाः । उभे सन्ध्ये च वाशंते क्रव्यादाश्च सुदारुणाः । ११. रा$_1$ल$_1$ल$_2$ ब-अप्रमत्तश् । १२. रा$_2$फ म-कृष्णर० ॥ १३. प्र रा$_2$ फ म-प्रशस्तश्च । १४. रा$_1$-रविवेशश्च लो० । रा$_2$फ-परिवेषः सुलो० । प्र-परिवेषस्तु लो० । म-परिवेषोस्य लो० । १५. म-लीनः ॥ १६. म-नास्ति ॥ १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म-लंकां । १८. म-पतन्ति । १९. प्र-हि ।

११] शिवाश् चाऽप्य् अ-शिवा वाचः प्र-वदन्ति महा-स्वनाः।१०।[१८
तूर्णम् अद्य दुरा-धर्षां पुरीं रावण-पालिताम् ।
१३] अभि-[1]यामो जवेनैव सर्व-तो हरिभिर् वृताः ॥११॥ [२०
इत्य् एवं तु वदन् वीरो लक्ष्मणं लक्ष्मणाऽग्रजः ।
१४] तस्माद् अव-ततारा॒ऽऽशु पर्वताऽग्रान् महा-बलः ॥१२॥ [२१
अव-तीर्य तु धर्माऽऽत्मा तस्माच् छैलात् स राघवः ।
१५] परैर् अ-धृष्यम् अ-क्षोभ्यं ददर्श बलम् आत्मनः ॥१३॥[2] [२२
ततस् तं व्य्-ऊह्य सु-ग्रीवः कपि-राजो महा-बलः ।
१६] काल-ज्ञो राघवस्याऽऽज्ञां युद्धाऽऽकांक्षी भ्युद्-ऐक्षत [3]१४[4] [२३
ततः काले महा-बाहुर् बलेन महताऽऽवृतः ।
१७] प्र-तस्थे पुर-तो धन्वी लङ्काम् अभि-मुखः पुरीम् ॥१५॥ [२४
तं विभीषण-सुग्रीवौ हनु-मान् जाम्ब-वान् नलः ।
१८] ऋक्ष-राजोऽङ्ग-दो नीलो लक्ष्मणश् चाऽन्व्-अयुस् तदा १६[२५
ततः पश्चात् सु-महती पृतनार्क्षवनौकसाम् ।
१९] प्र-च्छाद्य महतीं भूमिं प्र-ययौ येन राघवः ॥१७॥ [२६
शैल-शृङ्गाणि शत-शः प्र-वृद्धांश् च मही-रुहान् ।
२०] जगृहुः कुञ्जर-प्रख्या वानरा बाहु-शालिनः ॥१८॥ [२७
ते त्व् अ-दीर्घेण कालेन राम-सुग्रीव-लक्ष्मणाः ।
२१] रावणस्य पुरीं लङ्काम् आ-सेदुः सुदुरा-सदाम् ॥१९॥ [२८
पताका-मालिनीं रम्याम् उद्यान-वॅन-शोभिताम् ।

---

१. ब-अभिरामो ॥ २. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-नास्ति ॥ ३. अतः परमधिकः पाठः—रा$_2$ फ-व्यूह्य तद्वानरसैन्यं प्रायाल्लंकां पुरीं प्रति । बद्धगोधांगुलित्राणौ शरचापाऽसिधारिणौ ॥ दिव्यशस्त्रास्त्रसम्पन्नौ आबद्धकवचावुभौ । पुरस्कृत्य महावीर्यौ तावुभौ रामलक्ष्मणौ ॥ विभीषणेनानुगतौ प्रवरैश्च प्लवंगमैः । ततस्तु हेमपिंगानां पृतना सा वनौकसां ॥ समुद्रकल्पा महती लङ्कामभ्यपतत्तदा । म-नास्ति ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र म-नास्ति ॥ ५. म-उद्यानशतशो० ।

२२] चित्र-वप्रां सुदुष्प्राऽऽपाम् उच्च-प्राकार-तोरणाम् ॥[1]२०॥ [२९
तां सुरैर् अपि दुष्प्रेक्षां दृष्ट्वा राम-प्रचोदिताः ।
२३] यथा-निवेशं[2] सम्प्रा[3]ऽऽप्य न्य्-अवसन्त[4] वनौकसः ॥२१॥ [३०
दश-योजन-मात्रं तु मण्डलं[5] वानरं बलम् ।
२४] परि-क्रम्य[6] तदा लङ्कां युद्धायाऽभि-ससार ह ॥२२॥ [N
लङ्काया[7] उत्-तरं[8] द्वारं शैल-शृङ्गम् इवोन्-नतम् ।
२५] रामः सहाऽनुजो धन्वी जुगोप च रुरोध च ॥२३॥ [३१
लङ्काम् उपनि-विष्टे च[9] रामे दशरथाऽऽत्मजे ।
२६] लक्ष्मणाऽनुचरे वीरे व्यथिताः सर्व-राक्षसाः[9] ॥२४॥ [३२
नाऽन्यो रामाद् धि तद् द्वारं सम्-अर्थः परि-रक्षितुम् ।
२८] रावणाऽधिष्ठितं तद् धि वरुणेनेव सागरम् ॥२५॥ [३३
राक्षसैः साऽऽयुधैर् उग्रैर् अभि-गुप्तं[10] समन्त-तः ।
२९] वीर्य-विक्रम-सम्पन्नैः पातालम् इव दानवैः ॥२६॥ [३४
राक्षसैर् विविधाऽऽकारैः शुशुभे[11] सा महा-पुरी[11][13] ।
३०] समस्तैर्[12] बहुभिर् गुप्ता नागैर् भोग-वती यथा ॥२७॥ [N
विन्[13]-न्यू-अस्तानि च योधानां[13] बहूनि वि-विधानि च ।
३१] तस्याम् आयुध-[14]जातानि वि-चित्राणि[15] भृशं[15] तदा ॥२८॥ [३५
पूर्वं तु द्वारम् आऽरक्षन्[16] नीलो हरि-चमूपतिः ।
३२] मैन्दश् च द्वि-विदश् चोभौ[17] श्वेतं[18] गिरिम् इवोर-गौ ॥२९॥ [३६

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ-नास्ति ॥ २. म-०निदेशं । ३. प्र-संस्थाप्य । म-संपीड्य । ४. म-निवसन्तो ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-मृदद्वै । ६. रा$_2$ म-परिक्षिप्य ॥ ७. रा$_2$ फ म-लंकायास्तूत्तर ॥ ८. रा$_2$ फ म-तु । ९. प्र-सर्वगर्हिताः । रा$_2$ फ म-सर्वनैर्ऋताः ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब-अभिक्षिप्तं ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०भे सा महाचमूः । म-नास्ति । १२. रा$_2$ फ-समन्तात् । १३. म-नास्ति ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-चायुध० । १५. रा$_2$ फ म-चित्राणि ददृशे ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-आगम्य । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-चैव । १८. रा$_1$ ल$_1$ ल$_2$ ब अ-यथा । प्र-तथा ॥

अङ्ग-दो दक्षिणं द्वारं [1]जगृहे पृतनाऽन्वितः[2] ।
३३] ऋषभेण गवाऽक्षेण गजेन गवयेन च ॥३०॥ [३७
हनु-मान् पश्चिमं द्वारं ररक्ष बल-वान् कपिः ।
३४] प्र-घसश् च प्र-माथी च यत्राऽस्य सचिवाव् उभौ ॥३१॥ [३८
मध्यमे च स्वयं गुल्मे सु-ग्रीवः सम्-अतिष्ठत ।
३५] सह सर्वैः कपि-श्रेष्ठैः सुपर्ण-[3]सम-विक्रमैः ॥३२॥ [३९
वानराणां तु षट्-त्रिंशत् कोट्यस् तैः सह यूथ-पैः ।
३६] नि-पीड्योपनि-विष्टाश् च सु-ग्रीवो यत्र वानरः ॥३३॥ [४०
शासनाद् [4]एव रामस्य [5]सु-ग्रीवः स-विभीषणः[5] ।
३७] द्वारे द्वारे प्लवं-गानां कोटीं कोटीं न्य्-अवेशयत् ॥३४॥ [४१
[5]पश्चिमेन तु [5]रामस्य सु-ग्रीवः सह-[6]जाम्बवान् ।
३८] अ-दूरे मध्यमे गुल्मे तस्थौ बहु-बलाऽऽ[7]वृतः ॥३५॥ [४२
ते तु वानर-शार्दूलाः शार्दूला इव दं[8]ष्ट्रिणः[10] ।
३९] गृहीत्वा द्रुम-शैलांस् तु प्र-हृष्टा योद्धुम् उद्-[9]यताः ॥३६॥ [४३
सर्वे विकृत-लाङ्गूलाः सर्वे दन्त-नखाऽऽयुधाः ।
४०] सर्वे विकृत-वर्णाऽङ्गाः सर्वे च विकृताऽऽननाः ॥३७॥ [४४
४१उ] दश-नाग-बलाः केचित् केचिद् दश-गुणोत्तराः ।
केचिन् नाग-सहस्रस्य बभूवुस् तुल्य-विक्रमाः ॥३८॥ [४५
४२] सन्ति मेघ-बलास् तत्र तथा वायु-बलोपमाः ।
अप्रमेय-बलाश् चाऽन्ये तत्राऽऽसन् हरि-यूथपाः ॥३९॥[11] [४६
४३] [12]अद्भुतश् च वि-चित्रश् [12]च तेषाम् आसीत् समा-गमः ।

---

१. रा$_2$ फ-जग्राह । म-ररक्ष । २. रा$_2$-०नावृतः । म-बलवान् कपिः ॥ ३. रा$_2$ फ म-०र्णश्वसनोपमैः ॥ ४. रा$_2$ फ म-अथ । ५. ल$_1$ म-नास्ति ॥ ६. ल$_1$-सहबान्धवः । ७. ब प्र रा$_2$ फ म-०बलानुगः ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-शृंगिणः । ९. प्र-आगताः । १०. म-नास्ति । ११. म-नास्ति ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब श्र-अत्यद्भुतश्चित्राश्च । रा$_2$ फ-अद्भुतश्चेत्र चित्रश्च ।

तत्र वानर-सैन्यानां शलभानाम् इवोद्-गमः ॥४०॥ [४७
४४] प्रति-पूर्णम् इवाऽऽकाशं प्र-च्छन्नेव च मेदिनी ।
लङ्कां प्रति नि-विष्टैश् च सं-पतद्भिश् च वानरैः ॥४१॥ [४८
४५] शतं शत-सहस्राणां पृथग् ऋक्ष[1]-वनौकसाम् ।
लङ्का-द्वाराण्य् उपाऽऽजग्मुः शत-[2]शस् ते समन्त-तः ॥४२॥ [४९
४६] अन्ये चाऽन्येषु देशेषु संन्य्-अस्ताः सु-महाबलाः ।[3] [N
छादयन्तो गिरिं सर्वं सम्-अन्तात् ते वनौकसः । [५०
४७] अयुतानां [4]सहस्रं च लङ्कां समभ्य्-[5]अवर्तत ॥४३॥ [५१
वानरैर् बल-वद्भिश् च बभूव द्रुम-पाणिभिः ।
४८] सर्व-तः सं-वृता लङ्का दुष्प्र-वेशाऽपि वायुना ॥४४॥ [५२
राक्षसा वि-स्मयं जग्मुः [6]सहसैव नि-पीडि[7]ताः ।
५०] वानरैर् मेघ[8]-सङ्काशैः शक्र-तुल्य-पराक्रमैः ॥४५॥ [५३
सहस्रैर्[9] बहुभिश् चाऽत्र नील-मेघ-निभैस् तथा ।
५१] गिरि-संहननैश् चैवं वानरैर् आ-वृता दिशः ॥४६॥ [N
लङ्कायाम् [10]अभवच् [10]छब्दो मेघौघ[11]स्येव [12]पर्वते ।
४९] सागरस्येव भिन्नस्य यथा स्यात् सलिल[13]-स्वनः ॥४७॥ [५४
निर्-ह्राद इव सं-जज्ञे [14]स बलौघ-स्वनो [14]महान् ।
५२] लङ्कायां शुश्रुवे शब्दः सागरस्येव भि[15]द्यतः ॥४८॥ [N
तेन शब्देन महता स-प्राकारा स-तोरणा ।

---

१. रा$_2$ फ म- संछ० ॥ २. रा$_2$ फ म-अन्ये जग्मुः ॥ ३. प्र-संछादितो गिरिः सर्वस्तैः समन्ताद् वनौकसैः । रा$_2$ फ-आछाद्यत गिरिः सर्वैस्तैः समन्ताद्व-नौकसैः । म-संछाद्य तं गिरिं स० । ४. फ-सहस्रैश् । ५. रा$_1$ ल$_1$ ल$_2$ ब अ-०भिवर्तते । म-अवाभ्यवर्तत ॥ ६. रा$_2$ फ म-सहसा विनिपी० । ७. अ प्र-घोरसं० । ८. प्र रा$_2$ फ म-शक्रवीर्यप० ॥ ९. प्र रा$_2$ फ म-गिरिकूटप्रमाणैश् च ॥ १०. म-अभितः शब्दो । ११. रा$_2$ फ-महौघस्येव । १२. रा$_2$-वर्धतः । म-वर्षतः ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-सलिलश्च्युतः ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-सबलो यत्र राघवः । १५. रा$_2$ फ म-मध्यतः ॥

५३] लङ्का प्र-चलिता सर्वा रक्षसाम् आ[1]-गतं भयम् ॥४९॥ [५५
राम-लक्ष्मण-गुप्ता सा सु-ग्रीवेण च वाहिनी ।[2]
५८] बभूव सुदुर्धर्षा[3] सर्वैर् अपि सुराऽसुरैः ॥५०॥ [५६
राघवस् तन् नि-वेश्यैवं सैन्यं स्वं रक्षसां वधे ।
५९] सं-मन्त्र्य मन्त्रिभिः सार्धं निश्-चित्य च पुनः पुनः ॥५१॥
आनन्तर्यम् अभिप्रेप्सुः क्रम-योगस्य[4] तत्त्व-वित् । [५७
६०] विभीषण[5]-मते तिष्ठन् राज-धर्मम् अनु-स्मरन् ॥५२॥
अङ्गदं वालि-तनयं समा-हूयाऽब्रवीद् वचः । [५८
६१] गच्छ सौम्य दश-ग्रीवं ब्रूहि मद् वचनाद् इदम् ॥५३॥
लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गत-व्यथः । [५९
६२] भ्रष्टैश्वर्यं गत-श्रीकं मुमूर्षुं नष्ट-चेतसम् ॥५४॥
ऋषीणां देवतानां च गन्धर्वाऽप्सरसां तथा । [६०
६३] नागानाम् अथ यक्षाणां राज्ञां च रजनी-चर ॥५५॥
यत् त्वयाऽप[6]-कृतं मोहाद् अव-लिप्तेन राक्षस । [६१
६४] नूनं तेऽद्य गतो दर्पः स्वयम्भु-वरदान-जः ॥५६॥
तस्य दण्ड-धरस् तेऽहं भार्या-हरण-कर्षितः ।
६५] दण्डं धारयितुं[7] तीव्रं लङ्का-द्वारे व्यव-स्थितः ॥५७॥ [६२
पदवीं देवतानां च महर्षीणां च राक्षस ।
६६] राजर्षीणां च सर्वेषां गमिष्यामि युधि स्थितः ॥५८॥ [६३
छलेन येन मे सीता[8] मायया राक्षसाऽधम[9] ।
६७] माम् अति[10]-क्रमयित्वा त्वं हृतवांस् तद् वि-दर्शय ॥५९॥ [६४
अ-राक्षसम् इमं लोकं कर्ताऽस्मि नि-शितैः शरैः ।
६८] नो वा[11] शरणम् अभ्यु-एषि माम् उपाऽऽदाय मैथिलीम् ६० [६५

१. रा₂ फ म-चागतं ॥ २. फ-नास्ति । ३. रा₂ फ म-दुर्धर्षतमा ॥
४. रा₂ फ म-०योगार्थत० । ५. रा₂ फ म-विभीषणस्यानुमते ॥ ६. फ-०पहृतं ॥
७. प्र-धारयति ॥ ८. ल₁ल₂ म-सीतां । ९. प्र-०साधिप । १०. रा₂-अपक्रा० ॥
११. रा₂ फ म-न चेच्छरणं ॥

लङ्कैश्वर्यं[1] परि-त्यज्य हृत-राज्यो हृताऽऽसनः ।
६९] रक्षस्व जीवितं मूढ मम निर्-यात्य मैथिलीम् ॥६१॥ [N
धर्माऽऽत्मा रक्षसां श्रेष्ठः सम्प्राऽऽप्तोऽयं वि-भीषणः ।
७०] लङ्कैश्वर्यं महद् धी-मान् मद्-गुप्तः पालयिष्यति ॥६२॥ [६६
न हि राज्यम् अ-धर्मेण भोक्तुं क्षणम् अपि त्वया ।
७१] शक्यं मूर्ख-सहायेन धृष्टेना[2]ऽविजिताऽऽत्मना ॥६३॥ [६७
युध्यस्व वा धृतिं कृत्वा शौर्यम् आ-लम्ब्य राक्षस ।
७२] मच्-छरैस् त्वं रणे शान्तस् ततः शान्तिर् भविष्यति[3]॥६४॥[६८
यद्य् आ-विशसि लोकांस् त्रीन् पक्षी भूत्वा मनो-जवः ।
७३] मम चक्षुष्-पथं प्रा[4]ऽऽप्तो नहि जीवन् वि-मोक्ष्यसे ॥६५॥ [६९
ब्रवीमि त्वा हितं वाक्यं क्रियताम् और्ध्व-दैहिकम् ।
७४] सु-दृष्टः क्रियतां [5]लोको [6]जीवितं ते मयि स्थितम्[7] ॥६६॥ [७०
इत्य् उक्तः स तु तारेयो रामेणाऽक्लिष्ट-कर्मणा ।
७५] जगामाऽऽकाशम् आ-विश्य मूर्ति-मान् इव हव्य-वाँद् ६७ [७१
सोऽभि-प्लुत्य मुहूर्तेन श्री-मद् रावण-मन्दिरम् ।
७६] ददर्शाऽऽसीनम् अन्त(?:)-स्थं[8] रावणं सचिवैः सह ॥६८॥ [७२
ततस् तस्याऽवि-दूरं[9] सन्[10] नि-पत्यं हरिर् आ-प्लुतः ।
७७] दीप्ताऽग्नि-सदृशस् तस्थाव् अङ्ग-दः काञ्चनाऽङ्गदः[11] ॥६९॥ [७३
तद् राम-वचनं सर्वं मन्युनाऽधिकम् उत्-तमम् ।
७८] साऽमात्यं श्रावयामास नि-वेद्याऽधिकम् आत्मना ॥७०॥ [७४
दूतोऽहं कोसलेन्द्रस्य रामस्याऽक्लिष्टे[12]-कर्मणः ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-लोकै० ॥ २. ल$_1$ ब-दृष्टेनाभिजि० । रा$_2$ फ म-दृस्ते-नावि० ॥ ३. ब-भविष्यसिं ॥ ४. रा$_2$ फ म-प्राप्य ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब-लोके । ६ प्र-जीविते ते मयि स्थिते ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब-०राट् ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब श्र रा$_2$ फ-अस्वस्थं ॥ ९. ल$_1$ प्र रा$_2$ म-०विदूरे । १०. ल$_1$ रा$_2$ म-स नि० । प्र-हि नि० । ११. रा$_2$ फ म-कन-कांगदः ॥ १२. रा$_2$ म-०स्याक्लिष्टक० ।

७९] वालि-पुत्रोऽङ्ग-दो नाम यदि ते श्रोत्रम् आ-गतः ॥७१॥ [७५
आह त्वां राघवो रामः कौसल्याऽऽनन्द-वर्धनः ।
८०] स्वयं निर्-[1]उगत्य युध्यस्व नृ-शंस [2]पुरुषाऽधम ॥७२॥ [७६
[3]हन्ताऽहं [3]त्वां सहाऽमात्यं स-पुत्र-भ्रातृ-बान्धवम् ।
८१] निर्-[4]उद्वेगास् त्रयो लोका भविष्यन्ति हते त्वयि ॥७३॥ [७७
देव-दानव-यक्षाणां गन्धर्वोरगा-[5]पक्षिणाम् ।
८२] शल्यम् अद्योद्-धरिष्यामि मुनीनां चैव [6]कण्टकम् ॥७४॥ [७८
वि-भीषणस्य चैश्वर्यं भविष्यति हते त्वयि ।
८३] न चेत् सत्-कृत्य वैदेहीं प्रणि-पत्य प्र-[7]दास्यसि ॥७५॥ [७९
[8]इत्य् [8]एवं परुषं वाक्यं ब्रुवाणे हरि-पुङ्गवे ।
८४] अमर्ष-वशम् आ-पन्नो निशाचर-गणेश्वरः ॥७६॥ [८०
ततो [9]रोषित-ताम्राऽक्षः शशास सचिवांस् [10]तदा ।
८५] गृह्यताम् इति दुर्-मेधा वध्यताम् इति चाऽसकृत् ॥७७॥ [८१
ते शैल-शृङ्ग-[11]वर्षमाणम् अग्निम् इद्धम् इवाऽङ्ग-दम् ।
८६] आ-ललम्बुस् ततो [12]घोरांश् [12]चत्वारो रजनी-चराः ॥७८॥ [८२
ग्राहयामास तारेयः [13]स्वयम् [13]आत्मानम् आत्मना ।
८७] बलं नि-[14]दर्शयन् वीरो निशाचर-गणे तदा ॥७९॥ [८३
स तान् बाहु-द्वये सक्तान् आ-दाय पत-गान् इव ।
८८] प्रासादं शैल-सङ्काशम् उत्-पपाताऽङ्ग-दस् तदा ॥८०॥ [८४
तेऽन्तरिक्षाद् विनिर्-धूतास् तस्य वेगेन राक्षसाः ।
८९] भूमौ नि-पतिताः सर्वे तदा निश्चेष्ट-[15]चेतसः ॥८१॥ [८५

---

१. रा$_{२}$ फ म-निपत्य युधि । २ रा$_{२}$ फ म-पुरुषो भव ॥ ३. रा$_{१}$ ल$_{१}$ ब अ प्र-हर्ताहं० । ल$_{२}$ म-हत्वाहं० । रा$_{२}$-हतं हत्वा । ४. रा$_{२}$ फ म-निरुद्विग्नास् ॥ ५. प्र-०गरक्षसां । ६. रा$_{२}$ फ-संकटं ॥ ७. रा$_{२}$-०स्यति ॥ ८. रा$_{१}$ ल$_{१}$ ल$_{२}$ ब अ प्र फ म-भृत्यैवं ॥ ९. रा$_{२}$ फ म-रोषाभिता० । १०. प्र-तथा ॥ ११. रा$_{१}$ ल$_{१}$ ल$_{२}$ ब अ प्र-०वर्षाणां । १२. प्र-घोराः श्रुत्वा ते ॥ १३. प्र-मुकुटं स्वयं । १४. फ-विदर्श० ॥ १५. रा$_{२}$-०ष्टजीविताः ॥

प्रासाद-शिखरं श्री-मद् अङ्ग-देन पराऽऽहतम् ।[1] [८६पू
९०] [2]तत् [2]पपात पदाऽऽ[3]क्रान्तं दश-ग्रीवस्य पश्यतः ॥८२॥ [८७पू
९१पू] भङ्क्त्वा प्रासाद-शिखरं नाम वि-श्राव्य चाऽऽत्मनः ।
९३पू] आ-स्फोटयामास तदा नि-[4]र्नदंश् [4]चक्रमे पुनः ॥[5]८३॥ [८८
[वायु-वेगं समा-स्थाय रावणस्य ततोऽग्र-तः ।
N] जग्राह मुकुटं वीरः पादम् आ-स्थाय मस्तके ॥[6]८४॥ [N
अङ्ग-देन पदाऽऽक्रान्तो रेजे सं-सदि रावणः ।
N] त्रिविक्रम-पदाऽऽक्रान्तो बले(?लिर्)वैरोचनिर् यथा८५][6] [N
सकाशं कोसलेन्द्रस्य राघवस्य महाऽऽत्मनः ।
९४] सु-ग्रीवस्य च तत् सर्वं समा-[7]गत्य न्य्-अवेदयत् ॥[8]८६॥ [N
रावणस् तु परं चक्रे क्रोधं [9]प्रासाद-धर्षितः ।[10]
९६] [10]वि-नाशम् [9]आत्मनः शङ्क्य निश्वास-परमोऽभवत् ॥८७॥ [९०

---

अङ्ग-दः पुनर् आ-गत्य ववन्दे चरणौ ततः ।
N] सु-ग्रीवस्य च रामस्य लक्ष्मणस्य तथैव च ॥[11]८८॥ [N
[12]अन्यान् अपि [12]महा-वीरान् अभि-वाद्य महा-बलः ।
N] मुकुटं [13]राक्षसेन्द्रस्य राघवाय न्य्-अवेदयत् ॥[14]८९॥ [N
तं दृष्ट्वा मुकुटं रामो रत्न-सार-विभूषितम् ।
N] आ-बबन्ध महा-बाहू रावणाऽ[15]नुज-मस्तके ॥९०॥ [N
[15]साधु साधु महा-[15]बाहो यस्य ते बलम् ईदृशम् ।

---

१. रा$_2$ फ म-प्रासादस्य शिरः श्रीमानङ्गदस्तु यदाहनत् । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-उत्पपात । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-तदाक्रान्तं । म-पदाक्रम्य ॥ ४. प्र-विनद्याच० । ५. म-नास्ति ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-नास्ति ॥ ७. अ प्र-समागम्य । ८. रा$_2$ फ म-नास्ति ॥ ९. रा$_2$ फ-चवात्मधर्षणात् । १०. म-नास्ति ॥ ११. अ म-नास्ति ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-अन्योन्यं ते महावीरा । १३. फ-रक्षोराजस्य ॥ १४. अत आरभ्य ९३—तम श्लोकपर्यन्तं म-नास्ति ॥ १५. प्र-नास्ति ॥

N] प्र-हस्याऽङ्ग-दम् आ-भाष्य [1]पुपूजे [1]च वि-भीषणः ॥९१॥ [N
नैतत् कर्म करिष्यन्ति देवता न [2]च पन्न-गाः ।
N] दैत्य-दानव-रक्षांसि वर्ज्यैकं वालिनः सुतम् ॥९२॥ [N
[3]ददर्श वानरी [3]सेना भीषणं च वि-भीषणम् ।
N] मुकुटेन प्र-भासन्तं त्रि-कूटम् इव [4]पर्वतम् ॥९३॥ [N

रामस् तु बहुभिर् हृष्टैर् वि-नदद्भिः प्लवं-गमैः ।
N] वृतो रिपु-वधाऽऽकाङ्क्षी युद्धायैवाऽभ्य्-अवर्तत ॥९४॥ [९१
सु-षेणस् तु [5]महा-वीरो गिरि-[6]कूटोपमो हरिः ।
९८] बहुभिः सं-वृतस् तत्र वानरैः काम-रूपिभिः ॥९५॥ [९२
लङ्का-द्वाराणि सर्वाणि सुग्रीव-वचनात् कपिः ।
९९] [7]पर्याऽक्रमत [7]दुर्-धर्षो नक्ष*-त्राणीऽव चन्द्रमाः [8]। [९३
N] [र(?रं)भन्[9] पर्य्-एति सं-हृष्टो हर्षयन् स महा-चमूम् ॥९६॥] [N
अक्षौहिणी-शतं तेषां समवेक्ष्य वनौकसाम् ।
१००] लङ्काम् [10]उपनि-विष्टानां सागरं चाऽभि-[11]वर्तताम् ॥९७॥ [९४
राक्षसा वि-स्मयं जग्मुस् त्रासं जग्मुस् तथा परे ।
१०१] [12]अपरे समरोद्-[12]धर्षा हर्षं [13]चाऽपि प्र-[13]पेदिरे ॥९८॥[11] [९५
[14]तां [14]तु सेनां निर्-ईक्ष्यैव कपीनां युद्ध-काङ्क्षिणाम्[15] ।
१०२] लङ्काम् उपनि-विष्टानां [16]राघवः सं-जहर्ष [16]ह[17] ॥९९॥ [N
कृत्स्नं हि कपिभिर् व्य्-आप्तं[17] प्राकार-परिखाऽन्तरम् ।

१. रा$_1$ ल$_1$ ल$_2$ ब अ-पूजयित्वा । प्र-प्रपूज्य च ॥ २. प्र-०ता नैव । रा$_2$ फ-देवा अपि न ॥ ३. रा$_2$ फ-ददृशुर्वानरा वीरा । ४. रा$_2$ फ-मन्दरं ॥ ५. रा$_1$-महान्वीरो । प्र रा$_2$ फ म-महावीर्यो । ६. प्र-०टोपमस्तदा ॥ ७. प्र-पर्याक्राम-दुराधर्षो । रा$_2$-पर्याक्रमदुराधर्षो । ८. फ म-नास्ति । ९. रा$_1$ अ-रंभा । ल$_1$ ल$_2$ ब प्र रा$_2$ फ-रंभः ॥ १०. रा$_2$- अभिनि० । ११. ल$_1$ ब-नास्ति ॥ १२. रा$_2$-अन्ये समरदुर्धर्षा । म-०रे समरे हर्षात् । १३. रा$_2$ फ म-चैवाभिपेदिरे ॥ १४. रा फ-तत्र । १५. ब-नास्ति । १६. रा$_2$ फ-नैर्ऋताः संजहर्षिरे । १७. म-नास्ति ॥

१०३] ददृशू राक्षसाः सर्वे प्रासाद-वलभी-गताः [1] ॥१००॥ [९६
कृत्स्ना हि कपिभिर्[2] व्य्-आप्ता लङ्का रावण-पालिता ।
१०४] स्तिमिता चाऽप्रहृष्टा च बभूव[3] सुदुरा[1]-सदा ॥१०१॥ [N
तस्मिन् महा-भीषणके प्र[4]-वृत्ते
कोलाहले राक्षस-राजधान्याम् ।
प्र-गृह्य रक्षांसि महाऽऽयुधानि[5]
१०५] युगाऽन्त-वाता इव संवि-चेरुः ॥१०२ [९८

इत्यार्षे[6] रामायणे[7] युद्ध-काण्डे लङ्कोपरोधो[8] नाम षोडशः सर्गः ॥१६॥

---

## [वं–१७]= [सप्तदशः सर्गः] =[दा–४२]

ततस् ते राक्षसास् त्रस्ता गत्वा रावण-मन्दिरम्[9] ।
१] न्य्-अवेदयन् पुरीं रुद्धां[10] रामेण सह वानरैः ॥१॥ [१
रुद्धां तु नगरीं श्रुत्वा जात-कोपो निशा-चरः ।
२] वि-धानं द्वि-गुणं कृत्वा प्रासादं[11] चाऽध्य्[12]-अरोहत ॥२॥ [२
स ददर्श वृतां लङ्कां[13] स-शैल-वन-काननाम् ।
३] अ-संख्येयैर् हरि-गणैः सर्व-तो युद्ध-काङ्क्षिभिः ॥३॥ [३
स दृष्ट्वा वानरैः सर्वं[14] काननं कपिली-कृतम् ।
४] कथं क्षपयितव्यं[15] स्याद् इति चिन्ता-परोऽभवत् ॥४॥ [४
स चिन्तयित्वा सु[16]-चिरं धैर्यम् आ-लम्ब्य रावणः ।

---

१. म-नास्ति ॥ २. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-बलिभिर् । ३. रा$_2$ फ-निशेव ॥ ४. म-तु वृत्ते । ५. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-तदायु० ॥ ६. फ म-नास्ति । ७. ब ञ प्र-लंकाकाण्डे । रा$_2$ म-लंकापर्वणि । ८. ल$_1$-रा$_2$ फ-लंकापरोधो । म-लंकाविरोधो ॥ ९. म-०मन्दिरे । १०. ल$_1$-लंकां ॥ ११. ब फ-प्राकारं । १२. प्र फ-चाप्यरो० । म-व्यध्यरोहत ॥ १३. प्र-वीरैः ॥ १४. ल$_1$ ल$_2$ ब ञ प्र फ रा-सर्वैः । १५. रा$_1$ ल$_1$ ल$_2$ ब ञ-क्षमयि० ॥ १६. ब-सचिवं ।

५] हरि-यूथानि रामं च[1] ददर्शाऽऽयत[2]-लोचनः ॥५॥ [९
प्रेक्षतो राक्षसेन्द्रस्य तान्य्[3] अनीकानि[3] भाग-शः ।
६] राघव-प्रिय-कामाऽर्थं लङ्काम् आ-रुरुहुस् तदा ॥६॥ [१३
ते ताम्र-वक्त्रा[4] हेमाऽऽभा रामाऽर्थे त्यक्त-जीविताः ।
७] लङ्काम् एवाऽभ्य्-अधावन्त[5] साल-ताल-शिलाऽऽयुधाः ७ [१४
ते द्रुमैः पुष्पिताऽग्रैस् तु मुष्टिभिश् च महा-बलाः[6] ।
८] प्राकाराऽग्राण्य्[7] अ-संह्यानि[7] ममन्थुस् तोरणानि च ॥८॥ [१५
आ-प्लवन्तः प्लवन्तश् च गर्जन्तश् च प्लवं-गमाः ।
१२] लङ्काम् एवाऽभ्य्-अवर्तन्त[8] महा-वारण[9]-सन्निभाः ॥९॥ [१९
काञ्चनानि प्र-मृद्नन्तस् तोरणानि बली-मुखाः ।
११] कैलास-शिखराऽऽभानि गोपुराऽट्टालकानि च ॥१०॥ [१८
परि-खाः पूरयन्तश् च गम्भीर-विमलोदकाः[10] ।
९] पांसुभिस् तृण-काष्ठैश् च पर्वताऽग्रैश् च वानराः ॥११॥ [१६
शत-साहस्र-यूथैश् च कोटि-यूथैश् च यूथ-पाः ।
१०] कोटि-शत-वृताश् च[11] अन्ये[11] लङ्काम् आ-रुरुहुस् तदा ॥१२॥ [१७
जयत्य् अति-बलो रामो लक्ष्मणश् च महा-बलः ।
१३] राजा जयति सु-ग्रीवो राघवेणाऽनु-पालितः ॥१३॥ [२०
इत्य् एवं घोषयन्तश्[12] च गर्जन्तश् च प्लवं-गमाः ।
१४] अभ्य्-अधावन्त लङ्कायाः प्राकारं काम-रूपिणः ॥१४॥ [२१
१५पू] वीर-बाहुः सु-बाहुश् च नलश् च वन-गोचराः ।[13] [२२पू
N] पूर्व-द्वारम् अरुन्धन्त यूथ-पा यूथ-संवृताः ॥१५॥ [N

---

१. प्र-तु । रा२ फ-नु । २. रा२ फ-व्यस्तलोचनः ॥ ३. रा१-स्वानीकानीव । ४. रा१ ल१ ल२ ब अ प्र-०वर्णा । ५. म-०अवर्तन्त ॥ ६. रा२ फ-महाबलैः । ७. रा२-०ग्राण्यग्रसंस्थानि । म-प्राकाराग्राणि सर्वाणि ॥ ८. ल२-०भ्यधावन्त । ९. ल२ प्र-महारावणस० । म-महाचारणस० ॥ १०. ब-०लोदकैः । म-गंभीरं वि० ॥ ११. ल१ ल२ अ प्र-चैव ॥ १२. फ-द्योतयन्तश् ॥ १३. अतः परमधिकः पाठः—रा२-एतस्मिन्नन्तरे चक्रुर्लंकाचारप्रवेशनं ॥

१७उ] पश्चिमं कु-मुदो द्वारं कोटिभिर् दशभिर् वृतः ।
१६उ] आ-वृत्य बल-वांस् तस्थौ वानराणां महौजसाम् ॥१६॥ [२३
१७पू] दक्षिणं द्वारम् आ-गम्य वीरः शत-बलिः कपिः ।
१८उ] आ-वृत्य बल-वांस् तस्थौ कोटिभिः सप्तभिर् वृतः ॥१७॥ [२५
उत्-तरं द्वारम् आ-गत्य[1] रामः सौमित्रिणा सह ।
१९] आ-वृत्य बल-वांस् तस्थौ सु-ग्रीवश् च महा-बलः ॥१८॥ [२७
गो-लाङ्गूलो महा-कायो[2] गवाऽक्षो भीम-दर्शनः ।
२०] वृतः कोट्या महा-तेजास् तस्थौ रामस्य पार्श्व-तः ॥१९॥ [२८
ऋक्षाणां भीम-वेगानां धूम्रः शत्रु-निबर्हणः ।
२१] तस्थौ राम-समीपे तु कोटिभिर् दशभिर् वृतः ॥२०[3]॥ [२९
२३उ] सं-नद्धस् तु महा-वीर्यो गदा-पाणिर् वि-भीषणः ।
२४पू] आज्ञा-प्रतीऽऽक्षो रामस्य तस्थौ पार्श्वे महा-बलः ॥२१ [३०
गजो गवाऽक्षो गवयः शरभो गन्ध-मादनः । [३१पू
२२] भीमो दधि-मुखश् चैव केसरी पनसस् तथा ।[4] [N
२३पू] एतस्मिन्न् अन्तरे चक्रुः स्कन्धावार-निवेशनम् ॥२२॥ [२२उ
२४उ] ततः कोप-परीऽताऽऽत्मा रावणो राक्षसोऽधिपः ।
निर्-याणं सर्व-सैन्यानां द्रुतम् आऽज्ञप[6]यत् तदा [5]॥२३॥ [३२
२५] निष्-पतन्ती तदा सेना युक्ता रावण-पालिता[7] ।
सोमेना[8]ऽऽपूर्यमाणस्य वेलेव[9] सरितां पतेः ॥२४॥ [३७
२६] एतस्मिन्न् अन्तरे रौद्रः सं-ग्रामः सम्-अपद्यत ।
रक्षसां वानराणां च वीराणां[10] काम-रूपिणाम् ॥२५॥ [४१

---

१. रा₁ ल₁ ल₂ ब ञ-आगम्य ॥ २. रा₁ ल₁ ल₂ ब ञ प्र-महाराजो ॥ रा₂-महाबाहोर् ॥ ३. म-नास्ति ॥ ४. रा₁ ल₁ ल₂ ब ञ प्र म-नास्ति ॥ ५. म-नास्ति । ६. ल₁ ल₂ ब ञ प्र फ म-आज्ञापयत् ॥ ७. प्र-रावणनोदिता । रा₂ फ-रावणचोदिता ॥ ८. प्र-सा सेना पूर्य० । ९. प्र रा₂ फ म-वेला इव महोदधेः ॥ १०. प्र-धीराणां । रा₂ फ म-घोराणां ॥

२७] ते गदाभिः प्र-वृत्ताभिः[1] शक्ति-शूल-परश्वधैः[2] ।
निर्-जघ्नुर् वानरान् घोराः कथयन्तः स्वकान् रणे ॥२६॥ [४२
२८] तथा वृक्षैर् महा-कायाः[3] पर्वताऽग्रैश् च वानराः ।
नि-जघ्नुर् अथ रक्षांसि नखैर् दन्तैश् च वेगिताः[4] ॥२७॥ [४४
२९] राक्षसास् त्व् अपरे घोराः प्राकार-स्था मही-गतान् ।
वानरान् भिण्डि-पालैश् च शक्तिभिश् च व्य्-अदारयन्[5] २८ [४५
३०] वानराश् चाऽपि सं-क्रुद्धा राक्षसांस्[6] तान्[6] महा-बलान्[7] ।
प्राकारात् पातयामासुर् अभि-जघ्नुश्[8] च मुष्टिभिः ॥२९॥ [४६
३१] स सम्प्र-हारस् तुमुलो मांस-शोणित-कर्दमः ।
रक्षसां वानराणां च बभूवाऽद्भुत-दर्शनः ॥३०॥ [४७
वनौकसां तत्र तु सन्नि-नादो[9]
लङ्का-गतानां च निशा-चराणाम् ।
प्रक्ष्वेडिताऽऽस्फोटित-नादितानां[10]
३२] द्वाभ्यां महद्भ्याम् इव सागराभ्याम् ॥३१॥ [४८

इत्यार्षे रामायणे[11] युद्ध-काण्डे[12] प्रथम-सम्प्रहारो[13] नाम सप्तदशः सर्गः ॥१७॥

---

## [वं-१८]= [अष्टादशः सर्गः] =[दा-४३]

युध्यतां तु ततस्[14] तेषां वानराणां महाऽऽत्मनाम् ।
१] रक्षसां च बभूवाऽथ बल-कोपः सु-दारुणः ॥१॥ [१

---

१. म-प्रदीप्ताभिः । २. म-नास्ति ॥ ३. रा२ फ-०कायैः । ४. ल२-वेगतः ॥ ५. रा२ प्र-विदारयन् ॥ ६. प्र रा२ फ-राक्षसांश्च । म-०सांस्तु । ७. प्र रा२ फ म-०बलाः । ८. म-०जग्मुश् ॥ ९. म-सुसन्नि० । १०. रा२ फ-०नर्दितानां । म-०मर्दितानां ॥ ११. रा २ फ म-नास्ति । १२. प्र-लंकाकाण्डे । रा२-लंकापर्वणि । म-युद्धपर्वणि । १३. रा१ ल१ ल२ ब-०संहारो । अ-प्रहारो ॥ फ-०मप्रहारो ॥ १४. प्र म-तथा । रा२ फ-तदा ॥

ते[1] [1]हयैः काञ्चनाऽऽपीडैर् गजैश् चाऽद्भुत-[2]दर्शनैः ।
२] रथैश् चाऽऽदित्य-सङ्काशैः कवचैश् च महा-[3]प्रभैः ॥२॥ [२
४उ] विनिर्-[4]ययुर् महा-नादैर्[5] [6]नादयन्तो मही-तलम् ।
५उ] राक्षसा भीम-कर्माणो रावणस्य जयैषिणः ॥३॥ [३
६उ] वानराणाम् अपि चमू रामस्य जयम् [7]इच्छती ।
अभ्य्-अधावत् तदा घोरा राक्षसानां वधं प्रति ॥४॥ [४
७] एतस्मिन्न् अन्तरे तेषाम् अन्योऽन्यम् अभि-धावताम् ।
रक्षसां वानराणां च द्वन्द्व-युद्धम् अवर्तत ॥५॥ [५
८] अङ्गदेनेन्द्र-जित् सार्धं वालि-पुत्रेण राक्षसः ।
अयुध्यत महा-तेजा वह्नि-मान् इव पर्वतः ॥६॥ [६
९] प्र-जङ्घे[8]न च सं-पातिर् वीरो दुर्-धर्षणेन च ।
जम्बु-मालिनम् आ-[9]यस्तो हनु-मान् [10]अपि वानरः ॥७॥ [७
१०] सं-गतः सु-महाक्रोधो राक्षसो रावणाऽनुजः ।
सम्-अरे तीक्ष्ण-वेगेन मित्र-घ्नेन वि-भीषणः ॥८॥[11] [८
११] तपनेन नलः सार्धं राक्षसेन महा-बलः ।
नि-कुम्भेन महा-तेजा नीलो हरिर् अयुध्यत ॥९॥[11] [९
१२] सु-ग्रीवो वानरेन्द्रस् तु प्र-घसेन समा-गतः ।[11]
सं-गतः [12]सम्-अरे श्री-मान् विरूपाऽक्षेण लक्ष्मणः ॥१०॥ [१०
१३] अग्नि-केतुश् च दुर्-धर्षो रश्मि-केतुश् च [13]राक्षसः ।
[14]सुप्त-घ्नो यज्ञ-कोपश् च रामेण सह सं-[15]गतः ॥११॥ [११
१४] [16]वज्र-मुष्टिश् च मैन्देन द्वि-विदेनाऽशनि-प्रभः । [१२पू

१. ल$_2$-हेतयैः । म-तैर्हयैः । २. प्र-०तभूषणैः । ३. अ-महाबलैः ॥ ४. रा$_2$ फ-०जग्मुर् । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-०नादाः । ६. रा$_2$-छादयन्तो ॥ ७. म-इच्छतां ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब-प्रजघ्नेन । ९. ल$_1$-आयातो । १०. म-इव ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब-नास्ति ॥ १२. प्र रा$_2$ फ म-संयुगे ॥ १३. प्र-वीर्यवान् । १४. रा$_2$ फ म-भिन्नाः-सुघ्नुघ्नो । १५. रा$_2$-संगमः ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-वसुमुष्टिश् ।

१८उ] गजेनाऽऽदित्य-सङ्काशो वीरः प्र-तपनस् तथा ॥१२॥ [१३पू
महोदरः सु-षेणेन वानरेण [1]च सं-गतः[1] ।
१६] अयुध्यत महा-बाहुः शक्रेण न-मुचिर् यथा ॥१३॥ [N
जाम्ब-वान् मकराऽक्षेण धूम्रः कुम्भेन सं-गतः ।
१७] नराऽन्तकेन[2] पनसः सं-[3]गतो रक्षसा हरिः[4] ॥१४॥ [N
देवाऽन्तको[5] गवाऽक्षेण त्रि-शिराः शरभेण[6] च ।
१८] रक्षसाऽकम्पनेनाऽऽजौ [7]युयुधे कु-मुदो हरिः[7] ॥१५॥ [N
ऋषभो वानर-श्रेष्ठः सारणेन[8] समा-गतः ।
१९] अति-कायेन वि-नतो रम्भश् चैव समा-गतौ[9] ॥१६॥ [N
धूम्राऽक्षेण समा-सक्तः केसरी हनुमत्-पिता ।
२०] वेग-दर्शी शुकेनाऽऽजौ सम्प्र-हारम् अथाऽकरोत् ॥१७॥ [N
सं-क्रुद्धं तु महा-पार्श्वं युयुधे गन्ध-मादनः ।
२१] वीरः शत-बली[10] रक्षो विद्युज्-जिह्वम् अयोधयत् ॥१८॥ [N
वानराश् चाऽपरे घोरा राक्षसैर् अपरैः सह ।
२२] द्वन्द्व-युद्धम् अकुर्वंस् ते बहवो [11]बहुभिस् तदा[11] ॥१९॥ [१५
तत्राऽऽसीत् सु-महद्[12] युद्धं [13]तुमुलं रोम-हर्षणम्[13] ।
२३] रक्षसां वानराणां च वीराणां जयम् इच्छताम् ॥२०॥ [१६
हरि-[14]राक्षस-देहैस् तु[14] प्र-वृद्धाः केश-शाद्वलाः ।
२४] शरीर-सङ्घात[15]-वहाः सुस्रुवुः शोणिताऽऽपगाः ॥२१॥ [१७
तस्मिन् प्र-वृत्ते सं-ग्रामे रौद्रे भीरु-भयंकरे ।

---

१. ल$_1$ ल$_2$ ब अ रा$_2$ फ म-समागतः ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-नरकाक्षेण । ३. प्र रा$_2$ फ म-संसक्तो । ४. प्र-हरः ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब रा$_2$-देवकान्तो । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-रभसेन । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-संप्रहारमथाकरोत् । म-युयुत्सुः कुमदो ज्वलन् ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब फ-सागरेण ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-समागतः ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र- ०बलो । ११. रा$_1$ ल$_1$ ल$_2$ अ-०भिः सह ॥ १२. म-तुमुलं । १३. अ प्र रा$_2$ फ-०लं लोमह० । म-नरवानररक्षसां ॥ १४. रा$_2$ फ-०सदेहेभ्यः । म-०सदेहेषु । १५. रा$_2$ फ-०संघनिवहाः ॥

२५] हरि-राक्षसयोर् युद्धं तुमुलं सम्-[1]अपद्यत ।
N] हरीणां युव-राजस्य राक्षसानां तथैव च ॥२२॥ [N
आ-जघानेन्द्र-जित् क्रुद्धो वज्रेणेव शत-क्रतुः ।
२६] अङ्ग-दं गदया घोरः स[2] तु शत्रु-विदारणः ॥२३॥ [१८
तस्य काञ्चन-चित्राऽङ्गं रथं साऽश्वं स-सारथिम् ।
२७] जघान सम्-अरे श्री-मान् अङ्ग-दो [3]दन्त-कूबरम् ॥२४॥ [१९
सं-पातिस् तु प्र-जङ्घेन त्रिभिर् बाणैर् वि-दारितः ।
२८] नि-जघानाऽश्व-कर्णेन प्र-जङ्घं तु महा-बलः ॥२५॥[4] [२०
अति-कायोऽति-बलवान् देव-दानव-दर्पहा ।
२९] रम्भं च वि-नतं चैव ताडयामास मार्गणैः ॥२६॥ [N
तौ शिला-वृक्ष-वर्षेण तस्य सैन्यं नि-जघ्नतुः ।
N] जलदाव् इव सं-रब्धौ [5]वात-वृष्ट्या गवां गणम् ॥२७॥ [N
महोदरः सु-संरब्धः सु-षेणं पञ्चभिः [6]शितैः ।
N] हृदि विव्याध नाराचैर् ललाटे च त्रिभिः शरैः ॥२८॥ [N
स तथाऽभि-हतस् तेन रक्षसा वानरोत्तमः ।
N] जघान शिलया तस्य रथं साऽश्वं स-सारथिम् ॥२९॥ [N
तौ जयाऽऽकांक्षिणौ दृप्तौ वीर्य-वन्तौ दुरा-सदौ ।
N] चक्रतुस् तुमुलं युद्धं [7]स्व-सैन्य-परिवारितौ ॥३०॥ [N
जाम्ब-वान् ऋक्ष-राजस् तु मकराऽक्षं खराऽऽत्मजम् ।
N] प्राऽहिणोद् वृक्षम् उत्-पाट्य तं स चिच्छेद मार्गणैः ॥३१॥ [N
ततो निशा-चरः क्रुद्धो जाम्ब-वन्तं शितैः शरैः ।
N] हृदि बाह्वोर् ललाटे च विव्या-ध [9]लघुहस्त-वत् ॥३२॥ [N

---

१. प्र-संप्रपद्यत ॥ २. रा$_2$ फ-शत्रुसैन्यविदा० । म-शक्रसैन्यवि० ॥ ३. म-हतकूबरः ॥ ४. म-नास्ति ॥ ५. रा$_2$-अश्मवृष्ट्या । म-‘वात०’ इत्यारभ्य ‘सुसंरब्धः’ इत्यन्तः पाठो नास्ति ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ रा$_2$-शरैः ॥ ७. रा$_1$ ल$_1$ ब अ फ-सुसैन्य० ॥ ८. म-च ॥ ९. म-कृतह० ॥

स तथा[1]ऽभि-हतस् तेन क्षिप्र-हस्तेन यूथ-पः ।
N] व्यू-अश्व-सूत-रथं चक्रे नाऽति-कृच्छ्रात् खराऽऽत्मजम् ३३ [N
भृशं शत[2]-बलिर् विद्धो विद्युज्-जिह्वेन रक्षसा ।
N] नि-जघानाऽश्व-कर्णेन विद्युज्-जिह्वं स्तनाऽन्तरे ॥३४॥ [N
नि-घ्नन्तं राक्षसान् वीरान्[3] गर्जं[4] प्र-तपनो हरिर्म् ।
N] शूलेन[5] जघ्निवान् पार्श्वे ननाद च महा-स्वनम् ॥३५॥ [N
स तु रोष-परीऽताऽङ्गः शाल-वृक्षेण राक्षसम् ।
N] नि-जघान गजो मत्तो दृप्तं व्याघ्रं यथा वने ॥३६॥ [N
कुम्भकर्णाऽऽत्मजं कुम्भं सम्-अरे सु[6]-व्यवस्थितम् ।
ग्रसन्तम् इव सैन्यानि दण्ड-हस्तम् इवाऽन्त-कम्[7] ।
N] प्रा[8]ऽयोधयत सं-रब्धो धूम्रो वृक्ष-शिलाऽऽयुधः ॥३७॥ [N
तौ राक्षस-हरी वीरौ स्व-सैन्य-परिवारितौ ।
N] चक्राते प्रथमं[9] युद्धं बलि-शक्रौ यथा पुरा ॥३८॥ [N
देवाऽन्तको[10] गवाऽक्षं तु[11] हृदि विव्याध मार्गणैः ।
N] पञ्चभिः सु-महावेगैर् आ-कर्ण-प्रेषितैः शितैः[12] ॥३९॥ [N
स[13] तथा[13] ताडितस् तेन सं-क्रुद्धश् चलितेन्द्रियः ।
प्राऽहिणोच् छालम् उत्-पाट्य तं स चिच्छेद सप्तभिः ।[14]
N] पुनश् च नवभिर् वीरं विव्याध कृतहस्त[15]-वत् ॥४०॥ [N
अथाऽऽरुह्य[16] गिरेः शृङ्गं गवाऽक्षो वानरोत्तमः ।[14]
N] प्राऽहिणोत् तं समुद्-दिश्य तस्य[17] सैन्यं जघान तत्[17] ॥४१॥ [N

---

१.रा$_2$-तदाभि० ॥ २. रा$_2$-क्रुद्धः शतबलिर् ॥ ३. म-वीरो । ४. रा$_2$ फ-गर्जन् प्रतपनो हरिः । ५. म-शूलेनाभ्याहनत् ॥ ६. म-समवस्थितं । ७. म-दण्डपाणिरिवान्तकः । ८. रा$_1$-आयो० ॥ ९. फ म-तुमुलं ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब-देवकान्तो । ११. ब-तं । १२. ब रा$_2$-शरैः ॥ १३. म- सर्वथा । १४. अ-नास्ति । १५. ब-लघुह० ॥ १६. म-तथा गृह्य । १७. म-हृदि विव्याध मार्गणैः ॥

एवं तौ बलिनां श्रेष्ठौ युयुधाते परस्परम् ।
N] कृत-प्र[1]तिकृते(?त-)यत्नाव् अन्योऽन्य-वध-काङ्क्षिणौ ॥४२॥ [N
सार[2]णेन समा-हूत ऋषभो वानरोत्तमः ।
N] सारणं वृक्षम् उत्-पाट्य सं[3] ज[3]घान स्तनाऽन्तरे ॥४३॥ [N
स तेनाऽति-प्रहारेण व्या-घूर्णित इवाऽभवत् ।
N] अपाऽसर्पद् ध[4]नूंष्य् अ[5]ष्टौ वि-षण्णश् चाऽभवत् क्षणात् ४४ [N
मेघाऽऽभं गजम् आ-रूढस् त्रि-शिराः शरभं हरिम् ।
N] तोमरेण समा-हत्य शिरसि प्राऽणुदद् भृशम्[6] ॥४५॥ [N
स तु रोष-परीऽता[7]ऽङ्गः सप्त-पर्णेन तं गजम् ।
N] जघानाऽति-बलश् चण्डः शरभो वा गजं वने ॥४६॥ [N
नराऽ[8]न्तकोऽथ पनसं ताडयामास मार्गणैः ।
N] सोऽपि पादप-वर्षेण तं विव्याध प्लवं-गमः ॥४७॥ [N
अ-कम्पनेन कु-मुदः परि-घेण समा[9]-हतः ।
N] जानुभ्याम् अवनिं गत्वा नि-मेषात् पुनर् उत्थि(द्-स्थि)तः ४८ [N
सं-क्रुद्धो रोष[10]-ताम्राऽक्षो मुष्टिं तस्मिन्[11] अपातयत्[11] ।
N] मुष्टि-प्रहाराऽभिहतो वि-चेता इव सोऽभवत् ॥४९॥ [N
अयोध[12]यत चाऽऽश्व[12]स्तः पुनर् एव प्लवं-गमम् ।
N] धूम्राऽक्षः शर-वर्षेण हनुमत्-पितरं हरिम् ॥५०॥ [N
स सैन्यं पूरयां[13]आस धाराभिर् इव पर्वतम् ।
N] सोऽपि वृक्षैः शिला[14]भिश् च[14] स-सैन्यं तं संहा[15]ऽर्दयत् ॥५१॥ [N

---

१. म-०प्रतिहतं ॥ २. अ-सारसेन । ३. म-निज० ॥ ४. रा$_2$-धनुर्हस्तो ॥ ५. अ फ--प्राणद० । रा$_2$-प्रापनदूद्रुतं । ६. प्र-नास्ति ॥ ७. ल$_2$-०तात्मा ॥ ८. रा$_1$ ल$_1$ल$_2$ ब-नरकान्तोथ ॥ ९. प्र-समाहितः । रा$_2$-महाहतः ॥ १०. रा$_2$-रक्तता० । ११. प्र-०तस्मिन् ह्यपा० ॥ १२. रा$_1$-अयोध्ययत चा० । म-अयोधयं स वित्रस्तः ॥ १३. म-सूदयामास । १४. रा$_1$-शिलामिश्रैः । १५. फ म-अयोधयत् ॥

महा-पार्श्वेन सं-सक्तो[1] यूथ-पो गन्ध-मादनः ।
N] चक्रे सु-तुमुलं युद्धं शिला-दन्त-नखाऽऽयुधः ॥५२॥ [N
वेग-दर्शी शुकेनाऽऽजौ मर्मण्य् अभि-हतः शरैः ।
N] उत्-तमं वेगम् आ-स्थाय रथं तस्य व्य्-अचूर्णयत् ॥५३॥ [N
राक्षसस् तपनो घोरो[2] नलं समभि (?भ्य) वर्तत[3] । [२३
३०] नलेन तु नलस् तस्य चक्षुषी[4] विन्य्-अपातयत्[5] ॥५४॥
भिन्न-गात्रः शरैस् तीक्ष्णैः क्षिप्र-हस्तेन रक्षसा । [२४
३१] नि-जघानेन्द्र-वृक्षेण तपनं राक्षसं नलः[6] ॥५५॥ [N
जम्बु-माली रथ-स्थस्[7] तु रथ-शक्त्या महा-बलः ।
३२] बिभेद सम्-अरे क्रुद्धो हनु-मन्तं स्तनाऽन्तरे ॥५६॥ [२१
तस्य तं रथम् आ-रुह्य हनु-मान् कपि-कुञ्जरः ।
३३] प्र-ममाथ तलेनैव गिरिशृङ्गोपमं शिरः ॥५७॥ [२२
भिन्न-गात्रः शरैस्[9] तीक्ष्णैर्[10] मित्र-घ्नेनं वि-भीषणः ।
३४] मित्र-घ्नं गदया वीरो नि-जघान[11] स्तनाऽन्तरे[11] ॥५८॥ [N
ग्रसन्तम् इव सैन्यानि प्र-घसं वानराऽधिपः ।[11]
३५] सु-ग्रीवः[11] सप्त-पर्णेन[11] नि-जघान ननाद च ॥५९॥ [२५
वर्षन्तं शर-वर्षाणि राक्षसं भीम-दर्शनम् ।
३६] नि-जघान विरूपाऽक्षं शरेणैकेन[12] लक्ष्मणः ॥६०॥ [२६
अग्नि-केतुश् च दुर्-धर्षो रश्मि-केतुश् च राक्षसः ।
३७] सुप्त-घ्नो[13] यज्ञ-कोपश्[14] च रामं निर्-बिभिदुः शरैः ॥६१॥ [२७
तेषां चतुर्णां रामस् तु शिरांसि सम्-अरे शितैः ।

---

१. रा$_{2}$-संरक्तो ॥ २. म-क्रोधो । ३. रा$_{1}$-०वर्तते । ४. रा$_{2}$-वक्षसि । ५. रा$_{2}$ फ-न्यत्यपातयत् ॥ ६. म-नास्ति ॥ ७. फ-रथस्थश्च ॥ ८. म-आस्थाय ॥ ९. रा$_{2}$-शतैस् । १०. म-लीनैर्मित्रघ्नो न । ११. म-नास्ति ॥ १२. प्र-शरेणैव च ॥ १३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब-सुतघ्नो । १४. रा$_{2}$-यज्ञकेतुश्च रामं विनिर्भिदुः ॥

३८] क्रुद्धश् चतुर्भिश् चिच्छेद शरैर् अग्नि-शिखोपमैः[1] ॥६२॥ [२८
वज्र-मुष्टिस् तु मैन्देन मुष्टिनाऽभि-हतो रणे ।
३९] पपात स-रथः साऽश्वः पुराऽदृश्यत[2] भू-तले ॥६३॥ [२९
वज्राऽशनि-सम-स्पर्शं द्वि-विदश् चाऽशनि-प्रभम् ।
N] जघान गिरि-शृङ्गेण मिषतां सर्व-रक्षसाम् ॥६४॥ [३३
नि-कुम्भः[3] सम्[3]-अरे नीलं नीला[4]ऽञ्जन-चय-प्रभम् ।
४०] बिभेद तरसा बाणैर् मेघं सूर्य इवांऽशुभिः ॥ ६५॥ [३०
पुनः शर-शतेनैव क्षिप्र-हस्तो निशा-चरः ।[4]
४१] बि[4]भेद सम्-अरे नी[4]लं नि-कुम्भः प्र-जहास च ॥६६॥ [३१
तस्यैवं[5] रथ-चक्रेण नीलो वि-प्लाव्य[6] चाऽऽहवे[6] ।
४२] शिरश् चिच्छेद सं-यत्तः[7] सोऽपतद् वि-ह्वलो[8] भुवि ॥६७॥ [३२
भल्लैः[9] खड्गैर् गदाभिश् च शक्ति-तोमर-सायकैः ।
५३] अप-विद्धैश् च भग्नैश् च रथैः साङ्ग्रामिकैर् हयैः ॥६८॥ [४४
५४पू] नि-हतैः कुञ्जरैर् मत्तैस्[10] तथा वानर-राक्षसैः ।
५६पू] बभूवाऽऽयोधनं घोरं गोमायु-व्रज[11]-सङ्कुलम् ॥६९॥
५४उ] चक्राऽक्ष-युग-शस्त्रैश्[12] च भग्नैर् भू-तलम्[13] आ[13]-श्रितैः । [४५
५६उ] कबन्धानि समुत्-पेतुस् तस्मिन् युद्धे सु-दारुणे ॥७०॥ [४६पू
वि-दार्यमाणा हरि-पुङ्गवैस्[14] तदा
निशा-चराः शोणित-गन्ध-मोहिताः ।
पुनः सुसंरब्ध[15]-तरा व्यव-स्थिता

---

१. ल$_1$ ब-अग्निमुखोपमैः ॥ २. म-सुरद्रि इव । रा$_2$-त्रिपुरा इव ॥ ३. रा$_1$ ल$_1$ ल$_2$ श्र-निकुंजस० । ४. म-नास्ति ॥ ५. रा$_1$-तस्य वै । ६. रा$_2$ फ म-विष्णुरिवाहवे । ७. रा$_2$-समरे । ८. रा$_1$ ल$_1$ ल$_2$ ब-विमलो । प्र-विपुलो ॥ ९. प्र-बलैः ॥ १०. प्र-दन्तैस् । ११. रा$_1$ ल$_1$ ब श्र रा$_2$ म-०युवटसंकुलं । फ-०युवरसंकुलं ॥ १२. प्र-०गहस्तैश् । १३. रा$_2$-भूतितमा० ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-०पुंगवास् । १५. रा$_1$-सुसंरुद्धतरा । प्र-च संरब्धतरा ।

५९] दिवा-करस्याऽस्तमयाऽभिकाङ्क्षिणः ॥७१॥ [४७

इत्यार्षे[1] रामायणे[2] युद्धकाण्डे द्वन्द्व-युद्धं नामाऽष्टादशः सर्गः ॥१८॥

---

## [वं-१९]= [ एकोनविंशः सर्गः ] =[दा-४४]

युध्यताम् एव तेषां तु तदा वानर-रक्षसाम् ।[3]
१] रविर् अस्तं गतो रात्रिः प्र-वृत्ता प्राण-हारिणी ॥१॥[4] [१
अन्योऽन्यं बद्ध[5]-वैराणां घोराणां जयम् इच्छताम् ।
२] सम्प्र-वृत्तं निशा-युद्धं तदा वानर-रक्षसाम् ॥२॥[4] [२
राक्षसो[6]ऽसीऽति हरयो वानरो[6]ऽसीऽति राक्षसाः ।
३] अन्योऽन्यं सम्-अरे जघ्नुस् तस्मिंस् तमसि दारुणे[7]॥३॥[8] [३
एहि दारय भिन्धी[9]ऽति वि-द्रावय वि-कर्षय ।[10]
४] एवं सु-तुमुलः शब्दस् तस्मिंस् तमसि शुश्रुवे ॥४॥ [४
कालाः काञ्चन-सन्नाहास्[11] तस्मिंस् तमसि राक्षसाः[12] ।
५] सम्-अदृश्यन्त शैलेन्द्रा दीप्तौषधिधरा इव[13] ॥५॥ [५
ऋक्षास् तिमिर-संकाशास् तस्मिंस् तमसि भैरवे[13] । [N
६] परि-पेतुः सु-संक्रुद्धा भर्त्सयन्तो निशा[14]-चरान् ॥६॥
तस्मिंस् तमसि दुष्-पारे राक्षसान्[15] क्रोध-मूर्च्छितान्[15] ।[16] [६

---

१. फ म-नास्ति । २. ब प्र रा$_{2}$-लंकाकाण्डे । म-युद्धपर्वणि ॥ ३ म-नास्ति । ४. ल$_{1}$-नास्ति ॥ ५. रा$_{1}$-बुद्ध० ॥ ६. रा$_{1}$ ब प्र-०सोस्मीति ह... सोस्मीति । ७. ल$_{1}$ ल$_{2}$ अ-भैरवे । ८. अतः परमधिकः पाठः—रा$_{2}$-वानरा-न्राक्षसांश्चैव तस्मिंस्तमसि दारुणे ॥ ९. प्र रा$_{2}$ फ म-भिन्धि दारय एहीति । १०. ल$_{1}$-नास्ति ॥ ११. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-०संकाशास् । फ-सन्नादास् । १२. रा$_{1}$ ल$_{2}$ अ प्र म-भैरवे । १३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-नास्ति । म-सम्प्रादृश्यन्त शैलेन्द्रा दीप्ता धातुनिशाचराः ॥ १४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$-निशाचराः ॥ १५. अ प्र-साः क्रोधमास्थिताः । रा$_{1}$ ल$_{1}$ ल$_{2}$ ब-०साः क्रोध-मूर्छिताः । १६. म-नास्ति ।

७] परि-पेतुः सु-संक्रुद्धा भक्षयन्तो वने-चराः [1]।।७।। [N
८पू] निन्युर् यम-क्षयं क्रुद्धा मुष्टिभिर् दशनैस् तथा ।[2] [N
हयांश् च काञ्चनाऽऽपीडान् ध्वजांश् चाऽऽभरणानि च ।
९] आ-प्लुत्य दशनैस् तीक्ष्णैर् नखैश् च नि-चँकर्तिरे ।।८।। [७
कुञ्जरान् कुञ्जराऽऽरोहान् पादातान्ँ रथिनो रँथान् ।
१०] आ-प्लुत्य वि-चकर्षुस् ते दशनैः क्रोध-मूर्च्छिताः ।।९।। [८
लक्ष्मणस्त्व् अथ रामश् चँ शरैर् अग्नि-शिखोपमैः ।
११पू] आ-दिश्याऽऽदिश्य रक्षांसि प्र-वराणि नि-जघ्नतुः ।।१०।। [९
तुरङ्ग-खुर-विध्वस्तं रथ-नेमि-समुद्धँतम् ।
१२] कण्ठान् अरौत्सीद् योधानां चक्षूंषि च मही-रजः ।।११।। [१०
वर्तमाने तथा घोरे सं-ग्रामे लोम-हर्षणे ।
१३] लोहितौघा महाऽऽवर्ता नद्यो घोरा वि-सुस्रुवुः ।।१२।। [११
नादो भेरी-मृदङ्गानां पणवानां च निः-स्वनः[11] ।
१४] शङ्ख-वेणु-रवो[10]न्मिश्रो रक्षसां काम-रूपिणाम् ।।१३।। [१२
हयानां स्वनमानानां राक्षसानां च निः-स्वनम्(?ः)[11] ।[12]
१५] शस्त्राणां वानराणां च सं-बभूव सु-दारुणः ।।१४।। [१३
शस्त्र-पुष्पोपहारा सा तत्राऽऽसीद् युद्ध-मेदिनी ।
१६] दुर्-दर्शा दुर्वि-गाहा च शोणित-श्रा(स्रा)व-कर्दमा ।।१५।।[१५
सा बभूव निशा घोरा हरि-राक्षस-हारिणी ।
१८] काल-रात्रीऽव भूतानां सर्वेषां दुर्-अतिक्रमा ।।१६।। [१६

---

१. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र म-नास्ति ॥ २. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र फ म-नास्ति । अतः परमधिकः पाठः—रा$_2$-उत्पतंतश्च हरयो निपतंतश्च राक्षसाः । ३. फ म-विचकर्षिरे ॥ ४. रा$_1$ ल$_2$ ब ञ प्र म-पदा० । रा$_2$ फ-पताकान् । ५. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र म-हयान् ॥ ६. रा$_2$-०णश्च तथा रामः ॥ ७. रा$_2$-०समुत्थितं । फ-०समुद्गतं । ८. रा$_2$-महद्रजः ॥ ९. प्र-नाना । रा$_2$ फ-ततो । १०. प्र-०रवैर्मिश्रो । ११. म-नास्ति ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-अतं आरभ्य २६-शश्लोकपूर्वार्धं यावत्पाठो नास्ति ॥

ततस् ते राक्षसाः सर्वे तस्मिंस् तमसि दारुणे ।
१९] रामम् एवाऽभ्य्-अधावन्त सृजन्तः सायकान् बहून् ॥१७॥ [१७
तेषाम् आ-पततां शब्दः क्रुद्धानाम्[1] अभि-गर्जताम् ।
२०] उद्-वृत्त[2] इव सर्वेषां सागराणां महा-स्वनः ॥१८॥ [१८
तेषां रामः शरैः षड्भिः षड्[3] बिभेद[3] निशा-चरान् ।
२१] निमिषाऽन्तर-मात्रेण शितैर् अग्नि-शिखोपमैः ॥१९॥ [१९
यम(?ज्ञ)-शत्रुं[4] च दुर्-धर्षं[4] महापार्श्व-महोदरौ ।
२२] वज्र-दंष्ट्रं(?ष्ट्रं)[5] महा-कायं[5] तौ चोभौ शुक-सारणौ ॥२०॥ [२०
२३उ] ते तु रामेण तैर्[6] बाणैः सर्व-गात्रेषु ताडिताः ।
N] युद्धाद् अप-सृतास् त्रासाद् अव-शेषेण चाऽऽयुषः[7] ॥२१॥ [२१
ततः काञ्चन-चित्राऽङ्गैः सं-पतद्भिः सहस्र-शः । [N
२४] दिशश् चकार वि-मला वि-दिशश् च महा-बलः[8] ॥२२॥ [२२उ
ये त्व्[9] अन्ये राक्षसा वीरा रामस्याऽभि-मुखे[10] स्थिताः ।
२५] ते वि-नष्टाः समा-साद्य पतङ्गा इव पावकम् ॥२३॥ [२३
ततः काञ्चन-चित्राऽङ्गैः शरैर् अग्नि-शिखोपमैः । [२२पू
२६] तत् तमो रात्रि-जं रामः किं-चिद् उत्-सारयंस् तदा ॥२४॥[11] [N
तम् अन्ध-कारम् उत्-साद्य बाणैर् बाण-चरां[12] गतिम्[12] ।
२७] चक्षुर्-विषयम् आ-साद्य शरौघैः सम्-अवर्तयत् ॥२५॥ [N
आ-संपतद्भिर् वि-शिखै रुक्म-पुङ्खैः सहस्र-शः ।
N] बभूव रजनी चित्रा ख-द्योतैर् इव शारदी ॥२६॥ [२४
राक्षसानां महा-नादैर् वानराणां च गर्जितैः ।
२९] सा बभूव निशा घोरा भूयो घोर-तरा तदा[13] ॥२७॥ [२५

---

१. रा$_2$ म-क्षुद्राणाम् । २. रा$_2$-उद्वेलम् ॥ ३. म-षड्भिरेव ॥ ४. रा$_2$-रामशत्रू च दुर्धर्षौ । फ-रामशत्रून् दुर्धर्षौ । ५. रा$_2$ फ-०दंष्ट्रो महाकायः ॥ ६. म-ते । ७. फ-वायुषः ॥ ८. म-महारथैः ॥ ९. म-युद्धे । १०. म-०मुखं ॥ ११ म-नास्ति ॥ १२. रा$_2$-बाणवशं गतः ॥ १३. म-नास्ति ॥

भेरी-शब्देन महता प्र-वृद्धेन समन्त-तः ।[1]
३०] त्रिकूट(?टः)कन्दर-मुखैः प्रख्याऽहरद् इव स्थिताः(?ताः)[2]२८ [२६
गो-लाङ्गूला महा-कायास् तमसस् तुल्य-वर्चसः ।[1]
३१] सम्परि-ष्वज्य बाहुभ्याम् अखादन्त निशा-चरान् ॥२९॥[3] [२७
ततः क्रोध-समाविष्टः शर-वर्षेण रावणिः ।
३२] अङ्ग-दस्य चमूं घोरां नाशयामास सर्व-तः ॥३०॥ [N
ततः क्रोध-परीऽताऽऽत्मा युव-राजोऽङ्ग-दो बली ।
३३] शिलाम् उत्-पाटयामास बाहुभ्यां प्र-णदन् मुहुः ॥३१॥ [N
तां समुत्-क्षिप्य तेजस्वी छाद्यमानः शरोर्मिभिः ।
३४] रथं बभञ्ज वेगेन शिलया कपि-कुञ्जरः ॥३२॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे रात्रि-युद्धं नामैकोनविंशः सर्गः ॥१९॥

---

## [वं-N]= [ विंशः सर्गः ] =[दा-४४]

वर्तमाने तथा रौद्रे[6] सं-ग्रामेऽति-भयङ्करे । [२९पू
अङ्ग-दो[7] वि-रथं वीरो[7] रावणिं समुपाऽद्रवत् ॥१॥ [N
इन्द्र-जित् तु रथं त्यक्त्वा हताऽश्वो[8] हत-सारथिः ।
अङ्ग-देन[9] सहाऽऽयस्तस् तत्रैवाऽन्तर् अधीयत ॥२॥ [२९उ
स यज्ञ-वेद्यां विधि-वत् पावकं जुहुवेऽस्त्र-वित् ।
जुह्वतस् तस्य तत्राऽग्निं रक्त[10]-पीताऽम्बर-स्रजः ॥३॥ [N
आ-जहुस्[11] तत्र सं-भ्रान्ता राक्षसा यत्र रावणिः ।

---

१. म-नास्ति । २. म-चित्रकूटकन्दरप्रख्यैर्महाकायैर्महास्वनैः ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-अत आरभ्य सर्गसमाप्तिं यावत्पाठो नास्ति ॥ ४. फ-नास्ति । ५. प्र रा$_2$ म-लंकाकांडे । ब-नास्ति ॥ ६. ल$_1$-युद्धे । अ-घोरे । ७. म-०दोथ महावीरो ॥ ८. रा$_1$-हताश्वरथसा० । ९. म-अंगदं च समाहूय ॥ १०. म-रक्तोष्णीषावरश्रकुः ॥ ११. रा$_1$ ल$_1$ अ प्र फ-आजुहुस् । रा$_2$-आजहंस् ॥

शस्त्राणि शत-पत्राणि सम्-इधोऽथ वि-भीतकान् ॥४॥ [N
लोहितानि च वासांसि स्रुचं[1] कार्ष्णाऽऽयसं तथा ।
सर्व-तोऽग्निं समा-स्तीर्य शत-पत्रैः स-तोमरैः ॥५॥ [N
छागस्याऽपि च कृष्णस्य कण्ठाज् जग्राह जी[2]वतः ।
शोणितं तच् च विधि-वत् स जुहाव रणोत्सुकः ॥६॥ [N
सकृद् एव सम्-इ[3]द्धस्य वि-धूमस्य महाऽर्चिषः ।
बभूवुः सु[4]-निमित्तानि वि-जयस्य प्र-दक्षिणम् ॥७॥ [N
प्रदक्षिणाऽऽवर्त्त-शिखस् त[5]प्त-हाटक-सन्निभः ।
हविस् तत् प्रति-जग्राह पावकः स्वयम् उत्थि(द्-स्थि)तः।[6]८॥[N
ततोऽग्नि-मध्याद् उत्-तस्थौ काञ्चन-स्यन्दनोत्तमः ।
चतुर्भिः काञ्चनाऽऽपीडैर् अश्वैर् युक्तः प्र-भद्रकैः ।[6]
अन्तर्-धानं गतः श्री-मान्[7] दीप्त-पावक-सन्निभः ॥९॥ [N
आ-रुरोह रथ-श्रेष्ठम् अन्तर्धान-चरं शुभम् ।
अ-वध्यैर् वाजिभिर् [8]युक्तं शस्त्रैश् च वि-विधैर् युतम्॥१०॥[N
समारोपित-नेपथ्यं र[9]थं शक्ति-समन्वितम् ।
जाज्वल्यमानं वपुषा तपनीय-विभूषितम् ॥११॥ [N
भल्लैश् चन्द्राऽर्ध-च[10]न्द्रैश् च [11]तूर्णं वै सं[11]मुप-स्थितः ।
जाम्बूनद-मयो नागस् तरुणाऽऽदित्य-सन्निभः ॥१२॥ [N
बभूवेन्द्र-जितः केतुर् वैडूर्य-समलङ्कृतः ।
हुत्वाऽग्निं राक्षसैर् मन्त्रैस् ततो वचनम् अब्रवीत्॥१३॥ [N
अद्य हत्वा वधाऽर्हौ तौ मिथ्या-प्रव्रजितौ [12]वने ।

---

१. रा$_2$ फ म-स्रुवं ॥ २. रा$_2$ फ म-जीवितम् ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ-सधूमस्य । ४. रा$_2$ म-त्म नि० ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ-तत्र हा० । ६. फ-नास्ति । ७. फ म-नास्ति । अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$-हुत्वाग्निं तर्पयित्वा च दैत्यदानवराक्षसान् । वाचयित्वा ततः स्वस्ति प्रयुक्ताशीर्द्विजातिभिः ॥ ८. रा$_2$-युक्तैः ॥ ९. रा$_2$-रथ्यं ॥ १०. म-०र्द्धवक्रैश् । ११. रा$_2$ फ-तूणीरैः समुपस्थितं । म-सर्वतः समलंकृतं । १२. प्र रा$_2$ फ म-रणे ।

जयं पित्रे प्र-दास्यामि रावणाय मनः-प्रियम् ॥१४॥ [N
अद्य निर्-वानराम् उर्वीं हत-राघव-लक्ष्मणाम् ।
करिष्यामि ह्य् अ-सुग्रीवाम् इत्य् उक्त्वाऽन्तर्-अधीयत[1] १९ ॥ [N
स ददर्श महा-[2]वीर्यौ [2]ताव् उभौ राम-लक्ष्मणौ ।[1]
क्षिपन्तौ शर-जालानि कपि-मध्ये व्यव-स्थितौ ॥१६॥ [N
स तु वैहायसं प्राऽऽप्य रथ-स्थौ (?स्थो) राम-लक्ष्मणौ ।
अ-चक्षुर्विषये तिष्ठन् विव्याध नि-शितैः शरैः ॥१७॥ [N
तौ [3]तस्य [3]रथ-वेगेन परीऽतौ भ्रातराव् उभौ ।
गृहीत्वा धनुषी व्योम्नि घोरान् मुमुचतुः शरान् ॥१८॥ [N
प्र-च्छादयन्तौ गगनं शर-जालैर् महा-बलौ ।
तं महाऽसुर-सङ्काशं न तौ पस्पृशतुः शरैः ॥१९॥ [N
स वि-[4]धार्याऽन्ध-काराणि माया-बल-समन्वितः ।
दिशश् चाऽन्तर्-[5]दधे वीरो नीहार-[6]तमसाऽऽवृतः ॥२०॥ [N
नैव ज्या-तल-निर्घोषो [7]न [7]च नेमि-[8]रथ-स्वनः ।
शुश्रुवे चरतस् तस्य न च रूपं स्म दृश्यते ॥२१॥ [N
घनाऽन्धकार-[9]तिमिरे शिला-वर्षम् इवाऽद्भुतम् ।
शर-वर्षं महा-बाहुश् च[10]र्चां(?का)ल(?र) शर-सं[10]वृतः ॥२२॥ [N
[11]राघवौ [11]सूर्य-सङ्काशैर् घोरैर् [12]दत्त-वरैः [12]शरैः ।
बिभेद सम्-अरे क्रुद्धः सर्व-गात्रेषु रावणिः ॥२३॥ [N
तौ हन्यमानौ नाराचैर् धाराभिर् इव पर्वतौ ।
हेम-पुङ्खान् नर-व्याघ्रौ घोरान् [13]मुमुचतुः शरान् ॥२४॥ [N

---

१. म-नास्ति । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०वीरौ रथस्थौ ॥ ३. म-महासुरसंकाशौ ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-विधूया० । ५. म-०दधन् । ६. रा$_2$ फ म-०रतिमिरावृताः । ७. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-नापि । ८. प्र म-नेमिखरस्वनः ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०तिमिरं । १०. रा$_2$ म-नाराचशर० । प्र म-०ल शरसंहतः ॥ ११. रा$_1$ ल$_2$ ब अ प्र-राघवं । १२. म-बहुतरैर्भृशं । १३. प्र-चक्रमतुः ॥

अन्तरिक्षे त्व् [1]अन्-आसाद्य ते रिपुं कङ्क-वाससः ।
नि-पेतुर् उर्व्यां वि-शिखाः [2]शतशोऽथ सह[2]स्र-शः ॥२५॥ [N
[3]पन्न-गैस् तु शरोद्[3]भूतै रावणिः प्र-हसन् रणे ।
अति-मात्रं शरौघेण [4]ताडयामास राघवौ ॥२६॥ [N
तान् वि-[6]धम्य ततो भल्लैर् [7]अनीकैर् वि-[7]चकर्षतुः ।
राघवौ परमाऽऽयस्तौ ज्वलद्भिर् ज्वलनोपमौ [9]॥२७॥ [N
यतो यतो ददृशतुः शरान् आ-पततः शितान्[10] ।
ततस् ततो बाण-वर्षं राघवौ वि-ससर्जतुः ॥२८॥ [N
इन्द्र-जित् तु दिशः सर्वा रथेन वि-चरन् बली ।
विव्याध तौ दाशरथी [11]लघु-हस्तः शितैः शरैः ॥२९॥ [N
तौ तु विद्धौ महाऽऽत्मानौ रुक्म-पुङ्खैर् अ-जिह्मगैः ।
बभूवतुर् दाशरथी [12]बन्धु-जीवैर् इवाऽऽवृतौ[12] [13] ॥३०॥ [४०
नाऽस्य वेद गतिं कश्-चिन् न रूपं न धनुः-स्वनम् ।
न चाऽस्य लक्षणं [14]कश्-चित् सम्-अर्थश् चाऽऽप्तुम् आ-हवे[14] ३१ N
तेन विद्धाश् च हरयो नि-हताश् च गताऽसवः ।
राघवाऽर्थे पराऽऽक्रान्ता धरण्याम् उप-शेरते[15] ॥३२॥ [N
लक्ष्मणस्[16] तु सु-संक्रुद्धः क्रोधाद्[16] भ्रातरम् अब्रवीत् ।
ब्राह्मम्[17] अस्त्रं[17] प्र-योक्ष्यामि वधाऽर्थं सर्व-रक्षसाम् ॥३३॥ [N
तम् उवाच ततो रामो लक्ष्मणं शुभ-लक्षणम् ।
एकस्य रक्षसो हेतोः पृथिवीं हन्तुम् इच्छसि ॥३४॥ [N

१. म-तमासाद्य । २. रा₂ फ म-शराः शतस० ॥ ३. म-शरैस्तु पन्नगीभूतै । ४. रा₂ फ म-पीड० । ५. प्र-रावणिः ॥ ६. म-निश्चित्य । ७. रा₂ फ म-अनेकैर्निचकर्ततुः । ८. म-त्वरया युक्तौ । ९. फ-नास्ति ॥ १०. प्र-शरान् ॥ ११. रा₂-लघुहस्तौ ॥ १२. रा₂ फ म-बंधुजीवस्त्रजोपमौ ॥ १३. प्र-नास्ति ॥ १४. रा₂ फ-किंचित्सूर्यस्येवाभ्रसंप्लवे । म-किंचित्सूर्यस्येवाभ्रमण्डले ॥ १५. म-नास्ति ॥ १६. प्र-०णस्त्वथ सं० । म-नास्ति । १७. अ-ब्रह्मणोस्त्रं ॥

अ-युध्यमानान् प्र-च्छन्नान् प्राऽञ्जलीञ् छरणाऽऽगतान् ।
पलायमानान् सुप्तांश् च न त्वं हन्तुम् इहाऽर्हसि ॥३५॥ [N
अस्यैव तु वधे बुद्धिं[1] करिष्यामो[2] नरर्षभ ।
आ-देक्ष्यामि[3] महा-वेगान् काम-गान् हरि-यूथपान् ॥३६॥ [N
तं[4] एनं मायया छन्नं[4] क्षुद्रम्[5] अन्तर्-हितं भृशम् ।
राक्षसं नि-हनिष्यन्ति[6] प्रेक्ष्य वानर-यूथपाः ॥३७॥ [N
स एवम् उक्त्वा वचनं महा-यशा[7]
वधाय रौद्रस्य नृशंस-कारिणः ।
रघु-प्रवीरः प्लवगर्षभैर्[8] वृतस्
तदा महाऽऽत्मा त्वरितं निर्-ऐक्षत ॥३८॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे[9] इन्द्रजिद्-युद्धं नाम विंशः सर्गः ॥२०॥

---

## [वं – २० ]= [ एकविंशः सर्गः ] =[ दा – ४९ ]

स तस्य गतिम् अन्व्-इच्छन् राज-पुत्रः प्रताप-वान् ।
१] रामो दिदेश बल-वान् दश वानर-यूथपान् ॥१॥[10] [१
जाम्ब-वन्तं[11] सु-षेणं च[11] नीलं च प्लवगर्षभम् ।
२] अङ्ग-दं वालि-पुत्रं च मैन्दं च शरभं तथा ॥२॥ [२
द्वि-विदं च हनू-मन्तं गजं च सु-महाबलम्[12] ।
३] ऋषभं चर्षभ-स्कन्धम् आ-दिदेश रिपुं प्रति ॥३॥ [३

---

१. रा₂ फ म-यत्नं । २. म-करिष्यसि । ३. म-आदेश्यामो ॥ ४. रा₂-एनं मायाप्रतिछन्नं । ५. रा₁ ल₁ ल₂ ब अ प्र रा₂ फ-क्रुद्धं । ६. रा₁ ल₁ ल₂ अ फ-निष्पतिष्यन्ति ॥ ७. म-महातमा ॥ ८. फ म-नास्ति । ९. ब प्र रा₂-लंकाकांडे । रा₂ फ म- युद्धपर्वणि ॥ १०. रा₁ ल₁ ब-नास्ति ॥ ११. म-द्वौ सुषेणस्य दायादौ ॥ १२. रा₂-तु महा० ॥

ते[1] तु प्र-हृष्टा हरयो भीमान् उद्-यम्य पाद-पान् ।
४] आ-काशं विविशुः सर्वे मार्गमाणा यतो भयम् ॥४॥ [४
तेषां वेग-वतां वेगम् इषुभिर् वेगवत्[2]-तरैः ।
५] अस्त्र[3]-वित् परमाऽस्त्रेण यूथ-पांस्[4] तान्[4] अवारयत् ॥५॥ [५
ते भीम-वेगा हरयो नाराचैर् बहुभिः क्षताः ।
६] अन्ध-कारे न ददृशुर् मेघैः सूर्यम् इवाऽऽवृतम् ॥६॥ [६
तेन[5] वानर-शार्दूला राक्षसेन वि-पश्चिता ।
७] निर्-धूताः शर-वेगेन न्य्-अपतन्त मही-तले ॥७॥ [N
ततस्[6] तौ[6] राघवौ वीरौ सर्व[7]-मर्माऽतिगैः शरैः[7] ।
८] भृशम् आ-वेधयाञ्चक्रे रावणिः समितिं-जयः ॥[7]८॥ [७
निरन्तर[7]-शरीरौ ताव् उभौ च भ्रातरौ कृतौ ।
९] क्रुद्धेनेन्द्र-जिता वीरौ पन्न-गैः शरतां गतैः ॥९॥ [८
तयोः क्षतज-मार्गेभ्यो सुस्राव रुधिरं बहु ।
१०] ताव् उभौ सम्प्र[9]-काशेते पुष्पिताव् इव किं-शुकौ ॥१०॥ [९
ततः पर्यन्त-रक्ताऽक्षौ[10] नीलाऽञ्जन-चयोपमः ।
११] रावणी राघवौ[11] वाक्यम् अन्तर्धान-गतोऽब्रवीत् ॥११॥ [१०
युध्यमानम् अ-लक्ष्यं मां शक्रोऽपि त्रि-दशेश्वरः[12] ।
१२] द्रष्टुम् आ-सादितुं वाऽपि[13] न शक्तः किं पुनर् युवाम् ॥१२॥ [११
एवम् उक्त्वा तु धर्म-ज्ञौ भ्रातरौ राम-लक्ष्मणौ ।
१३] निर्-बिभेद शितैर् बाणैः शक्राऽशनि[14]-सम-प्रभैः ॥[15]१३॥ [१२

---

१. प्र-ततो ॥ २. रा$_1$ अ-बलवत्तरैः । ३. ब-शस्त्रवित् । ४. रा$_2$ फ म-यूथपानां ॥ ५. प्र-तत्ते । रा$_2$ फ म-ते तु ॥ ६. म-ततः स । ७. म-नास्ति ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब-०तां गतौ । प्र-सर्वममातिगैः शरैः ॥ ९. रा$_2$ म-प्रचकाशेते ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-रक्ताक्षौ । ११. म-भ्रातरौ ॥ १२. ल$_2$-त्रिदिवेश्वरः । १३. फ-वापि ॥ १४. रा$_2$-चक्रस्पर्शसम० । १५. म-नास्ति ॥

१४उ] एतौ रोष-परीऽताऽऽत्मा नयामि यम-सादनम्[1] । [१२उ
भिन्नाऽञ्जन-चय-प्रख्यो[2] वि-स्फार्य वि-पुलं धनुः[1] ।
१५] भूय एव शरान् घोरान् वि-ससर्ज तयोर् मृधे ॥१४॥ [१४
ततो मर्मसु मर्म-ज्ञो मज्जयन् नि-शितान् शरान् ।
१६] राम-लक्ष्मणयोर् वीरो ननाद च मुहुर् मुहुः ॥१५॥ [१५
स रामं लक्ष्मणं चैव घोरैर् दत्त-वरैः शरैः । [स०४४
N] बिभेद सम्-अरे क्रुद्धः सर्व-गात्रेषु रा[3]क्षसः ॥१६॥ [३८
अ-दृश्यः सर्व-भूतानां[4] कूट-योधी निशा-चरः ।
N] बबन्ध शर-बन्धेन ताव् उभौ राम-लक्ष्मणौ ॥१७॥ [३९
बद्धौ तु शर-बन्धेन निष्प्रयत्न-भुजौ[5] कृतौ[1] ।[6] [स०४५
१८] निमेषाऽन्तर-मात्रेण न शक्तौ[7] तं[8] निर्-ईक्षितुम्[9] ॥१८॥ [१६
तौ तु निर्भिन्न[10]-सर्वाऽङ्गौ शरतल्पाऽऽहितौ रणे[9] ।
१९] ध्वजाव् इव महेन्द्रस्य रज्जु-युक्तौ प्र-कम्पितौ[11] ॥१९॥ [१७
तौ सम्प्र-चलितौ वीराव् अर्दितौ मर्म-भेदिभिः[12] ।
२०] नि-पेततुर् महेष्वासौ जगत्यां जगती-पती ॥२०॥ [१८
तौ वीर-शयने तत्र शयानौ रुधिरोक्षितौ ।
२१] शर-वेष्टित-सर्वाऽङ्गाव् आर्तौ परम-पीडितौ ॥२१॥ [१९
नह्य् अ-विद्धं तयोर् गात्रे बभूवाऽन्तरम्[13] अण्व् अपि ।
२२] [14]अ-निर्विद्धं च नाऽध्वस्तम् अपि सूक्ष्मम् अ-जिह्मगैः २२ [२०
तौ तु वीरौ शरैर्[15] बद्धौ रक्षसा काम-रूपिणा ।[16]

---

१. म-नास्ति ॥ २. अ-०प्रख्यौ । ३. रा१-राघवः ॥ ४. रा२ फ म-सर्वयोधानां ॥ ५. प्र-निष्प्रयत्नौ भुजौ । अ रा२ म-निःप्रकम्पभुजौ । ६. फ-नास्ति । ७. प्र-शक्तस् । रा२ फ-शेकुस् । ८. म-चैव वीक्षितुम् ॥ ९. अ-नास्ति । १०. ब-विच्छिन्न० । ११. अ म-नास्ति ॥ १२. म-नास्ति । १३. प्र-०व क्षतम् । १४. रा२-नानिर्भिन्नं । ब-अनिरुद्धं । १५. रा१ अ प्र-शतैर् । १६. अतः परमधिकः पाठः—फ-शराचितशरीरौ तौ क्षितौ निपतिताबुभौ । प्रकाशेतां महाबाहू द्रावितं सलिलं यथा ॥

२४] रक्तं सुस्रुवतुर् गात्राज् जलं प्रस्रवणाद्[1] इव ॥२३॥ [२१
पातितः[2] प्रथमं रामः शर[3]-तल्प-निपीडितः ।
२५] क्रोधाद् इन्द्र-जिता येन पुरा शक्रोऽपि निर्-जितः[4] ॥२४॥ [२२
पुनश् च लक्ष्मणो वीरो निश्-चेष्टो धरणीं[5] गतः ।
N] पश्चात्[6] स राक्षसेन्द्रो(?न्द्रे)[7]वै(?ण) बबन्धे[8] शर-पञ्जरे[9] ॥२५॥ [N
२६उ] नालीकैर् अर्ध-नालीकैर् भल्लैर् मुक्तैः[10] सहस्र-शः ।
N] नाराचैर् वत्स-दन्तैश् च सित[11]-दंष्ट्रैः शरैः शितैः ॥२६॥ [२३
२७उ] स वीर[12]-शयने शिश्ये[13] दिव्यम् आ-दाय कार्मुकम् ।
छिन्न[14]-मुष्टि-परीणाहं त्रिणतं[15] रुक्म-वाजिनम्[16] ॥२७॥ [२४
बाणपाताऽन्तरे रामः पतितं पुरुषर्षभम्[17] ।
२८] शयानं लक्ष्मणं दृष्ट्वा निर्-आशो जीवितेऽभवत्[18] ॥२८॥ [२५
बद्धौ[19] तु वीरौ वि-वृतौ[19] शयानौ
तौ[20] वानराः सम्परि-वार्य सर्वे ।
सम्-आसते वायु-सुत-प्रधाना
N] वि-षादम् आर्ताः[21] परमं च जग्मुः ॥२९॥ [२८

इत्यार्षे[22] रामायणे[22] युद्ध-काण्डे[23] शर-बन्धो नामैकविंशः सर्गः ॥२१॥

---

१. फ-प्रस्रवणाद् ॥ २. रा$_2$-पतितः । ३. रा$_1$ ल$_1$ ल$_2$ अ प्र-शरतुल्यनिपी० । ब-शरतल्पं नि० । रा$_2$-शरतल्पेन पी० । ४. म-शक्रो विनिर्जितः ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-धरणीतले । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-पुरः पश्चाद्राक्षसेन्द्रो । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-ववर्ष । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-०पञ्जरं । ९. म-नास्ति ॥ १०. म-वेतसपत्रकैः । ११. प्र रा$_2$ फ म-सिंहदंष्ट्रैः ॥ १२. प्र- सुवीर० । १३. अ-श्रेष्ठो । म-दिव्ये । १४. रा$_1$ ल$_1$ ल$_2$ ब अ रा$_2$ फ-छन्नमु० । १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-नृत्ययन् । म-त्रिनेत्रं । १६. रा$_1$-ऊरुवा० । १७. प्र-पुरुषर्षभः । १८. म-जीविते तदा ॥ १९. प्र-विबद्धौ तौ वीरनरौ । म-बद्धौ च वी० । २०. रा$_2$-ते । २१. प्र-अन्तः ॥ २२. फ म-नास्ति । २३. प्र-लंकाकांडे । म-युद्धपर्वणि ॥

ततो द्यां पृथिवीं चैव वीऽऽक्षमाणा[1] वनौकसः ।
१] ददृशुः स-हितौ बद्धौ भ्रातरौ राम-लक्ष्मणौ ॥१॥ [१
धर्षित्वोप-रते मेघे कृत-कर्मणि राक्षसे ।
२] आ-पपाताऽथ तं देशं सु-ग्रीवः स-विभीषणः ॥२॥ [२
अङ्ग-दो द्वि-विदो मैन्दः सु-षेणः कु-मुदो नलः ।
३] तूर्णं हनु-मता सार्धम् अ (?आ)गमन् यत्र राघवौ ॥३॥ [३
निश्-चेष्टौ मन्द-निःश्वासौ[2] शोणि[3]तौघ-परिप्लुतौ ।
४] शर-जाला[4]ऽऽवृतौ स्तब्धौ शयानौ शरतल्प-गौ[3] ॥४॥ [४
निः-श्वसन्तौ यथा नागौ निश्-चेष्टौ मन्द-विक्रमौ ।
५] रुधिर-स्राव-दिग्धाऽङ्गौ तापनीयाव् इव ध्वजौ ॥५॥[3] [५
तौ वीर-शयने वीरौ शयानौ मन्द-चेतसौ ।
६] यूथ-पैस् तैः परि-वृत्तौ बाष्प-व्याकुल-लोचनैः [5]॥६॥[3] [६
राघवौ पतितौ दृष्ट्वा बाण-जाल-समर्दितौ ।
७] बभूवुर् व्यथिताः सर्वे वानराः स-विभीषणाः ॥७॥ [७
अन्तरिक्षं निर्-ऐक्ष[6]न्त दिशः सर्वाश् च वानराः ।
८] न तु तं मायया छन्नम् अपश्यन् रावणिं रणे ॥८॥ [८
तं तु माया-प्र[7]तिच्छन्नं माययैव वि-भीषणः ।
९] वीऽऽक्षमाणो ददर्शाऽथ भ्रातुः पुत्रम् अव-स्थितम् ॥९॥[8] [९
तम् अप्रतिम-कर्माणं अ-प्रतिद्वन्द्वम् आ-हवे ।
१०] ददर्शाऽन्तर्-हितं वीरं नि-नदन्तं वि-भीषणः ॥१०॥ [१०
इन्द्र-जित् त्व् आत्मनः कर्म तौ शयानौ निर्-ईक्ष्य च ।
११] उवाच परम-प्रीतो हर्षयन् सर्व-नैर्ऋतान् ॥११॥ [१२

---

१. रा$_1$ ल$_1$ल$_2$ प्र फ रा$_2$ म-वीक्ष्यमाणा ॥२. म-०निःस्वनौ । ३. म-नास्ति । ४. रा$_1$-०जालवृतौ । प्र रा$_2$ फ-०जालाचितौ ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-नास्ति ॥ ६. फ-निरीक्षंते ॥ ७. प्र-मायापरिच्छिन्नं । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-नास्ति ॥

दूषणस्य नि-[1]हन्तारौ खरस्य च तथैव च ।
१२] [2]शातितौ मामकैर् बाणैर् भ्रातरौ राम-लक्ष्मणौ ॥१२॥ [१३
[3]नैतौ मोक्षयितुं शक्याव् [4]एतस्माद् इषु-[4]बन्धनात् ।
१३] [5]समस्तैश् [5]च समा-गम्य सर्षिसङ्घैः सुराऽसुरैः ॥१३॥ [१४
यत्-कृते चिन्तयानस्य शोकाऽऽर्तस्य पितुर् मम ।
१४] अ-[6]स्पृष्टे [6]शयने गात्रैर् [7]दीर्घ-यामाऽस्ति यामिनी ॥१४॥ [१५
कृत्स्नेयं नगरी लङ्का नदी वर्षास्व् इवाऽऽकुला ।
१५] सोऽयं [8]शूल-करोऽन्-अर्थः सर्वेषां [9]नो [9]हतो मया ॥१५॥ [१६
स-लक्ष्मणस्य रामस्य सर्वेषां च वनौकसाम् ।
१६] वि-क्रमा निष्-फलाः सर्वे यथा शरदि तोय-दाः ॥१६॥ [१७
एवम् उक्त्वा तु तान् सर्वान् राक्षसान् परिपार्श्व-तः ।
१७] यूथ-पान् [10]अथ सर्वांस् तांस् ताडयामास राक्षसः ॥१७॥ [१८
तांस् ताडयित्वा बाणौघैस् त्रासयित्वा च वानरान् ।
१९] प्र-जहास [11]ततो मन्दं [11]मन्दं वचनम् अब्रवीत् ॥१८॥ [२४
शर-बन्धेन घोरेण मया बद्धौ चमू-मुखे ।
२०] स-हितौ भ्रातराव् एतौ नि-शामयत राक्षसाः ॥१९॥ [२५
एवम् [12]उक्तास् तु ते सर्वे राक्षसाः परिपार्श्व-तः ।
२१] परं वि-स्मयम् आ-[13]पन्नाः कर्मणा तेन [14]तोषिताः ॥२०॥ [२६
वि-नेदुश् च महा-नादान् सर्वे ते जलदोपमाः ।
२२] हतो राम इति ज्ञात्वा रावणिं [15]चाऽभ्य्-[15]अपूजयन् ॥२१॥ [२७

---

१. रा२ फ म-च हन्तारं । २. अ-पातितौ । रा२ फ-सूदितौ । म-स्पन्दितौ ॥ ३ रा१ ल१ ल२ ब-न तौ । ४. रा१ ल१ ल२ ब अ प्र-एतौ तौ दृढबन्धनैः । ५. रा२ फ म-सर्वैरपि ॥ ६. रा२ फ म-अस्पृष्टश० । ७. प्र रा२-दीर्घमायाति । म-त्रियामा याति ॥ ८. रा२ म-मूलहरो० । फ-शूलहरो० । ९. रा२ फ म-निहतो ॥ १०. प्र-तथा । रा२ म-अपि ॥ ११. रा२ फ म-महाहासं ततो ॥ १२. रा१ ल१ ल२ ब-उक्त्वा । १३. म-आजग्मुः । १४. रा१ ल१ ल२ ब अ प्र-दीपिताः ॥ १५. रा२-चाप्यपू० ॥

निष्-प्रकम्पौ कृतौ दृष्ट्वा तान् उभौ राम-लक्ष्मणौ ।
२३] वसु-धायां निर्-उच्छ्वासौ हतान् इत्य् अन्व्-[१]अमन्यत २२ [२८
ततः शीघ्रं पुरीं लङ्कां रावणिः संमितिं-जयः ।
२४] प्र-विवेश महेष्वासो हर्षयन् सर्व-नैर्ऋतान् ॥२३॥ [२९
राम-लक्ष्मणयोर् दृष्ट्वा शरीरम् इषुभिश् चितम् ।
२५] वानरेन्द्रस्य सं-जातं सु-ग्रीवस्य महद् भयम् ॥२४॥ [३०
२६उ] तम् उवाच भय-त्रस्तं वानरेन्द्रं वि-भीषणः ।
सबाष्प-वदनं दीनं क्रोध-व्याकुल-लोचनम् ॥२५॥ [३१
२७] अलं त्रासेन सु-ग्रीव बाष्प-वेगो नि-गृह्यताम् ।
एवं-प्रायाणि युद्धानि वि-जयो नाऽस्ति नैष्ठिकः ॥२६॥ [३२
२८] वि-र्जयो भाग्य-तोऽस्माकं यदि वीर भविष्यति ।
अद्यैवं[९] तौ वि-मोक्ष्येते[१०] भ्रातरौ राम-लक्ष्मणौ ॥२७॥[११] [३३
२९] पर्यव-स्थापयाऽऽत्मानं सर्वान्[१२] अप्य् अत्र[१२] वानरान् ।
सत्य-धर्माऽनुरक्तानां नाऽस्ति मृत्यु-कृतं भयम् ॥२८॥ [३४
३०] मोह-सन्ताप-संयुक्तं रामं प्रति महा-कपे ।
वि-मुच्यताम्[१३] अयं त्रासः शूराणाम् एष निश्-चयः[१४] ॥२९॥ [N
३१] एवम् उक्त्वा ततस् तस्य जल-क्लिन्नेन पाणिना ।
सु-ग्रीवस्य शुभे नेत्रे प्र-ममार्ज वि-भीषणः ॥३०॥ [३५
३२] प्र-मृज्य वदनं तस्य कपि-राज्ञो महा-द्युतिः ।
अब्रवीत् काल-सम्प्राऽऽप्तम् अ-सम्भ्रान्तो वि-भीषणः[१५] ।३१ [३७

---

१. रा$_1$ ल$_2$ ब अ प्र-अनुमन्यत । रा$_2$-अभ्यमन्यत ॥ २. प्र रा$_2$-समतिंजयः। ३. ल$_1$ ब-सर्वराक्षसान् ॥ ४. प्र-०वस्यागमद् ॥ ५. रा$_2$ फ म-परित्रस्तं। ६. ब-बाष्पव्याकुल० ॥ ७. रा$_2$-न गृह्यतां ॥ ८. रा$_2$-ममैषा भाग्यतास्मा० । फ-शंसेम भा० । ९. अ-अद्यैवैतौ । प्र-मोहमेतौ । रा$_2$-मोहघातौ । फ-मोहान्मे तौ । १०. फ-विमुच्येते । ११. म-नास्ति ॥ १२. रा$_2$ फ-सनाथं मां च ॥ १३. अ-विबुध्यतां । १४. फ म-निर्णयः ॥ १५. रा$_2$-नास्ति ॥

३३] अ-कालः कपि-राजेन्द्र वैक्लव्यम् अभि-वर्तितुम् ।
अति-मोहो ह्य् अ-कालेषु व्य्-असनायोप-पद्यते ॥३२॥ [३८
३४] तस्माद् उत्-सृज्य वैक्लव्यं सर्व-कार्य-विनाशनम् ।
हितं राम-पुरोगानां सैन्यानाम् अनु-चिन्तय ॥३३॥ [३९
३५] अथवा रक्ष्यतां रामो यावत् संज्ञा-विपर्ययः ।
लब्ध-संज्ञौ तु काकुत्स्थौ भयं नो व्यप-नेष्यतः ॥३४॥ [४०
३६] नैतत् किं-चिद् धि रामस्य न च रामो मुमूर्षति ।
न चैनं त्यजते लक्ष्मीर् दुर्-लभा या गताऽऽयुषाम् ॥३५॥ [४१
३७] तस्माद् आ-श्वासयाऽऽत्मानं मां समा-श्वापयस्व च ।
यावत् सर्वाण्य् अनीकानि पुनः सं-स्थापयाम्य् अहम् ।३६। [४२
३८] एते ह्य् उत्फुल्ल-नयनास् त्रासाद् आगत-साध्वसाः ।
कर्णात् कर्ण(ं)-प्रव्यथिता हरयो हरि-पुङ्गव ॥३७॥ [४३
३९] मां तु दृष्ट्वा प्र-धावन्तम् अनीकेषु प्र-हर्षकम् ।
त्यक्ष्यन्ति हरयस् त्रासं सर्पा जीर्णाम् इव त्वचम् ॥३८॥ [४४
४०] एवम् उक्त्वा तु सु-ग्रीवं स्निग्धं राम(?मे)-विभीषणः ।
४१पू] चतुर्भिः सचिवैः सार्धम् अनुसं-चरते बलम् ॥३९॥ [४५
४२उ] इन्द्र-जित् तु महा-मायः सर्व-सैन्य-समन्वितः ।
प्र-विवेश पुरीं लङ्कां जीमूतम् इव भास्-करः ॥४०॥ [४६
४३] तत्र रावणम् आ-सीनम् अभि-वाद्य कृताऽञ्जलिः ।
आ-चचक्षे प्रियं पित्रे नि-हतौ राम-लक्ष्मणौ ॥४१॥ [४७
४४] उत्-पपात ततो हृष्टः पुत्रं च परि-षस्वजे ।

१. रा$_1$ ल$_2$ ब अ फ-अतिव० ॥ २. रा$_2$ फ-ते । ३. म-नास्ति ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब-कर्णात्...प्र० । रा$_2$ फ-०र्णप्रकथिता ।५. ल$_1$-नास्ति ॥ ६. रा$_1$ल$_2$-प्रकर्षकम् । ब-प्रकर्षणम् ॥७. म-त्यजंति ॥ ८. रा$_1$ ल$_1$ल$_2$ ब अ प्र रा$_2$ फ-रामाद्विभीषणः । ९. प्र-अनुचिन्तयते ॥ १०. ब-महाकायः । रा$_2$-०मायी ॥ ११. ल$_2$-ततो । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-प्रियः पुत्रो ॥ १३. रा$_2$-दृष्ट्वा ।

रावणो रक्षसां मध्ये श्रुत्वा शत्रू नि-पातितौ ॥४२॥
मूर्ध्नि चैनम् उपाऽजिघ्रत् परि-तुष्टेन चेतसा । [४८
४५] पृष्टश् चैवं ततस् तस्मै पित्रे सर्वं न्य्-अवेदयत् ॥४३॥ [४९पू
स हर्ष-वेगाऽनुगताऽन्तरात्मा
श्रुत्वा गिरस् तस्य महा-रथस्य ।
जहौ ज्वरं दाशरथेः समुत्थं(दु-स्थं)
४६] प्र-हृष्टवांश् चाऽपि सुतं निर्-ऐक्षत ॥४४॥ [५०

इत्यार्षे रामायणे युद्ध-काण्डे शर-बन्ध-निवेदनं नाम द्वाविंशः सर्गः ॥२२॥

---

## [ वं-२२ ]= [ त्रयोविंशः सर्गः ] =[ दा-४७ ]

प्रति-प्रविष्टे लङ्कायां कृताऽर्थे रावणाऽऽत्मजे ।
१] ररक्षुः परि-वार्यैतौ राघवौ प्लवगर्षभाः ॥१॥ [१
हनु-मान् अङ्ग-दो नीलः सु-षेणः कु-मुदो नलः ।
२] गजो गवाऽक्षः पनसः सानु-प्रस्थो महा-हरिः ।
३पू] जाम्ब-वान् ऋषभश् चैव रम्भः शत-बलिः पृथुः ॥२॥ [२
४उ] व्यूढाऽनीकाश् च यत्ताश् च द्रुमान् आदाय साऽश्मनः ।
वीऽऽक्षमाणा दिशः सर्वास् तिर्यग् ऊर्ध्वं च सर्व-तः ।

---

१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-उपाघ्राय । २. रा$_{2}$ फ म-प्रसन्नस्तु । ३. रा$_{2}$ फ म-तत्त्वं ॥ ४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-निरीक्ष्य ॥ ५. ब रा$_{2}$-नास्ति । प्र-लंकाकांडे । म-युद्धपर्वणि । ६. रा$_{1}$-शरबन्धो नि० ॥ ७. रा$_{1}$ ल$_{2}$ ब प्र-व्यूढाः नीकाश्च । ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब-यन्ताश्च । ९. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-चात्मनः । १०. रा$_{1}$ ल$_{1}$ अ प्र रा$_{2}$ फ म-वीक्ष्यमाणा। ११. प्र रा$_{2}$ फ म-सर्वशः ॥

५] तृणेष्व् अपि वि-चेष्टत्सु राक्षसान् एव मेनिरे ॥३॥ [३
रावणश्[1] चाऽपि सं-हृष्टो वि-सृज्येन्द्र-जितं सुतम् । [४पू
६] प्रीत्या परमया युक्तः कृत-कर्माणम् उत्-तमम् ॥४॥ [N
गते तस्मिन् महा-काये[2] रावणस्य सुते तदा ।
७] स्व-गृहे चिन्तयामास रावणो लोक-रावणः ॥५॥ [N
कृतम् इन्द्र-जिता कर्म दुष्-करं यत् सुरैर् अपि ।
८] सीता श्रुत्वा भृशं तच् च दीना त्यक्ष्यति[3] जीवितम् ॥६॥ [N
अथवा स्त्री-स्वभावेन चापल्य-वश-मोहिता ।
९] यथा-कामं ममाऽद्याऽऽशु वि-वशा वशम् एष्यति ॥७॥ [N
अत्रोपायो[4] ममाऽयं[6] च[5] यथा-वत्[6] परि-चिन्तितः ।
१०] राक्षस्यः सहसा श्रुत्वा सीतायाः परि-रक्षणे ॥८॥ [N
व्या-पृता या ममाऽऽदेशे स-ततं मे वशाऽनुगाः ।
११] हर्षेण महता[7] युक्ता भविष्यन्ति विशेष-तः ॥९॥ [N
अथ वृद्धाम् उपाय-ज्ञां सर्व-भावाऽनुशङ्किनीम् ।
१२] आ-नयामास तां राजा राक्षसीनां महत्-तमाम् ॥१०॥ [N
राक्षसी त्रि-जटा नाम शासनात् तम् उप-स्थिता ।
१३] ताम् उवाच ततो दृष्ट्वा राक्षसीं राक्षसेश्वरः ॥११॥ [५
हताव् इन्द्र-जिता शंस वैदेह्या[9] राम-लक्ष्मणौ ।
१४] पुष्पकं तु[10] समा-रोप्य दर्शयस्व रणाऽजिरम् ॥१२॥ [६
यम् आ-श्रयम्[11] अव-ष्टभ्य[11] सीता मां[12] नोप-तिष्ठते[13] ।
१५] सोऽस्या भर्ता सह भ्रात्रा निर्-अस्तो रण-मूर्धनि ॥१३॥ [७

---

१. रा$_2$ म-रावणस्त्वपि ॥ २. ल$_2$-०कार्ये ॥ ३. प्र-त्यजति ॥ ४. रा$_2$-अद्योपायो । ५. रा$_1$ ल$_1$ ल$_2$ ब अ-यथावच्च । ६. रा$_1$-मया यः । ल$_1$ ल$_2$ ब अ-यथार्यं ॥ ७. रा$_1$-सहसा ॥ ८. म-प्राहिणोद् ॥ ९. रा$_2$-वैदेह्यै । १०. म-च ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०यमुपष्टभ्य । १२. ल$_1$-सा । १३. रा$_1$ ल$_1$ ल$_2$ ब अ म-०तिष्ठति ।

निर्-अपेक्षा[1] निर्-उद्विग्ना[2] निर्वि-शङ्का[3] च मैथिली ।
१६] माम् उप-स्थास्यते सीता सर्वाऽऽभरण-भूषिता ॥१४॥ [८
अद्य काल-वशाद्[4] आशां नि-वृत्तां राम-सम्भवाम्[4] ।
१७] सम्[5]-अवेक्ष्य च[6] मां सीता[7] समुप[8]-स्थास्यतेऽबला ॥१५॥ [९
तस्य तद् वचनं श्रुत्वा राक्षसस्य[9] दुर्-आत्मनः ।
१८] राक्षस्यस् त्रि-जटाऽऽद्यास् तु प्र-जग्मुर् यत्र पुष्पकम् १६ [१०
ततः पुष्पकम् आ-दाय राक्षस्यस् त्वरितास् तदा ।
१९] अशोक-वनिका-संस्थां मैथिलीं समुपाऽगमन् ॥१७॥ [११
ताम् आ-गत्य तु राक्षस्यो भर्तृ-शोक-पराजिताम् ।
२०] वि-मानं पुष्पकं सीतां शनैर् आऽरोपयन् शुभाम् ॥१८॥ [१२
ततः सीतां समा-रोप्य त्रि-जटां चैव राक्षसीम् । [१३पू
२१] रावणोऽकारयल् लङ्कां पताका-ध्वज-मालिनीम् ॥१९॥
घोषयामास च तदा लङ्काया राक्षसेश्वरः ।
२२] हताव् इन्द्र-जिता सं-ख्ये ताव् उभौ राम-लक्ष्मणौ ॥२०॥ [१४
वि-मानेन तु सा सीता तदा त्रि-जटया सह ।
२३] ददर्श वानराणां तु[10] स्कन्धाऽऽवार-निवेशनम् ॥२१॥ [१५
प्रहृष्ट-वदनांश्[11] चैव राक्षसान् भीम-दर्शनान्[12] ।
२४] वानरांश् च सु-दुःखाऽऽर्तान् राम-लक्ष्मण-पार्श्व-तः ॥२२॥ [१६
ततः सीता ददर्शोभौ शयानौ शर-विक्षतौ ।
२५] लक्ष्मणं चैव रामं च वि-संज्ञाव्[13] अति-पीडितौ ॥२३॥ [१७

---

१. प्र रा$_2$ फ म-निर्विशंका । २. म-निरुद्योगा । ३. प्र रा$_2$ फ म-निरपेक्षा ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-०वशादाशा निवृत्ता रामसम्भवा । रा$_2$-कालवतीमाशां निकृत्तां राम० । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-समवीक्ष्य । ६. प्र रा$_2$ फ म-सा । ७. रा$_2$-भीता । ८. रा$_2$ फ म-समोप० ॥ ९. रा$_2$ फ म-रावणस्य ॥ १०. प्र-हि । म-च ॥ ११. रा$_2$ फ म-०ष्टमनसश् । १२. प्र-भीमविक्रमान् ॥ १३. प्र रा$_2$ फ म-०ज्ञौ शरपी० ॥

विध्वस्त-कवचौ वीरौ विप्रविद्ध-शराऽऽसनौ ।
२६] सायकां[1]ऽऽचित-सर्वाऽङ्गौ शयानौ धरणी-तले ॥२४॥ [१८
तौ दृष्ट्वा भ्रातरौ तत्र शोक-बाष्प-समाकु[2]ला । [१९पू
२७] वेपन्ती दुःखिता सीता करुणं वि-ललाप ह ॥२५॥ [२०उ
सा शोक-बाष्पाऽपिहिता निर्-ईक्ष्य
तौ भ्रातरौ देव-सम-प्रभावौ ।
वि-तर्कयन्ती नि-धनं तयोः सा
N] दुःखाऽन्वि[3]ता वाक्यम् इदं जगाद ॥२६॥ [२२

इत्यार्षे रामायणे यु[4]द्ध-काण्डे राम-ल[5]क्ष्मणयोः शर-बन्धनं नाम त्रयोविंशः सर्गः ॥२३॥

---

[वं–२३]= **[चतुर्विंशः सर्गः]** =[दा–४८]

साऽस्रु-पात-मुखी दीना तौ दृष्ट्वा राम-लक्ष्मणौ ।
२] हाऽऽर्य-पुत्रेति रु[6]दती करुणं वि-ललाप ह ॥१॥ [N
भर्तारं नि-हतं दृष्ट्वा लक्ष्मणं च महा-रथम् ।
१] वि-ललाप भृशं सीता करुणं जनकाऽऽत्मजा ॥२॥ [१
निष्[7]-पिषन्ती स्व-चरणौ क्रोशन्ती मधुर-स्वना ।
३] इदम् अन्ते वि-लापस्य सीता वचनम् अब्रवीत् ॥३॥ [N
४पू] ऊचुर् लक्ष[8]णिनो ये मां पुरा ह्य् अ-विधवेति च ।
५उ] तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृत-वादिनः ॥४॥ [२
इमानि तानि पद्मानि पार्श्व-तो यैः किल स्त्रियः ।
८] अधि-राज्येऽभि-षिच्यन्ते नरेन्द्रैर् भर्तृभिः सह ॥५॥ [६

---

१. रा$_2$ फ म-सायकैश्चित० ॥ २. ल$_1$ ब-०समाकुलौ ॥ ३. रा$_2$-०न्वितं । ४. रा$_2$ प्र-लंकाकांडे । म-लंकापर्वणि । ५. रा$_2$ फ म-सीताया राम० ॥ ६. प्र रा$_2$ फ म-वदती ॥ ७. ल$_1$ ल$_2$ ब अ-निष्पिपेष स्व० । रा$_2$-निष्पीडयन्ती च० ॥ ८. म-लक्षणतो ॥

वैधव्यं यान्ति नार्यो[1] यैर्[1] लक्षणैर् भाग्य-दुर्बला[2]: ।
९] आत्मनस् तानि[3] पश्यामि पश्यन्ती हत-लक्षणा ॥६॥ [७
सत्यानि किल पद्मानि स्त्रीणाम् उक्तानि लक्षणे ।
१०] तान्य् अद्य नि-हते रामे वि-तथानि भवन्ति हि ॥७॥ [८
केशाः सूक्ष्माः समा नीला भ्रुवौ चाऽसंहते[4] मम ।
११] न च मे रोम-शे जङ्घे दन्ताश् च न वि-रागिणः ॥८॥ [९
शङ्खौ नेत्रे करौ पादौ[5] गुल्फौ[6] च ललितौ[7] मम ।
१२] तनु-वृत्त-नखाः स्निग्धाः समाश् चाऽङ्गुलयो मम ॥९॥ [१०
स्तनौ चाऽविरलौ पीनौ समौ मे मग्न-चूचुकौ ।
१३] मग्ना चोत्-सङ्गिनी नाभिः पार्श्वौ स्कन्धौ च[8] मेऽञ्चितौ[8]॥१०। [११
समो वर्णो मृदुः स्निग्धो मृदून्य् अङ्ग-रुहाणि च । [१२पू
१४] अ-विरूक्षा च मे वाणी नित्यं मधुर-भाषिणी ॥११॥ [N
अ-विस्मिता चाऽविगा(?ग्रा) र्ह्या नित्यं चाऽहम् अ-विक्लवा ।[N
१५] प्रति-ष्ठितां द्वा-दशभिर् माम् ऊचुः शुभ-लक्षणाम्[9] ॥१२॥ [१२उ
१६पू] समग्र-संमम्[10] अ-च्छिद्रं पाणि-पादं[11] च वर्ण-वत् ।
मन्द-स्मितं मे वचनं कन्या-लक्षणिनो विदुः ॥१३॥ [१३
१७] ननु नामाऽभि-षेको मे ब्राह्मणैः पतिना सह ।
१८पू] दैव-ज्ञैः कुशलैर् उक्तो नूनं तेऽनृत-वादिनः ॥१४॥[12] [१४
वीर-पार्थिव-पत्नी त्वं धन्येति मम ये विदुः ।[12]
N] तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृत-वादिनः ॥१५॥[13] [N

---

१. रा२-स्वैर्नार्यो । २. रा१ ल१ ब प्र-०दुर्लभाः । ३. रा१ ल१ ल२ ब श्र रा२ फ म-तान्न ॥ ४. रा१ ल१ ल२ ब श्र प्र फ-वासं० ॥ ५. रा१ ल१ ल२ ब-पद्मौ । ६. रा२ फ म-गुल्फावुपचितौ ॥ ७. प्र-च मेचकौ । फ-च सेवितौ । रा२-समोचितौ ॥ ८. रा१ ल१ ल२ ब श्र प्र-च वागर्ह्या । ९. रा१-०लक्ष्मणाम् ॥ १०. रा१ ल१ ब श्र प्र-समग्रं यवम् । ल२-समग्रमिव । फ-०ग्रं चव मे । ११. रा१ ल१ ल२ ब-०पादे । प्र-०पद्मं ॥ १२. ब म-नास्ति ॥ १३. श्र-नास्ति ॥

१८] एतौ हित्वा जन-स्थानं प्र-वृत्तिं चोप-लभ्य मे[१] ।
तीर्त्वा सागरम् अ-क्षोभ्यं गोष्-पदे भ्रातरौ हतौ ॥१६॥ [१५
१९] ऐन्द्रं वारुणम् आग्नेयं रौद्रं वायव्यम् एव च ।
अस्त्रं ब्रह्म-शिरश् चैव राघवौ[२] प्रत्य्-अपद्यताम् ॥१७॥ [१६
२०] अ-दृश्यमानेन रणे मायया वासवोपमौ ।
मम नाथाव् अ-नाथाया नि-हतौ राम-लक्ष्मणौ ॥१८॥ [१७
२१] न च दृष्टि-पथं प्राऽऽप्य राघवाभ्यां रणे रिपुः ।
जीवन् प्रतिनि-वर्तेत यद्य् अपि स्यान् मनो-जवः ॥१९॥ [१८
२२] न कालस्याऽति-भारोऽस्ति कृताऽन्तः खलु दुर्-जयः ।
यत् तु रामः सह भ्रात्रा शेते रिपु-विनिर्जितैः[३] ॥२०॥ [१९
२३] नाऽहं शोचामि भर्तारं नि-हतं न च लक्ष्मणम् ।
नाऽऽत्मानं जननीं वाऽपि यथा श्वश्रूं तपस्विनीम् ॥२१॥ [२०
२४] सा हि चिन्तयते नूनं समाप्त-व्रतम् आत्म-जम् ।
कदा द्रक्ष्यामि काकुत्स्थं स-सीतं सह-लक्ष्मणम् ॥२२॥ [२१
२५] परि-देवयतीं तां तु राक्षसी त्रि-जटाऽब्रवीत् । [२२
२६पू] मा वि-षादं कृथा देवि भर्ता हि तव जीवति ॥२३॥ [२३
कारणानि तु वक्ष्यामि महान्ति सदृशानि च ।
२७] यथा तौ भ्रातरौ वीरौ जीवितौ[४] राम-लक्ष्मणौ ॥२४॥ [२४
नहि कोप-परीऽतानि हर्ष-पर्युत्सुकानि[५] च ।
२८] भवन्ति युधि योधानां मुखानि नि-हते पतौ ॥२५॥ [२५
हत-वीर-प्रधाना हि हतोत्साहा[६] हतोद्यमा ।
३०] सेना भ्रमति युद्धेषु हत-कर्णेव[७] नौर् जले ॥२६॥ [२७

---

१. रा$_1$-चाप० । रा$_2$-चोपलक्ष्य वै । फ-०लभ्य वै । म-चापलभ्य ते ॥ २. रा$_2$-भ्रातरौ ॥ ३. रा$_1$ ल$_1$ ब-०विवर्जितः ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब ग्र प्र-जीवंतौ ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब ग्र प्र-हर्षयंत्युत्सु० ॥ ६. म-महोत्साहा महोद्यमा । ७. रा$_2$-हतेव नौर्जले यथा ॥

इयं पुनर् अ-सम्भ्रान्ता स्वस्थ[1]-यूथा तरस्विनी ।
३१] सेना रक्षति काकुत्स्थं शयानं रण-मूर्धनि ॥२७॥ [२८
इदं वि-मानं वैदेहि पुष्पकं नाम नाम-तः ।
N] दिव्यं न धारयेत् त्वां हि यदि रामो हतो भवेत् ॥२८॥[2] [२८
सा त्वम् एवं सु-विस्पष्टैर् अनु-मानैः सुखोदये ।
३२] अ-हतौ पश्य काकुत्स्थौ स्नेहाद् एतद् ब्रवीमि ते ॥२९॥ [२९
अन्-ऋतं नोक्त-पूर्वं मे न च वक्ष्यामि मैथिलि ।
३३] चारित्र-दुःख-शीलत्वात् प्र-विष्टाऽसि हि मे मनः ॥३०॥ [३०
न तौ शक्यौ रणे जेतुम् अपि सर्वैः सुराऽसुरैः ।
३४] तादृशं दर्शनं दृष्ट्वा मया चाऽऽवेदितं तव ॥३१॥
इदं च सु-महच् चिह्नं शुभं पश्यामि मैथिलि । [३१
३५] निः-संज्ञौ चा[3]ऽप्य् उभाव् एतौ श्रियां[4] नैव वि(?व्य)युज्येताम् ३२
प्राये[5]ण गत-सत्त्वानां पुरुषाणां गताऽऽयुषाम् ।
३६] दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥३३॥ [३२
त्यज शोकं च दैन्यं च दुःखं च जनकाऽऽत्मजे ।
३७] राम-लक्ष्मणयोर् अर्थे नैतौ शूरौ वि-जीवितौ ॥३४॥ [३३
श्रुत्वा तु वचनं तस्याः सीता सुर-सुतोपमा ।
३८] कृताऽञ्जलिर् उवाचेदम् एवम् अस्त्व् इति मैथिली ॥३५॥ [३४
वि-मानं पुष्पकं नाम सन्नि-वर्त्य मनो-जवम् ।
३९] लङ्कां त्रि-जटया सीता दीना भूयः प्र-वेशिता ॥३६॥ [३५
तत्र त्रि-जटया सार्धं पुष्पकाद् अव-तीर्य सा ।
४०] अशोक-वनिकाम् एव राक्षसीभिः प्र-वेशिता ॥३७॥[6] [३६

---

१. प्र-इतयूथा ॥ २. अतः परमधिकः पाठः—रा$_2$-पुष्पके त्वं समारूढा वरवर्णिनि शोभने । नैतद्धारयते पापं विधवां नापि मैथिलीं ॥ ३. फ-वाप्य् । ४. प्र-शयानौ च वि० । रा$_2$-लक्ष्मणो वाप्ययु० । फ म-लक्ष्म्या नैव वि० ॥ ५. ल$_1$-प्रयाणगत० । रा$_2$-प्राणेन गत० ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब-नास्ति ॥

तस्मिन् वने सा मनुजेन्द्र-पत्नी[1]
तौ राज-पुत्रौ[2] पतितौ स्मरन्ती ।
न शर्म लेभे हृदि ताडितेव
४१] दिग्धेन बाणेन मृगीऽव बाला ॥३८॥ [N

इत्यार्षे रामायणे युद्ध[3]-काण्डे सीता-विलापो नाम चतुर्विंशः सर्गः ॥२४॥

---

## [वं–२४]= [पञ्चविंशः सर्गः] =[दा–४९]

घोरेण शर-बन्धेन बद्धौ दशरथाऽऽत्मजौ ।
१] निः-श्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥१॥ [१
सर्वे ते वानर-श्रेष्ठाः स-सुग्रीवा महा-बलाः ।
२] परि-वार्य महाऽऽत्मानौ तस्थुः शोकेन पीडिताः ॥२॥ [२
३पू] अथ दीर्घेण कालेन सं-ज्ञां लेभे नरोत्तमः ।
४पू] प्रत्यवैक्षत चाऽऽत्मानं शोणितेन परि-प्लुतम् ॥३॥[4] [N
५उ] अ-दीनो दीनया वाचा रामः परम-मन्युमान्[5] ।
६पू] अभ्य्-अभाषत् स्वर-भ्रष्टो हरिभिः परि-वारितः ॥४॥ [N
४उ] वि-ललाप ततो रामो मन्दम् अस्रूणि[6] वर्तयन् ।
५पू] लक्ष्मणं पतितं दृष्ट्वा दुःख-शोक-समन्वितः ॥५॥ [N
६उ] किं नु मे सीतया कार्यं लङ्कया जीवितेन च[7] ।
शयानं योऽद्य पश्यामि लक्ष्मणं शुभ-लक्षणम् ॥६॥ [५

---

१. रा$_1$ ल$_1$ ल$_2$ ब श्र-०न्द्रपुत्री ॥ २. फ म-नास्ति । ३. रा$_2$ प्र-लंकाकांडे ॥ ४. म-अत आरभ्य १९–श्लोकपर्यन्तं नास्ति ॥ ५. रा$_2$ म-०मसत्त्ववान् ॥ ६. फ-अश्रूण्यव० ॥ ७. रा$_2$-वा ॥

७] यत्र क-चन मे भार्या पुत्राश् चाऽन्ये च बान्धवाः[1] ।
तं तु देशं [2]न पश्यामि यत्र सोदर्यम् आप्नुयाम् ॥७॥ [N
८] पर्जन्यो वर्षते शस्यम् इतीऽयं लौकिकी श्रुतिः ।
प्र-वादश् चाऽपि [3]नित्योऽयं मातृ-जं न स वर्षति ॥८॥ [N
९] ममाऽम्बा च सु-मित्रा च कौसल्या जननी च ते[4] ।
१०पू] नाऽनयोर् अन्तरं किं-चिन् मातृ-गौरव-कारितम् ॥९॥ [N
N] किं नु वक्ष्यामि कौसल्यां मातरं किमु कैकयीम् ।
N] कथं चाऽहं सु-मित्राया मुखं [5]द्रक्ष्यामि चाऽस्तु-मत् । [८
१४पू] उपाऽऽलम्भं न [6]शक्ष्यामि सोढुं तस्या मुख-च्युतम् ॥१०॥ [N
वि-वत्सां वि-लपन्तीं च क्रोशन्तीं कुररीम् इव ।
१३] कथम् आ-श्वासयिष्यामि सु-मित्रां लक्ष्मणं विना ॥११॥ [९
१०उ] अप्य् एव हिम-वान् [7]क्षर्येत् प्र-पतेद् वा दिवा-करः ।
सागरश् च क्षयं गच्छेद् अनलश् चाऽपि शीत-ताम् ॥१२॥ [N
११] आपोऽद्रव-त्वं च तथा पवनश् चाऽगतिर् भवेत् ।
१२पू] अम्बाया न सु-मित्राया स्नेह-नाशो भवेन् मयि ॥१३॥ [N
१९उ] लक्ष्मणश् चाऽपि परया भक्त्या माम् अनु-गच्छति ।
१६पू] पतन्तम् [8]अपि पाताले नैव नाऽनु-पतेद् धि माम् ॥१४॥ [N
१७उ] [10]धारयेयं कथं चाऽहं प्राणान् सौमित्रिणा विना ।
१८पू] [11]भाराऽऽर्त इव भारेण दुःखेनैव परि-[12]प्लुतः ॥१५॥ [N
१६उ] शक्या सीता-समा नारी जीव-लोकं वि-चिन्वता ।
१७पू] न लक्ष्मण-समो भ्राता सचिवः साम्परायिकः ॥१६॥ [६

---

१. रा$_2$-यत्र कचिल्लभे भार्यां पुत्रानन्यांश्च बान्धवान् । २. रा$_2$-नमस्यामि ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब-नित्यं यो ॥ ४. रा$_2$-मे ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म-पश्यामि । ६. रा$_1$ ल$_1$ ल$_2$ ब-पश्यामि ॥ ७. रा$_1$ प्र-दीर्येत् ॥ ८. प्र रा$_2$ फ-चैव । ९. ल$_1$-इव ॥ १०. प्र रा$_2$ फ-०येहं । ११. ल$_1$ ल$_2$ प्र-भारान्त । रा$_2$-भारार्थं । १२. ल$_1$-परिप्लवः ॥

१८उ] इहैव देहं त्यक्ष्यामि नहि शक्ष्यामि जीवितुम् । [N
१४उ] किं नु वक्ष्यामि शत्रु-घ्नं धर्म-ज्ञं भरतं नु किम् ॥१७॥ [१०
१५पू] सह येन वनं यातो विना च पुनर् आ-गतः ।
N] उपाऽऽलम्भं न शक्ष्यामि सोढुं लक्ष्मण-मातृ-तः ॥१८॥ [११
१८उ] इहैव [1]देहं त्यक्ष्यामि नाऽहं जीवितुम् उत्-सहे । [१२
धिङ् मां दुष्कृत-कर्माणम् अन्-आर्यं यत्-कृतेऽप्य् [2]अयम् ।
१९] लक्ष्मणः पतितः शेते शर-तल्पं गताऽसु-वत् ॥१९॥ [१३
यो नित्यं स-विषण्णं [3]माम् आ-श्वासयति दुःखितम् ।
२०] पराऽसुर् नाऽद्य शक्नोति सोऽयं माम् उप-सर्पितुम् ॥२०॥[4] [१४
N] [5]येनाऽद्य बहवो [6]युद्धे राक्षसाः शासिताः शरैः ।
२१उ] सोऽयं वि-चेष्ट(?ष्टि)ते(?तः)शूरः शर-तल्प(?ल्पे)गताऽसुवत् [१५
शयानः शर-तल्पेऽस्मिन् स्व-शोणित-परिप्लुतः ।
२२] शर-जालाऽऽवृतो भाति भास्-करोऽस्तम् इव व्रजन् ।२२। [१६
बाणैर् अर्दित-सर्वाऽङ्गो नैव शक्नोति चेष्टितुम् ।
२३] दंशाऽस्य बाधते [7]कष्टा दृष्टी रागेण [8]पूर्यते ॥२३॥ [१७
यथैव मां वनं यान्तम् अनु-यातो महा-द्युतिः ।
२४] अहम् अप्य् अनु-यास्यामि [9]तथैवैनं यम-क्षयम् ॥२४॥ [१८
इष्ट-बन्धु-जनो नित्यं नित्यं मां समनु-व्रतः ।
२५] इमाम् अव-स्थां गमितो ममाऽन्-आर्यस्य दुर्-नयैः [10]॥२५॥ [१९
[11]सु-रुष्टेनैव(?नापि)शूरेण लक्ष्मणेन न सं-स्मरे ।
२६] परुषं वि-प्रियं वाऽपि श्रावितो(?तं) वि-जने वने [10]॥२६॥ [२०

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-जीवं । २. रा$_2$-०ते ह्ययम् । म-०ते स्वयम् । ३. अ-मां शासयति सुदुः० । ४. रा$_1$ ल$_1$ ल$_2$ ब म-नास्ति । ५. अ प्र रा$_2$ फ-किं नु वक्ष्यामि शत्रुघ्नं ॥ ६. प्र-जातस्य । रा$_2$ फ-रुजास्य । म-रुजा च । ७. म-कृच्छ्राद् हृदि । ८. रा$_2$ फ म-सूच्यते ॥ ९. प्र रा$_2$ फ म-यथा त्वेनं ॥ १०. म-नास्ति ॥ ११. रा$_1$ ल$_1$ ब अ प्र-सन्तुष्टेनैव । ल$_2$-सन्तुष्टेनेव । फ-सुतुष्टेनैव ॥

लक्ष्मणेन ततः पूर्वं जीवता[1] वन-जीविकाम्[2] ।
२७]विसंवादित-पूर्वो(?र्वं)वा उक्त-पूर्वो(?र्वं)ऽपि(?वा)वाऽ(?प्य)क्षममें
वि-सृजत्य् एक-वेगेन पञ्च बाण-शतानि यः[5] ।
२८] इष्व्-अस्त्रे सदृशो राज्ञः कार्तवीर्यस्य लक्ष्मणः ॥२८॥ [२१
अस्त्रैर् अस्त्राणि यो हन्याच् छक्रस्याऽपि महाऽऽत्मनः ।
२९] सोऽयम् उर्व्यां हतः शेते महाऽर्ह-शयनोचितः ॥२९॥ [२२
अयं मिथ्या-प्रलापो मे हत्वा युद्धे दशाऽऽननम् ।
३०] यन् मया न कृतो राजा राक्षसानां वि-भीषणः ॥३०॥ [२३पू
अस्मिन् मुहूर्ते सु-ग्रीव प्रति-गन्तुं त्वम् अर्हसि ।
३१] त्वां मां च स महा-राज(?जो) रावणोऽभि-द्रविष्यति॥३१॥ [२४
अङ्ग-दं तु पुरस्-कृत्य स-सैन्यः स-सुहृज्जनः ।
३२] सागरं तर सु-ग्रीव पुनस् तेनैव सेतुना ॥३२॥ [२५
वि-जयोऽपि हि सु-ग्रीव लक्ष्मणे नि-धनं गते ।
३३] अन्धस्येवोदितश् चन्द्रः कां प्रीतिं जनयिष्यति ॥३३॥ [N
कृतं हनु-मता कर्म यद् अन्यैर् दुष्-करं रणे ।
३४] बल-विक्रम-सम्पन्ना राक्षसा मर्दिता रणे ॥३४॥ [N
३५उ] अङ्ग-देन कृतं कर्म मैन्देन द्वि-विदेन च ।
सु-षेणेन च तुष्यामि नीलेन च नलेन च ॥३५॥ [N
३६] युद्धं सं-पातिना सं-ख्ये घोरं केसरिणा कृतम् । [२७उ
गवयेन गवाऽक्षेण गजेन पनसेन च ।
३७] अन्यैश् च हरिभिर् युद्धं मद्-अर्थे त्यक्त-जीवितैः ॥३६॥
न चाऽति-क्रमितुं[11] शक्यं दैवं सु-ग्रीव मानवैः[12] । [२८

---

१. रा₂-वृण्वता । २. रा₂-जीवितुम् । प्र फ-०वितम् । ३. प्र-किं वा संवादित० । ४. म-नास्ति ॥ ५. रा₂ म-च ॥ ६. म-युधि ॥ ७. रा₂-हि ॥ ८. प्र फ-ससुहृद्गणः । रा₂-समरुद्गणः ॥ ९. रा₁ ल₁ ल₂ ब अ प्र-मृदिता फ-निहता ॥ १०. प्र रा₂ फ म-युद्धं केसरिणा संख्ये घोरं संपातिनाद्भुतं ॥ ११. म-०क्रामितुं । १२. प्र रा₂ फ म-मानुषैः ॥

३८] यस्य ते सं-भ्रमो नाऽस्ति रावणं प्रति युध्यतः ॥३७॥ [N
यत् तु कार्यं वयस्येन सु-हृदा[1]ऽपि परं-तप ।
३९] कृतं तन् नाऽस्ति सं-देहो भवता गम्यतां गृहे[2] ॥३८॥ [२९
मित्र-कार्यं कृतम् इदं भवद्भिर् वानरर्षभाः[3] ।
४०] अनु-ज्ञाता मया सर्वे यथेष्टं गन्तुम् अर्हथ ॥३९॥ [३०
शुश्रुवुश् चाऽपि ते तस्य वानराः परि-देवितम् ।
४१] ते सर्वे मुमुचुर्[4] बाष्पं नेत्रेभ्यः[5] कातरेक्षणाः ॥[6]४०॥ [३१
ततः सर्वाण्य् अनीकानि स्थापयित्वा समन्त-तः ।
४२] आ-जगाम गदा-पाणिः कृत-कर्मा वि-भीषणः ॥४१॥ [३२
तं दृष्ट्वाऽद्भुतम् आ-यान्तं शैलाऽञ्जन-चय-प्रभम् ।
४३] वानरा वि-द्रुताः सर्वे मन्यमानाः स्म रावणिम् ॥४२॥ [३३
वि-चेष्टौ[7] विगत-ज्ञानौ रण-रेणु-समुक्षितौ[8] ।
N] शयानौ शरतल्प-स्थौ द्रष्टुम् आऽयाद् वि-भीषणः ॥४३॥ [३४
ते राक्षसेन्द्राऽऽत्मज-दृष्ट-वीर्या
नि-पातितौ राज-सुतौ च दृष्ट्वा ।
जघन्य-तो विव्यथिरे वनौकसो
N] वातेरिता वै शरदीऽव मेघाः ॥४४॥ [३५

इत्यार्षे रामायणे युद्ध[9]-काण्डे राम-विलापो[10] नाम पञ्चविंशः सर्गः ॥२५॥

---

१. ल$_2$ ब प्र रा$_2$-०दा हि । २. रा$_2$ फ म-गृहं ॥ ३. म-०र्षभैः ॥ ४. प्र रा$_2$ फ-चक्रुरश्रूणि । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-नेत्रैः कृष्णतरेक्षणाः । ६. म-नास्ति ॥ ७. रा$_2$-निश्चेष्टौ । ८. रा$_1$ ल$_1$ ल$_2$ ब-रणे रेणुसमुत्थितौ । प्र फ-रणे रेणु० ॥ ९. रा$_2$ प्र-लंकाकांडे । ब-नास्ति । म-युद्धपर्वणि । १०. म-रामप्रलापो ॥

अथोवाच महा-तेजाः सु-ग्रीवः प्लवगा[1]ऽधिपः ।
१] किम् इयं [2]व्यथते सेना भिन्ना नौर् इव सागरे ॥१॥ [१
२पू] सु-ग्रीवस्य वचः श्रुत्वा राज-पुत्रोऽङ्ग-दोऽब्रवीत् । [२
N] इह बाणाऽर्दितौ दृष्ट्वा शयानौ राम-लक्ष्मणौ ॥२॥
३पू] शर-जालाऽऽवृतौ वीराव् उभौ परम-दुःखितौ । [३
N] वरदान-कृतैर् बाणैर् निष्प्रकम्प-भुजौ कृतौ [3]॥३॥ [N
तेने[4]यं दी[4]र्यते सेना हीनाऽने[5]नं महाऽऽत्मना ।
४] स्वभाव-चपलां जातिं किं न जानासि वानरीम् ॥४॥ [N
५पू] अब्रवीद् वानरेन्द्रस् तु सु-ग्रीवो वालिनः सुतम् ।
N] नैव(?वं) तावद् अ-पूर्वेण भवितव्यं भयेन नः ॥५॥ [४
विषण्ण-वदना ह्य्[6] एते[7] नाना-प्रहरणा दिशः ।
६] पलायन्ते हि हरयस् त्रासाद् उत्फुल्ल-लोचनाः ॥६॥ [५
अन्योऽन्यं न च [8]जल्पन्ति निर्[9]-ईक्षन्ते न पृष्ठ-तः ।
७] प्र-माथयन्ति चाऽन्योऽन्यं पतितं[10] लङ्घयन्ति च ॥७॥ [६
एतस्मिन्न् अन्तरे वीरो गदा-पाणिर् वि-भीषणः ।
८] सु-ग्रीवं वर्धयामास राघवौ च निर्-ईक्ष्य तौ ॥८॥ [७
वि-भीषणं तु सु-ग्रीवो दृष्ट्वा वानर-भीषणम् ।
९] ऋक्ष-राजं समीप-स्थं धूम्रं वचनम् अब्रवीत् ॥९॥ [८
वि-भीषणोऽयं सम्प्राऽऽप्तो यं दृष्ट्वा वन-चारिणः ।
१०] भवन्त्य्[11] आगत-सन्त्रासा रावणाऽऽत्मज-शङ्कया ॥१०॥ [९

---

१. ल$_1$ ब-०गर्षभः । २. म-व्यथिता ॥ ३. म-नास्ति ॥ ४. रा$_2$-तेनापदी० । ५. रा$_2$-हीना तेन ॥ ६. रा$_2$-च ॥ ७. म-तेन ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र रा$_2$ म-लज्जन्ते । ९. रा$_2$ फ-न निरीक्षन्ति । १०. म-पतितान् ॥ ११. म-द्रवन्त्यागत० ॥

शीघ्रम् एतांस् तु सं-त्रस्तान् बहु-धा[1] सम्प्र-धावितान् ।
११] समव-स्थापयाऽऽख्याहि वि-भीषणम् इहाऽऽगतम् ॥११॥ [१०
सु-ग्रीवेणैवम् उक्तस् तु धूम्रो ऋ*(?रि)क्ष-पतिस् तदा ।
१२] वानरान् सान्त्वयामास नि-वर्तध्वं प्र-धाविताः ॥१२॥ [११
ते नि-वृत्तास् ततः सर्वे वानरास् त्यक्त-सम्भ्रमाः ।
१३] ऋक्ष-राज-वचः श्रुत्वा तं च दृष्ट्वा वि-भीषणम् ॥१३॥ [१२
वि-भीषणस् तु रामस्य दृष्ट्वा गात्रं शरैश् चितम् ।
१४] लक्ष्मणस्य च धर्माऽऽत्मा बभूव व्यथितस् तदा ॥१४॥ [१३
जल-क्लिन्नेन हस्तेन तयोर् गात्रं ममार्ज सः ।
१५] शोक-सम्पीडित-मना रुरोद वि-ललाप च[2] ॥१५॥ [१४
इमौ तौ सत्त्व[3]-सम्पन्नौ वि-क्रान्तौ प्रिय-दर्शनौ ।
१६] इमाम् अव-स्थां गमितौ रक्षसा कूट-योधिना ॥१६॥ [१५
भ्रातृ-पुत्रेण सम्-अरे दुष्प्र-ज्ञेनाऽकृताऽऽत्मना ।[4]
१७] राक्षस्या जिह्मया बुद्ध्या छ[5]लिताव् उरु-विक्रमौ [6]॥१७॥ [१६
शरैर् अ-विरलैर् विद्धौ रुधिरौघ-परिप्लुतौ ।
१८] वसु-धायाम् इमौ सुप्तौ पुष्पिताव् इव किं-शुकौ [6]॥१८॥ [१७
ययोर् वि-क्रमम् आ-साद्य प्रति-ष्ठा काङ्क्षिता मया ।
१९] ताव् इमौ मोहम् आ-नीतौ[7] वि-संज्ञौ न वि-रेजतुः [8]॥१९॥ [१८
जीवन्न् अद्य वि-पन्नोऽस्मि नष्ट-राज्य-मनोरथः ।
२०] क्रूर-प्रतिज्ञश् च रिपुः स-कामो रावणः कृतः ॥२०॥ [१९
एवं वि-लप्यमानं तं परि-ष्वज्य वि-भीषणम् ।
२१] सु-ग्रीवः सान्त्वयामास वचनं चेदम् अब्रवीत् ॥२१॥ [२०
वि-भीषण किम् आर्तस् त्वं किं च मां नाऽभि-भाषसे ।

---

१. म-संक्षुब्धान् ॥ २. प्र $रा_2$ फ म-ह ॥ ३. $रा_2$-शरसं० ॥ ४. $रा_1$ $ल_1$ $ल_2$ ब ञ प्र फ म-नास्ति । ५. $रा_2$-लक्षिताव् ऋजुविक्रमौ । फ-छलिताव् ऋजुवि० । ६. म-नास्ति ॥ ७. $रा_2$-उभौ मोहमापन्नौ । ८. $रा_1$ $ल_2$ ब ञ प्र-विचेरतुः ॥

२२] पर्यव-स्थापयाऽऽत्मानं मैवं भूः शोक-लालसः ॥२२॥ [N
राघवस् त्वां च मां चैव समा-श्वास्य समुत्थि(द्-स्थि)तः ।
N] रा[1]वणं सह पुत्रेण वधिष्यति स-बान्धवम् ॥२३॥[2] [N
तम् एवं सान्त्वयित्वा च परि-ष्वज्य च राक्षसम् ।[3] [२३पू
N] सु-ग्रीवः सत्त्व-स[4]म्पन्न इदं वचनम् अब्रवीत् ॥२४॥ [२०उ
राज्यं प्राऽऽप्स्यसि धर्म-ज्ञ लङ्कायां नाऽत्र सं-शयः ।
२३] रावणः सह पुत्रेण स-कामो न भविष्यति ॥२५॥ [२१
N] त्यक्त-मोहौ वधिष्येते स-गणं रावणं रणे । [२२उ
२४पू] तम् एवं पर्यव-स्थाप्य राक्षसं वा[5]नरर्षभः ॥२६॥ [N
N] अब्रवीद् वानरेन्द्रस् तु सु-ग्रीवः पुत्रम् अङ्ग-दम् । [N
२४उ] सु-षेणं श्व[6]शुरं चैव समा-हूयेदम् अब्रवीत् ॥२७॥ [२३उ
सह शूरैर् हरि-गणैर् लब्ध-संज्ञाव् अ-विक्लवौ ।
२५] उ[7]भौ प्राऽऽपयत क्षिप्रं किष्किन्धां राम-लक्ष्मणौ ॥२८॥ [२४
अहं तु रावणिं हत्वा [8]रावणं चाऽपि राक्षसम् ।
२६] मैथिलीम् आ-नयिष्यामि शक्रो नष्टाम् इव श्रियम् ॥२९॥ [२५
सर्वे गच्छत वि-स्रब्धा मु[9]क्त्वैकं मारुताऽऽत्मजम् ।
२७] अनेनाऽहं सहायेन हनिष्ये राक्षसाऽधिपम् ।
रावणं स-गणं हत्वा तोषयिष्यामि राघवौ ॥३०॥ [N
२८] एक एव पुरीं लङ्कां भस्मी-कुर्यां स-राक्षसाम् ।
हरि-सैन्येन महता किम् अङ्ग पुनर् आ-वृतः ॥३१॥ [N
२९] अद्य कोपम् अहं मोक्ष्ये स-सैन्ये रावणे [10]दृढम् ।

---

१. प्र-'रावणम्' इत्यारभ्य 'संशयः' इत्यन्तः पाठो नास्ति । २.-अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब फ म-परमं पीडितावेतौ भ्रातरौ राम-लक्ष्मणौ । वरदानकृतैर्बाणैरुभौ वीरौ तपस्विनौ ॥ ३. अ-नास्ति । ४. म-०सम्पन्नम् ॥ ५. प्र रा$_2$ फ म-वानराधिपः ॥ ६. म-ससुतं ॥ ७. अ-ततो ॥ ८. रा$_2$ फ-च रावणं हत्वा रावणिं ॥ ९. प्र रा$_2$ फ म-वर्ज्यैकं ॥ १०. फ-दृढे ।

स-पुत्र-बान्धव-जने रु[1](?रो)षितः काल-चोदितः(?ते)।३२।[N
३०] अद्य वीर्यं च तेजश्[2] च सौहार्दं सत्य-गौरवम् ।
वक्ष्यन्ति सर्व-भूतानि रामे च दृढ-भक्ति-ताम् ॥३३॥ [N
३१] अद्य चन्दन-साराणां केयूराऽऽभरणस्य च ।
परि-ष्वङ्गस्य नारीणां स्पर्शस्य वि-विधस्य च ॥[3]३४॥ [N
३२] परि-स्पर्शस्य माल्यानां सूक्ष्माणां चैव वाससाम् ।
अनु-रूपम् इमौ बाहू मित्र-कर्म करिष्यतः ॥३५॥ [N
३३] अद्य लङ्कां पुरीं रोषात् स-प्राकारां स-तोरणाम् ।
नील-जीमूत-सङ्काशै राक्षसैर् बहुभिर् वृताम् ।
३४] दिशो वि-द्रावयिष्यामि वायुर् मे[4]घम् इवोत्थि(दु-स्थि)तम् ३६ [N
स्व-बाहु-बल-वीर्येण पश्यतां सर्व-रक्षसाम् ।
३५] रावणं प्र-मथिष्यामि वैनतेय इवोर-गम् ॥३७॥ [N
अद्य रोषं[5] च शोकं च दुःखं चेक्ष्वाकु-नन्दनः ।
३६] त्यक्ष्यत्य् एक-पदे रामः सूदिते युधि रावणे ॥३८॥ [N
यम-शक्र-कुबेराणां यद्य् अपाम् ईश्वरस्य च ।
३७] वीर्येण राक्षसस् तुल्यो न मे जीवन् वि-मोक्ष्यते॥३९॥ [N
मुहूर्ताद् एव पश्यध्वं कृत-कर्माणम् आ-हवे ।
३८] निर्-जित्य सीतां दास्यामि राघवाय महाऽऽत्मने॥४०॥ [N
३९पू] कर्मणा तेन महता तोषयिष्यामि राघवौ ।
४०पू] प्रति-ज्ञातं यद् आर्येण राघवेण महाऽऽत्मना ॥[6]४१॥ [N
३९उ] कृत-कृत्यो भविष्यामि य[7]शश् चाऽऽप्स्यामि शाश्वतम् ।
४०उ] वि-भीषणाय दास्यामि राज्यं निहत-कण्टकम् ॥४२॥[6] [N

---

१. रा₂-रुषितः कालसंभृता । फ-रुषितः कालसंभृताम् । म-नास्ति ॥ २. म-सत्त्वं च तेजःसौहार्दगौ० ॥ ३. फ-नास्ति ॥ ४. प्र-वेगम् ॥ ५. रा₁ ल₂-कोपं ॥ ६. प्र-नास्ति ॥ ७. रा₂ फ म-यशः प्राप्स्यामि चोत्तमम् ॥

स क्रोधाद् विपुल-यशा महाऽनुभावो
वाक्यैस् तैर् अति-बलविक्रमोपपन्नैः ।
उत्-साहं बलम् अधिकं च वानराणां
४१] सं-चक्रे दिवसकराऽऽत्मजः कपीऽन्द्रः॥४३॥ [N

इत्यार्षे[1] रामायणे[2] युद्ध-काण्डे सुग्रीव-गर्जनं[3] नाम षड्विंशः सर्गः ॥२६॥

---

## [ वं–२६ ]= [ सप्तविंशः सर्गः ] =[ दा–५० ]

श्रुत्वैतद् वानरेन्द्रस्य सु-षेणो वाक्यम् अब्रवीत् ।
१] देवाऽसुरं महा[4]-युद्धम् अनु-भूतं सु-दारुणम् ॥१॥[5] [२६
२पू] तदा स्म दानवा देवाञ् छर-संस्पर्श-कोविदाः ।
N] विनिर्[6]-जघ्नुः सुबहु-शः शातयन्तो मुहुर्-मुहुः ॥२॥ [२७
तान् आर्तान् नष्ट-संज्ञांश् च पराऽसूंश् च बृहस्पतिः ।
३] दिव्याभिर् मन्त्र-युक्ताभिर् ओषधीभिश् चिकित्सति।३।[२८
ता ओषधीर् आ-नयितुं क्षीरोदं यान्तु सागरम् ।[8]
४] जवना वानराः शीघ्रं सम्पाति-पनसाऽऽदयः ॥४॥
ओषधीर् ये वि-जानन्ति पर्वतीया वनौकसः ।[11] [२९
५] सन्धाने[9]-करणीर् दिव्या वि-शल्या देव-निर्मिता[10]ः ॥५॥ [३०

---

१. फ म-नास्ति । २. प्र रा₂-लंकाकांडे । ब-नास्ति ॥ म-युद्धपर्वणि । ३. ब-०वतर्जनं ॥ ४. ल₁ ल₂ ब प्र रा₂ फ-मया युद्धम् ॥ ५. म-नास्ति । ६. फ-निजघ्नुस्ते ॥ ७. रा₂-हनुमान् मारुतात्मजः । ८. अतः परमधिकः पाठः—रा₂-शक्तो वीर्यबलोपेतो यथास्य पवनः पिता । रामलक्ष्मणयोरर्थे क्षीरोदं यान्तु सागरम् । जम्बूद्वीपपरं पारे दशाष्टौ लक्षयोजनम् । गत्वा वानरशार्दूल ओषधीरानयिष्यति । ९. रा₁-०नकरणे । रा₂-सवर्णक० । १०. रा₂-च महौषधिः । ११. अतः परमधिकः पाठः—रा₂-मृतसंजीवनी चैव संधिनीमपरामपि ॥

N] एता हि निर्-मिता देवैर् ओषधीर् अमृतोद्भवाः ।[1] [३१उ
७उ] अयं वायु-सुतश् चाऽपि हनु-मांस् तत्र गच्छतु ॥६॥[2] [३२

एवं तेषां वि-ब्रुवतां दुःखाऽऽर्तानां महाऽऽत्मनाम् ।
N] रामं प्रति महाऽऽत्मानं लक्ष्मणं च महा-रथम् ॥७॥ [N
सर्वे वि-मूढा ह्य् अभवन् स-सुग्रीव-विभीषणाः ।
N] प्रति-भेदम् अ-जानन्तः शर-बन्धस्य दुःखिताः ॥८॥ [N
वि-संज्ञाश् च वि-मूढाश् च परि-वार्य महा-बलाः ।
N] किञ्-चित् प्रत्य्-अपद्यन्त सर्वे वानर-यूथपाः ॥९॥ [N
तस्मिंस् तदा वर्त(?र्त्य)माने भ्रातृभ्यां व्य्-असने भृशम्[3] ।
N] महा-नादो बलौघानाम् अभूत्[4] सङ्ग्राम-मूर्धनि ॥१०॥ [N
स(?तौ)विभीषण-सुग्रीवा(?वौ)ध्यान-मूकत्वम् आ-गताः(?तौ)
N] परि-वार्य महाऽऽत्मानौ भ्रातरौ राम-लक्ष्मणौ ॥११॥ [N
तानि वानर-कोटीनां सहस्राणि शतानि च ।
N] निश्-चेष्टौ निष्-प्रतिद्वन्द्वौ[5] दृष्ट्वा नरवराऽऽत्मजौ ॥१२॥ [N
वानराः पाद-पान् गृह्य शैल-शृङ्गाणि चाऽपरे ।
N] रामं च लक्ष्मणं चैव परि-वार्याऽव-तस्थिरे ॥१३॥ [N
एतस्मिन्न् एव काले च[6] महा-योग-बलाऽन्वितः ।
N] आ-जगाम महा-तेजा देवर्षिर् नारदस् तथा ॥१४॥ [N
राघवस्य समीपे तु नि-षसाद[7] समन्त-तः ।
N] कृत्वा प्र-दक्षिणं रामं तेषां मध्ये वनौकसाम् ॥१५॥ [N

१. अतः परमधिकः पाठः— अ प्र रा₂ फ म-यत्र द्रोणश्च चंद्रश्च पर्वतौ लवणाम्भसि । अमृतं यत्र पतितं तत्र सा परमौषधिः ॥ २. म-अत आरभ्य ३२—शश्लोकान्तः पाठः २९—शसर्गस्य १८—शश्लोकपूर्वार्धतः परं व्यत्यासेन पठितः ॥ ३. प्र रा₂ फ-अभवत् । ४. प्र रा₂ फ-तस्मिन् ॥ ५. प्र-ध्यानमेकत्वम् ॥ ६. रा₂ फ-तु ॥ ७. प्र-०साद स चोत्तमः । रा₂ फ-निष्पपात सखा ततः ॥

रुधिरोक्षित-सर्वाऽङ्गं पतितं धरणी-तले ।
N] दृष्ट्वा तु सु-महाऽऽत्मानं शर-बन्धेन पीडितम् ॥१६॥ [N
वैक्लव्यं किम् इदं देव परं प्राऽऽप्नोषि मान-द ।
N] एवम् उक्त्वा महाऽऽत्मानं नारदो भग-वान् ऋषिः ।
अभि-तुष्टाव काकुत्स्थं स्मारयन् पूर्व-जन्मनः[1] ॥१७॥ [N
N] राम राम महा-बाहो शृणुष्व वदतां वर ।
दिव्य-लक्षण-संयुक्तं किम् आत्मानं न बुध्यसे ॥१८॥ [N
N] भवान् नारायणः श्री-मान् सर्व-लोक-नमस्कृतः ।
शङ्ख-चक्रा[2]ऽऽयुध-धरः सर्व-नाग-रिपु-ध्वजः ॥१९॥ [N
पिता-महाद् अपि परः पुरुषः शाश्वतो हरिः ।
N] वैकुण्ठस् त्वं महा-बाहो देव-देवः प्रताप-वान् ॥२०॥ [N
न परं विद्यते भूतं त्वत्-तः पुरुष-सत्तम ।
N] त्वं पद्म-नाभः काकुत्स्थ हृषीकेशस् तथैव च ॥२१॥ [N
धारयन्न् उरसा नित्यं मणिं कौस्तुभम् एव च ।
N] मह्यां नि-मज्जमानायां वराह-त्वम् उपाऽऽगतः ॥२२॥ [N
नि-हतश् चाऽसुरः पूर्वं हिरण्याऽक्षो महा-बलः ।
N] हिरण्य-कशिपुश् चैव नि-हतौ तौ महाऽसुरौ ॥२३॥ [N
कपिल-त्वम् उपाऽऽगम्य सागरः क्षोभितः प्र-भो ।
N] राम राम-त्वम् आ-गम्य कृता निष्-क्षत्रिया मही ॥२४॥ [N
हतः सहस्र-बाहुश् च कार्तवीर्योऽर्जुनस् तदा ।
N] कश्यपाय मही[3] दत्त्वा यज्ञाऽन्ते बहु-दक्षिणा ॥२५॥ [N
अनन्त-मूर्तिना[4] मूर्ध्ना धृता ते सकला मही ।
N] क्षीरोद-शयनीयं ते शेषस्योपरि राघव ॥२६॥ [N
वदर्यां तप्यसे नित्यं यत् तत् परम-कं तपः ।

१. रा$_{2}$-०जन्म च ॥ २. रा$_{2}$ फ-शार्ङ्गचक्रायुधखड्गी ॥ ३. प्र-महीं दत्त्वा ॥ ४. रा$_{2}$ फ-अनन्तरूपिणा ॥

N] ब्रह्मा त्वं देव-देवेश कृष्णो जि(?वि)ष्णुस् त्वम्[१] एव च ।२७। [N
मह‍ेन्द्रस् त्वं महा-बाहो वसूनाम् अपि चाऽष्टमः ।
N] मरुतां पञ्चमश् चाऽसि वृषभश् च तथा गवाम् ॥२८॥ [N
कपालं[२] चैव ते ब्रह्मा धर्मो मनसि नि-ष्ठितः ।
N] आ-काशं शिरसा व्य्-आप्तं पद्भ्यां ते पृथिवी धृता॥२९॥ [N
उदरं ते[३]ऽर्णवो राम प्राणास् ते हव्य-वाहनः ।
N] दिशश् चैव स्थिताः श्रोत्रे कक्ष्यां ते वसवः स्थिताः॥३०॥[५] [N
ऊरुभ्यां मित्रा-वरुणौ चरणे[४] ऋषयः स्थिताः ।
N] दंष्ट्रासु चैव सर्वासु वेदास् ते सु-प्रतिष्ठिताः ॥३१॥ [N
शिखाऽन्ते चैव गायत्री ओं-कारो हृदि सं-स्थितः ।
N] ग्रीवायां सं-स्थिता द्यौश् च जिह्वा-प्राऽन्ते सरस्वती ।३२।[७] [N
सर्वदेव[६]-मयस् त्वं च नाऽस्ति किं-चित् त्वया विना ।
N] सनातनस् त्वं प्र-भवः प्र-लयो युग-संक्षये ॥३३॥ [N
आदित्या वसवो रुद्रा विश्वे-देवास् तथाऽश्विनौ ।
N] सेन्द्रा मरुद्-गणा देवा लोक-पालैः समन्व्-इताः ॥३४॥ [N
देवर्षयो महाऽऽत्मानस् तथा ब्रह्मर्षयोऽमलाः ।
कल्याणं वै पुरस्-कृत्य वि-मानैः समुप-स्थिताः ।
N] वीऽऽक्षमाणा[८] जयं सर्वे तस्मिंस् तमसि दारुणे ॥३५॥ [N
त्वं स्रष्टा सर्व-लोकस्य स्थावरस्य चरस्य च ।
N] प्र-भवश् चाऽव्ययश् चैव किम् आत्मानं न बुध्यसे ।३६॥ [N
राक्षसानां वि-नाशाऽर्थं प्र-विष्टो मानुषीं तनुम्[९] ।
N] नाग-पाश-निबद्धस् तु तिष्ठसे किं रणाऽजिरे ॥३७॥ [N

१. रा२ फ-तथैव ॥ २. रा१ ल१ ल२ ब अ प्र-कपाली च वरो ॥ ३. प्र रा२ फ-तेर्णवा नाम प्राणस् ॥ ४. रा१ ल१ ल२-ब अ-बले च । ५. अतः परमधिकः पाठः—प्र रा२ फ-जानुनी चाश्विनौ राम रोमाण्योषधयः स्थिताः ॥ ६. रा२-सर्वमेतन्मयश्च त्वं। ७. म-अत आरभ्य सर्गसमाप्ति यावन्नास्ति ॥ ८. रा१ ल१ ल२ ब अ-वीक्षन्तश्च ॥ ९. ब-नास्ति ॥

लक्ष्मणेन सह भ्रात्रा स्मरस्व गरुडं प्र-भो ।
N] नाग-पाश-निबद्धस्य तव वै लक्ष्मणस्य च ॥३८॥ [N
नागाऽशनो महाऽऽत्माऽसौ काश्यपेयो महा-बलः ।
N] तस्याऽप्रतिहता नित्यं गतिर् वीरस्य सर्व-तः ॥३९॥ [N
योऽस्मात् त्वां नाग-पाशाच् च मोक्षयिष्यति बन्धनात् ।
N] स्वस्ति तेऽस्तु गमिष्यामि यथाऽऽगतम् अरिं-दम ॥४०॥ [N
एवं स देवर्षि-वरो महाऽऽत्मा
प्र-बोध्य नारायणम् अ-प्रमेयम् ।
जगाम लोकान् मनसा यथेष्टान्
N] यथाऽऽगतोऽदृष्ट-गुणैर् उपेतः ॥४१॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे नारद-वाक्यं नाम सप्तविंशः सर्गः ॥२७॥

---

## [ वं – २६ ]= [ अष्टाविंशः सर्गः ] =[ दा – ९० ]

नारदस्य वचः श्रुत्वा सं-ज्ञां लब्ध्वा च राघवः ।
N] मध्ये वानर-सैन्यानां सस्मार गरुडं तदा ॥१॥ [N

अथैनम् उपसं-गम्य वायुः श्रोत्रे वचोऽब्रवीत् ।
८] राम राम महा-बाहो आत्मानं स्मर वै हृदा ।
नारायणस् त्वं भग-वान् राक्षसाऽर्थेऽव-तारितः ॥२॥ [N
९] स्मर सर्प-भुजं देवं वैनतेयं महा-बलम् ।

१. ब-नास्ति ॥ २. रा२ फ-नास्य प्रतिहता राम ॥ ३. प्र रा२ फ-योस्माद्रक्षःप्रयुक्ताच्च मोचयेच्छरबन्धनात् । ४. प्र-नास्ति ॥ ५. रा२ फ-मायागुणो ह्यष्टगुणैर् ॥ ६. प्र रा२-लंकाकाण्डे । ब-नास्ति ॥ ७. म-प्रथमश्लोकादारभ्य २५-शश्लोकान्तः पाठः ३०-शसर्गस्य २१-शश्लोकात्परं व्यत्यासेन पठितः ॥ ८. प्र-तदा । ९. रा२-नास्ति ॥

स सर्प-बन्धनाद्[1] घोराद् युवां सं-मोचयिष्यति ॥३॥ [N
१०] तस्य[2] तद् वचनं श्रुत्वा राघवो रघु-नन्दनः ।
सस्मार गरुडं देवं भुजं-गानां भयाऽऽवहम् ॥४॥ [N
११] एतस्मिन्न् अन्तरे वायुर् मेघाश् चाऽऽसन् स[3]-विद्युतः ।
पर्य्-अस्तं सागरे तोयं कम्पन्ते स्म[4] मही-धराः ॥५॥ [३३
१२] महता पक्ष-वातेन सर्वे[5] तीर-रुहा द्रुमाः ।
स-शाखाः[6] पतिता भग्नाः स-मूला लवणाऽम्भसि ॥६॥ [३४
१३] सर्व[7]-तः पन्न-गाः त्रस्ता व्य्-अद्रवन् शैल-वासिनः ।
१४उ] लयं[8] सर्वाणि यादांसि प्र-जग्मुर् लवणाऽम्भसि ॥७॥ [३५
१५उ] ततो मुहूर्तात् स-ततं वैनतेयं[9] महा-बलम् ।
वानरा ददृशुः सर्वे ज्वलन्तम् इव पावकम् ॥८॥ [३६
१६] तम् आ-गतम् अभिप्रेक्ष्य नागास् ते विप्र-दुद्रुवुः ।
१७उ] यैस् तौ सत्-पुरुषौ बद्धौ शर-भूतैर् महा-बलैः ॥९॥ [३७
ततः सु-पर्णः काकुत्स्थं दृष्ट्वा प्रत्यभि[10]-वाद्य च ।
१८] प्र-ममार्ज[11] च पाणिभ्यां मुखं चन्द्र-सम-प्रभम् ॥१०॥ [३८
वैनतेयेन सं-स्पृष्टाः सर्वे ते रुरुहुर् व्रणाः ।
१९] स-वर्णाश् चाऽनयोर् गात्रे व्रणाः[12] सर्वे तदाऽभवन् ॥११॥ [३९
—तं चाऽपि समुपाऽऽघ्राय सु-पर्णं कनक-प्रभम् । [N
२०] बलं वीर्यं च तेजश् च तथैवोत्-साह एव च ।
प्र-हर्षणं च बुद्धिश् च तदाऽऽसीद् द्वि-गुणं तयोः ॥१२॥ [४०
२१] ताव् उत्था(द्-स्था)य महा-वीर्यौ गरुडं राम-लक्ष्मणौ ।
उभौ सस्वजतुर्[13] गात्रै[13] रामश् चेदम् उवाच ह ॥१३॥ [४१

---

१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब ञ प्र-०नाहारो ॥ २. प्र रा$_{2}$ फ-स तस्य ॥ ३. प्र-सहस्रशः । ४. रा$_{2}$ फ-च ॥ ५. रा$_{2}$ फ-बहवः ॥ ६. ब-पर्वताः । ७. रा$_{1}$-नास्ति । ८. प्र-भयं । ९. रा$_{1}$ ल$_{2}$-नास्ति ॥ १०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब ञ-चैवाभि० । ११. रा$_{2}$-सममार्ज ॥ १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब ञ-नास्ति ॥ १३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब ञ प्र फ-ममृजतुर्गात्रं ॥

२२] तव प्रसादाद् व्यू-असनं रावणि-प्रभवं महत् ।[1]

२३उ] आवां शीघ्रम् अति-क्रान्तौ शीघ्रं च बलिनौ कृतौ [2]॥१४॥ [४२

यथा दश-रथं तातं यथा च प्र-पितामहम् ।

२४] तथा भवन्तम् आ-साद्य हृदयं मे प्र-सीदति ॥१५॥ [४३

को भवान् इह[3] सम्प्राऽऽप्तो दिव्य-स्रग्-अनुलेपनः ।

२५] वसानोऽरजसी वस्त्रे दिव्याऽऽभरण-भूषितः ॥१६॥ [४४

इत्य् उक्तः प्र[4]-श्रितं वाक्यं राघवेण महाऽऽत्मना । [N

२६] उवाच गरुडो वाक्यं मध्ये तेषां वनौकसाम् ॥१७॥

प्रीता[5]ऽऽत्मा च परि-ष्वज्य[6] हर्ष-पर्याकुलेक्षणः । [४५

२७] प्र-हसन्न्[7] आह काकुत्स्थं सु-पर्णः पतगे[7]श्वरः ॥१८॥ [N

अहं सखा ते काकुत्स्थ बाह्यः प्राण इवाऽऽत्म-जः । [४६पू

२८] औरसः[8] कश्यप-सुतो विनता-सम्भवो ह्य् अहम् । [N

गरुत्-मान् इह सम्प्राऽऽप्तो युवयोः साह्य-कारणात् ॥१९॥[४६उ

२९] अ-सुरा वा महा-वीर्या दानवा वा महा-बलाः ।

देवता वा स-गन्धर्वा पुरस्-कृत्य शत-क्रतुम् ॥२०॥ [४७

३०] नैनं मोचयितुं शक्ताः शर-बन्धं दुरा-सदम् ।

मायाविना ह्यीऽन्द्र-जिता निर्-मितं क्रूर-कर्मणा ॥२१॥ [४८

३१] एते हि[9] नैर्ऋता नागाः क्षुद्रास् तीव्रविषोल्बणाः ।

रक्षो-माया-प्रभावेन शरास् तीक्ष्ण-विषा[10]ऽभवन् ॥२२॥ [४९

३२] स-भाग्यश् चाऽसि धर्म-ज्ञ राम सत्य-पराक्रम ।

लक्ष्मणेन सह भ्रात्रा सं-ख्येऽस्मिन् न हतोऽसि यत् ॥२३॥ [N

---

१ रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-नास्ति । २. अतः परमधिकः पाठः— रा$_{2}$-शरबन्धाद्विनिर्मुक्तौ क्षिप्रं च रुधिरोक्षितौ ॥ ३. फ-इति ॥ ४. रा$_{2}$ फ-प्रसृतं ॥ ५. ल$_{1}$-प्रीतात्मानं प० । रा$_{2}$ फ-नरिपूज्य च प्रीतात्मा । ६. रा$_{2}$-०सन्प्राह । ७. ल$_{1}$-पन्नगे० ॥ ८. रा$_{2}$-अहं सः ॥ ९. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-वै । १०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ-तीक्ष्णतराभवन् । सन्धिरार्षः द्र० ॥

३३] इमं [1]श्रुत्वा हि वृत्ताऽन्तं त्वरमाणोऽहम् आ-गतः ।
सहसैव तव स्नेहात् सखि-त्वम् अनु-पालयन्[2] ॥२४॥ [५१
३४] कारणं च वयस्य-त्वे न प्रष्टव्योऽस्मि राघव ।
नि-हते रावणे पापे सखि-त्वं ज्ञास्यसे स्वयम् ॥२५॥ [N
३५] मोक्षितश् च मया घोराद् एतस्माद् इषु-बन्धनात् ।
अ-प्रमादश् च सं-ग्रामे कर्तव्यो रघु-नन्दन ॥२६॥ [५२
३६] प्र-कृत्या राक्षसाः सर्वे मायया कूट-योधिनः ।
शूराणाम् ऋजु-भावानां भवताम् आर्जवं धनम्[3] ॥२७॥ [५३
३७] तन् न वि-श्वसितव्यं वै राक्षसानां रणाऽजिरे ।[3]
स्वेनौपम्येन राजेन्द्र नित्य-जिह्मा हि राक्षसाः ।[3] [५४
३८] कूट-युद्धा हि ते सर्वे क्षुद्राश् चैव विशेष-तः ॥२८॥ [N
एवम् उक्त्वा ततो रामं सु-पर्णः सु-महाबलः ।
३९] परि-ष्वज्य च सु-स्निग्धम् आ-प्रष्टुम् उप-चक्रमे ॥२९॥ [५५
सखे राघव धर्म-ज्ञ रिपूणाम् अपि वत्सल ।
४०] अभ्यनु-ज्ञातुम् इच्छामि गमिष्यामि यथाऽऽगतम् ॥३०॥ [५६
बालवृद्धाऽवशेषां हि कृत्वा लङ्कां शरोर्मिभिः ।
४२] रावणं च रणे हत्वा सीतां त्वम् उप-लप्स्यसे ॥३१॥ [५८
इत्य् एवम् उक्त्वा वचनं सु-पर्णः शीघ्र-विक्रमः ।
४३] रामं प्र-दक्षिणं कृत्वा मध्ये[4] तेषां वनौकसाम्[4] ॥३२॥ [५९
N] प्र-दक्षिणं[4] तु तं कृत्वा[4] परि-ष्वज्याऽभि-वाद्य[5] चैव[5] ।
जगामाऽऽकाशम् आ-विश्य गरुडः पवनो यथा ॥३३॥ [६०
४४] नी-रुजौ राघवौ दृष्ट्वा ते तु वानर-यूथपाः ।
४५पू] प्र-हृष्टाः ससृजुर् नादान् राक्षसानां भयाऽऽवहान् ।[6] [६१

---

१. प्र-शृण्वन् । २. प्र-अनुवर्धयन् ॥ ३. म-नास्ति ॥ ४. ल१ प्र-नास्ति ॥ ५. म-०ज्य च पीडितं ॥ ६. अतः परमधिकः पाठः—प्र रा२ फ-ततो भेरीः समाजघ्नुर्मृदंगांश्चाभ्यवादयन् ॥ दध्मुश्च शंखान् संहृष्टाश्चिक्ष्वेडुश्च सहस्रशः ॥

४८पू] अपरे चाऽपि वि-[1]क्रान्ता वानरा [2]नग-योधिनः ॥३४॥ [६३पू
४६उ] ते वानरा भीम-बलाः प्रहर्षाऽऽ[3]क्रोशितैर् मुखैः ।
४८उ] द्रुमान् उत्-[4]पाट्य [5]तरसा [6]तस्थुः शत-सहस्र-शः ॥३५॥ [N
मुञ्चमाना महा-नादांस् त्रासयन्तो निशा-चरान् ।
४९] लङ्का-द्वारम् अभि-क्रान्ता योद्धु-कामाः प्लवं-गमाः ॥३६॥ [६४
तेषां तु भीमस् तुमुलः स नादो
बभूव शाखामृग-यूथपानाम् ।
क्षये निदाघस्य यथा घनानां
N] नादः सु-भीमो नदतां निशीथे ॥३७॥ [६५

इत्यार्षे रामायणे युद्ध-[7]काण्डे विशल्य-करणं नामाऽष्टाविंशः सर्गः ॥२८॥

---

[वं-२७]= **[ एकोनत्रिंशः सर्गः ]** =[दा-५१]

तेषां तु तुमुलं शब्दं वानराणां तरस्विनाम् ।
१] नदतां राक्षसैः सार्धं तदा शुश्राव रावणः ॥१॥ [१
स्निग्ध-गम्भीर-निर्घोषं श्रुत्वा तु नि-नदं महत् ।
२] [8]सचिवा राक्षस-पतेर् इदं वचनम् [9]अब्रुवन् ॥२॥ [२
[10]यथा हि सम्प्र-हृष्टानां वानराणां समुत्थि(दु-स्थि)तः ।
३] बहूनां सु-महान् नादो मेघानाम् इव गर्जताम् ॥३॥

---

१. ब-विश्रान्ता । २. रा१ ल१ ल२ ब अ प्र-नागयो० । रा२-रथयो० ॥ ३. रा१ ल१ ल२ अ प्र-०र्षाक्रोशितैर्मुखैः । रा२-०र्षात्प्रासते बलैः । ४. म-उद्यम्य । ५. प्र-शतशस् । रा२-सहस्रान् । फ म-सहसा । ६. रा२-जघ्नुः ॥ ७. ब-नास्ति । रा२-लंकाकांडे । म-युद्धपर्वणि ॥ ८. ल१-सचिवः । ९. ल१-अब्रवीत् ॥ १०. ल१ ब-तथा हि संप्रविष्टानां ॥

व्यू-अक्तं सु-महती प्रीतिर् एतेषां समुप-स्थिता । [३
४] यथा हि वि-पुलैर् नादैश् चुक्षुभे वरुणाऽऽलयः ॥४॥ [४
तौ च बद्धौ शरैस् तीक्ष्णैर् भ्रातरौ राम-लक्ष्मणौ ।
५] अयं च सु[1]-महान् नादः शङ्कां जनयतीऽव नः[2] ॥५॥ [५
एतत् तु वचनं श्रुत्वा मन्त्रिणां राक्षसेश्वरः[3] ।
६] उवाच राक्षसांस्[4] तत्र समीप-परिवर्तिनः[5] ॥६॥ [६
ज्ञायतां तूर्णम् एतेषां सर्वेषां वन-चारिणाम् ।
७] शोक-काले समुत्-पन्ने हर्ष[6]-कारणम् उत्-तमम् ॥७॥ [७
८पू] ते तथोक्तास्[7] तु सं-भ्रान्ताः प्राकारम् अधि-रुह्य च । [८पू
१०उ] विषण्ण-वदनाः सर्वे[8] राक्षसेन्द्रम् उप-स्थिताः ॥८॥ [१०उ
N] भयात् संहृष्ट-रोमाणो राक्षसास् ते महा-बलाः । [N
तद् अ[9]-प्रियं दीन-मुखा रावणस्य[10] निशा-चराः ।
११] न्यू-अवेदयन् यथा-वृत्तं सर्वे वाक्य-विशारदाः ॥९॥ [११
यौ ताव् इन्द्र-जिता युद्धे भ्रातरौ राम-लक्ष्मणौ ।
१२] नि-बद्धौ शर-बन्धेन निष्प्रकम्प-भुजौ कृतौ ॥१०॥ [१२
विमुक्त-शर-बन्धौ ताव् उत्थि(द्-स्थि)तौ रण-मूर्धनि ।
१३] पाशान् इव गजौ छित्वा गजेन्द्र-सम-विक्रमौ ॥११॥ [१३
तच् छ्रुत्वा वचनं तेषां राक्षसेन्द्रोऽथ[11] रावणः ।
१४] चिन्ता-रोष-परीऽताऽङ्गो विवर्ण-वदनोऽब्रवीत् ॥१२॥ [१४
घोरैर् दत्त-वरैर् बद्धौ शरैर् आशीविषोपमैः ।
१५] अ-मोघैः सूर्य-सङ्काशैः प्र-मथ्येन्द्र-जिता युधि ॥१३॥ [१५
तम् अस्त्र-बन्धम् आ-साद्य यदि मुक्तौ[12] रिपू मम ।

---

१. रा$_1$ल$_1$ब अ प्र म-स महान् । २. रा$_2$-च ॥ ३. प्र रा$_2$ फ म-राक्षसाधिपः । ४. रा$_2$ फ-रक्षसां श्रेष्ठः । ५. फ-०वर्तिनाम् ॥ ६. रा$_1$ ल$_2$ अ प्र-हर्षे का० ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ-तथोक्त्वा । ८. रा$_2$-विवर्णव० ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ-तदाश्रयं । प्र-तदा श्रियं । १०. ब-राक्षसस्य ॥ ११. प्र-०न्द्रो महाबलः । म-०न्द्रः स रावणः ॥ १२. प्र-रिक्तौ ।

१६] संशय-स्थम् इदं सर्वम् अनु-पश्याम्य् अहं बलम् ॥१४॥ [१६
१७पू] निष्-फलाः खलु सं-पन्नाः[1] शरा वासुकि-तेजसः । [१७पू
N] वैनतेयम् इवाऽऽसाद्य नागा गङ्गाह्रदौकसः ॥१५॥ [N
एवम् उक्त्वा तु सं-क्रुद्धो[2] नि-श्वसन् द्वि-रदो यथा[3] ।
१८] अब्रवीद् रक्षसां मध्ये धूम्राऽक्षं नाम राक्षसम् ॥१६॥ [१८
बलेन महता युक्तो रक्षसां भीम-कर्मणाम्[4] ।[3]
१९] निष्-क्रमस्व वधायाऽऽशु राघवस्य[5] वनौकसाम् (?सः) १७ [१९
एवम् उक्तस् तु धूम्राऽक्षो राक्षसेन्द्रेण धीमता ।[6]
२०] कृत्वा प्र-णामं सं-हृष्टो निर्-जगाम नृपाऽऽलयात्[7] ॥१८॥ [२०
अभिनिष्-क्रम्य स ततो बलाऽध्यक्षम् उवाच ह ।
२१] त्वरयस्व[8] बलं शीघ्रं रण-कालोऽयम् आ-गतः ॥१९॥ [२१
धूम्राऽक्षस्य वचः श्रुत्वा बलाऽध्यक्षो बलाऽनुगः ।
२२] बलम् उद्-योजयामास रावणस्याऽऽज्ञया त्वरन् ॥२०॥ [२२
ते बद्ध-घण्टा बलिनो घोर-रूपा निशा-चराः ।[9]
२३] वि-नर्दमानाः[10] सं-हृष्टा धूम्राऽक्षं पर्य्-अवारयन् ॥२१॥
विविधाऽऽयुध-हस्ताश् च शूल-मुद्गर-पाणयः । [२३
२४] गदाभिः पट्टिसैः खड्गैर् आयसैश्[11] चाऽपि[11] मुद्गरैः[12] ॥२२॥
परि-घैर् भिण्डि-पालैश् च खड्गैर्[13] दण्डैः परश्व-धैः[13] ।
२५] निर्-ययू राक्षसा[14] दिग्भ्यो नर्दन्तो युद्ध-लालसाः[14] ॥२३॥ [२४

---

१. प्र रा₂ म-संवृत्ताः ॥ २. म-संरब्धो । ३. रा₁ ल₁ ल₂ ब श्र प्र रा₂ फ-नास्ति ॥ ४. म-भीमतेजसां । ५. प्र-रामस्य च ॥ ६. म-अतः परं २७-श-सर्गस्थः ६-३२ श-श्लोकान्तः पाठो व्यत्यासेन पठितः । ७. रा₂ फ-नृपाज्ञया ॥ ८. प्र-वर्धयस्व ॥ ९. अतः परमधिकः पाठः—रा₂-तथा बद्धतनुत्राणाः सवाजिरथ-कुंजराः । रोषसंरक्तनयना भीमवेगा महाबलाः ॥ १०. रा₁ ल₁ल₂ ब श्र-विनन्दमानाः ॥ ११. रा₁-आयसैरेव । प्र-०सैश्चैव । १२. म-नास्ति ॥ १३. ल₁ ब श्र फ-खड्गदण्डैः प० । ल₂-खड्गदण्डप० । म-भल्लैर्दण्डैः प० । १४. म-राक्षसाः सर्वे शतशोथ सहस्रशः ॥

रथैः कवचिनश् चाऽन्ये ध्वजैश् च सम्[1]-अलङ्कृतैः ।
२६] सुवर्ण[2]-जाल-संयुक्तैः खरैश् च विकृताऽऽननैः ॥२४॥[4] [२५
२७पू] हयैः परम-शीघ्रैश् च चामराऽऽपीड-धारिभिः[3] । [२६पू
प्रभिन्न-करटैश्[5] चैव गजेन्द्रैर् गिरि-सन्निभैः । [N
N] निर्-ययुर् नैर्ऋत-व्याघ्रा व्याघ्रा इव दुरा-सदाः ॥२५॥ [२६उ
वृक[6]-सिंह-मुखैर् जुष्टं खरैः कनक-भूषणैः ।
२८] आ-रुरोह रथं दिव्यं धूम्राऽक्षः खर-निःस्वनः[7] ॥२६॥ [२७
स निर्-ययौ महा-तेजा धूम्राऽक्षो राक्षसैर् वृतः ।
२९] द्वारेण[8] पश्चिमेनाऽऽशु हनु-मान् यत्र यूथ[9]-पः ॥२७॥ [२८
३०पू] प्र-यान्तं तु महा-घोरं राक्षसं भीम-दर्शनम्[10] ।
N] अन्तरिक्ष-चरा वाचो वि-चेरुर्[11] लोम-हर्षणाः ॥२८॥ [२९
रथ-शीर्षे महा-भीमो गृध्रो विनि-पपात[12] ह ।
३१] ध्वजाऽग्रे पक्षिणश्[13] चास्य[13] नि-पेतुर् मांस-भोजनाः ॥२९॥ [३०
३२पू] रुधिराऽऽर्द्रं महा-श्वेतं छत्रम् अस्य पपात[14] ह । [३१पू
ववर्ष रुधिरं देवः प्र-चचाल च मेदिनी ॥३०॥
३३] प्रतिलोमा[15]ऽऽकुलो वायुर् निर्घात-सम-निःस्वनः । [३२
तिमिरौघ-समाक्रान्ता दिशश् च न चकाशिरे ॥३१॥[14] [३३
३४] गृध्र-कङ्क-वङ्क[16]-श्येना ये चाऽन्ये रुधिराऽशनाः । [N
वि-स्वराः[17] ससृजुर् वाचो धूम्राऽक्षस्य समीप-तः ॥३२॥ [३१उ
स उत्-पातांश् च तान् दृष्ट्वा राक्षसानां भयाऽऽवहान् ।

---

१. ल$_1$ म-समलक्षितैः । २. ल$_1$ प्र-स्ववर्ण० । फ-सुपर्ण० ॥ ३. प्र-०पीडनादिभिः । ४. म-नास्ति । ५. रा$_2$-०करटश् ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब फ-वृक्ष० । ७. रा$_1$ ब फ-०स्वनैः ॥ ८. प्र रा$_2$ फ म-पश्चिमेन तु द्वारेण । ९. म-हरियू० ॥ १०. प्र-भीमविक्रमम् । ११. रा$_2$-विरेजुर् ॥ १२. म-अभिपपात । १३. रा$_1$ ल$_1$ ल$_2$ ब-दक्षिणस्यास्य । रा$_2$-पश्चिमश्चास्य । म-व्यथिताश्चास्य ॥ १४. म-नास्ति ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब ञ-प्रतिकूलाकुलो ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-०कंकखरश्येना । १७. रा$_1$ ल$_1$ ल$_2$ ब ञ-निष्ठुराः ॥

२९] प्रादुर्-भूतान् महा-घोरान् धूम्राऽक्षो व्यथितोऽभवत् ।३३। [३४
ततः सु-भीमैर् बहुभिर् निशा-चरैर्
वृतोऽभिनिष्-क्रम्य रणोत्सुको बली ।
ददर्श तां राघव-बाहु-पालितां
N] समुद्र-कल्पां बहु-वानरां चमूम् ॥३४॥ [३६

इत्यार्षे रामायणे युद्ध-काण्डे धूम्राऽक्ष-निर्याणं नामैकोनत्रिंशः सर्गः ॥२९॥

---

## [ वं–२८ ]= [ त्रिंशः सर्गः ] =[ दा–५२ ]

निर्-यान्तं प्रेक्ष्य धूम्राऽक्षं राक्षसं भीम-दर्शनम् ।
१] वि-नेदुर् वानराः सर्वे हृष्टा युद्धाऽभिकाङ्क्षिणः ॥१॥ [१
तेषां तु तुमुलं युद्धं जज्ञेऽथ हरि-रक्षसाम् ।
२] अन्योऽन्यं मुसुलैर्[2] घोरैर् जघ्नुस्[3] ते शूल-शक्तिभिः॥२॥ [२
वानरा राक्षसैर् घोरैः पोथिताश् च वि-दारिताः । [३उ
३] राक्षसा वानरैश् चाऽपि द्रुमैर्[4] भूमि-समी-कृताः ॥३॥
राक्षसास् त्व् अभिसं-क्रुद्धा वानरान् नि-शितैः शरैः ।
४] विव्यधुर् घोर-रूपैस्[5] तान् कङ्क-पत्रैर् अ-जिह्मगैः ॥४॥ [४
ते गदाभिः सु-भीमाभिः पट्टिशैः[6] कूट-मुद्गरैः । [५पू
५] घोरैश् च परि-घैश्[7] चित्रैस् त्रि-शूलैश् चाऽपि सं-युगे॥५। [३पू
वि-दार्यमाणा रक्षोभिर् वानरास् ते महा-बलाः ।
६] अमर्षजनितोद्धर्षाश् चक्रुः कर्माण्य् अनेक-शः ॥६॥ [५उ
शरै[8]-र्निर्भिन्न-गात्रास् ते शूल-निर्गत[9]-लोहिताः ।

---

१. प्र रा₂-लंकाकांडे । म-युद्धपर्वणि ॥ २. ब-तुमुलैर् । ३. म-नास्ति ॥ ४. म-द्रुमैश्चापि समी० ॥ ५. म-०रूपैश्च ॥ ६. रा₁ ल₁ ल₂ ब ञ प्र-पट्टिसैश् । ७. म-नास्ति ॥ ८. म-शरसंभिन्न० । ९. रा₁ ल₁ ल₂ ब ञ प्र-शूलनिर्घात० ।

७] जगृहुः पाद-पांश् चैव शिलाश् च हरि-यूथपाः ॥७॥ [६
ते भीम-वेगा हरयो नर्द[1]माना: सहस्र-शः ।
८] ममन्थू राक्षसान् घोरान् नामानि च बभाषिरे ॥८॥ [७
९पू] पुनश् च तुमुलस् तेषां सं-ग्रामः सम्-अपद्यत । [N
N] तद् बभूवाऽद्भुतं युद्धं तेषां सङ्ग्राम-शालिनाम् ॥९॥
९उ] शिला[2]भिर् वि-पुलाभिश् च बहु-शाखैश् च पाद-पै[4]: । [८
N] वानरा मथिताः के-चित् के-चिद् [3]भल्लैर् वि-दारिताः॥१०॥ [N
राक्षसा मथिताः के-चिद् वानरैर् जित[5]-काशिभिः ।
१०] वमन्ति रुधिरं के-चिन् मुखै रुधिर-भोजिन[6]: ॥११॥ [९
पार्श्वेषु दारिताः के-चित् के-चिच् चूर्णी-कृता द्रुमैः ।
११] शिलाभिश् चूर्णिताः के-चिन् नखैः के-चिद् वि-दारिताः[7] १२[१०
ध्वजैर्[8] वि-शकलैर् भल्लैः खड्गैश् च विनि-पातितैः ।
१२] रथैर् वि-मथिताः के-चित् के-चिन् मथित-वाहनाः ॥१३॥ [११
१४उ] वानरैर् भीम-विक्रान्तैर् आ-[9]प्लुत्याऽऽप्लुत्य वेग-तः ।
राक्षसाः कर-जैस् तीक्ष्णैर् मुखेषु च वि-दारिताः॥१४॥ [१३
१५] विरूप-वदना घोरा विप्रकीर्ण-शिरोरुहाः ।
मत्ताः शोणित-गन्धेन नि-पेतुर् जगती-तले ॥१५॥ [१४
१६] अन्ये च परम-क्रुद्धा राक्षसा भीम-दर्शनाः ।
[10]दुधुवुस् तल-पातैश् च वज्र-स्पर्शैश् च वानरान् ॥१६॥ [१५
१७] वानरैर् आ-पतद्भि[11]स् तु वेगिता वेगवत्-तरैः ।
१८पू] मुष्टिभिश् चरणैश् चैव पाद-पैश् च वि-[12]पोथिताः ॥१७॥ [१६

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-नन्दमाना: ॥ २. म-"शिलाभिर्" इत्यारभ्य "रुधिरभोजिन:" इत्यन्त: पाठो नास्ति । ३. रा$_1$-बल्लैर् । ४. प्र-नास्ति ॥ ५. रा$_1$ ल$_1$ ल$_2$ब अ प्र-जयकांक्षिभि: । ६. प्र-०रभाजनै: । रा$_2$-०रभोजना: ॥ ७. म-नास्ति ॥ ८ प्र-द्विजैर् ॥ ९. प्र-आप्लवन्त्यतिवेगत: । रा$_2$-आप्लुत्य वेगितै: कृता: ॥ १०. अ प्र रा$_2$ फ म-दुद्रुवुस् ॥ ११. ब-०द्भिश्च । १२. प्र-विशेषिता: । म-व्यपो० ॥

N] [1]धूम्राऽक्षो नि-[1]हतं दृष्ट्वा [2]स्व-सैन्यं सह [2]राक्षसैः ।
क्रोधेन कदनं चक्रे वानराणां युयुत्सताम् ॥१८॥ [१७
२०] [3]प्राऽऽसैः प्र-मथिताः के-चिद् [4]वेमुस् ते [4]रुधिरं मुखैः ।
मुद्गरैर् आ-हताः के-चित् [5]पतिता धरणी-तले [6]॥१९॥ [१८
२१] परि-[7]घैः पतिता भग्ना भिण्डि-पालैः परश्व-धैः [7]।
[8]पट्टिशैर् आ-हताः के-[9]चित् के-[9]चिद् विशकली-कृताः ॥२०॥ [१९
२२] के-[10]चिद् वि-मथिता भूमौ रुधिराऽऽर्द्रा वनौकसः ।
के-चिद् वि-द्राविता नष्टाः सं-क्रुद्धै राक्षसैर् युधि ॥२१॥[11] [२०
२३] विभिन्न-हृदयाः के-चिद् एक-पार्श्वेन शामिताः ।
वि-[12]दारितास् त्रि-शूलैश् च के-चिद् दंष्ट्रा-विकर्षिताः ॥२२॥ [२१
२४] तत् सु-भीमं [13]महद् [13]युद्धं हरि-राक्षस-सङ्कुलम्[14] ।
२५पू] अभवच् छस्त्र-बहुलं शिला-पादप-सङ्कुलम् ॥२३॥[14] [२२
धनुर्-ज्या-तन्त्रि-मधुरं हिक्का-ताल-समन्वितम् ।
२६] [15]मत्त-स्तनित-गीतं च[15] युद्धं गान्धर्वम् आ-बभौ ॥२४॥ [२३
धूम्राऽक्षस् तु धनुष्-पाणिर् वानरान् रण-मूर्धनि ।
२७] हसन् वि-द्रावयामास [16]दिशस् [16]तान् शर-वृष्टिभिः ॥२५॥ [२४
धूम्राऽक्षेणा[17]ऽर्दितं सैन्यं [18]मथितं प्रेक्ष्य[18] मारुतिः ।
२८] उप-चक्राम तद् रक्षः प्र-[19]गृह्य महतीं शिलाम् [20]॥२६॥ [२५

१. अ प्र-सैन्यं तु विहतं । रा$_2$ फ म-सैन्यं तु विद्रुतं । २. अ प्र रा$_2$ फ-धूम्राक्षो राक्षसैः संह । म-धूम्राक्षो राक्षसैर्वृतः ॥ ३. रा$_2$ म-पाशैः । ४. म-सुस्रुवुः शोणितं । ५. म-नास्ति । ६. फ-नास्ति ॥ ७. रा$_2$-परिघैराहताः केचित् केचिद्गल्लैर्विदारिताः । फ म-नास्ति । ८. म-नास्ति । ९. रा$_1$ ल$_2$-केचिद्धि शक० । ल$_1$ ब रा$_2$ फ-केचिच्च शक० ॥ १०. म-केचिन्निपतिता । ११. म-अतः परं २८-शसर्गस्थः १—२५-शश्लोकान्तः पाठो व्यत्यासेन पठितः ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-विद्रावितास् ॥ १३. ल$_1$ ल$_2$ ब अ प्र-महायुद्धं । १४. म-नास्ति ॥ १५. रा$_2$ फ-मन्द्रस्तनितगीतं च । म-मन्दस्तनितनिर्घोषं ॥ १६. रा$_2$-विश्वस्तान् । फ म-विशस्तान् ॥ १७. प्र-०नाधिकं । १८. रा$_2$-ततः संप्रेक्ष्य । १९. अ-प्रग्राह्य ॥ २०. म-नास्ति ॥

क्रोध-द्विगुण-रक्ताऽक्षः पितुस् तुल्य-पराक्रमः ।
२९] शिलां तां पातयामास धूम्राऽक्षस्य रथं प्रति ॥२७॥ [२६
आ-पतन्तीं शिलां दृष्ट्वा गदाम् उद्-यम्य सं-भ्रमात् ।
३०] रथाद् आ-प्लुत्य वेगेन वसु-धायाम्[1] अव-स्थितः ॥२८॥ [२७
सा प्र-मथ्य रथं तस्य नि-पपात शिला भुवि ।
३१] स-चक्र-कूबर[2]-युगं स-ध्वजं स-शराऽऽसनम् ॥२९॥ [२८
३२पू] भित्त्वा तु स रथं तस्य हनू-मान् पवनाऽऽत्मजः । [२९पू
N] क्रोध-संरक्त-नयनो बभूवाऽन्तक-सन्निभः ॥३०॥ [N
N] स मारुतिर् महा-वेगैः[3] सुग्रीव-सचिवो बली । [N
३२उ] रक्षसां कदनं चक्रे स-स्कन्ध-विटपैर् द्रुमैः ॥३१॥ [२९उ
विभिन्न-शिरसस् तेन राक्षसाः शोणितोक्षिताः ।
३३] द्रुमैः प्र-मथिताश् चाऽन्ये नि-पेतुर् धरणी-तले[4] ॥३२॥ [३०
वि-द्राव्य राक्षसाऽनीकं हनू-मान् पवनाऽऽत्मजः ।
३४] गिरि-शृङ्गं तु सं-गृह्य धूम्राऽक्षं व्य्-अद्रवद् बली ॥३३॥ [३१
३५पू] तम् आ-पतन्तं[5] धूम्राऽक्षो गदाम् उद्-यम्य वीर्य-वान् । [३२पू
N] वि-नदन्तं हनू-मन्तं गत्वा[6]ऽऽह्वयत सं-युगे ॥३४॥ [N
तस्मै[7] क्रुद्धः स रोषेण गदां तां बहु-कण्टकाम् ।
३६] न्य्-अपातयत धूम्राऽक्षः स्तन-देशे हनू-मतः[8] ॥३५॥ [३३
ताडितः स तया तत्र गदया घोर-रूपया । [३४
३७] स्तन-देशे महा-वीर्यो[9] मारुतिर् गत-साध्वसः ॥३६॥ [N
स कपिर् मारुत-बलस्[10] तं प्र-हारम् अ-चिन्तयन् ।
३८] धूम्राऽक्षस्य शिरो-मध्ये[11] गिरि-शृङ्गम् अपातयत्[12] ॥३७॥ [३५

---

१. प्र रा$_2$ फ म-०यां व्यवस्थितः ॥ २. रा$_1$-०कूबरं युग्मं । म-०कूबररथं ॥ ३. प्र रा$_2$ म-महावीर्यः ॥ ४. म-नास्ति ॥ ५. म-आगतं सुधू० । ६. रा$_2$-महाह्व० ॥ ७. म-ततः । ८. म-नास्ति ॥ ९. म-०वीर्यः साधु साध्विति चाऽब्रवीत् ॥ १०. रा$_2$-मारुतसुतस् । ११. ल$_1$-शिरोमुख्ये । १२. रा$_2$-अताडयत् ॥

स विह्वलित-सर्वाऽङ्गो गिरि-[1]शृङ्गेण पोथितः ।
३९] पपात सहसा भूमौ वि-शीर्ण इव पर्वतः ॥३८॥ [३६
नि-हतं राक्षसं दृष्ट्वा हत-शेषा[2] निशा-चराः ।
४०] ययुः[3] प्र-वेपिता लङ्कां वध्यमाना वनौकसा[4] ॥३९॥ [३७
विनिहत-रजनीचरां नि-शम्य
क्षतज-निरन्तर-कर्दमां महीं ताम् ।
रिपु-वध-जनित-श्रमः[5] प्र-हृष्टः[6]
४२] पवन-सुतः स सुहृद्भिर् अर्चितम् तु ॥४०॥ [३८

इत्यार्षे[7] रामायणे युद्ध-काण्डे[8] धूम्राऽक्ष-वधो नाम त्रिंशः सर्गः ॥३०॥

---

## [वं-२९]= [एकत्रिंशः सर्गः] =[दा-५५]

धूम्राऽक्षं नि-हतं श्रुत्वा रावणः क्रोध-मूर्च्छितः । [स५३-१पू
१] बलाऽध्यक्षम् उवाचेदं कृताऽञ्जलिम् उप-स्थितम् ॥१॥ [५५-१उ
शीघ्रं निर्-यान्तु दुर्-धर्षा राक्षसा घोर-दर्शनाः ।
२] अ-कम्पनं पुरस्-कृत्य सर्व-शास्त्र-विशारदम् ॥२॥[9] [२

---

१. म-विकीर्ण ॥ २. फ-हतरोषा । ३. ल२-ययुः प्रवेपितां । अ रा२ म-त्रस्ताः प्रवेशिता । फ-त्रस्ताः प्रवे० । ४. रा१ ल१ ल२ ब अ रा२-वनौकसैः । फ म-प्लवंगमैः ॥ ५. ल१ ब-रिपुवधजनितश्रमः प्र० । रा२-रिपुवधजनितोग्रपुण्यकीर्तिः । ६. अतः परमधिकः पाठः—रा२-श्रममजहद्धि स मारुतिप्रख्यः ॥ ७. रा२ फ-नास्ति । ८. ब रा२-नास्ति । प्र-लंकाकांडे । म-युद्धपर्वणि ॥ ९. अतः परमधिकः पाठः—रा२-एष वै बलगोप्ता च नेता च युधि संमतः । भूमिकामश्च मे नित्यं नित्यं च समरप्रियः ॥ एष जेष्यति काकुत्स्थौ सुग्रीवं च महाबलम् । वानरांश्च परान् घोरान् हनिष्यति न संशयः ॥ प्रतिगृह्य स तामाज्ञां रावणस्य महात्मनः । बलं संदेशयामास तदा स लघुविक्रमः ॥

ततो नाना-प्रहरणा भीमाऽक्षा भीम-दर्शनाः ।
७] निर्-ययू राक्षसा मुख्या बलाऽध्यक्ष-प्रणोदिताः ॥३॥ [६
[1]रथम् आ-स्थाय तु श्री-मांस् तप्त-काञ्चन-कुण्डलः । [७पू
८] अ-कम्पनस् ततो घोरै राक्षसैर् अभिनिर्-ययौ ॥४॥ [N
तस्य निष्-पततस् तूर्णम् अकस्माद् रथ-वाजिनः ।
९] [2]जघनैः सहसा पेतुर् भय-विह्वल-चेतसः ॥५॥ [N
प्राऽस्पन्दतेक्षणं चाऽस्य सव्यं युद्धाऽभिकाङ्क्षिणः ।
१०] बिभेदे[3] मुख-वर्णश् च कण्ठो वैस्वर्यम् आ-ययौ ॥६॥ [१०
आ-कुलं गगनं चाऽऽसीद् दुर्-दिनं रूक्ष-मारुतम् ।
११] ऊचुः खरं मृगाश् चाऽपि वाचो रूक्षा[4] भयाऽऽवहाः॥७॥ [११
स तु सिंहोन्नत[5]-स्कन्धः शार्दूल-सम-विक्रमः ।
१२] तान् उत्-पातान् अधः कृत्वा निर्-जगाम निशा-चरः॥८॥[१२
तस्य निष्-पतमानस्य नगर्याः सह राक्षसैः ।
१३] बभूव सु-महान् नादः क्षोभयन्न् इव सागरम् ॥९॥ [१३
तेन शब्देन वि-त्रस्ता वानराणां महा-चमूः ।
१४] द्रुम-शैल-प्रहरणा युद्धाय समुप-स्थिता[6] ॥१०॥ [१४
तेषां युद्धं महा-घोरं बभूव कपि-रक्षसाम् ।[7]
१५] राम-रावणयोर् अर्थे समभित्यक्त-जीवितम् ॥११॥ [१५
सर्वे ह्य् अति-बलाः शूराः सर्वे पर्वत-सन्निभाः ।
१६] हरयो राक्षसाश् चैव परस्पर-जयैषिणः[8] ॥१२॥ [१६
तेषां वि-नदतां शब्दः सं-युगेषु तरस्विनाम् ।
१७] शुश्रुवे सु-महांस् तस्मिन्न् अन्योऽन्यम् अभि-गर्जताम्॥१३॥[१७

---

१. रा$_3$ ल$_1$ ल$_2$ अ-रथस्थस्तत्र स श्रीमांस् । प्र-रथस्थस्तु ततः श्रीमांस् । रा$_2$-रथमास्थापयामास ॥ २. रा$_1$ल$_1$ल$_2$ब अ प्र फ-साधनैः ॥ ३. अ-बिभिदे ॥ ४. प्र रा$_2$ म-क्रूरा॥ ५. रा$_2$-सिंहोचितस्कन्धः । म-सिंहोपमस्कन्धः ॥ ६. प्र रा$_2$ फ म-द्रुमशैल प्रहाराणां योद्धुं समवतिष्ठति ॥ ७, म-नास्ति ॥ ८. प्र-०रववैषिणः ॥

ततस् तु सु-महद् युद्धं सु-भीमम् अभवत् तदा ।
N] सर्व-तो हरि-रक्षोभिः सं-रुरोध दिशो दश ॥१४॥ [१८
अन्योऽन्यं रजसा तेन कौशेयं[1] बहु-पाण्डुरम् ।
१९] सं-वृतं धूम-धूम्रेण दद्दशुर् न रणाऽजिरे[2] ॥१५॥ [१९
न ध्वजो न पताका वा धन्विनस् तुर-गोऽपि वा ।
२०] आ-युधं स्यन्दनो वाऽपि दद्दशे तेन रेणुना[3] ॥१६॥ [२०
शब्दः[4] सु-तुमुलस् तत्र नदताम्[5] अभि-धावताम् ।
२१] शुश्रुवे वि-पुलः सं-ख्ये न रूपाणि चकाशिरे ॥१७॥ [२१
परान् एवं सु-संरब्धा हरयो जघ्नुर्[6] आ-हवे ।
२२] वानरान् अपि रक्षांसि नि-जघ्नुः सम्-अरे तदा[7] ॥१८॥ [२२
ते परांश् च विनि-घ्नन्तः स्वांश् च वानर-राक्षसाः ।
२३] रुधिराऽऽर्द्रांस् तदा चक्रुर् महा-दारुण-दर्शनान् ॥१९॥[8] [२३
हतानां रुधिरौघैस् तु शशामाऽभि-हतं रजः ।
२४] शरीर-शत-संस्तीर्णा[9] बभूव च वसुं-धरा[10] ॥२०॥ [२४
द्रुम-शक्ति-शिला-प्राऽऽस-गदा-परिघ-तोमरैः ।
२५] राक्षसा हरयश् चैव जघ्नुर् अन्योऽन्यम् आ-हवे ॥२१॥ [२५
बाहुभिः पर्वताऽऽकारैर् अस्यन्तः परिघोपमैः । [२६पू
N] वानरान् अर्दयामासुः[11] सं-रब्धा रजनी-चराः ॥२२॥ [N
वानराश् चाऽपि रक्षांसि महा-द्रुम-शिलाऽऽदिभिः ।
N] अभि-जघ्नुर्[12] अति-क्रम्य शस्त्राण्य् उच्-छिद्य वीर्य-तः॥२३[२९
एतस्मिन् अन्तरे वीरा हरयः कु-मुदो नलः ।
२८] मैन्दश् च परम-क्रुद्धाश् चक्रुर् युद्धम् अन्-उत्तमम् ॥२४॥ [३०

१. रा$_2$ फ म-कौशेयारुणपा० । २. रा$_2$ फ-०जिरं ॥ ३. म-नास्ति ॥ ४. प्र-स शब्दस्तुमुलस् । रा$_2$-शब्दस्तु तु० । ५. रा$_2$ म-नर्दताम् ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब-जग्मुर् । ७. प्र रा$_2$-तथा ॥ ८. म-नास्ति ॥ ९. प्र-०संकीर्णा । १०. प्र म-नास्ति ॥ ११. म-सूदयामासुः ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब प्र म-०जग्मुर् ॥

ते मुष्टिभिर् महा-वेगा राक्षसानां चमू-मुखे ।
२९] कदनं सु-महच् चक्रुर् लीलया हरि-पुङ्गवाः ॥२५॥ [३१
अभिवा(?पा)त-पुरोवाताः शिला-पादप-वर्षिणः ।
N] उत्-कृष्टा गर्जित-रवा मेघा इव बभुस् तदा ॥२६॥ [N
तदा च रक्षो-गणम् उन्-नदन्तं
सम्भ्रान्त-नागाऽश्वरथं वि-षण्णम् ।
महोदधेः क्षुब्धम् इवाऽनु-रूपं
N] निशा-चराणां बलम् आ-बभासे ॥२७॥ [N

इत्यार्षे रामायणे युद्ध-काण्डेऽकम्पन-निर्याणं नामैकत्रिंशः सर्गः ॥३१॥

---

## [वं-३०]= [ द्वात्रिंशः सर्गः ] =[दा-५६]

रक्षसां वानरैर् दृष्ट्वा सु-महत् कदनं कृतम् ।
१] क्रोधम् आ-हारयामास तेषां तीव्रम् अ-कम्पनः ॥१॥ [१
क्रोधान् मारुत-वेगस् तु धुन्वन् धनुर् अन्-उत्तमम् ।
२] दृष्ट्वा तत् कर्म शत्रूणां सारथिं वाक्यम् अब्रवीत् ॥२॥ [२
अत्रैव त्वरितं याहि सारथे यत्र वानराः ।
४] एते हि स-हिता घ्नन्ति सु-बहून् राक्षसान् रणे ॥३॥ [३
एतान् नि-हन्तुम् इच्छामि समर-श्लाघिनो ह्य् अहम् ।
५] एतैर् हि राक्षसाऽनीके सु-महत् कदनं कृतम् ॥४॥ [५
ततः प्रव्रजिताऽश्वेन रथेन रथिनां वरः ।
६] हरीन् अभ्य्-अहनत् क्रोधात् किरन् बाणान् अ-कम्पनः ॥५॥ [६

---

१. रा$_1$-उत्क्रुद्धा ग० । म-चक्रुर्वै गर्जितं स्वीयं । २. म-खे बहुशस् ॥ ३. म-नास्ति ॥ ४. अ प्र-लंकाकाण्डे० । ब म-अकम्पननिर्याणं । रा$_2$ फ-०निर्याणो ॥ ५. म-क्रोधमूर्छितवे० । ६. प्र रा$_2$ फ म-परमकार्मुकम् ॥ ७. म-रणे ॥ ८. रा$_2$-प्रजविता० ॥

न[1] शेकुर् वानराः स्थातुं[1] किं पुनर् योद्धुम् आ-हवे ।
७] अकम्पन-शरैर् भग्ना दुद्रुवुस्[2] ते दिशो दश[2] ॥६॥ [७
तान् मृत्यु-वशम् आ-पन्नान् अकम्पन-शराऽऽहतान् ।
८] सम्-ईक्ष्य हनु-मान् ज्ञातीन् सम्प्र-तस्थे महा-बलः ॥७॥ [८
तं महा-प्लवगं दृष्ट्वा सर्वे प्लवगा[3]-यूथपाः ।
९] समेत्य सम्-अरे वीरं सम्-अग्राः[4] पर्य्-अवारयन् ॥८॥ [९
हनू-मन्तं च[5] ते दृष्ट्वा बभूवुर् हरि-यूथपाः ।
१०] वि-ध्वस्ता[6] बलिनः सर्वे वेग-वन्तम्[7] उपाऽऽश्रिताः ॥९॥ [१०
अ-कम्पनस् तु शैलाऽऽभं हनू-मन्तम् अव-स्थितम्[8] ।
११] महेन्द्र इव धाराभिः शरैर् अभि-ववर्ष तम् ॥१०॥ [११
अ-चिन्तयित्वा तान् बाणान् शरीरे पततः शितान्[9] ।
१२] अकम्पन-वधाऽर्थाय महाऽऽत्मा वि-दधे मनः ॥११॥ [१२
स प्र-हस्य[10] महा-तेजा हनु-मान् मारुताऽऽत्मजः ।
१३] रक्षस् तद् अभि-दुद्राव कम्पयन्न् इव मेदिनीम् ॥१२॥ [१३
तस्याऽथ नर्दमानस्य[11] दीप्यमानस्य तेजसा ।
१४] बभूव रूपं दुर्-धर्षं शक्रस्येवोद्यताऽशनेः ॥१३॥ [१४
आत्मानं चा[12]ऽप्रहरणं दृष्ट्वा[13] क्रोध[13]-समन्वितः ।
१५] सालम् उत्-पाटयामास गिरि-शृङ्गम् इवोन्[14]-नतम् ॥१४॥ [१५
तं गृहीत्वा महा-सालं पाणिनैकेन मारुतिः ।
१६] वि-नद्य सु-महानादं त्रासयामास राक्षसान् ॥१५॥[15][16] [१६

---

१. म-न स्थातुं वानरैः शक्यं । २. प्र रा₂ फ-०वुः सर्ववानराः । म-सर्व एव प्रदुद्रुवुः ॥ ३. म-ते प्लवगेश्वराः । ४. म-सहिताः ॥ ५. म-तु । ६. रा₁ ल₁ ल₂ ब श्र प्र-वित्रस्ता । ७. रा₂ फ म-बलवन्तम् ॥ ८. प्र म-उपस्थितम् ॥ ९. ल₂-चितान् ॥ १०. म-प्रसह्य ॥ ११. रा₁ ल₁ ल₂ ब श्र प्र-नन्दमानस्य ॥ १२. रा₂-व प्रहर्षेण । १३. म-त्रुध्वा रोषस० । १४. रा₂ फ म-इवोच्छ्रितम् ॥ १५. प्र-अत आरभ्य "भ्रामयामास मारुतिः" इत्यन्तः पाठो नास्ति । १६. म-नास्ति ॥

ततस् तम् अभि-दुद्राव निशा-चरम् अ-कम्पनम् ।[1]
१७] नि-हन्तुं नमुँचिं क्रुद्धो वज्रेणेन्द्र इवाऽऽहवे ॥१६॥ [१७
तम् उद्-यम्य महा-सालं भ्रामयामास मारुतिः ।
N] [2]भ्राम्यमानं(?णं) स[3] चिच्छेद[3] शरैस् तालम् अ-कम्पनः ॥१७॥ [N
वि-ध्वस्तं कर्म तद् दृष्ट्वा हनु-मान्[4] अति-विस्मितः ।
N] [5]समुद्-यम्य गिरेः शृङ्गं जवेनाऽभि-ससार तम् ॥१८॥ [N
अ-कम्पनस् ततो दृष्ट्वा गिरि-शृङ्गं समुद्-यतम् ।
१८] दूराद् एव महा-बाणैर् अर्ध-चन्द्रैर् अदारयत् ॥१९॥ [१८
तत् पर्वताऽग्रम् आ-काशे रक्षो-बाण-विदारितम् ।
१९] वि-कीर्णं पतितं दृष्ट्वा हनु-मान् वि-स्मितोऽभवत् ॥२०॥ [१९
२०उ] सोऽश्व-कर्णं समा-साद्य रोषदर्पाऽन्वितो हरिः ।
N] तूर्णम् उत्-पाटयामास गिरि-[6]शृङ्गम् इवोन्-[7]नतम् ॥२१॥ [२०
तं गृहीत्वा महा-कायम् अश्व-कर्णं महा-द्युतिः ।
२१] प्र-हस्य परम-प्रीतो भ्रामयामास सं-युगे ॥२२॥ [२१
प्र-धावन्न् ऊरु-वेगेन [8]प्रभञ्जन-परान् द्रुमान् ।[9]
२२] हनु-मान् परम-क्रुद्धश् चरणैः कम्पयन् महीम् ।[10] [२२
२३उ] जघान [11]परम-क्रुद्धः पदातींश् चाऽपरान् बहून् ॥२३॥ [२३उ
तम् अन्तकम् इव क्रुद्धं सम्-अरे प्राण-हारिणम् ।[12]
२४] हनू-मन्तम् अभिप्रेक्ष्य राक्षसा विप्र-दुद्रुवुः ॥२४॥ [२४
तम् आ-पतन्तं सं-रब्धं राक्षसानां भयाऽऽवहम् ।
२५] ददर्शाऽकम्पनो वीरश् चुक्रोध च महा-बलः ॥२५॥ [२५

---

१. म-नास्ति ॥ २. प्र रा२फ म-भ्रामयन्तं । ३. ल१-च चिच्छेद । रा२-विचिच्छेद ॥ ४. रा१ ल१ल२ब-०मानिति वि० । प्र-०मान् वीक्ष्य वि० । रा२फ-०मान्प्रेक्ष्य वि० । म-"हनुमान्" इत्यारभ्य "दृष्ट्वा हनु०" इत्यन्तः पाठो नास्ति ॥ ५. म-समादाय । ६. रा२ फ म-महागिरिं । ७. प्र रा२ फ-इवोच्छ्रितम् । म-इवोत्थितम् ॥ ८. रा२ फ-सम्भञ्जन० । ९. म-नास्ति । १०. अतः परमधिकः पाठः—रा२-राक्षसान् सबलान् क्रूरान् सहयान् सरथस्थितान् । ११. प्र रा२-समरे क्रुद्धः ॥ १२. रा१ ल१ ल२ ब अ प्र फ-नास्ति ॥

स चतुर्-दशभिर् बाणैर् वि-शिखैर्[1] मर्म-भेदिभिः ।
२६] बिभेद सु-महावीर्यं हनू-मन्तम् अ-कम्पनः ॥२६॥ [२६

स तथा तेन वि-ध्वस्तो बहुभिर् मार्गणैः शितैः[2] ।
२७] हनु-मान् ददृशे वीरो रुधिरेण सम्-उक्षितः ॥२७॥ [२७
उत्-पाट्य सहसा वृक्षं कृत्वा वेगम् अन्-उत्तमम् ।
२८] शिरस्य्[3] अभि-जघानाऽऽशु निशा-चरम् अ-कम्पनम् ।२८। [२९
तेन वृक्ष-प्रहारेण वज्रेणेवाऽति-रंहसा ।[4]
N] राक्षसो वानरेन्द्रेण प्रेषितो यम-सादनम् ॥२९॥ [३०
तं दृष्ट्वा पतितं भूमौ कम्पमानम् अ-कम्पनम् ।[5]
३०] व्यथिता राक्षसाः सर्वे क्षिति-कम्पे न(-?)गा इव ॥३०॥ [३१
त्यक्त-प्रहरणाः सर्वे राक्षसास् ते परा-जिताः ।
३१] लङ्कां प्र-विविशुस् त्रस्ता हन्यमानाः प्लवं-गमैः ॥३१॥[6] [३२
ते मुक्त-केशाः[7] सं-विग्ना भज्यमानाः परा-जिताः ।
३२] भयाच् छ्रम-जर्जरैर्[8] गात्रैः श्वसन्तो विप्र-दुद्रुवुः ॥३२॥ [३३
अन्योऽन्यम् अभि-मर्दन्तो[9] विविशुर् नगरं तदा ।
३३] पृष्ठ-तस् त्रास-सम्मूढाः[10] प्रेक्षमाणा मुहुर्-मुहुः ॥३३॥ [३४
तेषां सं-जहतां सं-ख्यं विशतां च पुरीं भयात् ।
३४] रक्षसाम्[11] अ-जेयं दृष्ट्वा वि-नेदुस् ते वनौकसः ॥३४॥ [N
वि-नेदुश् च यथा-कामं हरयो जित-काशिनः ।[13]
N] पुनश् च जघ्नुः पतितान् स-प्राण[12](?णा)नेव राक्षसान्॥३५॥[३७

---

१. म-निशितैर्देहभेदिभिः॥ २. रा$_1$-शतैः॥ ३. म-शिरसा निजघानाथ॥ ४.रा$_1$ल$_1$ल$_2$ब अ प्र रा$_2$फ-नास्ति॥ ५. म-अत आरभ्य ३४-शश्लोकं यावत्पाठो नास्ति॥ ६. अ-नास्ति॥ ७. रा$_2$-मुक्तवेशाः। ८. प्र-छ्रमपरैः॥ ९. रा$_1$ल$_1$ल$_2$ ब अ प्र-०नन्दन्तो। १०. ल$_1$ल$_2$ब-०सम्पूर्णाः॥ ११. रा$_2$ फ-राक्षसानां भयं॥ १२. रा$_1$ल$_1$ल$_2$ब अ प्र रा$_2$फ-सव्रणानेव। १३. म-पाठोऽयं ३७-शश्लोकानन्तरं व्यत्यासेन पठितः॥

तेषु लङ्कां प्र-विष्टेषु राक्षसेषु यथा-बलम् ।[1]
३५] समेत्य हरयः सर्वे हनु-मन्तम् अपूजयन् ॥३६॥ [३५
सोऽपि प्र-हृष्टस् तान् सर्वान् वानरान् प्रत्यु-अपूजयत् ।[2]
३६] हनू-मान् सत्त्व-सम्पन्नो यथाऽर्हम् अभि-पूजितः ॥३७॥ [३६
अपूजयन् देव-गणास् ततः कपिं
स्वयं च रामोऽति-बलश्[3] च[4] लक्ष्मणः ।
तथैव सुग्रीव-मुखाश्[4] च वानराः
३९] वि-भीषणश् चैवं[5] सहाऽनु-यायिभिः[6] ॥३८॥ [३९
इत्यार्षे रामायणे युद्ध-काण्डे[7]ऽकम्पन-वधो नाम द्वात्रिंशः सर्गः ॥३२॥

---

## [वं-३१]= [त्रयस्त्रिंशः सर्गः] =[दा-९७]

१पू] ततस् तु रावणः क्रुद्धः श्रुत्वा हतम् अ-कम्पनम् । [१पू
३उ] पुरीं परि-ययौ लङ्कां सर्वा(न्) गुल्मान् अवेक्षितुम् ॥१॥ [२उ
तां राक्षस-गणैर् गुप्तां गुल्मैश् च बहुभिर् युताम्[8] ।
४] ददर्श लङ्कां राजन्तीं[10] बहु-ध्वज-पताकिनीम् ॥२॥ [३
रुद्धां तु नगरीं दृष्ट्वा रावणो राक्षसेश्वरः ।
५] उवाचाऽमर्षितः काले प्र-हस्तं युद्ध-कोविदम् ॥३॥ [४
पुरस्योपनि-रुद्धस्य सहसा पीडितस्य च ।
६] नाऽन्यं सम्-अर्थं पश्यामि युद्धे युद्ध-विदां[11] वरे ॥४॥ [५
७उ] अहं वा कुम्भ-कर्णो वा त्वं वा सेना-पतिर् मम ।
इन्द्र-जिद् वा नि-कुम्भो वा वहेयुर् भारम् ईदृशम् ॥५॥[12] [६

---

१. म-नास्ति ॥ २. अतः परमधिकः पाठः—म-स वीरशोभामतुलां वहन् कपिर्निहत्य रक्षः सहसानिलात्मजः । महासुरं वीरसमुन्नताय यथैव विष्णुर्बलिनं चमूमुखे ॥ ३. म-रामो सरथश्च । ४. म-०मुखाः प्लवंगमाः । ५. प्र-चापि । ६. म-०नुयोधिभिः ॥ ७. ब अ प्र-लंकाकांडे । म-युद्धपर्वणि ॥ ८. म-युक्तां । ९. रा$_2$ फ म-वृताम् । १०. प्र-द्वितीयतृतीयपादौ न स्तः ॥ ११. ल$_1$ ल$_2$ ब रा$_2$ फ-युद्धविशारद । म-युद्धविशारदम् ॥ १२. म-नास्ति ॥

८] स[1] त्वं बलम् इदं कृत्स्नम् आ-दाय परि-गृह्य च ।
वि-जयायाऽऽशु निर्-याहि जहि सर्वान् वनौकसः ॥६॥ [७
९] निर्-याणाद् एव ते वीर चपला हरि-वाहिनी ।
नंदतां[2] राक्षसेन्द्राणां श्रुत्वा नादं नै तिष्ठति[3] ॥७॥ [८
१०] चपला ह्य् अ-विनीताश् च चल-चित्ताश् च वानराः ।
घोषं न ते सहिष्यन्ति सिंह-नादम् इव द्विपाः ॥८॥ [९
११] नंदन्तं[4] त्वां समा-लक्ष्य रामः सौमित्रिणा सह ।
अ-वशस् ते निरा-लम्बः प्र-हस्त वशम् एष्यति ॥९॥ [१०
१२] आपत्सु सं-शयः[5] श्रेयो न तु[6] निः-संशयं(?यः)कृतम्(?तः) ।
प्रतिलोमाऽनुलोमं च यथा-वन्[7] मन्यसे हितम् ॥१०॥ [११
१३] रावणेनैवम् उक्तस् तु प्र-हस्तो वाहिनी-पतिः ।
राक्षसेन्द्रम् उवाचेदम् असुरेन्द्रम् इवोशनाः ॥११॥ [१२
१४] राजन् मन्त्रितं-पूर्वं[8] मे कुशलैर्[9] मन्त्रिभिः सह ।
वि-वादश् चाऽपि नो वृत्तः समवेक्ष्य परस्परम् ॥१२॥ [१३
१५] प्र-दानेन तु सीतायाः श्रेयो व्यव-सितं मया ।
अ-प्रदाने पुनर् युद्धं दृष्टम् एतत् तदैव तु ॥१३॥ [१४
१६] सोऽहं दानैश् च मानैश् च सततं लालितस्[10] त्वया ।
सान्त्वैश् च वि-विधै राजन् किं न कुर्यां प्रियं तव ॥१४॥ [१५
१७] मद्-बाणाऽशनि-वेगेन हतानां तु रणाऽजिरे ।
अद्य तृप्यन्तु मांसेन पक्षिणः काननौकसाम्[11] ॥१५॥ [१६
१८] नहि मे जीवितं रक्ष्यं[12] पुत्रदारधनाऽऽदिभिः ।

---

१. म-नास्ति ॥ २. रा$_2$ फ म-नर्दतां । ३. ल$_1$-प्रतिष्ठति । प्र-चलिष्यति । रा$_2$ फ म-द्रविष्यति ॥ ४. रा$_2$ फ म-नर्दन्तं ॥ ५. ल$_1$ प्र-संश्रयं । रा$_2$ म-संश्रयः । ६. म-ननु । ७. म-यदन्यन् ॥ ८. म-मंत्रितमस्माभिः । ९. रा$_1$ ल$_1$ ल$_2$ ब-कुशलं ॥ १०. म-पूजितस् ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०कसः ॥ १२. ल$_2$-शक्यं ।

स त्वं मां पश्य जुह्वन्तं[1] त्वद्-अर्थं[2] जीवितं रणे ॥१६॥ [१६
१९] एवम् उक्त्वा तु भर्तारं रावणं वाहिनी-पतिः ।
उवाचेदं बलाऽध्यक्षान्[3] प्र-हस्तः पुर-तः स्थितान्[4] ॥१७॥ [१७
२०] समाऽनयत[5] मे क्षिप्रं राक्षसानां महद् बलम् । [१८
यावद् वानर-मांसेन पक्षिणस् तर्पयाम्य् अहम् ॥१८॥
२१] इत्य् उक्तास् ते प्र-हस्तेन बलाऽध्यक्षाः कृत-त्वराः[6] ।[4]
बलम् उद्-योजयामासुस्[7] तस्मिन् राक्षस-मन्दिरे ॥१९॥ [२०
२२] सा बभूव मुहूर्तेन तिग्मा सेना(?तिग्म-सेना)बहु-ध्वजा ।
लङ्का राक्षस-वीरैस् तैर् गजैर्[8] इव समा-कुला ॥२०॥ [२१
२३] हुताऽशनं तर्पयतां[9] ब्राह्मणांश्[10] च नमस्यताम्[10] ।
हव्य-गन्धं प्रति-वहन् सुरभिर् मारुतो ववौ[11] ॥२१॥ [२२
२४] तर्पयित्वा[11] तु ते[11] सर्वे विधि-वज् जात-वेदसम् । [N
२५उ] स्रजश् च विविधाऽऽकाराः शिरोभिर् अभि-मन्त्रिताः[12] ॥२२॥
२६पू] सङ्ग्राम-संज्ञाः[13] सं-हृष्टा धारयन्तो महा-बलाः । [२३
N] ब्राह्मणैः स्वस्ति वाच्याऽग्रे सं-ग्रामाय जयाऽऽशिषः ॥२३॥ [N
२६उ] धनुर्-हस्ताः कवचिनो वेगेनाऽऽप्लुत्य[14] राक्षसाः[14] ।
रावणं प्रेक्ष्य राजानं प्र-हस्तं पर्य्-अवारयन् ॥२४॥ [२४
२७] अथ सं-मान्य[15] राजानं भेरीम् आ-हत्य सु-स्वराम्[16] ।
आ-रुरोह रथं दिव्यं प्र-हस्तः सज्ज-कार्मुकम्[17] ॥२५॥ [२५

---

१. प्र रा२फ म-संपश्य मां जुह्वयन्तं । २. म-त्वदर्थे याचितं ॥ ३. रा२ फ-बलाध्यक्षं प्रहस्तः पुरतः स्थितम् । ४. रा१ल१ल२ब अ प्र-नास्ति ॥ ५. रा२ फ-समानयस्व ॥ ६. रा२ फ-उक्तस्तु प्रहस्तेन बलाध्यक्षः कृतक्षणः । ७. रा१ ल१ ल२ ब अ प्र रा२ फ-०मास ॥ ८. ल१ ल२ ब-गणैर् ॥ ९. ल१ म-तर्पयित्वा । १०. ल१ल२ब-०णांश्च नमस्कृताम् । म-नास्ति । ११. म-नास्ति ॥ १२. प्र-अभिपूजिताः ॥ १३. रा१ल१ल२ ब अ प्र-संज्ञां ॥ १४. म-खड्गचर्मधनुर्धराः ॥ १५. म-संगम्य । १६. ल१ ल२ अ प्र-सस्वराम् । १७. रा२-नास्ति ॥

२८] हयैर् महा-जवैर् युक्तं[1] सम्यक् तूल-समन्वितम् ।[2]
महा-जलद-निर्घोषं दीप्त-चन्द्राऽर्क-भास्वरम् ॥२६॥ [२६

२९] उदग्र-ध्वज-दुर्धर्षं सु-वरूथं स्[3]वू-अपस्करम् ।[4]
३०उ] सुवर्ण-जाल-संयुक्तं प्र-हसन्तम् इव श्रिया[5] ॥२७॥ [२७
स तूर्णं रथम् आ-स्थाय [6]बाणाऽर्पित-शराऽऽसनः ।
३१] लङ्काया निर्-ययौ क्षिप्रं बलेन महता वृतः ॥२८॥ [२८
ततो दुन्दुभि-निर्घोषः पर्जन्य-निनदोपमः ।
३२] शुश्रुवे शङ्ख-शब्दश् च प्र-याते वाहिनी-पतौ ॥२९॥ [२९
व्यू-ऊढेन वाऽथ सैन्येन प्राग्-द्वारेण विनिर्-ययौ[7] ।
३३] गज-यूथ-निकाशेन बलेन महता वृतः ॥३०॥ [३२
वि-नदन्तो रवान् घोरान् राक्षसा [8]जग्मुर् अग्र-तः ।
३४] [9]समन्त-तो महा-कायाः प्र-हस्तस्य पुरः-सराः ॥३१[10]॥ [३०
सागर-प्रतिमौघेन बलेन महता वृतः ।[11]
N] प्र-हस्तो निर्-ययौ क्रुद्धः कालाऽन्तक-यमोपमः ॥३२॥ [३३
तस्य निर्याण-घोषेण राक्षसानां च गर्जताम्[12] ।
३५] लङ्काया सर्व-भूतानि वि-नेदुर् वि-[13]कृतैः स्वरैः ॥३३॥ [३४
व्यू-अभ्रम् आ-काशम् आ-वृत्य शस्त्र-वर्णं खर-स्वनम् । [३५पू
३६] ववर्ष रुधिरं देवः प्र-हस्तस्य रथोपरि ॥३४॥ [N
ध्वज-मूर्धनि गृध्रोऽस्य नि-लीनो दक्षिणा-मुखः । [३९पू
३७] वमन्त्यः पावक-ज्वालाः शिवा घो[14]रां ववाशिरे ॥३५॥
अन्तरिक्षात् पपातोल्का वायुश् च परुषो ववौ[15] । [३६

---

१. रा$_1$ल$_1$ल$_2$ब अ प्र-प्रहसन्तमिव श्रिया । २. रा$_2$-नास्ति ॥ ३. रा$_2$-परिष्कृतम् । फ-परिस्करम् । ४. म-नास्ति । ५. म-सुवर्णजलसंमिश्रं सूर्यतेजः-समप्रभं ॥ ६. म-रावणं पुरतः स्थितम् ॥ ७. म-व्यूढेन रथघोषेण प्राग्द्वारेण स निर्ययौ ॥ ८. रा$_1$ल$_1$ल$_2$ब अ म-जघ्नुः । ९. रा$_2$-भीमरूपा । १०. प्र-नास्ति ॥ ११. प्र रा$_2$म-नास्ति ॥ १२. रा$_2$-राजताम् । १३. ल$_1$ल$_2$ब अ-विहतैः ॥ १४. अ-घोरं ॥ १५. म-नास्ति ।

३८] अन्योऽन्यम् अभिसं-रब्धा ग्रहाश् च न चकाशिरे[1] ॥३६॥ [३७
३९पू] प्र-यातस्य च सं-ग्रामे छायां[2]ऽस्य वि-कृताऽभवत् ।
४१उ] अश्रु-पूर्ण-मुखश् चाऽस्य दक्षिणः स्खलितो हयः ॥३७॥ [N
३९उ] सारथेर् बहुधा चाऽस्य पृतनाम् अव-गाहतः ।
प्र-तोदो न्य्-अपतद् धस्ताद् धरण्यां हय[3]-शासिनः ॥३८॥ [४०
४०] निर्याण-श्रीश् च तस्याऽऽसीद् भास्वरा या सु-दुर्लभा[4] ।
४१पू] सा ननाश मुहूर्तेन समे च स्खलिता हयाः ॥३९॥ [४१
तान् सम्-ईक्ष्य महोत्पातान् प्र-हस्तो भृश-दारुणान् ।
४२] आत्म-धैर्यं वि-वृण्वानो राक्षसान् इत्य् उवाच ह ॥४०॥ [N
कालो भवेयं कालस्य दहेयम् अपि पावकम् ।
४३] मृत्युं मरण-धर्मेण सं-योजयितुम् उत्-सहे ॥४१॥[4] [N
तस्य तद् वचनं श्रुत्वा प्र-हस्तस्य रणाऽजिरे ।
४४] सुसंरब्ध-तरा नेदुः[5] राक्षसा युद्ध-दुर्मदाः[6] ॥४२॥ [N
ततस् तम् अभिनिर्-यातं प्रभूत-बल-पौरुषम् ।
४५] युधि नाना-प्रहरणा कपि-सेनाऽभ्य्-अवर्तत ॥४३॥ [४२
अथ घोषः सु-तुमुलः कपीनां सम्-अजायत ।
४६] वृक्षान् प्र-भजतां चैव गुर्वीश् चोद्-यच्छतां शिलाः ॥४४॥ [४३
उभे ते मुदिते सेने रक्षोगण-वनौकसाम् । [४४उ
४७] वेगितानां सम्-अर्थानाम् अन्योऽन्यं वध-काङ्क्षिणाम् ॥४५॥ [४५पू
ततः प्र-हस्तः कपि-वाहिनीं ताम्
अभिप्र-तस्थे नि-धनाय दुर्-मतिः ।
विवृद्ध-वेगं वन-दाह-दारुणं[8]
N] यथा मुमूर्षुः शलभो विभा-वसुम् ॥४६॥ [४६

इत्यार्षे रामायणे युद्ध-काण्डे प्रहस्त-निर्याणं नाम त्रयस्त्रिंशः सर्गः ॥३३॥

१. म-नास्ति ॥ २. रा$_1$ल$_1$ल$_2$ब अ प्र रा$_2$ फ-छाया च ॥ ३. म-हरिशासिनः ॥ ४. म-नास्ति ॥ ५. म-चासन् । ६. प्र रा$_2$फ म-युद्धकांक्षिणः ॥ ७. रा$_2$ फ म-तु ॥ ८. म-विशुद्धवेगं विनदन्सुदारुणं ॥ ९. ब प्र रा$_2$-लंकाकाण्डे । म-युद्धपर्वणि ॥

ततः प्र-हस्तं निर्-यान्तं भीमं भीम-पराऽऽक्रमम् । [१पू
१] गर्जन्तं सु-महाकायं राक्षसैर् अभिसं-वृतम् ॥१॥ [५उ
ददर्श महती सेना वानराणां बलीयसाम् ।
२] अभिसंजात-हर्षाणां प्र-हस्तम् अभि-गर्जताम् ॥२॥ [६
खड्ग-शक्त्यृष्टि-बाणाश् च शूलानि मुसलानि च ।
३] गदाश् च परि-घाश् चैव वि-विधाश् च परश्वं-धाः ॥३॥ [७
धनूंषि च वि-चित्राणि राक्षसानां जयैषिणाम् ।
४] प्र-गृहीतान्य् अशोभन्त वानरान् अभि-धावताम् ॥४॥ [८
जगृहुः पाद-पांश् चैवं पुष्पितान् वानरर्षभाः ।
५] शिलाश् च वि-विधा दीर्घा योद्धु-कामाः प्लवं-गमाः ॥५॥ [९
तेषाम् अन्योऽन्यम् आ-साद्य सं-ग्रामः सु-महान् अभूत् ।
६] बहूनाम् अस्म (?श्म)-वृष्टीश् च शर-वृष्टीश् च वर्षताम् ॥६॥ [१०
बहवो राक्षसा युद्धे बहून् वानर-यूथपान् ।
७] वानराश् चाऽपि रक्षांसि नि-जघ्नुश् चपलान् बहून् ॥७॥ [११
शूलैः प्र-मथिताः के-चिद् वानराः परमाऽऽयुधैः ।
८] परि-घैर् आ-हताः के-चित् के-चिच् छिन्नाः परश्व-धैः ॥८॥ [१२
निर्-उच्छ्वासाः कृताः के-चिन् नि-पेतुर् धरणी-तले ।
९] विभिन्न-शिरसः के-चिद् इषुभिश् छादितांस् तथा ॥९॥ [१३
के-चिद् द्वि-धा कृताः खड्गैः स्फुरन्तः पतिता भुवि ।

१. रा₂-बहुभिर्वृतम् ॥ २. अ-नास्ति ॥ ३. रा₂ फ-प्रतिधा० ॥ ४. रा₁ ल₁ ल₂ ब अ प्र-अस्त्रवृष्टीश् ॥ ५. अ प्र-वानरांश् ॥ ६. म-नास्ति । ७. रा₁ ल₁ ल₂ ब अ-परिघेन ॥ ८. प्र रा₂ फ-०छ्वासाः पुनः । म-नास्ति । ९. ल₁ ल₂ ब-अभिन्नशि० । १०. रा₂ फ-चार्दितास् ॥ ११. फ-कृतैस् । १२. ल₁ ल₂ ब अ प्र रा₂-तीक्ष्णैः । १३ रा₁ ल₁ ल₂ ब अ प्र-पुरतः ।

१०] वानरा राक्षसैः[1] शूरैः(?लैः) पार्श्व-तश् च वि-दारिताः[2] ।१०।[१४
पाद-पैर् गिरि-शृङ्गैश् च सं-पिष्टा धरणी-तले ।
११] वानरैश् चाऽपि सं-क्रुद्धै राक्षसौघाः समन्त-तः ॥११॥ [१५
वज्र-स्पर्शैस् तलैश्[3] चाऽन्ये मुष्टिभिश् च हता[4] भृशम् ।
१२] वेमुश्[5] चँ शोणितं वक्त्रैर् विशीर्ण-दर्शन[6]-च्छदाः ॥१२॥ [१६
आर्त-स्वरं[7] च नर्दतां[8] सिंह-नादांश् च गर्जताम् ।
१३] बभूव तुमुलः शब्दो हरीणां रक्षसां तथा[9] ॥१३॥ [१७
वानरा राक्षसाश् चैव वीर-मार्गम् अनु-व्रताः ।[10]
१४] निवृत्त-नयनाश् चक्रुः क्रुद्धाः कर्माण्य् अभीत-वत् ॥१४॥ [१८
१५उ] करं-धमः कुम्भ-हनुर् महा-नादः समुन्-नदः ।
एते प्रहस्त-सचिवा जघ्नुः सर्वान् वनौकसः ॥१५॥ [१९
१६] तेषाम् आ-पततां क्षिप्रं नि-घ्नतां च वनौकसः[11] ।[12]
द्वि-विदो गिरि-शृङ्गेण[13] जघानैकं करं-धमम् ॥ १६॥ [२०
१७] दुर्-मुखः पुनर् आ-धूय बल[14]-वान् वि-पुलं द्रुमम् ।
अ-परोक्षं प्र-हस्तस्य समुन्-नदम् अपोथयत् ॥१७॥ [२१
१८] जाम्ब-वांस् तु सु-संरब्ध[15] उत्था[16] (दु-स्था)प्य वि-पुलां शिलाम् ।
अपातयन् महा-तेजा महा-नादस्य वक्षसि ॥१८॥ [२२
१९] अथ कुम्भ-हनोस् तारस् तरसा सं-युगे बली ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-राक्षसाश्चैव । रा$_2$ फ-०सैश्चैव । २. रा$_1$ ल$_1$ल$_2$ब अ-बहुधारवि० । प्र-बहुधा च वि० । रा$_1$म-०तश्चावदारिताः ॥ ३. ल$_2$-तुल्यैश् । ४. प्र म- चाहता । ५. प्र-ववमुः । रा$_2$ फ-अवमन् । म-उद्वमुः । ६. प्र रा$_2$ फ म-०दशनेक्षणाः ॥ ७. ल$_2$-अन्तस्वरं । रा$_2$ फ-आर्तस्वनं । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-नदताम् । ९. प्र रा$_2$ फ-तदा ॥ १०. अतः परमधिकः पाठः—रा$_2$-एतस्मिन्नन्तरे शूराः प्रहस्तस्य पदानुगाः ॥ ११. प्र-०कसाम् । १२. फ म-नास्ति । १३. रा$_1$ अ-गिरिदुर्गेण । ल$_1$ ल$_2$ ब-गिरिमार्गेण ॥ १४. रा$_2$ फ-बलाद्वि वि० । म-बलात्सुविधमं । १५. म-सुसंक्रुद्धः । १६. रा$_2$ फ म-उत्पाट्य ॥

वृक्षेण महता प्राणान् कपिस् तस्य समा-ददे ॥१९॥ [२३
२०] अ-मृष्यमाणस् तत् कर्म प्र-हस्तो रथम्[1] आ-स्थितः ।
२१पू] चकार कदनं घोरं धनुष्-पाणिर् वनौकसाम्[2] ॥२०॥ [२४
२२पू] क्षुभितस्याऽप्रमेयस्य सागरस्येव सं-प्लवैः[3] ।[2]
२१उ] आ-वर्त उपसं जज्ञे बलस्य महतो[4] महार्न्[4] ॥२१॥ [२५
२२उ] महताऽपि शरौघेण प्र-हस्तो युद्ध-कोविदः ।
अर्दयामास सं-क्रुद्धो वानरान् परमाँऽऽहवे[5] ॥२२॥ [२६
२३] वानराणां शरीरैस्[6] तै राक्षसानां च मेदिनी ।
बभूव नि-चिता तत्र पर्वतैर् इव सर्व-तः ॥२३॥ [२७
२४] सा मही रुधिरौघेण प्र-च्छन्ना स्म प्र-काशते ।
२५पू] सं-च्छन्ना माधवे मासि पलाशैर् इव पुष्पितैः ॥२४॥ [२८
हत-वीरौघ-वप्रां तु भग्नाऽऽयुध-परिच्छदाम् ।
N] शोणितौघ-महातोयां यम-सागर-वाहिनीम्[7] ॥२५॥ [२९
शर्कृद्[8]-घन-महापङ्कां विनिष्कीर्णाऽन्त्रै[9]-शैवलाम् ।
N] छिन्न-कायं[10]-शिरो-मीनाम् अङ्गाऽवयव-शाद्वलाम् ॥२६॥ [३०
गृध्र-हंस-वटा(?का)ऽऽकीर्णां कङ्क-सारस-नादिताम्[11] ।
N] मेदः-फेन-चयाऽऽकीर्णां मूर्त[12]-स्तनित-निःस्वनाम् ।२७।
तां कापुरुष-दुस्तारां युद्धभूमि-महानदीम् । [३१
नदीम् इव जलाऽऽपातां[13] हंस-सारस-सेविताम् ।
N] राक्षसाः कपि-वीरांश्[15] च तां[16] तेरुर् दुस्-तरां नदीम्[16] २८ [३२

---

१. म-रथिनां वरः । २. म-नास्ति ॥ ३. फ-सम्भवः । ४. म-०तोभवत् ॥ ५. म-स महाहवे ॥ ६. रा१ ल१ ल२ ब अ प्र-शरीरेषु । म-शरीरैश्च । ७. रा२ म-०रगामिनीम् ॥ ८. फ-यकृद्घन० । म-शोणितौघम० । ९. म-०र्णाङ्गशाद्वलाम् । १०. रा१ल१ल२ब-छिन्नछायाशिरो० ॥ ११. रा२-०ससेविताम् ॥ १२. रा१ ब अ प्र फ-मत्त० ॥ १३ ल१ ल२ ब अ रा२ फ प्र-जलापाये । १४. म-नास्ति । १५. रा१-कपियूथाश् । प्र रा२ फ-कपियोधाश् । १६. रा१-ते सर्वे दुस्तरां तदा ॥

यथा पद्म-रजो-ध्वस्तां नलिनीं[1] गज-यूथपाः । [३३
N] व्य्-अगाहन्त तथा[2] वीरा हरि-राक्षस-पुङ्गवाः ॥२९॥ [N
२५उ] ततः सृजन्तं बाणौघान् प्र-हस्तं स्यन्दने स्थितम् ।
ददर्श तरसा नीलो विनि-घ्नन्तं[3] प्लवं-गमान् ॥३०॥ [३४
२६] ततः परम-दुर्धर्षम् आ-पतन्तं महा-कपिः ।
प्र-हस्तं ताडयामास वृक्षम् उत्-पाट्य वीर्य-वान्[4] ॥३१॥ [३८उ
२७] स तेनाऽभि-हतः क्रुद्धो[5] नदन् राक्षस-पुङ्गवः ।
ववर्ष शर-वर्षाणि प्लवङ्गम-चमूपतौ ॥३२॥ [३९
२८] तद् यथा गो-वृषो वर्षं शारदं शीघ्रम् आ-गतम् । [४१पू
अ-पारयन्[6] वारयितुं कृत्वा चक्षुर्-निमीलितम् ॥३३॥ [४०उ
२९] एवम् एव प्र-हस्तस्य शर-वर्षं प्लवं-गमः ।
निमीलिताऽक्षः सहसा नीलः[7] सेहे ऽति-दारुणम् ॥३४॥ [४१उ
३०] रोषितः शर-वर्षेण सालेन[8] महता ततः ।
नि-जघान हयान् नीलः प्र-हस्तस्य महा-जवान्[9] ॥३५॥ [४२
३१] स[10] हस्ताद् बाणम् उत्-सृज्य प्र-हस्तः स-शराऽऽसनम्[11] ।
प्र-गृह्य मुसलं[12] घोरं स्यन्दनाद्[13] अव-पुप्लुवे ॥३६॥ [४४
३२] ततस् तौ वाहिनी-मुख्यौ जात-क्रोधौ तरस्विनौ ।
तस्थतुः क्षतजाऽऽर्द्राऽङ्गौ[14] प्र-भिन्नाव् इव कुञ्जरौ ॥३७॥ [४५
३३] ततक्षतुः[15] सु-तीक्ष्णाभिर् दंष्ट्राभिर् इतरेतरम् ।

---

१. रा$_1$-नलिनी नाम यू० । २. रा$_2$-महावीरा हरयो (?रीन्) राक्षसेश्वराः ॥ ३. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-निघ्नन्तं वै ॥ ४. म-पाणिना ॥ ५. रा$_1$ म-क्रोधात् ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-अवारयद्वंचयितुं । रा$_2$ फ म-०यन्वर्जयितुं ॥ ७. रा$_1$-नीलोऽसहत दा० ॥ ८. रा$_1$-सालमुत्पाट्य वीर्यवान् । ९. रा$_1$-मनोजवान् ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-स्वहस्ताद् बा० । रा$_2$-सहसा बा० । ११. रा$_1$-०सनः । १२. फ म-मुद्गरं । १३. ल$_1$ ब-स्यन्दनं चैव पु० ॥ १४. ल$_1$ ल$_2$ ब अ प्र-०जाक्रान्तौ । रा$_2$ फ-०जाक्ताङ्गौ । म-क्षतरक्ताङ्गौ ॥ १५. रा$_1$ रा$_2$ फ म-उल्लिखन्तौ ।

सिंह-शार्दूल-सदृशौ   सिंह-शार्दूल-विक्रमौ ॥३८॥ [४६

३४] तौ[1] समानाव् उभौ[1] वीरौ सं-युगेष्व्[2] अ[2]-निवर्तिनौ ।

आ-काङ्क्षन्तौ यशः प्राऽऽप्तुं वृत्रेन्द्राव् इव सं-युगे॥३९॥ [४७

३५] आ-जघान ततो नीलं ललाटे मुसलेन सः ।

प्र-हस्तः परमाऽऽयस्तस् तस्य सुस्राव शोणितम् ॥४०॥ [४८

३६] ततः शोणित-संसिक्तः[3] स गृहीत्वा महा[3]-तरुम् ।

प्र-हस्तस्योरसि क्रुद्धो वि-ससर्ज महा-कपिः ॥४१॥ [४९

३७] प्र[4]-हारं तम् अ-चिन्त्याऽर्थं[4] प्र-गृह्य मुसलं महत्[5] ।

अभि-दुद्राव बलिनं बली नीलं प्लवं-गमम् ॥४२॥ [५०

३८] तम् उग्र-वेगं[6] सं-रब्धम् आ-पतन्तं महा-कपिः ।

नीलः सम्प्रेक्ष्य जग्राह महा-कायो महा-शिलाम्॥४३॥ [५१

३९] तस्य युद्धाऽभिकामस्य मृधे मुसल-योधिनः[7] ।

प्र-हस्तस्य शिलां नीलो मूर्ध्नि शीघ्रम्[8] अपातयत् ॥४४॥ [५२

४०] सा तस्य[9] कपि-मुख्येन वि-मुक्ता महती शिला ।[9]

[9]बिभेद बहु-धा घोरा[10] प्र-हस्तस्य शिरो महत् ॥४५॥ [५३

४१] स गताऽसुर् गत-श्रीको गत-सत्त्वो गतेन्द्रियः ।

पपात सहसा भूमौ छिन्न-मूल इव द्रुमः ॥४६॥ [५४

४२] विभिन्न-शिरसस् तस्य बहु सुस्राव शोणितम् ।

शरीराद्[11][12] अतिसं[12]-रब्धं जलं प्र-स्रवणाद् इव ॥४७॥ [५५

४३] हते प्र-हस्ते नीलेन तत्राऽऽकम्प्य[13] महद्[13] बलम् ।

राक्षसानाम् अ-हृष्टानां लङ्काम् अभि-पपात ह ॥४८॥ [५६

---

१. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ म-विक्रान्तौ समरे । २. ल$_1$ ल$_2$ ब-संग्रामेष्वनि० । रा$_2$-संयुगेष्वतिव० । म-संयुगेप्यनि० ॥ ३. रा$_1$-०संदिग्धः प्रगृह्य सुमहा० ॥ ४. रा$_1$-तमचिन्त्य प्रहारं तु । ५. रा$_1$-पुनः ॥ ६. ल$_1$ ल$_2$ ब ञ-उग्रवीर्यं ॥ ७. रा$_1$-तूर्णम्। प्र-नीलो। रा$_2$फ-चैव। ८. प्र रा$_2$फ-न्यपात०। ९. म-नास्ति॥ १०. रा$_1$-तेन ॥ ११. फ-शरीरम् । १२. रा$_1$ प्र रा$_2$फ म-अभिसं० ॥ १३. रा$_1$-तदकम्पन्स० । ल$_1$ ल$_2$ ब ञ-तत्राकम्पत तद् ॥

४४] अ-शक्तं[1] सं[2]मभि-स्थातुं नि-हते वाहिनी-पतौ ।
कुम्भं भग्नं समा-साद्य वि[3]-कीर्णं सलिलं यथा ॥[4]४९॥ [५७
हते तस्मिंश् चमू-मुख्ये न कश्-चित् पुरुषोऽभवत् ।
४५] तस्मिन् रक्षो-गण[5]-बले ध्यान-मूकत्वम् आ-गते ॥५०॥ [५८
तत[6]ः स[7] नीलो वि-जयी महा-बलः
प्र-शस्यमानः स्व-कृतेन कर्मणा ।
समेत्य रामेण च[8] ल[8]क्ष्मणेन
N] प्रहृष्ट-रूपोऽथ बभूव यूथ-पः ॥५१॥ [५९

इत्यार्षे रामायणे युद्ध-काण्डे प्रहस्त-वधो नाम चतुस्त्रिंशः सर्गः ॥३४॥

---

[वं-३३]= [पञ्चत्रिंशः सर्गः] =[दा-५९, प्रक्षिप्त-१

तस्मिन् हते राक्षस-सैन्य[10]-नाथे
प्लवं-गमानाम् ऋषभेण युद्धे ।
भीमाऽऽयुधं सा[11]गर-तुल्य-रूपं
N] प्र-दुद्रुवे[11] राक्षस-राज-सैन्यम् ॥१॥ [५९,१
ग[12]त्वा तु नीलेन हतं श[13]शंसुः
सेना-पतिं साऽनुब[14]न्धं प्र-हस्तम् ।

---

१. रा$_1$-अशक्ताः । प्र रा$_2$ फ-अशक्यं । २. रा$_1$-समरे स्थातुं । रा$_2$ फ-समवस्थातुं । म-समभिप्राप्तं । ३. रा$_1$-प्रकीर्णं । ४. म-नास्ति ॥ ५. रा$_1$-रक्षोबलगते ॥ ६. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-ततस्तु । ७. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-सल० ॥ ८. फ-नास्ति । ९. म-युद्धपर्वणि ॥ १०. ल$_1$ ल$_2$ ब प्र-०सैन्यराजे । अ-०सराजसैन्ये । ११. म-नास्ति ॥ १२. म-यदा । १३. म-तु युद्धे । १४. रा$_2$-सानुचरं ।

तच्[1] चाऽपि तेषां स नि-शम्य वाक्यं
N] रक्षोऽधिपः क्रोध-वशं[2] जगाम ॥२॥ [२
सं[3]-भ्रातरं नील-हतं नि-शम्य
शोकाऽर्दितः क्रोध[4]-विवृत्त-नेत्रः ।
उवाच तान् नैरृत-योध-मुख्यान्
N] इन्द्रो यथैवाऽमर-योध-मुख्यान्[5] ॥३॥ [३
प्र-हस्तस्य वधं श्रुत्वा रावणो भ्रान्त-मानसः ।
१] राक्षसान् आ-दिदेशाऽथ राक्षसेन्द्रो महा-बलः ॥४॥ [प्र०१
कार्या[6] शत्रुषु नाऽव-ज्ञा[7] यैर् इन्द्र-बल-सूदनः ।
२] सूदितः सैन्य-पालो मे साऽनुयात्रः स[8]-बान्धवः ॥५॥ [२
३उ] सोऽहं रिपु-विनाशाय स्व-बलस्य[9] च वृद्धये ।
४उ] स्वयम् एव गमिष्यामि रण-शीर्षम् अभि-त्वरन्[10] ॥६॥ [३
अद्यैतद्[11] वानराऽनीकं सह रामं स-लक्ष्मणम् ।
५] निर्-दहिष्यामि[12] बाणौघैः शुष्कं वनम्[13] इवाऽनलः ॥७॥ [४
अद्य सं-तर्पयिष्यामि पृथिवीं कपि-शोणितैः ।
६] रामं स-लक्ष्मणं[14] चैव प्रेषयिष्ये यम-क्षयम्[15] ॥८॥ [५
एवम् उक्त्वा महा-तेजा रावणो राक्षसेश्वरः[16] ।
७] आऽगच्छत् सहसा क्रुद्धः सर्व-सैन्येन सं-वृतः ॥९॥[17] [६

१. ल१ ल२ ब अ प्र रा२ फ-तथाहि । २. ल१ ल२ ब अ-०वशो बभूव ॥ ३. रा१-तं भ्रा० । ४. रा१-क्रोधवशाभिभूतः । ५. रा१-०योधवीरान् ॥ ६. ल१ ल२ ब अ प्र-कुर्याच्छत्रुषु नावज्ञां । ७. रा१-अत आरभ्य ९ मश्लोकं यावत्पाठः सप्तत्रिंशसर्गादावपि पुनः पठितः । ८. रा२ म-सकुंजरः । ९. रा१ म-विजयस्य । १०. म-नास्ति ॥ ११. रा१-अहं तद् । १२. रा१-प्रधक्ष्याम्यद्य । ल१ ल२ ब अ प्र-निहनिष्यामि । १३. रा१-शुष्केन्धनम् ॥ १४. ल१ ल२ ब प्र रा२ फ म-च ल० । १५. प्र-यमालयम् ॥ १६. रा१ म-लोकरावणः । १७. अतः परमधिकः पाठः—ल१ ल२ ब अ प्र रा२ फ-कुम्भकर्णवचः श्रुत्वा रावणो लोकरावणः । गन्तुमैच्छदतिक्रुद्धः सर्वसैन्येन संवृतः ॥ म-अस्माच्छ्लोकादारभ्य सर्गसमाप्तिं यावन्नास्ति ।

सं-ग्रामम् अभि-काङ्क्षन्तं श्रुत्वा[1] तं राक्षसेश्वरम्[1] ।
८] तत्रोत्था(द्-स्था)य ययौ[2] देवी शीघ्रं[3] मन्दोदरी तदा[4] ॥१०॥ [७
माल्य-वन्तं करे गृह्य यूपाऽक्ष-सहिता तथा ।
९] मन्त्रिभिर् मन्त्र-तत्त्व-ज्ञैस् तथाऽन्यैर् मन्त्रि-सत्तमैः ॥११॥ [८
राक्षसैर् आ-वृता सर्वैर् वेत्र-मुद्गर-पाणिभिः ।
१०] योषिद्भिश् चैव वृद्धाभिस् तथा कन्याभिर् आ-वृता ॥१२॥ [९
आयुध-व्यग्र-हस्तैश् च राक्षसैश् च समन्त-तः ।
११] सभां तु प्र-स्थिता देवी यत्राऽऽस्ते राक्षसाऽधिपः ॥१३॥ [१०
छत्रेण ध्रियमाणेन अतिकाय-पुरःसरैः ? ।
१२] चामरैर् वीज्यमानैः सा स्वति-मात्रम् अलं-कृता[5] ॥१४॥ [११
सा[6] राज-मार्गे वि-पुले[6] ध्वजमालोपशोभिते[7] ।
१३] उत्-सारणं प्र-कुर्वद्भिर् वेत्र-मुद्गर-पाणिभिः ॥१५॥ [१२
प्र-विष्टा च सभां दिव्यां प्र-भया द्योतमानया ।
१४] द्रष्टुं[8] वै रावणं सा तु[8] मयस्य दुहिता तदा[8] ॥१६॥ [१३
प्राऽऽप्तां[9] देवीं ततो राजा प्रियां मन्दोदरीं तदा ।
१५] दृष्ट्वा स-संभ्रमस् तूर्णं[10] परि-ष्वज्य दशाऽऽननः ॥१७॥ [१४
मन्त्रिणां तु ततस् तेषाम् आसनान्य् आ-दिदेश ह ।
N] सौवर्णानि वि-चित्राणि सोपधानानि सर्व-शः ॥१८॥ [१५
तेष्व्[11] आसनोपविष्टेसु[11] प्रणामा[12]ऽन्ते च मन्त्रिषु[12] ।

---

१. रा$_1$ प्र रा$_2$ फ-रावणं श्रुत्य भाविनी । २. रा$_2$-ततो । ३. रा$_1$ प्र रा$_2$ फ-नाम्ना । ४. रा$_2$ फ-तथा ॥ ५. रा$_1$-चामरैर्वैश्मरामाभिर्वीज्यमाना स्वलंकृता ॥ ६. प्र फ-सेनार्थं मार्गविपुलं । ७. ल$_1$ ल$_2$ ब श्र प्र रा$_2$ फ-०शोभितं ॥ ८. ल$_1$ ल$_2$ ब श्र प्र-तमपश्यद्गन्तुमुद्यतम् ॥ ९. ल$_1$ ल$_2$ ब श्र-तु तां । १०. रा$_1$-सा (?तां) स्नेहसम्पूर्णं(?र्णां) ॥ ११. ल$_1$ ल$_2$ ब श्र प्र-स्वासनेषूपवि० । १२. रा$_1$ प्र रा$_2$ फ-०मान्तेषु मं० । ल$_1$-नास्ति ।

N] पर्यङ्के तूऽप-विष्टाऽथ देवी[1] मन्दोदरी तथा ॥१९॥ [१६
N] अति-कायो महा-बाहुः पितरं चाऽभि-वाद्य तम् ।
मातरं चाऽभि-वाद्याऽथ तदा[2]ऽऽसन-गतोऽभवत् ॥२०॥ [१७
१६] प्रहस्त[3]-वध-सन्तप्तो महाकायवधाऽर्दितः ।
लङ्कायाश् चाऽव-मर्दैन कषायी-कृत-लोचनः ॥२१॥ [१८
१७] सं-ग्रामम् अभि-काङ्क्षन् वै[4] व्या-कुलेनाऽन्तर्-आत्मना ।
अब्रवीद् वि-विधं वाक्यं[5] महा-गम्भीर-निस्वनः ॥२२॥ [१९
१८] किम्[6] आगमनं-कृत्यं ते[7] देवि शीघ्रं[8] तद् उच्यताम् ।
तूर्णं मम समीपं तु किम्-अर्थं त्वम् इहाऽऽगता ।
१९] मन्त्रिभिः स-हिता किं नु[9] ब्रूहि साध्वि[10] यथा-तथम् ॥२३॥ [२०
एवम् उक्ते तु वचने देवी वचनम् अब्रवीत् ।
२०] वि-ज्ञाप्यं शृणु राजेन्द्र याचे त्वां[10]ऽहं कृताऽञ्जलिः । [२१
नाऽप-राधश् च कर्तव्यो वदन्त्या मम मान-द ॥२४॥ [२२पू
२१] श्रुता मे नगरी रुद्धा श्रुता मे राक्षसा हताः ।
धूम्राऽक्ष-सहिता वीराः प्रहस्त-सहितास्[11] तथा ॥२५॥ [२३
२२] भवान्[12] वै युद्ध-कामश् च[12] निर्-गन्तुं कृत-निश्चयः[13] ।
इति जानीहि[14] राजेन्द्र ममाऽऽगमन-कारणम् ॥२६॥ [२४
२३] न[15] च युक्तं प्रमुख-तः स्थातुं तस्य महाऽऽत्मनः ।
रामस्य सु-महाभाग यस्य भार्या हृता त्वया ।[1]
२४] लक्ष्मणस्य च सौमित्रेर् यस्य नास्ति समो युधि[16] ॥२७॥ [२५

---

१. ल१ ल२ ब अ-तदा ॥ २. ल१ ल२ ब अ-तथास० ॥ ३. रा१-०वधसंत्रस्तो । प्र-प्रहस्तादधिसंतप्तो ॥ ४. रा१-सोथ । ल१ ल२ ब अ रा२ फ-चैव ॥ ५. फ-केनाग० । ६. ल१ ल२ ब अ-तु । ७. रा१-कार्यं देवि । ८. रा१ ल१ अ प्र रा२ फ-तु । ९. रा१-सांत्वं ॥ १०. रा१-त्वां हि । रा२-चाहं ॥ ११. रा१ प्र रा२ फ-प्रहस्तेन सहैव तु ॥ १२. रा१-भवंतं युद्धकामं तु । १३. रा१-०निश्चयं । १४. रा१-निश्चित्य । रा२-संचिन्त्य ॥ १५. रा२-नन्वयुक्तं । १६. ल१ ल२ ब अ प्र-नास्ति ॥

न च मानुष-मात्रोऽसौ रामो दशरथाऽऽत्मजः ।
२५] एकेन येन वै पूर्वं बहवो राक्षसा हताः ॥२८॥
चतुर्दश-सहस्राणि जनस्थान-निवासिनाम् । [२६
२६] खरश् च नि-हतः सं-ख्ये [1]तदा रामो न मानुषः ॥२९॥ [२७पू
त्रि-शिराश् च कबन्धश् च वि-राधो दण्डके वने ।
२७] शरेणैकेन [2]वाली [2]च तदा रामो न मानुषः ।
शङ्के चैनं महा-[3]राजँ मारीचस्य वधात् [4]तथा ॥३०॥ [२८
२८] पितुश् च वचनाद् रामः प्र-विष्टो दण्डकं वनम् ।
ब्रह्मचर्य-व्रते युक्तः सह भ्रात्रा वने-चरः ॥३१॥ [२९
२९] तस्य भार्या जन-स्थानात् किम् आ-नीता पति-व्रता ।
अ-कारणं कृतं तत् ते [5]दोषाय समुप-[5]स्थितम् । [३०
३०] पतिव्रताऽवरो[6]धश् [6]च [7]दोषम् आ-वहते [7]महत् ॥३२॥
न मह्यं रोचते बुद्ध्या [8]न चैषां मन्त्रिणां तथा । [३१
३१] राम-भार्या सती [9]ह्य् [9]एषा रामाय [10]प्रति-दीयताम् ॥३३॥
वि-भीषणेन [11]वै [11]चोक्तं पूर्वम् एव महाऽऽत्मना । [३२
३२] गतस् तत्रैव [12]हित्वा त्वां तत्-[12]सौहार्द्यं करिष्यति ॥३४॥
वस्त्राणि चैव रत्नानि प्रेषयाम रघूऽत्तमे । [३३
३३] सीतां चैव महा-राज सु-वर्णं वाहनानि च ॥३५॥
मणि-मुक्ता-प्रवालं च तथा रजतम् एव च । [३४

---

१. ल$_{१}$ ल$_{२}$ ब अ-सोयं ॥ २. ल$_{१}$ ल$_{२}$ ब अ प्र-मारीचस् । ३. रा$_{१}$-च राजेन्द्र । फ-महाबाहो । ४. ल$_{१}$ ल$_{२}$ ब अ प्र रा$_{२}$ फ-तदा ॥ ५. ल$_{१}$ ल$_{२}$ ब अ प्र-दोषोयं समुपस्थितः । ६. रा$_{१}$-०रोधस्तु । ७. ल$_{१}$ ल$_{२}$ ब अ-महान्तं दोषमावहेत् ॥ ८. रा$_{१}$-एतेषां । प्र फ-नैतेषां । रा$_{२}$-न तेषां । ९. रा$_{१}$-या तु । १०. ब-प्रविधीयताम् ॥ ११. ल$_{१}$ ल$_{२}$ ब अ प्र रा$_{२}$ फ-चैवोक्तं । १२. ल$_{१}$ ल$_{२}$ ब अ प्र फ-रामश्च तद्वाचाऽयं । रा$_{२}$-रामस्य तद्व-चोऽयं ॥

३४] माल्य-वान् गृह्य सं-यातु यूपा[1]ऽक्षश् च[1] तथैव च ।
अति-कायस् तथा चाऽयं कार्याऽकार्य-विशारदः ॥३६॥ [३५
३५] वि-भीषणो गतः पूर्वम् एभिस् तत्र[2] गतैर्[2] ध्रुवम्[3] ।
सन्धिं करिष्यति व्यक्तं राघवं प्रणि-पत्य हि[4] ॥३७॥
३६] सं-मा[5]न्य मैथिलीं चाऽस्मै प्र-दास्यति वि-भीषणः । [३६
माल्य-वांश् च महा-का[6]यो राक्षसानां हिते रतः ॥३८॥
३७] राघवं याच्य शिरसा[7] सन्धिं कुर्वन्तु राक्षसाः । [३७
N] सान्त्वं भेदस् तथा दानं राज्ञाम् एतत् त्रयं शुभम् ॥३९॥
अ-शुभं[8] तु स्मृतं[8] युद्धं तस्माद् युद्धं वि-[9]वर्जयेत् ।
N] त्रिभिर् नयैर् जितं तत्र[10] वि-क्रमेण(?णा)जितं भवेत्[10] ॥४०॥ [३८
स्व-जनस्य क्षयं दृष्ट्वा[11] पुत्र-भ्रातृ-वधं तथा ।
३८] सं-शयं चाऽऽ[12]त्मनो[12] गत्वा किम्[13] एतेन[13] करिष्यसि ॥४१॥ [३९
चञ्चला युद्ध-सिद्धिस्[14] तु[14] जीयते[15] न च जीयते[15] ।
३९] तस्माद् युद्धं न रोचेत सन्धिं कुरु दशाऽऽनन ॥४२॥ [४०
प्रणि-पत्य महा-बाहो राघवं प्रति-नन्दय[16] ।
४०] दीयताम् अद्य सा सीता सन्धिस् ते[17] तेन[17] रोचताम् ॥४३॥ [४१
साम्प्रतं सं-शयो राजन्[18] पुरस्य सह बान्धवैः ।

---

१. प्र-सयूपाक्षस् ॥ २. ल₁ ल₂ ब अ प्र-तव गुणैर् । रा₂-तव गणैर् । ३. ल₁ ल₂-ब्रुवन् । फ-युतम् । ४. रा₁-ह । प्र-च । ५. ल₁ ल₂ ब अ प्र रा₂ फ-सामात्यो ॥ ६. ल₁ ल₂ ब अ-महामायो । ७. ल₁ ल₂ ब अ प्र रा₂ फ-तरसा ॥ ८. ल₁ ल₂ ब अ-असुखं तु स्मृतं । प्र-असुखं संस्मृतं । रा₂ फ-श्रुत्वाऽसुखं तु तत् । ९. ल₁ ल₂ ब अ प्र रा₂ फ-विवर्जय । १०. रा₁-मन्ये अजितं विक्रमेण तु ॥ ११. रा₁-कृत्वा । १२. रा₁-चात्मना । १३. ल₁ ल₂ ब अ प्र फ-किं जितेन । रा₂-किं चित्तेन ॥ १४. प्र-०सिद्धिर्हि । १५. रा₁ प्र रा₂ फ-हन्ति वा हन्यतेऽपि वा ॥ १६. ल₁ ल₂ ब अ रा₂-व प्रसाद्य च । प्र फ-प्रविशाम्य च । १७. ल₁ ल₂ ब अ प्र रा₂ फ-तेनेह ॥ १८. ल₁ ल₂ ब अ प्र-राज्ञः ।

४१] आत्मनो राक्षस-श्रेष्ठ वर्तते नाऽत्र सं-शयः ॥४४॥[1] [४२
मा कृथाः सर्व-नाशं तु मा कृथाः पुत्र-संक्षयम् ।
N] तव सत्यं[2] ब्रवीम्य् एषा कुरुष्व[3] वचनं मम ॥४५॥[1] [N
तस्माद्[3] राजन् ब्रवीम्य् एषा पुरस्य च कुलस्य च ।
४२] रक्षणीयस् त्वयाऽऽत्मा वै सर्वम् आत्मन्य् अधि-ष्ठितम् ४६ [४३
क्षमा-शीलस् तथा रामः सत्य-वादी च राघवः ।
४३] धर्म-नित्यो महा-राज शरणाऽऽगत-वत्सलः ॥४७॥ [४४
लक्ष्मणश् च महा-धन्वी[4] नित्यं भ्रातृ-हिते रतः ।
४४] कुरु तेनाऽहतः[5] सन्धिं रामे दशरथाऽऽत्मजे ॥४८॥ [४५
प्र-हस्तेन कृतं किं तु युध्यता राक्षसेश्वर[6] ।
४५] धूम्राऽक्षेण च राजेन्द्र नित्यं समर-गृध्रिणा ॥४९॥ [४६
महा-कायेन च तथा महा-मायेन रक्षसा ।
४६] अ-कम्पनेन वीरेण युध्यता राक्षसेश्वरः (?र) ॥५०॥ [४७
तथाऽन्यैर् युध्यमानैश् च किं कृतं वानरे बले ।
४७] न हतो यूथ-पः कश्-चिद् बलोद्देशेन[7] रावणः(?ण)॥५१॥ [४८
येषां वीर्याद् बिभेतीऽन्द्रः कुवेर-वरुणाव् अपि ।
४८] यमो वैवस्वतो येषां तथाऽन्ये देवता-गणाः । [४९
येषां नास्ति समो वीर्ये[8] ते हता वानरैर् युधि ॥५२॥
४९] न चाऽपि वानराः शक्या हन्तुं पादप-योधिनः । [५०
रक्ष्यमाणास्[9] तु रामेण सु-ग्रीवेण च पालिताः ॥५३॥
५०] तत्र[10] मे रोचते सन्धिः सह रामेण रावण । [५१
N] योग्यश् (?ग्यं) च राघवो मित्रं कार्तवीर्योऽर्जुनो यथा ॥५४॥

---

१. रा₁-नास्ति ॥ २. प्र रा₂ फ-सर्वं । ३. फ-नास्ति ॥ ४. रा₁-महाबाहुर् । ५. रा₁-तेनाहतः । ब-तेनाधृतः ॥ ६. रा₁-वानरे बले । रा₂ फ-राक्षसे बले ॥ ७. रा₁ ल₁ ल₂ ब अ प्र-बलोद्देशेपि ॥ ८. रा₁-वीरास् ॥ ९. रा₁ ल₁ ल₂ ब अ प्र रा₂ म-रक्षमाणास् ॥ १०. रा₂-अत्र ॥

N] मा कृथा मोघमानि-त्वं मा कृथाः कुल-संक्षयम् । [५२
मा कृथा गुरु-नाशं[1] तु[2] मा कृथाः पुत्र-संक्षयम् ।
५१] हितं[3] सर्वं ब्रवीम्य् एषा[4] कुरुष्व वचनं मम ॥५५॥ [५३

इत्यार्षे रामायणे युद्धे[5]-काण्डे मन्दोदरी-वाक्यं नाम पञ्चत्रिंशः सर्गः ॥३५॥

---

## [वं-३४]= [षट्त्रिंशः सर्गः] =[दा-प्रक्षिप्त-२]

तस्यास् तद्[6] वचनं श्रुत्वा प्रियाया राक्षसेश्वरः ।
१] दीर्घम् उष्णं च नि-श्वस्य निर्-ईक्ष्य[7] च सभा-सदः ।
हस्ते मन्दोदरीं गृह्य वाक्यम् एतद् उवाच ह ॥१॥[8] [१
२] त्वया[9] वै हित-काङ्क्षिण्या वचो यद् बहु भाषितम् ।
न तन् मनसि मे देवि प्र-विशा[10](?श)त्य् अ-प्रियं प्रिये ॥२॥ [२
३] देवान् जित्वा रणे पूर्वं ससुराऽसुरमान-वान् ।
प्र-णमे मानुषं कस्माद् वानरान्[11] यः समा-श्रितः[11] ॥३॥ [३
४] प्र-णम्य रामं काकुत्स्थं किं वक्ष्ये सर्व-देवताः ।
कीदृशं वा भवेन् मह्यं जीवितं हत-चेतसः(?से) ॥४॥[12] [४
५] हृत्वा तस्य पुरा भार्यां मानं कृत्वा सु-दारुणम् ।
राक्षसान् घातयित्वा तु लङ्कां सं-पीड्य सर्व-शः[13] ।

---

१. रा$_1$-पुनराशां । २. ल$_1$ ल$_2$ ब अ-च । ३. अ-सत्यं ब्रवीमि चैषा ते । प्र रा$_2$ फ-सर्वं ब्रवीमि चैषा ते । ४. ल$_1$ ल$_2$ ब-नास्ति ॥ ५. रा$_1$ ब प्र रा$_2$-लंकाकांडे ॥ ६. ल$_1$ ल$_2$ ब अ-तु । ७. ल$_1$ ल$_2$ ब अ-विलोक्य । ८. म-नास्त्ययं सर्गः ॥ ९. रा$_1$प्र रा$_2$फ-त्वयाहं । १०. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-यत्प्रोक्तोहं प्रियं ॥ ११. रा$_1$-वानरैर्यः समावृतः ॥ १२. रा$_1$-नास्ति ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ रा$_2$ फ-सर्वतः ।

६] राघवं प्र-णमे कस्माद् धीन-वीर्य इवाऽबलः[1] ।।५।। [५
राघवं प्र-णमित्वाऽहं[2] कथं जीवितुम् उत्-सहे ।
८] एष[3] मे सह-जो भावो[3] नित्यं मनस्य् अधि-ष्ठितः ।।६।। [६
अधि-रुह्य तदा देवि न नमेयं तु कस्य-चित् ।[4]
९] त्रैलोक्ये स पुमान् नाऽस्ति यो मया[5] न जितो रणे ।।७।। [७
देवतानां बलं हत्वा देव-राजो मया जितः ।
१०] राघवं प्र-णमे कस्मान् मूर्ध्नि स्थित्वा तु[6] देहिनाम् ।।८।। [८
मा कृथा हृदि सं-तापं वि-जयिष्ये[7] शुचि-स्मिते ।
११] हनिष्ये राघवं चैव लक्ष्मणं वानरांश् च तान् ।।९।। [९
सु-ग्रीवं च वधिष्यामि हनू-मन्तं च वानरम् ।
१२] न तु सन्धिं करिष्यामि राघवेण कदा-चन ।।१०।। [१०
वैदेहीं नोऽर्पयिष्यामि[9] राघवस्य भयाद् अहम् ।
१३] साम्प्रतं न[10] चैव सन्धिं तु करिष्यति स राघवः[11] ।।११।। [११
सागरं सेतुना बद्ध्वा[12] लङ्कां रुद्ध्वा स-काननाम् ।
१४] राक्षसा प्र-वरान् हत्वा सन्धिं कुर्यात् कथं प्रिये ।।१२।। [१२
न त्व् अहं सन्धिम् इच्छामि कदा-चिद् अपि भामिनि[13] ।
१५] गच्छ त्वं भव वि-स्रब्धा सर्वम् एतत्[14] सुखोदयम्[15] ।।१३।। [१३
मा कृथा हृदि सं-तापम् अहं यास्ये रणाऽजिरम्[16] ।

---

१. रा$_{1}$ ल$_{1}$ ब अ प्र फ-इवाचलः ॥ २. ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$ फ-वं प्रणम्याहं । ३. रा$_{1}$-यस्य रक्षःसहस्राणि ॥ ४. रा$_{1}$-अन्विष्यन्ति सदा देवि स नमेयं तु कस्य वै । ५. रा$_{1}$-प्रिये ॥ ६. ल$_{1}$ ल$_{2}$ ब अ प्र फ-कृत्ये स्थित्वा हिं । रा$_{2}$-कृते स्थितं तु ॥ ७. रा$_{1}$-राजिष्येहं । रा$_{2}$ फ-तं जयिष्ये ॥ ८. रा$_{1}$-सहेह तु । प्र रा$_{2}$ फ-सहैव तु ॥ ९. रा$_{1}$-निर्ययिष्यामि । १०. रा$_{1}$-नैव । ११. रा$_{2}$-करिष्यामि च राघवे ॥ १२. ल$_{1}$ ल$_{2}$ ब अ प्र-सुमहत्तीर्त्वा । रा$_{2}$-सुमहद्बद्ध्वा ॥ १३. रा$_{1}$-भाविनीं । १४. ल$_{1}$ ल$_{2}$ ब अ-भवेत् सर्वं । १५. रा$_{2}$-०दये ॥ १६. रा$_{1}$ रा$_{2}$ फ-०जिरे ।

१६] [1]अद्य सर्वान् हनिष्यामि शत्रून् समर-मूर्धनि ॥१४॥ [१४
पुत्राश् च ते महा-वीर्या मेघनाद-पुरोगमाः ।
१७] न तेषां [2]मुच्यते कश्-चिद् अपि मृत्युर् वराऽऽनने । [१५
अन्तः-[3]पुराय गच्छ त्वं सुखिनी भव स-स्नुषा ॥१५॥
१८] एवम् उक्त्वा परि-ष्वज्य भार्यां प्रीत-मना इव । [१६
प्र(?प्रा)[4]वेशयय(?त्त)दा देवी(?वीं)[5]स्व-कं तु भवनं शुभम् ॥१६॥
१९] चिन्तयामास [6]तं घो[6]रं वि-ग्रहं समुप-स्थितम् ।[7]
रावणस् तु ततो वाक्यं राक्षसान् इदम् अब्रवीत् ।[7] [१८
२०] कल्प्यतां मे रथः शीघ्रं क्षिप्रम् आ-नीयतां धनुः ॥१७॥
अद्य [8]क्रोधं वि-मोक्ष्[8]यामि नि-गूढं [9]हृदये स्थि[9]तम् । [१९
२१] देवाऽसुरे यथा पूर्वं रुद्रेण नि-हते[10]ऽन्धके[10] ।
२२उ] चिरकालेप्सितं ह्य् एतद् युद्धं मे राघवेण [11]हि ॥१८॥ [२०
अद्य तूणी-शया बाणा निर्-मुक्ता इव पन्न-गाः ।
२३] रामं समभि-[12]धावन्तु विषाऽग्नि-प्रतिमाः शि[13]ताः ॥१९॥ [२१
[14]सु-तेजनै रुक्म-[15]पुङ्खैस् तैल-धौतैर् हिरण्मयैः ।
२४] [16]शरैर् आ-दीपयाम्य् [16]एष मुक्ताभिर् इव कुञ्जरम् ॥२०॥ [२२

---

१. ल$_1$ ल$_2$ ब ञ प्र-अथ ॥ २. रा$_2$-मन्यते । ३. रा$_2$-अन्तःपुरे च ॥ ४. ल$_1$ ल$_2$ ब ञ-प्रविवेश च सा । रा$_2$-प्रविवेश तदा । ५. ल$_1$ ल$_2$ ब ञ-तदा स्वभवनं० । प्र-स्वयं स्वभ० । रा$_2$-स्वयं च भ० ॥ ६. रा$_2$-घोरं च । ७. फ-नास्ति । ८. रा$_2$-सर्वान् हनिष्यामि । ९. ल$_1$ ल$_2$ ब ञ प्र-हृदयोद्भवं । रा$_2$ फ-०येभवत् । १०. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ-निहतोंधकः । ११. ल$_1$ ल$_2$ ब ञ प्र फ-ह ॥ १२. रा$_1$-०भिवर्तन्तां । १३. रा$_1$-इव ॥ १४. रा$_1$-सुतेजितै । प्र रा$_2$ फ-सुतैजसै । १५. ल$_1$ ल$_2$ ब ञ-०पुंखैरतिधौतैर् । प्र-०पुंखैः शितधौतैर् । १६. ल$_1$ ल$_2$ ब ञ प्र फ-सागरं दीप० ॥

वानरान् सु-बहून् गृह्य रा[1]घवेण प्र-चोदि[1]तान् ।

N] ममाऽनु-गा हि वि-क्रान्ता मम पार्श्वम् उपाऽऽगताः[2]॥२१॥ [२३

इत्यार्षे रा[3]मायणे युद्धे[4]-काण्डे रावण-वाक्यं नाम षट्त्रिंशः सर्गः ॥३६॥

---

## [वं-३५,३६]= [ सप्तत्रिंशः सर्गः ] =[दा-५९]

स एवम् उक्त्वा तु विमान-रूपं

रथं तुरं-गैर् बहुभिः सु[5]-युक्तम् ।

प्र-[6]काशमानो वपुषा परेण

१] समा-रुरोहाऽमर-राज-शत्रुः[7] ॥१॥[8] [८

स-शङ्ख-भेरी-पटह-[9]प्रणादैर्

आस्फोटिताऽऽक्ष्वेडित-सिंहनादैः ।

पुण्यैः स्तवैश् चाऽप्य् अभि-पूज्यमानो

२] तदा ययौ राक्षस-राज-मुख्यः ॥२॥ [९

स शैल-जीमूत-निकाश-रूपैः

म[10]हा-बलैः पावक-दीप्त-नेत्रैः ।

---

१. ल$_1$ ल$_2$ ब अ प्र-राघवं संप्रवेशितान् । रा$_2$-राघवात्संप्रदेशितान् । फ-०ण संप्रदेशितान् । २. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ- मामनुस्मृत्य विक्रान्तान् रामपार्श्वमुपागतान् ॥ ३. रा$_2$ फ-नास्ति । ४. ब-लंकाकांडे ॥ ५. म-प्रयुक्तम् । ६. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-०मानं । ७. म-०राजतुल्यः । ८. अतः परमधिकः पाठः—रा$_1$-आरुह्य तं तूणशतैः समेतं दिव्यं तथा राक्षस-राजपुत्रैः । ययौ तदायोधनमुग्रवीर्यो वेगेन रोषस्य बलेन चैव ॥ तमेव वीरं समुदीर्णमन्युं निशाचरेन्द्रं सुविवृद्धकोपम् । तदानुजग्मुर् गिरिराज-कल्पा रक्षोगणाः संयुगजातहर्षाः ॥ ९. प्र-०पटहनिनादैर् ॥ १०. रा$_1$-मांसाशनैः । म-महास्वरैः ।

बलैर् वृतो राक्षस-योध-वीरैर्[1]
३] भूतैर् वृतो रुद्र इवाSमरेशः ॥३॥ [१०
ततो नगर्याः सहसा महौजा
निष्-क्रम्य तद् वानर-सैन्यम् उग्रम् ।
महाSर्णवाSम्भः-स्तिमितं ददर्श
४] समुद्-यतं पादप-शैल-हस्तम् ॥४॥ [११
तद् राक्षसाSनीकम् अति-प्रचण्डम्
आ-लोक्य रामो भुजगेन्द्र[2]-बाहुः ।
वि-भीषणं शस्त्र[3]-भृतां वरिष्ठम्
५] उवाच शैलाSग्र-गतः पृथु-श्रीः ॥५॥ [१२
नाना-पताका-ध्वज-शस्त्र-जुष्टं
कस्यैतद् अ-क्षोभ्यम् अ-भीरु[4]जुष्टम् ।
प्राSSसा[5]Sसिशूलाऽशनि-चक्र-जुष्टं
६] सैन्यं नगेन्द्रोपम-नाग-जुष्टम् ॥६॥ [१३
ततः स रामस्य वचो नि-शम्य
वि-भीषणः शुक्र-समान-बुद्धिः ।
शशंस रामाय बल-प्रवेकं[6](?कान्)
७] महा[7]SSत्मनां राक्षस-पुङ्गवानाम् ॥७॥ [१४
यो[8]Sसौ गज-स्कन्ध-गतो महाSSत्मा
नवोदिताSर्को[9]पम-ताम्र-नेत्रः ।
सं-कम्पयन् नाग-शिरोSभ्युपैति
८] राजन्न् अवेह्य् एनम् अकम्पनाSSह्वम्[10] ॥८॥ [१५

---

१. रा$_1$-०धमुख्यैः ॥ २. रा$_1$-भुजगाभबाहुः । ३. रा$_1$-धर्मभृतां ॥ ४. रा$_1$-अतीव हृष्टम् । ५. ल$_1$ ल$_2$ ब ञ-सप्रासशैलाशनि० ॥ ६. रा$_1$-०प्रवीरान् । ७. रा$_1$-दुरासदान् । प्र-महापतिं ॥ ८. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ-योयं । ९. ल$_1$ ल$_2$ब ञ-०पमदीप्तवक्त्रः । प्र रा$_2$-०मतुल्यवक्त्रः । फ-०ताम्रवक्त्रः ।
१०. रा$_1$-स कम्पनाख्यं तमवेहि राजन् ॥

योऽसौ रथ-स्थो मृग-राज-केतुर्
धुन्वन् धनुः शक्र-धनुः-प्रकाशम् ।
करीऽव भात्य् उग्र-विवृत्त-दंष्ट्रः
९] स इन्द्र-जिन् नाम सुरेन्द्र-शत्रुः ॥९॥ [१६
यश् चैष वि-क्रान्त इवेन्द्र-कल्पो
धन्वी रथ-स्थोऽति-रथोऽति-वीरः ।
वि-स्फारयन् वै धनुर् उग्र-नादम्
१०] एषोऽति-कायोऽतिविवृत्त-नेत्रः ॥१०॥ [१७
योऽसौ नवाऽर्कोपम-ताम्र-चक्षुर्
आ-रुह्य घण्टा-निनद-प्रवेकम् ।
खरं खरं गर्जति वै महाऽऽत्मा
११] महोदरो नाम स एष वीरः ॥११॥ [१८
योऽसौ हयं काञ्चन-चित्र-भाद्र(?ध्र)म्
आ-रुह्य सन्ध्याऽभ्र-घन-प्रकाशम् ।
प्राऽऽसं समुद्-यम्य मरीचि-कल्पं
१२] नराऽन्तकाऽऽख्योऽशनि-तुल्य-वेगः ॥१२॥ [१९
यश् चैष शूलं नि-शितं प्र-गृह्य
विद्युत्-प्रभं वासव-वज्र[11]-वेगम् ।
गजेन्द्रम् आ-स्थाय गिरि[12]-प्रकाशम्[13]
१७] आ-याति सोऽसौ[14] त्रि-शिरास् तरस्वी[15] ॥१३॥ [२०

---

१. रा₁-तु राजपुत्रः ॥ २. रा₁-विन्यस्तहरीन्द्रकल्पो । ३. रा₁-०ऽतिरथी विभाति । ४. रा₁-०विवृद्धकोपः ॥ ५. रा₁-वराहोपम० । ६. रा₁-०प्रणादम् । ७. रा₁ल₁अ-स्वरं ॥ ८. रा₁-०नचक्रसारम् । ल₁ल₂ब अ प्र फ-०चित्रदण्डम् । ९. रा₁ म-०चिविद्धं । प्र-महेन्द्रकल्पं । १०. रा₁फ म-देवान्तका० ॥ ११. रा₁-कांचनचक्रसारं । ल₁ ल₂ ब अ प्र-किंकिणिवज्र० । रा₂-किंकिणिबाहुवेगं । १२. रा₁म-शशिप्र० । १३. ल₁ल₂ब प्र-अत आरभ्य ३६-शश्लोकपूर्वार्धं यावत् पाठो नास्ति । १४. अ फ म-योसौ । १५. अ रा₂ फ म-यशस्वी ॥

असौ तु[1] जीमूत-निकाश-रूपः
कुम्भ(ः) पृथुर्[2] व्यूढ[2]-सुजात-वक्षाः ।
समा-हितः पन्नग-राज-केतुर्
१८] वि-स्फारयन्[3] एति[3] धनुर्[4] धनुष्[4]-मान् ॥१४॥ [२१
यश् चैष जाम्बूनद-वज्र-जुष्टं
दीप्तं सं[5]-धूम्रं परि-घं प्र-गृह्य ।
आ-याति रक्षो-बल-केतु-भूतः
१९] सोऽसौ[6] नि-कुम्भोऽद्भुत-घोर-कर्मा ॥१५॥ [२२
यश् चैष चापाऽसिशरौघ-जुष्टं
पताकिनं पावक-तुल्य-रूपम् ।
रथं समा-स्थाय वि-भात्य् उद्-अग्रो
१४] देवाँ[7]ऽन्तकोऽसौ नग-शृङ्ग-योधी ॥१६॥ [२३
यश् चैष कालाऽनल-तुल्य-रूपः
खड्गी धनुष्-मान् कवची किरीटी ।
गजेन्द्रम्[8] आ-स्थाय गिरि-प्रकाशं[9]
१३] खराऽऽत्मजोऽयं[10] मकराक्ष-नामा[10] ॥१७॥ [N
यश् चैष नाना-विध-घोर-रूपैर्
व्याघ्रोष्ट्रनागेन्द्रमृगा(?ग)र्क्ष-युक्तैः ।
भूतैर् वृतो भाति विवृत्त-नेत्रः[11]
१५] सोऽसौ[12] स[12]-दंष्ट्रो विजिताऽरिसैन्यैः[13] ॥१८॥[14] [२४

१. रा१-च । २. रा१-पृथुर्गूढ० । अ-प्रतिव्यूढ० । ३. रा२ फ म-०यन्भाति । ४.रा२-महाध० ॥ ५. रा१-सुधूम्रं । ६. अ रा२ फ म-सोयं ॥ ७. रा१ म-विद्युत्प्रभोसौ ॥ ८. रा१-नागेन्द्रम् । ९. अ-विभात्युदग्रो । रा२ फ-शशिप्र० । १०. रा१-खरात्मजो वै मकराक्ष एषः ॥ ११. अ रा२ फ-०नेत्रैः । १२. अ फ-एको सुराष्ट्रो । १३. रा१-०रिसूनुः । १४. अतः परमधिकः पाठः—रा१-यश्चैष घोरं बहुवज्रजुष्टं सकांचनं पावकदीप्तरूपं । शूलं समुद्यम्य समेति वेगान्नरान्तकश्चैष गजेन्द्रयोधी ॥ म-नास्ति ॥

यत्रैतद् इन्दु-प्रतिमं वि-भाति
छत्रं सितं [1]रुक्म-शलाकम् अग्र्यम् ।
[2]स एष रक्षोऽधिपतिर् महाऽऽत्मा
२०] भूतैर् वृतो रुद्र इवाऽभ्युपैति ॥१९॥[3] [२५
वं-३६] विभीषण-वचः श्रुत्वा राक्षसान् प्रति भाषितम् । [N
१] प्रत्य्-उवाच ततो रामो वि-भीषणम् इदं वचः ॥२०॥
अहो दीप्तो महा-तेजा रावणो लोक-रावणः । [२७
२] आदित्य इव दुः(?ष्प्रे) प्रेक्ष्यो रश्मिभिर् भाति राक्षसः ॥२१॥
सु-व्यक्तं लक्षये चाऽस्य रूपं तेजः-समन्वितम् । [२८
३] दैत्य-दानव-वीराणां वपुर् एवं-विधं कुतः ॥२२॥
यादृशं राक्षसेन्द्रस्य वपुर् एतद् वि-राजते । [२९
४] तथैवाऽस्याऽनु-गास् तुल्याः पुत्राः पौत्रास् तथाऽनु-गाः ॥२३॥
सर्वे पर्वत-सङ्काशाः सर्वे पर्वत-योधिनः ।
५] सर्वे दीप्ताऽऽयुध-धरा योधाश् चाऽस्य महौजसः ॥२४॥ [३०
भाति राक्षस-राजोऽसौ प्र-दीप्तैर् भीम-विक्रमैः ।
६] [4]शूरैः परि-वृतो [5]योधैर् यम-काल-सम-प्रभैः ॥२५॥ [३१
एवम् उक्त्वा ततो रामो धनुर् आ-दाय वीर्य-वान् ।
७] लक्ष्मणाऽनुचरस् तस्थौ समुद्-यम्य शराऽऽसनम् ॥२६॥ [३२
ततः स रक्षोऽधिपतिर् महाऽऽत्मा
रक्षांसि तान्य् आह महा-बलानि ।
[6]द्वारेषु पुर्यां गृह-गोपुरेषु
८] सु-निर्वृतास् तिष्ठत निर्वि-शङ्काः ॥२७॥ [३४

---

१. रा$_2$ फ-सूक्ष्मश० । २. अ रा$_2$ फ-अत्रैष । ३. अतः परमधिकः पाठः—रा$_1$-योसौ किरीटी चलकुंडलास्यो महेन्द्रविन्ध्योपमभीमकायः । महेन्द्रवैवस्वतदर्पहन्ता रक्षोधिपः सोयमुपैति हृष्टः ॥ म-नास्ति । ४. म-प्रेतैः । ५. अ रा$_2$ फ म-०तीक्ष्णैर्देहवद्भिरिवान्तकैः ॥ ६. अ-घोरेषु ॥

स एवम् उक्त्वा त्रिदशेन्द्र-शत्रुर्
उद्-यम्य चापं स-शरं प्र-दीप्तं ।
व्य्-अदारयद् वानर-सागरौघं
९] महा-झषः पूर्णम् इवाऽर्णवौघम् ॥२८॥ [३६
तम् आ-पतन्तं सहसा निर्-ईक्ष्य
दीप्तेषुचापं युधि राक्षसेन्द्रम् । [३७पू
ततो हरीऽऽशः सहसा जगाम
१०] तं रावणं योद्धुम् अति-प्रचण्डम्[1] ॥२९॥ [N
दुद्राव रक्षोऽधिपतिं[2] हरीऽऽशः[2]
बलात् समुत्[3]-पाट्य महीधराऽग्र्यम् । [३७उ
तं शैल-शृङ्गं बहु-वृक्ष-सानुं
११] प्र-गृह्य चिक्षेप स रावणाय ॥३०॥
तम् आ-पतन्तं प्रसम्[4]-ईक्ष्य राजा[4]
बिभेद बाणैर् यम-दण्ड-कल्पैः । [३८
तस्मिन् प्रवृद्धोत्तम-शृङ्ग[5]-वृक्षे
१२] शैले वि[6]-कीर्णे बहु[6]-चित्र-धातौ ॥३१॥
महाऽहि-कल्पं शरम् उग्र-वेगं
समा-ददे राक्षस-यूथपेशः[7] । [३९
स तं गृहीत्वाऽनिल-तुल्य-वेगं
१३] स-विस्फुलिङ्गं ज्वलन-प्रकाशम् ।
बाणं महेन्द्राऽशनि-तुल्य-वेगं
चिक्षेप राजा[8] हरि-यूथपार्य ॥३२॥ [४०

---

१. अ फ-०प्रचण्डः॥ २. अ रा₂ फ-०तिर्महात्मा । ३. रा₁-स उद्यम्य॥ ४. अ रा₂ फ-तरसा निरीक्ष्य । ५. अ रा₂ फ-०मवृक्षखण्डे । म-०मचण्डवृक्षो । ६. रा₁-प्रकीर्णे बहु० । म-विशीर्णोत्तमचित्र० ॥ ७. रा₁-०सपुंगवेन्द्रं । म-०यूथपेन्द्रः । ८. रा₂ फ-राज्ञे हरियूथपानां ॥

स सायको रावण-बाहु-मुक्तः
१४] शक्राऽशनि-प्रख्य-वपुः शिताऽग्रः ।
सु-ग्रीवम् आ-साद्य बिभेद वेगाद्
गुहेरिता क्रौञ्चम् इवोग्र-शक्तिः ॥३३॥ [४१

स सायकाऽऽर्त्तो विपरीत-चेताः
१५] कूजन् व्यथाऽऽर्त्तो नि-पपात भूमौ ।
तं प्रेक्ष्य भूमौ पतितं वि-संज्ञं
नेदुः प्र-हृष्टा युधि यातु-धानाः ॥३४॥ [४२

ततो गवाऽक्षो गवयः सु-दंष्ट्रो
१६] मैन्दो गजो ज्ञाति-मुखो नलश् च[1] ।
शिलाः समुद्-यम्य विवृद्ध-कोपाः[2]
समाऽद्रवंस्[3] ते युधि[3] राक्षसेन्द्रम् ॥३५॥ [४३

तेषां प्र-हारान्[4] स चकार मोघान्
१७] रक्षोऽधिपो बाण-शतैः शिताऽग्रैः ।
तान् वानरेन्द्रान् अपि बाण-जालैर्
बिभेद जाम्बूनद-चित्र-पुङ्खैः ॥३६॥ [४४

ते वानरेन्द्रास् त्रिदशाऽरि-बाणैर्
१८] भिन्ना नि-पेतुर् भुवि भीम-रूपाः ।
ततस् तु तद् वानर-सैन्यम् उग्रं
प्र-च्छादयामास स[5] बाण-जालैः ॥३७॥ [४५

ते वध्यमानाः पतितास्[6] च शूरास्[6]
१९] तेना[7]ऽर्द्यमानाश् च स-सैन्यमुख्याः[7] ।
शाखा-मृगा रावण-सायकाऽऽर्ता

---

१. रा१-नीलो नलो ज्योतिमुखो गदश्च । २. अ रा२ फ-०द्धकायाः । ३. रा१-समर्दयन्सहसा । म-समाद्रवन्संप्रति ॥ ४. रा१-प्रकारान् ॥ ५. रा१-च ॥ ६. रा१-पतितोग्ररूपाः । ७. रा१-नानाद्रुमाभा भयशल्यविद्धाः ।

जग्मुः शरण्यं[1] शत-शः स्म रामं ॥३८॥ [४६

ततो महाऽऽत्मा स धनुर् धनुष्-मान्

२०] आ-दाय रामः सहसा जगाम ।

तं लक्ष्मणः प्राऽञ्जलिर् अभ्युपेत्य

प्रोवाच वाक्यं परमाऽर्थ-युक्तम् ॥३९॥ [४७

अहम्[2] आर्य[3] सु-पर्याप्तो वधायाऽस्य दुर्-आत्मनः ।

२१] वधिष्याम्य्[4] अहम् अद्यैनम् अनु-जानीहि मां वि-भो[5] ॥४०॥ [४८

मम शक्र-रिपोश् चैव संवि-मर्दो भवत्व् अयम् ।

२२] अद्य पश्यन्तु भूतानि परा-भूतं मया रिपुम् ॥४१॥ [N

ततोऽब्रवीन् महा-तेजा रामः सत्य-पराऽऽक्रमः ।

२३] गच्छ त्वं वचनं चेदं नि-बोध[6] मम लक्ष्मणः (?ण) ॥४२॥ [४९

राक्षसेन्द्रो महा-कायो महा-मायो महा-धनुः ।

२४] त्रैलोक्येनाऽपि सं-क्रुद्धो दुष्प्र-धर्षो न सं-शयः ॥४३॥ [५०

तस्य छिद्राणि मार्गस्व स्व-च्छिद्राण्य् अभि-रक्ष च ।

२५] चक्षुषा धनुषा चैव रक्षाऽऽत्मानं समा-हितः ॥४४॥ [५१

राघवस्य वचः श्रुत्वा सम्प्रहृष्ट-तनूरुहः ।

२६] अभि-वाद्य ततो रामं ययौ सौमित्रिर् आ-हवम् ॥४५॥ [५२

स रावणं वानर-यूथ-मध्ये

ददर्श दीप्तोद्यत-भीमचापम् ।

प्र-च्छादयन्तं शर-वृष्टि-जालैस् ।

२७] तान् वानरान् बाण-विदीर्ण[10]-देहान् ॥४६॥[11] [५३

---

१. रा$_1$-शरणं ॥ २. फ-अयम् । ३. म-एव । ४. रा$_1$-हनिष्याम्य-हमेवैनम् । ५. म-प्रभो ॥ ६. म-विबोध ॥ ७. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-संपरिष्वज्य पीडितम् ॥ ८. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-वारणहस्तबाहुः । ९. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-भीमोद्यत० ॥ १०. रा$_1$-०विकीर्ण० । म-०विशीर्ण० ।
११. ल$_1$ ल$_2$ ब अ-अत्र सर्गसमाप्तिर्दृश्यते ॥

तम् आ-लोक्य महा-तेजा हनु-मान् मारुताऽऽत्मजः ।
२८] भ्रंशयंश् छर-जालानि प्रत्य्-अगच्छत्[1] स[1] रावणम् ॥४७॥ [५४
रथं तस्य समा-साद्य तोदम् आ-च्छिद्य[2] सारथेः ।
२९] त्रासयन् रावणं धी-मान् हनु-मान् वाक्यम् अब्रवीत् ॥४८॥ [५५
३०पू] देव-दानव-गन्धर्वा यक्षाश् च सह पन्न[3]-गैः ।[4] [५६पू
३१उ] त्वां भग्नम् अद्य पश्यन्तु वानरैर् भीम-विक्रमैः ॥४९॥ [N
एष मे दक्षिणो बाहुः पञ्च-शाखः समुद्-यतः ।
३२] निर्[5]-हरिष्यति[5] ते देहाद् भूताऽऽत्मानं चिरोषितम् ॥५०॥ [५७
श्रुत्वा हनु-मतो वाक्यं रावणो भीम-विक्रमः ।
३३] संरक्त-नयनः क्रोधाद्[6] इदं[6] वचनम् अब्रवीत् ॥५१॥ [५८
क्षिप्रं प्र-हर निः-शङ्कः स्थिरां कीर्तिम् अवाऽऽप्नुहि ।
३४] वि-क्रमं च विदित्वा ते नाशयिष्यामि जीवितम् ॥५२॥ [५९
रावणस्य वचः श्रुत्वा वायु-सूनुर् अभाषत ।
३५] प्र-हतं[7] ते[7] मया पूर्वम् अक्षं सूदयता सुतम् ॥५३॥ [६०
एवम्[8] उक्तो[8] महा-तेजा रावणो[9] राक्षसाऽधिपः[9] ।
३६] आ-जघानाऽनिल-सुतं तलेनोरसि वीर्य-वान्[10] ॥५४॥ [६१
स तथाऽभि-हतस् तेन मुहूर्तं व्य्-अचरत् कपिः[10] ।
३७] आ-जघान च[11] तं क्रुद्धस्[11] तलेनैवाऽमर-द्विषम् ॥५५॥ [६२
तथा स तेनाऽभि-हतो वानरेण तरस्विना ।

---

१. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-प्रत्ययुध्यत ॥ २. ल$_1$ ल$_2$ ब अ प्र रा$_2$ म-आक्षिप्य ॥ ३. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-राक्षसैः । ४. अतः परमधिकः पाठः—रा$_1$-अवध्यत्वात्त्वया भग्ना वानरेभ्यस्तु ते भयं । तदद्य देवाः पश्यंतु सयक्षोरगराक्षसाः । ५. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-निहनिष्यति ॥ ६. रा$_1$-कोपाद् ॥ ७. रा$_1$-युद्धं दत्तं ॥ ८. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-उक्त्वा । ९. ल$_1$ ल$_2$ ब अ प्र-रावणं राक्षसाधिपम् । १०. ल$_1$ ल$_2$ ब अ प्र-नास्ति ॥ ११. रा$_2$-महाक्रुद्धस् । फ म-च संक्रुद्धस् ॥

३८] दश-ग्रीवः समुद्[1]-धूतो[1] यथा भूमि-चलेऽचलः ॥५६॥ [६३
सं-ग्रामे[2] तु तथा[2] दृष्ट्वा रावणं तल-ताडितम् ।
३९] ऋषयश् चारणाः सिद्धा नेदुर् देवास्[3] तथाऽसुराः[3] ॥५७॥ [६४
अथा[4]ऽऽश्वस्य महा-तेजा रावणो वाक्यम् अब्रवीत् ।
४०] साधु वानर वीर्यं ते श्लाघनी[5]योऽसि मे रिपुः[5] ॥[6]५८॥ [६५
रावणेनैवम् उक्तस् तु मारुतिर् वाक्यम् अब्रवीत् ।[6]
४१] धिग् अस्तु मम[7] वीर्यं[8] तु[7] यत् त्वं जीवसि राक्षस ॥५९॥ [६६
स त्वं तु प्र-हरेदानीं दुर्-बुद्धे किं वि-कत्थसे ।[9]
४२] ततस् त्वां मामको मुष्टिर् नयि[10]ष्यति यम-क्षयम् ॥६०॥ [६७
४३पू] तेन वानर-वाक्येन कोपस् तस्य[11] व्य्-अवर्धत[11] ।[12]
संरक्त[13]-नयनश् चा[13]ऽपि स मुष्टिम् अकरोत् तदा ॥६१॥ [६८
४४] स[14] मुष्टिं पातयामास वज्र-कल्पं महा-यशाः ।
हनुमद्[15]-उरसि[15] व्य्-ऊढे रावणः[16] परवीर-हा[16] ।[17] [६९
४५] स तेनाऽभि-हतो गाढं वि-संज्ञो वि-ह्वलोऽभवत् ॥६२॥ [N
वि-ह्वलं तु[18] स तं[18] दृष्ट्वा हनू-मन्तं महा-बलम् ।[19]

---

१. ल$_1$ ल$_2$ ब श्र प्र रा$_2$ फ म-समुद्भूतो ॥ २. रा$_1$-संग्रामं तु तदा । ३. रा$_1$-देवाश्च सासुराः ॥ ४. रा$_1$-तथा० । ५. ल$_1$ ल$_2$ ब श्र रा$_2$ फ-०नीयं सुरैरपि । ६. प्र-नास्ति ॥ ७. रा$_1$-सुमहावीर्यं ॥ ८. ल$_1$ ल$_2$ ब श्र प्र रा$_2$ फ-विवक्षया । ९. म-नास्ति । १०. रा$_1$-अपनेता ॥ ११. ल$_1$ ल$_2$ ब श्र प्र रा$_2$ फ-तस्याभवत्तदा । म-तस्य तदा भवेत् । १२. अतः परमधिकः पाठः—रा$_1$-स क्रोधाग्निपरीतात्मा प्रजज्वाल च रावणः । १३. रा$_1$-संरब्धनयनोत्यर्थं ॥ १४. रा$_1$-तं । १५. रा$_1$-हनुमान्वक्षसि । १६. रा$_1$-संचचाल महाकपिः । १७. अतः परमधिकः पाठः—म-अथोत्पपात मेदिन्यां न तु प्राणैर्व्ययुज्यत ॥ १८. प्र-सततं । म-स मृतं । १९. अतः परमधिकः पाठः—म-हाहाकारस्तथोत्पन्नो दिशासु विदिशासु च । रावणोपि महावीरो विह्वलं त्यज्य मारुतिम् ॥ सारणम्प्रत्युवाचेदं रावणो राक्षसेश्वरः । सारथे मर्दयस्वैनं वानरं पतितं भुवि ॥ हयानां खुरमर्देन रथचक्रेण वै दृढं । एवं तु वचनं श्रुत्वा तौ चोभौ शुकसारणौ ॥

४६] रथेना[1]ऽति-रथः क्षिप्रं[2] नीलं प्रति समा[3]ऽद्रवत् ॥६३॥ [७०
अन्तक-प्रतिमैर् बाणैः[4] पर-मर्म-विभेदिभिः ।
४७] क्षिप्रम् आ-पीडयां[5]मास नीलं हरि-चमूपतिम् ॥६४॥ [७१
स शरौघ-समायस्तो नीलः[6] परम-दारुणम्[7] ।
४८] गिरिं मलय-शैला[8]ऽऽभं रक्षोऽधिपतयेऽक्षिपत् ॥६५॥ [७२
हनू-मान् अपि तेजस्वी समा-श्वस्तो महा-बलः । [७३पू
४९] नीलेन सह सं-युक्तं[9] रावणं[10] वीऽऽक्ष्य वीर्य-वान्[11] ॥६६॥ [७४पू
५०उ] सम्-ईक्षमाणो युद्धेप्सुः स-रोषम्[12] इदम् अब्रवीत्[12] । [७३उ
५१पू] अ-न्यायं[13](?य्यं) तु(?त) इदं युद्धं[13] क्षत्र-धर्मं[14] वि-जानतः[14] ॥६७॥[15] [N
५२उ] रावणोऽथ महा-तेजास् तच् छृङ्गं नवभिः शरैः ।[16]
N] आ-जघान सु-तीक्ष्णाऽग्रैम् तद् वि-शीर्णं पपात ह[17] ॥६८॥ [७५
तद् वि-दीर्णं[18] गिरेः शृङ्गं दृष्ट्वा हरि-चमूपतिः ।
५३] नीलोऽग्निर् इव जज्वाल क्रोधेन[19] परवीर-हा ॥६९॥ [७६

---

पतितं वायुतनयं पीडयामासुराहवे । रथचक्रप्रमथितो मुष्टिपातेन वै पुरा ॥ विसंज्ञो विह्वलो भूतस्तस्मिन्संग्राममूर्धनि । १. रा$_{1}$-जवेनाति० । म-रावणोति० । २. रा$_{1}$-शीघ्रं । ३. रा$_{1}$-समभ्यगात् ॥ ४. रा$_{1}$-सर्वा । ५. रा$_{1}$-आदीपयामास ॥ ६. रा$_{1}$-नीलो हरिचमूपतिः । ७. रा$_{2}$-गिरिशृङ्गं समुत्पाट्य । ८. रा$_{1}$-०येऽसृजत् ॥ ९. अ प्र रा$_{2}$ फ म-संसक्तो । १०. ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$ फ-रावणो राक्षसाधिपः । म-रावणाय दुरात्मने । ११. अतः परमधिकः पाठः—रा$_{1}$-स रावणवधार्थं तु न चकार मतिं तदा ॥ १२. ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$ फ म-सरोषं समचिन्तयत् । १३. ल$_{1}$-नैष न्यायं महायुद्धं । ल$_{2}$ ब अ-नष न्यायं मया योद्धुं । प्र-नहि न्यायं मया योद्धुं । रा$_{2}$ फ-न न्यायं हि मया योद्धुं । १४. रा$_{1}$-०धर्मविनाकृतं । ल$_{2}$ ब अ प्र रा$_{2}$ फ-०धर्मं विजानता । १५. अतः परमधिकः पाठः—रा$_{1}$-मामपास्य यदन्येन युद्धं युद्धविशारद । तदनादृत्य वचनं राक्षसाधिपतिर्बली ॥ म-नास्ति ॥ १६. रा$_{1}$-व्यदारयद्गिरेः शृङ्गं नीलस्तं सप्तभिः शरैः । १७. रा$_{1}$-नास्ति ॥ १८. रा$_{1}$-विकीर्णं । १९. रा$_{1}$-स वीरः ॥

सोऽश्व-कर्णान् ध्[1]वान् सालांश् चू[2]तांश् चाऽपि सु[2]-पुष्पितान् ।
५४] अन्यांश् च वि-विधान् वृक्षान् नीलश् चिक्षेप सं-युगे ॥७०॥[७७
स तान् आ-पपतः शीघ्रं वृ[3]क्षांश् चिच्छेद रावणः । [७८पू
५५] नी[4]लम् अभ्याऽहनद् गा[5]त्रे दर्शयन्न् अस्त्र[4]-लाघवम् ॥७१॥ [N
अभि-वृ[6]ष्टः शरौघेण मेघेनेव[7] महाऽचलः ।
५६] ह्रस्वं कृत्वाऽऽत्मनो रू[8]पं ध्[9]वजाऽग्रे नि-पपात ह ॥७२॥ [७९
पावकाऽऽत्मजम् आ-लोक्य ध्वजाऽग्रे पर्यव-स्थितम् ।
५७] जज्वाल रावणः क्रो[10]धात् ततो नीलो ननाद ह[11] ॥७३॥ [८०
ध्वजाऽग्रे धनुषश् चाऽग्रे किरीटाऽग्रे च तं हरिम् ।
५८] स-सौमित्रिः स-सुग्रीवो दृ[12]ष्ट्वा रामोऽपि वि-स्मितः[12]॥७४॥ [८१
रावणोऽपि महा-सत्त्वः कपि-लाघव-विस्मितः । [८२पू
५९] सम्भ्रमाऽऽविष्ट-हृदयो न किं-चित् प्रत्य्-अपद्यत ॥७५॥ [८४उ
त[13]तश् चुक्रुशु(?शु)र् आ[13]-विष्टा लब्ध-लक्षाः प्लवं-गमाः ।
६०] नील-लाघव-स[14]म्भ्रान्तं दृष्ट्वा रावणम् आ-हवे ॥७६॥ [८३
वानराणां प्र-णादेन सं-क्रुद्धो रावणस् तदा । [८४पू
६१] अस्त्रम् आ-हा[15]रयामास दीप्तम् आग्नेयम् उत्-तमम् ॥७७॥ [८२उ
आग्नेयेनाऽथ सं-युक्तं गृहीत्वा रावणः शरम् ।
६२] ध्वज-शी[16]र्ष-स्थितं नीलम् उद्-ऐक्षत निशा-चरः ॥७८॥

---

१. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ-ञरान् । २. रा$_1$-सप्तपर्णांस्तु पु० ॥ ३. म-शरैश् । ४. रा$_1$-नीलं चापि जघानाशु । ५. रा$_1$-हस्तला० ॥ ६. रा$_1$-सोतिविद्धः । ७. रा$_1$-महाबलपराक्रमः । ८. रा$_1$-देहं । ९. म-नास्ति ॥ १०. रा$_1$-कोपात् । ११. म-च ॥ १२. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ म-राघवो विस्मयं गतः ॥ १३. ल$_1$ ल$_2$ ब ञ प्र-ततः श्रुत्वा सुराविष्टा । म-०सुसंहृष्टा । १४. ल$_1$ ल$_2$ ब ञ-०संभ्रान्ता ॥ १५. रा$_1$-आवाहया० ॥ १६. रा$_1$-ध्वजमूर्ध्निस्थितं ॥

ततोऽब्रवीन् महा-तेजा रावणो राक्षसेश्वरः[1] । [८५
६३] कपे लाघव-युक्तोऽसि मायया परया[2] युतः ॥७९॥
यदि त्वं रक्षसि प्राणान् मायया वानराऽधम । [८६
६४] तानि तान्य् आत्म-रूपाणि वि-सृजन् बहु-शो रणे ॥८०॥
[3]तथा सोऽयं[3] मया क्षिप्तः सायकोऽस्त्राऽभिमन्त्रितः ।
६५] जीवितं[4] [5]त्वां हि [5]रक्षन्तं जीविताद् भ्रंशयिष्यति ॥८१॥ [८७
एवम् उक्त्वा महा-बाहू रावणो [6]राक्षसाऽधिपः ।
६६] सं-धाय [7]बाणम् अस्त्रेण[7] चमू-पतिम् अताडयत् ॥८२॥ [८८
सोऽस्त्र-युक्तेन बाणेन नीलो वक्षसि ताडितः ।
६७] निर्-दह्यमानः सहसा नि-पपात मही-तले ॥८३॥ [८९
पितृ-माहात्म्य-संयोगाद्[8] आत्मनश् चाऽपि[9] तेजसा ।
६८] जानुभ्यां न्य्-अपतद्[10] भूमौ न च प्राणैर् न्य्-अयुज्यत ॥८४॥ [९०
वि-संज्ञं [11]वानरं दृष्ट्वा दश-ग्रीवो रणोत्सुकः[12] ।
६९] रथेनाऽम्बुद-घोषेण[13] सौमित्रिं समुपाऽद्रवत् ॥८५॥ [९१
तम् आह सौमित्रिर् अदीन-सत्त्वो
वि-स्फारयन्तं धनुर् अ-प्रमेयम् ।
आ-गच्छ मां योधय राक्षसेन्द्र
७०] [14]न वानरांस् त्वं[14] प्रति-योद्धुम् अर्हः[15] ॥८६॥ [९२
स तस्य वाक्यं [16]परिपूर्ण-घोषं

---

१. रा$_1$-राक्षसाधिपः । २. ल$_1$ ल$_2$ ब-वरया ॥ ३. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-त्वद्वधाय । म-अमोघोऽयं । ४. फ-जीविते । ५. रा$_1$-परिर० ॥ ६. प्र रा$_2$ फ म-राक्षसेश्वरः । ७. रा$_1$-चापं धनुषि ॥ ८. रा$_1$-पितुर्माहात्म्ययोगेन । ९. रा$_1$-चैव । १०. रा$_1$-अगमद् ॥ ११. रा$_1$-पतितं । १२. रा$_1$-रणोत्कटः । १३. रा$_1$-रथेन मेघनादेन ॥ १४. ल$_1$ ल$_2$ ब अ-यथा नरास्त्वां । १५. रा$_1$-अर्हसि । ल$_1$ ल$_2$ ब अ-अर्हाः ॥ १६. रा$_1$-प्रतिपूर्ण० ।

ज्या-शब्दम् उग्रं च नि-शम्य राजा[1] ।
आ-साद्य[2] सौमित्रिम् अमित्र-हन्ता[3]
७१] चुकोप कोपाद् अपि चेदम् आह ॥८७॥ [९४
दिष्ट्याऽसि मे राघव शस्त्र-मार्गं
प्राप्तोऽन्तिकं[4] वै विपरीत-बुद्धे ।
अस्मिन् क्षणे[5] यास्यसि मृत्यु-लोकं
७२] सं-छाद्यमानो मम बाण-जालैः ॥८८॥ [९५
तम् आह सौमित्रिर् अ-विस्मयेन
गर्जन्तम् उग्रं शर-चाप-पाणिम् ।
राजन् न गर्जन्ति महा-प्रभावाः[6]
७३] किं कत्थसे[7] प्राकृत-वत् त्वम् अद्य ॥८९॥ [९६
जानामि वीर्यं[8] तव राक्षसेन्द्र
बल-प्रतापं च पराऽऽक्रमं च ।
अयं स्थितोऽहं शर-चाप-पाणिर्
७४] आ-गच्छ किं मूढ[9] वि-कत्थनेन[10] ॥९०॥ [९७
स एवम् उक्तः कुपितः ससर्ज
रक्षोऽधिपः सप्त-शरान् सु-पुङ्खान् ।
तांल् लक्ष्मणः काञ्चन-चित्र-पुङ्खैश्
७५] चिच्छेद बाणैर् नि-शितैः[11] सु-पत्रैः[12] ॥९१॥ [९८
तान् प्रेक्ष्य[13] बाणान् सहसा नि-कृत्तान्[14]
७६पू] निकृत्त-भोगान् इव पन्नगेन्द्रान् । [९९पू

---

१. रा$_1$-राक्षसः । २. रा$_1$-तथेति । ३. रा$_1$-अथाभिभाष्य ॥ ४. रा$_1$-प्राप्तोऽनुगामी विपरीतबुद्धिः । ५. ल$_1$ ल$_2$ ब अ प्र-रणे ॥ ६. रा$_1$-रणे न गर्जन्ति वृथा हि शूराः । ७. रा$_1$-कथ्यसे ॥ ८. रा$_1$-तेजश्च शक्ति । ९. रा$_1$ रा$_2$ फ-मोघ । १०. रा$_2$ फ-विकत्थितेन ॥ ११. म-सुशितैः । १२. रा$_2$-सुपुंखैः ॥ १३. म-वीक्ष्य । १४. रा$_1$ फ-निराकृतान् ।

ववर्ष बाणांश्[1] चलिताऽग्र-मौलिर्

N] महेन्द्र-बाणाऽशनि-तुल्य-वेगान्[2] ॥९२॥ [N

स बाण-वर्षं च ववर्ष दिव्यं[3]

रामाऽनुजः कार्मुक-सम्प्रणुन्नम्[4] ।

क्षुरोऽर्धचन्द्रोत्तम-कर्णि-भल्लान्[5]

७७] शरान्[6] वि-चिक्षेप न चुक्षुभे च[7] ॥९३॥ [१००

स लक्ष्मणश् चाऽऽशु[8] शरान् शिताऽग्रान्

महेन्द्र-वज्राऽशनि-तुल्य-वेगान् ।[10]

सं-धाय चापे ज्वलन-प्रकाशान्[11]

७९] ससर्ज रक्षोऽधिपतेर्[12] वधाय ॥९४॥ [१०२

शरान्[13] प्र-चिच्छेद निशाचरेन्द्रश्

छित्वा च तान्[14] लक्ष्मणम् आ-जघान ।

शरेण कालाऽग्नि[15]-सम-प्रभेण

८०] स्वयम्भु-दत्तेन ललाट-देशे ॥९५॥ [१०३

स लक्ष्मणो रावण-सायकाऽऽर्तश्

चचाल चापं शिथिलं[16] प्र-गृह्य ।

पुनः[17] स[17] सं-ज्ञां प्रति-लभ्य कृच्छ्राच्

८१] चिच्छेद चापं त्रिदशेन्द्र-शत्रोः[18] ॥९६॥ [१०४

---

१. रा$_1$-बाणैश् । २. रा$_1$-०वज्राशनितुल्यवेगैः ॥ ३. रा$_1$-तीव्रं । ४. रा$_1$-०सम्प्रसूतम् । ५. ल$_1$ ल$_2$ ब अ-क्रूरार्धच० । प्र-कृतार्कच० । रा$_1$-०भल्लैः । ६. रा$_1$-शरान् स चिच्छेद ततः क्षणेन । रा$_2$-नास्ति । ७. म-नास्ति ॥ ८. रा$_1$-०णस्तांश्च । ९. रा$_1$-सुघोरान् । १०. रा$_2$म-नास्ति । ११. रा$_2$-नास्ति । १२. अतः परमधिकः पाठः—रा$_1$-विपाटवैतस्तिकवत्सदंतैः क्षुरार्धचन्द्रोपमसिंहदन्तैः । शक्त्यृष्टिनाराचशिलीमुखाग्रैः सच्छिद्रसूचीमुखनैकवक्त्रैः ॥ १३. रा$_1$-स तांस्तु चि० । १४. रा$_1$-तं । १५. रा$_1$-कालानलसप्र० । १६. प्र-त्रिदशेन्द्रशत्रोः । १७. रा$_2$ म-पुनश्च । १८. प्र-नास्ति ॥

तं कृत्त-चापं त्रिभिर् आ-जघान
बाणैस् तदा[1] दाशरथिः शिताऽग्रैः ।
स सायकाऽऽर्तो वि-चचाल राजा
८२] कृच्छ्राच् च सं-ज्ञां पुनर् आ-ससाद ॥९७॥ [१०५

स कृत्त-चापः शर-ताडिता[2]ऽङ्गः
स्वेदा[3]ऽऽर्द्रगात्रो रुधिराऽवसिक्तः ।
जग्राह शक्तिं सहसा[4] प्र[4]-चण्डां
८३] स्वयम्भु-दत्तां युधि देव-शत्रुः ॥९८॥ [१०६

स[5] तां विधूमाऽनल-सन्निकाशां
वि-त्रासिनीं वानर-राक्षसानाम्[6] ।
चिक्षेप शक्तिं तरसा[7] ज्वलन्तीं
८४] सौमित्रये राक्षस-राष्ट्र-नाथः[8] ॥९९॥[9] [१०७

प्र[10]-दीप्यमानां रघु-नन्दनस् तां
जघान बाणैर् अनल-प्रकाशैः[11] ।
तथाऽपि सा तस्य विवेश शक्तिर्
८५] भुजाऽन्तरं दाशरथेर् वि-शालम् ॥१००॥ [१०८

शक्त्या तया तु[12] सौमित्रिस् ताडितश्[13] च[13] स्तनाऽन्तरे ।

---

१ ल$_1$ ल$_2$ ब-तथा । म-ततो ॥ २. रा$_1$-०पीडि० । ३. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-मदार्द्र० । ४. रा$_1$-परमप्र० । ल$_1$ ल$_2$ ब अ प्र रा$_2$-०सा सुचण्डां ॥ ५. ल$_1$ ल$_2$ ब अ प्र-ततः सधू० । ६. रा$_1$-०यूथपानाम् । ७. ल$_1$ ल$_2$ ब अ प्र-स महोज्वलां च । रा$_2$ फ म-सहसा ज्व० । ८. रा$_1$-०राष्ट्रराजः । म-०सलोकनाथः । ९. अतः परमधिकः पाठः—म-आपतन्तीं तु तां शक्तिं गृहीत्वा हनुमान्कपिः ॥ १०. रा$_1$-तां दीप्य० । ११. रा$_1$-०प्रतापैः ॥ १२. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-स । १३. ल$_1$ ल$_2$ ब अ प्र फ-०तः स । रा$_2$ म-०तस्तु ।

८६] विष्णोर् अ-चिन्त्यं स्वं भागम् आत्मानं[1] सम्प्रति-स्मरन्[2] ।[3] [१११
N] पपात भूमौ सहसा छिन्न-मूल इव द्रुमः[4] ॥१०१॥ [N
वि-संज्ञं पतितं दृष्ट्वा सौमित्रिं राक्षसेश्वरः ।
८७] अव-तीर्य रथात् तूर्णम् अभि-दुद्राव लक्ष्मणम् ॥१०२॥ [N
ततो दानव-दर्प-घ्नः सौमित्रिं देव-कण्टकः ।[3]
८८] [3]विष्णोर् [5]अ-चिन्त्यो यो भागो मानुषं[5] देहम् आ-स्थितः ।
तं पीडयित्वा बाहुभ्याम् अ-प्रभुर् लङ्घनेऽभवत् ॥१०३॥ [११२
८९] [6]स तं गृहीत्वा[6] बाहुभ्यां चिन्तयामास रावणः[7] [N
हिम-वान् मन्दरो मेरुः[8] कैलासो वा महा-गिरिः[9] ।
९०] शक्यो भुजाभ्यां सं-वोढुं न त्व् अयं राघवाऽनुजः ॥१०४॥[10] [११०
एतस्मिन्न् अन्तरे वीरस् त्वरा-वान् मारुताऽऽत्मजः ।[11] [N
९१] आ-जघानोरसि व्य्-ऊढे वज्र-वेगेन[12] मुष्टिना ॥१०५॥ [११३उ
तेन मुष्टि-प्रहारेण रावणो भीम-विक्रमः ।
९२] जानुभ्यां न्य्-अपतद् भूमौ चचाल नि-पपात च[13] ॥१०६॥ [११४
वि-संज्ञं रावणं[14] दृष्ट्वा सम्-अरे भीम-विक्रमम् ।
९३] ऋषयो वानराश्[15] चैव नेदुर् देवाश् च सेश्वराः[16] ॥१०७॥ [११६

---

१. रा$_{1}$-आत्मनः । २. रा$_{1}$ रा$_{2}$ फ म-प्रतिसंस्मरन् । ३. सर्वशाखासाधारणः प्राचीनप्रक्षेप इव द्द० । ४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र फ म-नास्ति ॥ ५. ल$_{1}$ ल$_{2}$ ब श्र प्र रा$_{2}$ फ म-अथैनं भागस्तु समग्रो ॥ ६. प्र रा$_{2}$ फ-तं गृहीत्वा तु । ७. प्र-राक्षसः । ८. प्र-मन्दरो वा महामेरुः । रा$_{2}$ फ-०वान्मन्दरः शैलः । ९. रा$_{2}$ फ-महाबलः । १०. ल$_{1}$ ल$_{2}$ ब श्र म-नास्ति ॥ ११. रा$_{1}$-लक्ष्मणं तु ततः श्रीमाञ्जिघृक्षंतं स मारुतिः । १२. रा$_{1}$-०वज्रकल्पेन ॥ १३. रा$_{1}$-जानुभ्यामगमद्भूमिं मुमोह प्रचचाल च । अतः परमधिकः पाठः—रा$_{1}$-आस्यैः सनेत्रश्रवणैर्ववाम रुधिरं बहु ॥ १४. ल$_{1}$ ल$_{2}$ ब श्र-राक्षसं । १५. रा$_{1}$-दानवाश् । १६. रा$_{1}$-हर्षिताः । ल$_{1}$ ल$_{2}$ ब श्र रा$_{2}$ फ म-सासुराः ॥

हनु-मान् अपि तेजस्वी लक्ष्मणं शुभ-लक्षणम् ।
९४] आऽनयद् राघवाऽभ्याशं बाहुभ्यां परि-गृह्य सः[1] ।१०८। [११७
वायु-सूनोः सुहृत्[2]-त्वेन भक्त्या परमया च[3] सः[3] ।
९५] अ-कम्प्यो ह्य् अपि शत्रूणां लघु-त्वं स व्य्-अदर्शयत्[4] १०९[११८
सा[5] समुत्-सृज्य तं[5] शक्तिः सौमित्रिं युद्ध-दुर्मदम्[6] ।
९६] रावणस्य रथे तस्मिन् स्व-स्थानं प्रत्य्-अपद्यत[7] ॥११०॥ [११९
रावणोऽपि महा-तेजाः प्राऽऽप्य सं-ज्ञां महाऽऽहवे ।[8]
९७] आ[9]-ददे नि-शितान् बाणान् प्र-गृह्य[10] वि-पुलं[10] धनुः ।१११। [१२१
आ-श्वस्तः[11] सः[11] वि-शल्यश् च लक्ष्मणः शत्रु-सूदनः ।
९८] विष्णोर् भागम् अ-चिन्त्यं च[12] आत्मानं तत्र सोऽस्मरत्[12] ११२[१२०
एतस्मिन्न् अन्तरे वीरो दृष्ट्वा रावण-विक्रमम् ।
९९] लक्ष्मणं च समा-श्वस्तं सैन्यं च मुदितं पुनः ॥११३॥ [N
नि-पातितानां[13] वीराणां[13] वानराणां महा-चमूम् ।
१००] दृष्ट्वा रामो रण[14]-गतः प्रत्य-अयाद् रावणं युधि[14] ॥११४॥ [१२२
अथैनम् उपसं-गम्य हनु-मान् वाक्यम् अब्रवीत् ।
१०१] मम पृष्ठं समा-रुह्य जहीऽमं[15] पाप-राक्षसम् ॥११५॥ [१२३
N] श्रुत्वा हनू-मतो वाक्यं युक्तं[16] रामोऽनु-चिन्त्य च[16] ।

---

१. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-वै ॥ २. रा$_1$-सुकृत्येन । ३. ल$_1$ ल$_2$ ब अ प्र फ-वशः । ४. रा$_1$-शत्रूणामप्रकंपोपि लघुत्वमगमत्कपेः ॥ ५. रा$_1$-समुत्सृज्य च सा । ६. रा$_2$ फ-०दुर्जयम् । ७. रा$_1$-पुनरागमत् ॥ ८. अतः परमधिकः पाठः—रा$_1$-पुनश्च स्वरथे स्थित्वा रोषपर्याकुलेक्षणः । ९. ल$_1$ ल$_2$ ब अ-मुमोच । १०. रा$_1$-जग्राह च महद् ॥ ११. रा$_1$-०स्तश्च । १२. रा$_1$-स्वं स्मृत्वा स्वस्थतरोभवत् ॥ १३. रा$_1$- ०तित-महावीरां । १४. रा$_1$-रणे तस्मिन्नभिदुद्राव रावणम् ॥ १५. ल$_1$ ल$_2$ ब अ रा$_2$ फ-जह्येनं ॥ १६. रा$_2$ फ-रामो दाशरथिस्ततः ।

एवम् उक्तस् तथेत्य् उक्त्वा समा-रुह्य प्लवं-गमम् ॥११६॥[१२४उ
१०२] राघवः समराऽमर्षी हन्तु-कामो[1] निशा-चरम् ।[N
ऐरावणम् इवेन्द्रस् तु[2] हनू-मन्तं[3] समा-स्थितः ॥११७॥[१२४पू
१०३] अथ[4] तं रावणं सं-ख्ये ददर्श मनुजाऽधिपः ।[१२५
तम् आ-लोक्य महा-तेजाः प्रत्य्-अयाद्[5] रघु-नन्दनः ।
१०४] वि-रोचनम् इव क्रुद्धो विष्णुर् अभ्युद्यताऽऽयुधः ॥११८॥[१२६
ज्या-शब्दम् अथ[6] कुर्वन् स वज्र-निष्पेष-निस्वनम् ।
१०५] गम्भीरोदग्रया वाचा राक्षसेन्द्रम् उवाच ह ॥११९॥[१२७
तिष्ठ तिष्ठ मम त्वं हि कृत्वा[7] वि-प्रियम् ईदृशम् ।
१०६] क्व नु[8] राक्षस-शार्दूल गतो मोक्षम् अवाऽऽप्स्यसि ॥१२०॥[१२८
यदीऽन्द्र-वैवस्वत-भास्वरान् वा
स्वयम्भु-वैश्वानरम्[9] ईश्वरं च[10] ।
गमिष्यसि त्वं दश वा दिशो वा[9]
१०७] तथाऽपि नैवाऽद्य वि-मोक्ष्यसे त्वम् ॥१२१॥ [१२९
यश्[11] चैष[11] शक्त्या नि-हतस् त्वयाऽद्य
वि-षादम्[12] आऽगात्[12] सहसाऽभि-पन्नः । [१३०पू
स एव रक्षो-गण-मृत्यु-भूतः [१३०उ
१०८] प्र-धक्ष्यते वै तव सैन्य-कक्षम् ॥१२२ [N
१०९पू] राघवस्य वचः श्रुत्वा राक्षसेन्द्रो महा-कपिम् ।
११०उ] आ-जघान शरैस् तीक्ष्णैः कालवैश्वानरोपमैः[13] ॥१२३॥[१३२

१. रा$_2$ फ-०कामस्तु रावणम् । २. रा$_1$-स । ३. प्र-०मन्तमिवास्थितः ॥ ४. रा$_1$-रथस्थं । ५. रा$_1$-प्रदुद्राव च राघवः ॥ ६. ल$_1$ ल$_2$ ब-अपि ॥ ७. अ-गत्वा । ८. ल$_1$ ल$_2$ ब अ-स्वर्गं ॥ ९. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-०नरशंकरान्वा । १०. ल$_1$ ल$_2$ ब अ-वै ॥ ११. रा$_1$-य एष । १२. रा$_1$-कृच्छ्राद्विषादं ॥ १३. रा$_1$-कालानलशिखोपमैः ॥

राघवं वहतस् तस्य ताडितस्याऽपि सायकैः ।
१११] स्वभाव-तेजो-युक्तस्य भूयस् तेजोऽ[1]भ्य्-अवर्धत॥१२४॥[१३३
ततो रामो महा-तेजा रावणेन कृत-व्रणम् ।
११२] दृष्ट्वा प्लवग-शार्दूलं क्रोधस्य वशम् अभ्य्-अगात्॥१२५॥[2][१३४
तस्याऽभिसं-गम्य रथं स-[3]चक्रं
साऽश्वध्वजं [4]चारु महा-पताकम् ।
स-सारथिं चाऽ[5]शनि-तुल्य-वेगै
११३] रामः प्र-चिच्छेद शरैः सु-तीक्ष्णैः॥१२६॥[१३५
अथेन्द्र-शत्रुं तरसा जघान
बाणे[6]न वज्राऽशनि-सन्निभेन ।
भुजाऽन्तरे व्यूढ-[7]सुजात-रूपे
११४] वज्रेण मेरुं भग-वान् इवेन्द्रः ॥१२७॥ [१३६
यो व[8]ज्रवेगाऽशनिसन्निपातैर्
न चुक्षुभे नाऽपि चचाल राजा ।
स राम-बाणाऽभिहतो व्यथाऽऽर्तश्
११५] चचाल चापं च मुमोच वीरः ॥१२८॥ [१३७
[9]स वि-ह्वलं तं [10]तु सम्-ईक्ष्य रामः
समा-ददे दीप्तम् अथाऽर्ध-चन्द्रम् ।
तेनाऽर्क-वर्णं सहसा किरीटं
११६] चिच्छेद रक्षोऽधिपतेर् महाऽऽत्मा॥१२९॥[१३८

---

१. रा$_1$-तेजो व्यव० ॥ २. अतः परमधिकः पाठः–रा$_1$-हनूमानपि तेजस्वी व्यवर्धत महामनाः । विद्धो वेगेन महता शरैरग्निशिखोपमैः ॥ ३. रा$_1$-सुचक्रं । ४. रा$_1$-चापि । म-वाथ । ५. रा$_1$-साशनिखड्गशूलं ॥ ६. रा$_1$-शरेण । ७. ल$_1$ ल$_2$ ब अ प्र-व्यूढशिलानुरूपे ॥ ८. रा$_1$ म-वज्रपाताशनि० ॥ ९. रा$_1$-सुविह्वलं । १०. रा$_1$ प्र-प्रसमीक्ष्य ॥

तं निर्विषाऽऽशीविष-सन्निकाशं
शान्ताऽर्चिषं सूर्यम् इवाऽभ्रं[1]-रुद्धम् ।
गत-श्रियं कृत्त-किरीट-कुंडलं[2]
११७] प्रोवाच रामो युधि राक्षसेन्द्रम् ॥१३०॥ [१३९
कृतं त्वया कर्म महत् सु-तीव्रं
हत-प्रवीरश् च कृतस् त्वयाऽहम्[3] ।
तस्मात् परि-श्रान्तम् इव व्यवस्य
११८] न त्वां शरैर् मृत्यु-पथं नयामि ॥[4]१३१॥ [१४०
स एवम् उक्तो हत-मान-दर्पो
निकृत्त-चापः स-शरः स-शूलः ।
शोकाऽर्दितः कृत्त-महाकिरीटो
११९] विवेश लङ्कां सहसा गत-श्रीः ॥१३२॥ [१४२
तस्मिन् प्र-विष्टे रजनीचरेन्द्रे
महा-बले दानव-देव-शत्रौ ।
हरीन् वि-शल्यान् सह लक्ष्मणेन
१२०] चकार रामः परमाऽऽहवाऽग्रे ॥१३३॥ [१४३
तस्मिन् प्र-भग्ने त्रिदशेन्द्र-शत्रौ

---

१. ल$_1$ ल$_2$ ब अ प्र-इवावरुद्धं । २. रा$_1$-०किरीटदेशं ॥ ३. ल$_1$ ल$_2$ ब अ प्र-त्वयाद्य । ४. अतः परमधिकः पाठः—रा$_2$-विमृश्य राघवो बुद्ध्या संचिन्त्य च पुनः पुनः । बुद्धिपूर्वं तु काकुत्स्थो नावधीद्रावणं तदा ॥ हितं संचिंत्य सीताया आत्मनश्च महामतिः । नावधीद्राक्षसं तस्मात्क्रुद्धश्चैनमुवाच ह ॥ अभिजातं बलं शौर्यं यशो धर्मस्तपः श्रुतिः । मैथिलीं हरता मूढ सर्वं ते विफलीकृतं ॥ निरस्य रावणं युद्धे भर्त्सयित्वा मुहुर्मुहुः । प्रहस्य राघवो वाक्यं पुनरेवेदमब्रवीत् ॥ त्वाहमेकाकिनं दृष्ट्वा कारणाच्चैव दुर्मते । नाहं त्वां प्रवधिष्यामि तस्माद्गच्छ निशाचर ॥ म-अनुजानामि गच्छ त्वमिदानीं बाणपीडितः । प्रविश्य लंकामाश्वास्य श्वः पश्यसि बलं मम ॥

सुराऽसुरा भूत-गणा[1] दिशश्[1] च । [१४४पू
स-सागराः[2] सर्षिमहोरगाश् च[3] [१४४उ
१२१] ननन्दिरे[4] सिद्ध[5]-गणाश् च सर्वे[5] ॥[6]१३४॥ [N

इत्यार्षे[7] रामायणे[8] युद्ध-काण्डे रावण-भङ्गो नाम सप्तत्रिंशः सर्गः ॥३७॥

---

## [वं–३७]= [ अष्टात्रिंशः सर्गः ] =[दा–६०]

स प्र-विश्य पुरीं लङ्कां राम-बाण-बला[9]ऽर्दितः ।
१] भग्न[10]-दर्पस् तथा[10] राजा बभूव व्यथितेन्द्रियः ॥१॥ [१
मातङ्ग इव सिंहेन गरुडेनेव पन्न-गः ।
२] अभि-भूतोऽभवद् राजा राघवेण महाऽऽत्मना ॥२॥ [२
ब्रह्म-दण्ड-प्रकाशानां विद्युत्-सदृश-वर्चसाम्[11] ।
३] स्मरन् राघव-बाणानां विव्यथे राक्षसेश्वरः[12] ॥३॥ [३
स काञ्चन-मयं दिव्यम् आ-श्रित्य परमाऽऽसनम् ।
४] अवेक्ष[13]माणः सचिवान् रावणो वाक्यम् अब्रवीत् ॥४॥ [४
सर्वं तत् खलु मोघं मे यत् कृतं परमं तपः ।

---

१. प्र-०गणादिकाश् । २. ल१ ल२ ब श्र-समागताः । ३. अतः परमधिकः पाठः—ल१ ल२ब श्र प्र रा२ फ-चचाल भूर्भूतचराचरस्य बलाबलं रावणरामयोश्च । पराजयं चापि जयं च रामो दशाननश्चापि विवेद नैव ॥ ४. ल१ ल२ ब श्र रा२ फ-अज्ञासिषुः । ५. प्र-वानरराक्षसाश्च ॥ ६. म-नास्ति । ७. फ म-नास्ति । ८. रा१ ल२ ब प्र-लंकाकांडे । फ म-युद्धपर्वणि ॥ ९. रा१-बाणभयार्दितः । १०. रा१ म-निश्वसन्वै तदा ॥ ११ म-०शतेजसाम् । १२. रा१-म-राक्षसाधिपः ॥ १३. रा१-निरीक्ष्य माणः ॥

५] यद् इन्द्रेण समानोऽहं मानुषेण परा-जितः ॥५॥ [५
पुरा मे ब्रह्मणा प्रोक्तं तद् वचस् समुप-स्थितम् ।[1]
६] मानुषेभ्यो वि-जानीहि भयम् इत्य् एव तत् तथा ॥६॥ [६
देव-दानव-गन्धर्वैर् यक्ष-राक्षस-पन्नगैः ।
७] अवध्य-त्वं मया प्राऽऽप्तं परि-भूतास् तु मानुषाः ॥७॥ [७
यच् चाऽपि हिमवच्-छृङ्गे क्रुद्धो नन्द्य् अभ्य्-अभाषत ।
८] तस्यैव तुल्य-वचनैर् अव-रुद्धा हि मे पुरी ॥८॥ [N
तयोर् महाऽऽत्मनोर् वाक्यं नाऽन्यथा तद् धि साम्प्रतम् ।[2]
९] सत्यं वि-भीषणेनोक्तं यच् च वाक्यं महाऽऽत्मना ॥९॥ [N
तद् इदं माम् अनुप्राऽऽप्तं विभीषण-वचः शुभम् ।[2]
१०] [3]तस्य प्रयुक्त-वाक्यस्य नाऽन्यथा याति साम्प्रतम् ॥१०॥ [N
मया दर्पबलोत्सेकाद् अन्यथा चिन्तितं तदा ।[4]
११] तद् अन्यथा परि-गतं मम दौरात्म्य-चेष्टितैः ॥११॥ [N
१२पू] नाऽति-भारोऽस्ति दैवस्य पौरुषे नियता मतिः ।[5]
N] दैव-पौरुष-संयोगात् सिद्धिर् नित्यम् अवाऽऽप्यते ॥१२॥ [N
सज्जा भवन्तु रक्षन्तु नगरीं मे समन्त-तः ।
१३] राक्षसाश् चैव तिष्ठन्तु पुर-गाः पुर-मूर्धसु ॥१३॥ [१२उ
स चाऽप्रतिम-दर्पोऽद्य देव-दानव-दर्प-हा ।
१४] ब्रह्म-शापाऽभिभूतश् च कुम्भ-कर्णो वि-बोध्यताम् ॥१४॥ [१३
सम्-अरे जितम् आत्मानं प्र-हस्तं च हतं रणे ।
१५] ज्ञात्वा रक्षो-बलं भीमम् आ-दिदेश महा-बलः ॥१५॥ [१४
द्वारेषु यत्नं क्रियतां प्राकारश् चाऽभि-रुह्यताम् ।
१६] निद्रा-बल-समाविष्टः कुम्भ-कर्णो वि-बोध्यताम् ॥१६॥ [१५

---

१. रा१-पुराणं ब्रह्मण इद वचनं मामुप० ॥ २. म-नास्ति ॥ ३. रा१-अत आरभ्य ३९-श्लोकं यावत् नास्ति ॥ ४. ल१ ल२ ब अ प्र फ म-नास्ति ॥ ५. प्र-नास्ति ॥

स हि सं-ख्ये महा-बाहुः कुम्भ-कर्णश् च राक्षसः ।
१७] वानरान् राज-पुत्रौ च क्षिप्रम् एव हनिष्यति ॥१७॥ [१८
राम-बाण-निरस्तानां सं-भ्रमेऽस्मिन् सु-दारुणे ।
१८] वि-धमिष्यति नः क्षिप्रं कुम्भ-कर्णो महद् भयम् ॥१८॥ [२०
नव सप्त दशाऽष्टौ च मासान् स्वपिति राक्षसः । [१६ड
१९] तं वि-बोधयत क्षिप्रं कुम्भ-कर्णं महा-बलम् । [N
कुम्भ-कर्णः सदा शेते मूढो ग्राम्य-सुखे रतः ॥१९॥ [१९ड
२०] किं करिष्याम्य् अहं तेन शक्र-तुल्य-बलेन हि ।
ईदृशे सं-भ्रमे घोरे योऽभयाय न कल्पते ॥२०॥ [२१
२१] तेऽपि तद् वचनं श्रुत्वा राक्षसेन्द्रस्य राक्षसाः ।
जग्मुः परम-सम्भ्रान्ताः कुम्भकर्ण-निवेशनम् ॥२१॥ [२२
२२] ते तथा तु समा-दिष्टा राक्षसा भीम-विक्रमाः ।
गन्धान् माल्यं तथा पानं भक्ष्यं चाऽऽदाय सत्त्वराः॥२२॥ [२३
२३] आ-साद्य भवनं तस्य विविशुस् ते नृपाऽऽज्ञया । [N
तत् प्र-विश्य महा-द्वारं सर्व-तो योजनाऽऽयतम्॥२३॥
२४] कुम्भकर्ण-गृहं रम्यं पुण्य-गन्धं शुचिं शुभम् । [२४
वि-बोधयन्तस् ते सर्वे तस्थुस् तस्य महा-गृहे ॥२४॥ [N
२५] तस्य निश्वास-वातेन कुम्भ-कर्णस्य रक्षसः ।
राक्षसा बल-वन्तोऽपि स्थातुं नाऽशक्नुवंस् तदा ॥२५॥ [N
२६] कुम्भ-कर्णस्य नि-श्वासैर् अव-धूता महा-बलाः ।
यतमानाश् च कृच्छ्रेण तत् ते प्र-विविशुर् गृहम्॥२६॥ [२५
२७] सम्प्र-विश्य तदा रम्यं गृहं काञ्चन-कुट्टिमम् ।
ददृशुर् नैर्ऋत-व्याघ्रं शयानं भीम-विक्रमम् । [२६
२८] ऊर्ध्वरोमाऽञ्चित-तनुं श्वसन्तम् इव पन्न-गम् ॥२७॥
वि-भ्रामयन्तं नि-श्वासैः शयानं पिशिताऽशनम् । [२८

१. म-नास्ति ॥

२९] भीम-प्राण-बलं भीमं पाताल-विपुलाऽऽननम् ॥२८॥ [२९पू
ते तु तं वि-कृतं सुप्तं वि-कीर्णम् इव पर्वतम् ।
३०] कुम्भ-कर्णं महा-निद्रं प्र-सुप्तं बोधयिष्णवः ॥२९॥ [२७
ततः परि-हिता गाढं राक्षसा भीम-विक्रमाः । [४२
३१]नीलाऽञ्जनचयाऽऽकाराः कुम्भकर्ण-समीप-गाः ॥३०॥ [४४पू
तत्रोप[1]-जहुः क्षिप्रं ते कुम्भकर्णाऽग्र-तस् तदा ।
३२] भक्ष्याणां मेरु-सङ्काशं राशिं परम-तर्पिणाम् ॥३१॥ [३१
मृगाणां महिषाणां च वराहाणां च सं-चयम् ।
३३] चक्रुर् नैर्ऋत-शार्दूला राशिम् अन्नस्य चाऽद्भुतम् ॥३२॥ [३२
ततः शोणित-कुम्भांश् च मद्यानि वि-विधानि च ।
३४] पुरस्तात् कुम्भ-कर्णस्य चक्रुस् त्रिदश-शत्रवः ॥३३॥ [३३
लिलिपुंश्[2] च[2] पराऽर्ध्येन चन्दनेन सु-गन्धिना ।
३५] वस्त्रैश् च छादयामासुर् माल्य-योग-सुगन्धिभिः ॥३४॥ [३४
धूपं[3] सु-गन्धं ससृजुस् तुष्टुवुश् च परं-तपम् । [३५पू
३६] कुम्भ-कर्णं महा-निद्रं बोधनाय प्र-चक्रिरे ॥३५॥ [N
जल-दा इव चोन्-नेदुर् यातु-धानास् ततस् ततः । [३५उ
३७] बिभिदुश् चाऽस्य गात्राणि नि-घ्नन्तो व्यू-अनदंस् तथा॥३६[N
अथ खिन्ना न शेकुस् ते तत्-प्रबोधाय राक्षसाः ।
३८] ततो गुरु-तरं यत्नं दारुणं समुपाऽक्रमन् ॥३७॥ [४५
शङ्खांश् च पूरयामासुः शशाऽङ्क-सदृश-प्रभान् ।
३९] तुमुलं युगपच् चाऽपि नेदुर् भृशम् अ-मर्षणाः ॥३८॥ [३६
नेदुर् आ-स्फोटयामासुश् चिक्ष्वेडुश् चैव राक्षसाः ।
४०] कुम्भकर्ण-विबोधाऽर्थं चक्रुश् च वि-पुलं स्वनम् ॥३९॥ [३७
उष्ट्रान्[4] खरान्[4] हयान् नागान्[5] जघ्नुर् दण्डकशाऽङ्कुशैः ।

१. रा२-तत्राप्याजह्रुः ॥ २. ल१ ल२ ब-लेपुश्चैव ॥ ३. प्र रा२-धूम्रं ॥
४. रा१-तान् । ५. रा१-नास्ति ।

४१] भेरी-शङ्ख-मृदङ्गांश् च सर्व-प्राणैर् अवादयन् ॥४०॥ [४६
नि-जघ्नुश् चाऽस्य गात्राणि महा[1]काष्ठ-तां (?तां[1])डकैः।
४२] मुद्गरैर् मुसलैश् चैव सर्व-प्राण[2]-समुद्यतैः [3]॥४१॥ [४७
तं शङ्ख-भेरी-मुरज-प्रणादम्
आस्फोटिताऽऽक्ष्वेडित-सिंह-नादम् ।
दिशो द्रवन्तस् त्रि[4]-दिवं क्रमन्तः
४३] श्रुत्वा विहं-गाः सहसा नि-पेतुः ॥४२॥ [३८
यदा तु तैः सन्नि[5]-नदैर् महाऽऽत्मा
न कुम्भ-कर्णो बुबुधे प्र-सुप्तः ।
तदा भुशुण्डीर् मुसलानि चैव
४४] रक्षो-गणास् ते जगृहुर् गदाश् च ॥४३॥ [३९
तं शैल-शृङ्गैर् मुसलैर् गदाभिर्
वृक्षैस् तलैर् मुद्गर-मुष्टिभिश् च ।
सुख-प्रसुप्तं भुवि कुम्भ-कर्णं
४५] रक्षांस्य् उद्-अग्राणि तदा नि-जघ्नुः ॥४४॥ [४०
तेन शब्देन महता लङ्का सम्परि[6]-पूरिता ।
४६] स-पर्वत-वना सर्वा स[7] च[7] नैव व्य्-अबुध्यत ॥४५॥ [४८
ततः सहस्रं भेरीणां युगपत् सम्-अहन्यत ।
४७] मृष्ट-काञ्चन-कोणानाम् आ-सक्तानां समन्त-तः ॥४६॥ [४९
एवम् अप्य् अति-निद्रस् तु यदा नैव व्य्-अबुध्यत ।
४८] शाप-वश्यस्[8] तथा सुप्तस् तदा क्रुद्धा निशा-चराः ॥४७॥ [५०
ते तु क्रोध-समाविष्टाः सर्वे भीम-पराऽऽक्रमाः ।

---

१. रा$_1$-महद्भिः कूटमुद्गरैः। ल$_1$ल$_2$ब अ प्र-०काष्ठकडंगरैः। २. रा$_1$-०प्राणैः समन्ततः। ३. ल$_1$ल$_2$ब अ प्र-नास्ति॥ ४. रा$_1$-वियदुत्प्लवन्तः। म-वियदुत्क्र०॥ ५. अ-संनिरुतैर्॥ ६. रा$_1$-सर्वाभिपू०। रा$_2$ फ म-सम्प्रतिपू०। ७. ल$_1$ ल$_2$ ब-न तु॥ ८. रा$_1$-शापबद्धतया॥

४९] तद् रक्षो बोधयिष्यन्तश् चक्रुर् अन्यं पराऽऽक्रमम् ॥४८॥ [५१
अन्ये भेरीः समा-जघ्नुर् अन्ये चक्रुर् महा-स्वनम्[1] ।
५०] केशान् अस्याऽरुजंश् चाऽन्ये कर्णाव् अन्ये[2] दशन्ति च[2] ॥४९॥ [५२
अन्ये च बलिनस् तस्य कूट-मुद्गर-पाणयः ।
५१] मूर्ध्नि वक्षसि गात्रेषु निर्-दयाः[3] सम्-अताडयन्[3] ॥५०॥ [५४
मृदङ्गान् पणवान् भेरीः शङ्खान्[4] कुम्भ-मुखांस् तथा[4] ।
५२] दश राक्षस-साहस्रा जघ्नुर् भीम-पराऽऽक्रमाः ॥५१॥ [N
राक्षसानां सहस्रं तु शरीरे सम्प्र-धावति । [N
५३] कुम्भ-कर्णस् तदा सुप्तो न चैवं[5] प्रत्य्-अबुध्यत[5] ॥५२॥ [५६उ
रज्जुजालाऽवनद्धाभिर् घातनीभिः[6] समन्त-तः[6] ।
५४] बध्यमानो महा-कायो न प्राऽबुध्यत राक्षसः ॥५३॥ [५५
ततो गज-सहस्रं तु शरीरे संव्य्[7]-अधावत । [५६पू
५५] स मर्द्यमानोऽपि तदा न[8] प्राऽबुध्यत राक्षसः ॥५४॥ [N
ते राक्षसास् तदा खिन्नाश् चक्रुर् अन्यं पराऽऽक्रमम् ।
५६] प्र-मदाश् चाऽऽह्वयामासुः सुमृष्ट-मणि-कुण्डलाः ॥५५॥ [N
नाग-राक्षस-कन्याश् च तथा गन्धर्व[9]-योषितः ।
५७] मनु-जानां दुहितरः किं-नराणां[10] तथैव च ॥५६॥ [N
प्र-विष्टा भवनं रम्यं[11] तप्त[12]-काञ्चन-कुट्टिमम् ।
५८] [13]कुर्वन्त्यो गीत-वादित्रं[13] कुम्भकर्णाऽग्र-तः स्थिताः[14] ॥५७॥ [N

---

१. रा१-महास्वरं । ल१ ल२ ब अ-पराक्रमं । २. रा१-अपि ददंशिरे ॥ ३. ल१ ब अ-ताडयन्तोऽदयं तथा ॥ ४. रा१-शंखवादित्रनिस्वनाः ॥ ५. रा१-तथापि व्यबु० ॥ ६. रा१-०नीभिश्च सर्वशः ॥ ७. ल१ ल२ ब अ रा२ फ म-संप्रधावति । ८. रा२ फ-नैवाबुध्यत । ९. प्र-नास्ति ॥ १०. म-किन्नरयो० ॥ ११. ल१ ल२ ब अ प्र-मुख्यं । १२. रा२-तदा काञ्चन० । १३. रा१-ताः स्त्रियो गीतवादित्रैः ॥ १४. म-नास्ति ॥

दिव्या दिव्यैर् अलं-कारैर् दिव्य-धूपेन धूपिताः[1] ।
५९] दिव्य-गन्धाः सु-गन्धाश् च विक्रीडुर्[2] भवनोत्तमे ॥५८॥ [N
ताश् च सर्वा विशालाऽक्ष्यः सर्वाः काञ्चन-सम्प्रभाः ।
६०] सर्वा रूपगुणोपेताः सर्वाऽऽभरण-भूषिताः ॥५९॥ [N
सर्वा विस्तीर्ण-जघनाः सर्वाः पीन-पयोधराः ।
६१] सर्वाः कमल-पत्राऽक्ष्यो नील-कुञ्चित-मूर्धजाः ॥६०॥ [N
तासां नूपुर-शब्देन मेखलानां[3] रवेण च[3] ।
६२] गीत-वादित्र-शब्देन स्वरेण मधुरेण च ॥६१॥ [N
दिव्येन[3] चैव गन्धेन[3] स्पर्शेन वि-विधेन च ।
६३] वि-बुद्धः कुम्भ-कर्णोऽसौ भीमाऽक्षो भीम-विक्रमः[4] ॥६२॥ [N
स हन्यमानश् च महीध्र-वृक्षैर्
अ-चिन्तयंस् तांस् तुमुल-प्रहारान् ।
निद्रा-क्षयात् क्षुद्[5]-बल-पीडितश् च
N] वि-जृम्भमाणः सहसोत्-पपात ॥६३॥ [५७
महा-भुजौ वासुकितक्षकाऽऽभौ
वि-क्षिप्य वीरो गिरि-शृङ्ग-सारौ ।
वि-वृत्य वक्त्रं वडबा-मुखाऽऽभं
६४] निशा-चरोऽसौ वि-कृतं व्य्-अजृम्भत ॥६४॥[५८
वि-जृम्भमाणोऽति-बलः प्रत्य्-अबुध्यत राक्षसः ।
६५] नि-श्वासश् चाऽस्य सं-जज्ञे सं-वर्तक इवाऽनिलः[6] ॥६५॥ [६०
तस्य सं-जृम्भमाणस्य वक्त्रं पाताल-सन्निभम् ।[7]
६६] ददृशे मेरुशृङ्गाऽग्रे दिवा-कर इवोदितः[8] ॥६६॥ [५९

---

१. रा₂ म-नास्ति । २. ल₁ ल₂ ब ञ प्र रा₂ फ म-क्रीडन्त्यो॥ ३. ल₁ ल₂ ब ञ प्र-नास्ति॥ ४. रा₁-भीमदर्शनः। ल₁ ल₂ ब ञ प्र फ-भीमपराक्रमः॥ ५. रा₁-क्षुत्परिपी० ॥ ६. रा₁ ल₁ ल₂ ब-०निलः॥ ७. रा₂-विजृंभमाणं तद्वक्त्रं पातालतलसन्निभम् । ८. रा₁-०करमिवोदितम्॥

दीप्तताम्राऽऽस्यजिह्वस्य विद्युत्-सदृश-पक्ष्मणी ।
६७] [2]भीमे नेत्रे व्य्-अदृ[3]श्येतां दीप्ताव् इव महा-ग्रहौ ॥६७॥ [६२
रूपम् उत्-तिष्ठतस् तस्य कुम्भ-कर्णस्य सं-बभौ[3] ।
६८] ता[4]पाऽन्ते सर्व-लोकस्य[4] मेघस्येव वि-[5]वर्षतः ॥६८॥ [६१
ते समुत्था(द्-स्था)प्य भीमाऽक्षं भीम-रूप-पराऽऽक्रमम् ।
७२] राक्षसास् त्वरिता जग्मुर् दशग्रीव-निवेशनम् ॥६९॥ [८५
N] तेऽभि-गम्य दश-ग्रीवम् आसीनं परमाऽऽसने ।
ऊचुर् बद्धाऽञ्जलिपुटाः सर्व एव निशा-चराः ॥७०॥ [८६
७३] प्र-बुद्धः कुम्भ-क[6]र्णो वै[6] भ्राता ते राक्षसर्षभ ।
यथा ते नैव निर्-यातु द्रक्ष(?क्ष्य)स्य् एनम् इहाऽऽगतम् ७१.[८७
७४] रावणस् त्व् अब्रवीद् हृष्टो राक्षसान् राक्षसाऽधिपः ।
द्रष्टुम् एनम् इहेच्छामि यथा-न्यायं च[7] पूजितुम्[7] ॥७२॥ [८८
७५] तथेत्य् उक्त्वा च[8] ते सर्वे[8] पुनर् आ-गम्य राक्षसाः[9] ।
कुम्भ-कर्णम् इदं वाक्यम् ऊचू रावण-चोदिताः ॥७३॥ [८९
७६] द्रष्टुम् इच्छति राजा त्वां सर्व-राक्षस-पुङ्गवः ।
गमने क्रियतां बु[10]द्धिर् भ्रातरं सं[10]प्र-हर्षय ॥७४॥ [९०
७७] कुम्भ-कर्णस् तु दुर्-धर्षो भ्रातुर् आ[11]-ज्ञाय शा[11]सनम् ।
तथेत्य् उक्त्वा महा-वीर्यः शयनाद् उत्-पपात ह ॥७५॥ [९१
७८] प्र-क्षाल्य वदनं हृष्टः शान्तः परम-भूषितः ।
पिपासुस् त्वरयामास पानं मद-समीरितम् ॥७६॥ [९२

---

१. रा२-०समप्रकाशिनी । २. ल१ ल२ ब अ प्र रा२ फ म-भीमे ददृशतुर्नेत्रे ॥ ३. रा२-रक्षसः । ४. रा१ ल१ ल२ ब अ प्र रा२ म-तपांते सवलोकस्य । ५. अतः परमधिकः पाठः—रा१-तद्विनिद्रं ततो रक्षः कषायीकृतलोचनम् । विहरत्सर्वतो दृष्टिं तानुवाच निशाचरान् ॥ ६. रा१ म-०कर्णोऽसौ ॥ ७. प्र-चमूपतिं ॥ ८. रा१ म-तु । ९. म-नास्ति ॥ १०. रा१-बुद्धी रावणं च प्रहृ० ॥ ११ म-आज्ञामवाप्य च ॥

७९] ततस् तु त्वरितास् तस्य राक्षसा रावणाऽऽज्ञया ।
मद्यं भक्ष्यं च वि-विधं क्षिप्रम् [1]एवाऽऽनयंस् तदा[1] ॥७७॥ [९३
८०] प्र-हर्षणाऽर्थं मनसो दीप्ताऽऽस्यो रक्त-लोचनः ।[2] [N
८१उ] आ-ददे क्षुधितो मांसं शोणितं तृषितोऽपिबत् ॥७८॥
८२पू] मेदः-कुम्भांश् च मद्यं च पपौ शक्र-रिपुस् तदा ।[3] [६४
सज्ज-कर्णान् स-जठरान् महिष्यान् शूल्य-पैठरान् ।[4]
N] अष्टौ पशु-शतान्य् एव पुरुषान् एक-विंशतिम् ॥७९॥ [N
सं-भुज्य स महा-कायो दावाऽग्निर् इव तु तृणम्[5] ।
N] कुम्भ-कर्णो महा-बाहुर् गमनायोप-चक्रमे ॥८०॥ [N
ततस् तृप्तम् इव[6] ज्ञात्वा सम्-ईयुस् ते निशा-चराः ।
८३] शिरोभिश् च प्र-णम्यैनं सर्व-तः पर्य्-अवारयन् ॥८१॥ [६५
स सर्वान् सान्त्वयामास नैर्ऋतान् नैर्ऋतर्षभः ।
८४] बोधनाद् वि-स्मितश् चाऽपि राक्षसान्[7] इदम् अब्रवीत् ॥८२ [६७
किम्-अर्थम् अहम् आ-गम्य भवद्भिः प्रति-बोधितः ।
८५] कच्-चिच् च कुशलं राज्ञो भयं वा नेह किं-चन ॥८३॥ [६८
कच्-चिद् राक्षस-राजस्य न[8] खल्व् अ-प्रियम् आ-गतम्[8] । [N
N] न ह्य् अल्पे कारणे सुप्तं प्र-बोधयति माम् इह ॥८४॥
N] तत्[9] कथ्यतां यथाऽर्थेन[9] मत्[10]-प्रबोधन-कारणम् । [७१

१. रा१-एवोपपादयन् ॥ २. अतः परमधिकः पाठः—रा१-**महिषाणां वराहाणां मांसं मद्यं च रुत्कृतं** ॥ ३. अतः परमधिकः पाठः— रा१-**भुक्त्वा चान्नं बहुविधं किंचि प्र** ध्वाभवत् । पीत्वा **घटसहस्रं** च तथा **भुक्त्वा सुभोजनम्** ॥ ४. रा१-सवराहान्समहिषान्कुंजरान्शूलपैठरान् ॥ ५. रा१-एतत्सं-भक्ष्य सुमहत् महादावाग्निवत्तृणं ॥ ६. **ल१ ल२ ब अ प्र रा२ म-इति** ॥ **७. रा२**-प्रहसन्न् ॥ **८. अ**-अत आरभ्य ८६-शश्लोकस्य प्रथमपादं यावन् नास्ति ॥ **९. रा१**-तदाख्याताद्य तत्त्वेन । **म**-०तां यथातत्त्वं । **१०. ल१ ल२ ब प्र रा२ फ म**-मम बोधन० ।

अथवा ध्रुवम् अन्येभ्यो भयं परम-दारुणम् ।
८६] यद्-अर्थं त्वरितैः सर्वैर् भवद्भिः प्रति-बोधितः ॥८५॥ [६९
अद्य राक्षस-राजस्य भयम् उत्-सादयाम्य् अहम् ।
८७] पातयिष्ये महेन्द्रं वा भक्षयिष्यामि चा[2]ऽन्तकम् ॥८६॥ [७०
एवं ब्रुवाणं सं-रब्धं कुम्भ-कर्णम् अरिं-दमम् ।
८८] यूपाऽक्षः सचिवो [3]राज्ञो बद्धाऽञ्जलिर् उवाच ह ॥८७॥ [७२
८९पू] न नो देव-कृतं किं-चिद् भयम् अस्ति निशा-चर । [७३पू
गन्धर्व-दानवेभ्यो वा कुतः पतग-भोगिनः ।
९०] यादृशं मानुषाद् राज्ञो भयं घोरम् उप-स्थितम् ॥८८॥ [७४
वानरैः पर्वताऽऽकारैर् [4]लङ्का सम्परि-वारिता[1] ।
९१] सीताहरण-दुःखाऽऽर्ताद् रामान् नः परमं भयम् ॥८९॥ [७५
एकेन वानरेणेयं पूर्वं दग्धा महा-पुरी ।
९२] अक्षः कुमारो नि-हतो मन्त्रि-पुत्राः स-किङ्कराः ॥९०॥ [७६
स्वयम् इच्छति चोद्-हर्तुं पौलस्त्यं देव-कण्टकम् ।[5]
९३] मृत-कल्पो [6]रणे मुक्तो रामेणाऽमित-तेजसा ॥९१॥ [७७
यन् न देवैः कृतं पूर्वं न दैत्यैर् न च दानवैः ।
९४] कृतं तद् इह रामेण वि-मुक्तः प्राण-संशयात् ॥९२॥ [७८
स यूपाऽक्ष-वचः श्रुत्वा भ्रातुश् च भयम् आ-गतम् ।
९५] कुम्भ-कर्णो वि-वृत्ताऽक्षो यूपाऽक्षम् इदम् अब्रवीत् ॥९३॥ [७९
सर्वम् अद्यैव यूपाऽक्ष हरि-सैन्यं स-लक्ष्मणम् ।
९६] राघवं च रणे हत्वा पश्चाद् द्रक्ष्या[7]मि रावणम् ॥९४॥ [८०

---

१. ल$_1$ ल$_2$ ब अ म रा$_2$ फ म-वानलं । २. अतः परमधिकः पाठः—रा$_2$-यमं च घातयिष्यामि सपाशं च जलेश्वरं । पर्वतांश्चारयिष्यामि कंपयिष्यामि मेदिनीम् ॥ ३. रा$_1$-राज्ञः कृताञ्जलिर् ॥ ४. रा$_1$-लंकेयं परिवेष्टिता ॥ ५. रा$_1$-स्वयं रक्षोधिपश्चासौ पौलस्त्यो देवकण्टकः । ६. ल$_1$ ल$_2$ ब अ म रा$_2$ फ म-रणादार्तो ॥ ७. रा$_1$-गच्छामि ॥

राक्षसांस् तर्पयिष्यामि हरीणां मांस-शोणितैः ।
९७] राम-लक्ष्मणयोश् चाऽपि स्वयं पास्यामि शोणितम् ॥९५॥ [८१
तस्याऽथ वाक्यं वदतो[1] नि-शम्य
स-गर्वितं रोष-विवृद्ध-घोषम्[2] ।
महोदरो राक्षसराज-पुत्रैः[3]
९८] कृताऽञ्जलिर् वाक्यम् इदं बभाषे ॥९६॥ [८२
पश्चाद् अपि महा-बाहो शत्रून् युधि वि-जेष्यसि[4] । [८३उ
९९] त्वद्-दर्शन-परं तावद्[5] भ्रातरं द्रष्टुम् अर्हसि ॥९७॥ [N
महोदर-वचः श्रुत्वा राक्षसैः परि-वारितः ।
१००] कुम्भ-कर्णो महा-तेजाः सम्प्र[6]-तस्थे महा-बलैः ॥९८॥ [८४
उदाराणां स मद्यानां तदा राक्षस-पुङ्गवः ।
N] पीत्वा घट-सहस्रं वै तथा भुक्त्वा च भोजनम् ॥९९॥ [N
१०१पू] स-रोषश्[7] चोत्-कटो मत्तस् तेजो-बल-समन्वितः ।
N] कुम्भ-कर्णो बभौ घोरः कालाऽन्तकयमोपमः [8]॥१००॥ [९४
N] सोऽगच्छद् भवनं राज्ञो रक्षो-बल-समन्वितः ।
१०१उ] कुम्भ-कर्णः पद-न्यासैः कम्पयन्न् इव मेदिनीम्[10]॥१०१॥ [९५
स राज-मार्गं[9] वपुषा वि-दीपयन्
सहस्र-रश्मिर् भग[11]-वान् इवांऽशुभिः ।
जगाम नीलो[12]ऽम्बुद-मालया वृतः
N] शत-क्रतुः स्थानम् इव स्वयं-भुवः ॥१०२॥ [९६

---

१. रा$_1$-ब्रुवतो । २. रा$_1$ रा$_2$ फ म-घोरं । ३. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-०राजमुख्यः ॥ ४. रा$_1$-वधिष्यसि । ५. रा$_1$-तात ॥ ६. रा$_1$-प्रतस्थे त्वां (?भ्रा) तरं प्रति ॥ ७. रा$_1$-स एवं । ८. ल$_1$-कुम्भकर्णो महाबाहुर्गमनायोपचक्रमे । ल$_2$ ब अ प्र-नास्ति ॥ ९. ल$_1$ ल$_2$ ब अ प्र-नास्ति । १०. अतः परमधिकः पाठः—रा$_1$-महाबलो महाबाहुः प्रतस्थे भ्रातुरन्तिकम् ॥ ११. रा$_1$-वसुधाम् । १२. रा$_1$-नेत्रांजलिमालयार्चितः ॥

तं[1] मेरु-शृङ्ग-प्रतिमं किरीटिनं
स्पृशन्तम् आदित्यम् इवाऽऽत्म-तेजसा ।
वनौकसः प्रेक्ष्य वि-वृद्धम् अद्भुतं
१०२] भयाऽर्दिता दुद्रुविरे समन्त-तः ॥१०३॥ [९९
के-चिच् छरण्यं शरणं स्म रामं
व्रजन्ति के-चिद् व्यथिता नि-पेतुः[2] ।
के-चिद् दिशः सं[3]-त्वरिताः प्र-याताः[4]
N] के-चिद् भयाऽऽर्ता भुवि शेरते स्म ॥१०४॥ [N

इत्यार्षे[5] रामायणे युद्ध[6]-काण्डे कुम्भकर्ण-प्रबोधनं[7] नामाऽष्टात्रिंशः सर्गः ॥३८॥

---

## [वं–३८]= [ एकोनचत्वारिंशः सर्गः ] =[दा–६१]

ततो रामो महा-तेजा धनुर् आ-दाय वीर्य-वान् ।
१] किरीटिनं महा-कायं ददर्शाऽति-भयङ्करम् ॥१॥ [१
तं दृष्ट्वा राक्षस-श्रेष्ठं पर्वताऽऽकार-सन्निभम्[8] ।
२] क्रममाणम् इवाऽऽकाशं पुनर्[9] नारायणं यथा[10] ॥२॥ [२पू
कुम्भ[11]-कर्णं[9] महा-कायं सर्व-भूत[11]-भयाऽऽवहम् । [N
३] सतोयाऽम्बुद-सङ्काशं काञ्चनाऽङ्गद-धारिणम्[12] ॥३॥ [२उ
४पू] यं दृष्ट्वा[13] वि-द्रुता दिग्भ्यो[13] वानराणां महा-चमूः । [३

---

१. रा$_1$-तमद्रिशृंग० ॥ २. ल$_1$ल$_2$ब अ प्र रा$_2$फ म-पतंति । ३. ल$_1$ब अ-सुत्वरिताः । ४. ल$_1$ल$_2$ब अ प्र रा$_2$फ-प्रयांति । म-व्रजन्ति ॥ ५. फ म-नास्ति । ६. रा$_1$प्र-लंकाकांडे । म-युद्धपर्वणि । ७. रा$_1$-०प्रबोधो ॥ ८. रा$_1$-कुम्भकर्णं ददर्श ह ॥ ९. रा$_1$-०रदर्शनम् । १०. रा$_1$-पुरा नारायणं विभुं ॥ ११. रा$_1$-शूलहस्तं महारौद्रं तीक्ष्णदंष्ट्रम० । १२. रा$_1$-०दभूषणं ॥ १३. रा$_2$-दृष्ट्वातिमहाकायं ।

N] वि-द्रुतां वाहिनीं दृष्ट्वा वर्धमानं च राक्षसम् ।
४उ] सु-विस्मितम् इदं रामो वि-भीषणम् उवाच ह ॥४॥ [४
कोऽयं पर्वत-सङ्काशः किरीटी हरि-लोचनः ।
५] लङ्कायां दृश्यते वीरः स-विद्युद् इव तोय-दः ॥५॥ [५
पृथिव्यां केतु-भूतो वै महान् एष हि[1] दृश्यते ।
६] यं दृष्ट्वा वानराः सर्वे वि-द्रवन्ति भयाऽर्दिताः ॥६॥ [६
आ-चक्ष्व मे महान् कोऽसौ राक्षसो यदि वाऽसुरः ।
७] न मयैवं-विधं भूतं[2] दृष्ट-पूर्वं कदा-चन ॥७॥ [७
स पृष्टो राज-पुत्रेण रामेणाऽक्लिष्ट-कर्मणा[3] ।
८] वि-भीषणो महा-प्राज्ञः काकुत्स्थम् इदम् अब्रवीत् ॥८॥ [८
येन वैवस्वतो[4] युद्धे वासवश् च परा-जितः ।
९] सोऽयं वि-श्रवसः पुत्रः कुम्भ-कर्णो निशा-चरः[5] ॥९॥ [९
एतेन देवा युधि दानवाश् च
यक्षा भुजं-गाः पिशिताऽशनाश् च ।
गन्धर्व-विद्याधर-गुह्यकाश् च
१०] सहस्र-शो राघव सम्प्र-भग्नाः ॥१०॥ [१०
शूल-पाणिं समा-यान्तं कुम्भ-कर्णं महा-बलम् ।
११] हन्तुं न शेकुस् त्रि-दशाः कालोऽयम् इति मोहिताः ॥११॥ [११
प्र-कृत्यैवैष तेजस्वी कुम्भ-कर्णः सु-दुर्जयः[6] ।
१२] अन्येषां राक्षसेन्द्राणां वरदान-कृतं बलम् ॥१२॥ [१२
एतेन जात-मात्रेण क्षुधितेन महाऽऽत्मना ।[7]

---

१. रा$_1$-महातेजोऽत्र ॥ २. रा$_1$-रूपं ॥ ३. रा$_1$-आचचक्षे महातेजा राघवाय विभीषणः ॥ ४. ल$_1$ ल$_2$ ब अ-०स्वते । ५. ल$_2$-नास्ति ॥ ६. अतः परमधिकः पाठ—रा$_1$-अस्यैव तु महाबाहो निजमेवौरसं बलं ॥ ७. अतः परमधिकः पाठः—रा$_1$-भक्षिता अप्सरसः सप्त महेंद्रानुचरा दश । ऋषीणां च सहस्राणि रक्षसानेन राघव ॥

१३] भक्षितानि सहस्राणि सत्त्वा[1]नां सु-महा[2]न्त्य् अपि ॥१३॥ [१३
तास् तदा भक्ष्यमाणास् तु प्र-जा भय-निपीडिताः ।
१५] प्र-ययुः शरणं शक्रं तं चाऽप्य् अर्थं न्य्-अवेदयन् ॥[3]१४॥ [१४
स कुम्भ-कर्णं कुपितो महाऽऽत्मा
जघान वज्रेण शितेन शक्रः ।
स शक्र[4]वज्राऽभिहतो महाऽऽत्मा
१६] चचाल कोपाच् च भृशं ननाद ॥१५॥ [१५
तस्य नान[5]द्यमानस्य कुम्भ-कर्णस्य धी-मतः ।
१७] श्रुत्वा स्वभाव-तस् त्रस्ताः प्र-जा भूयोऽपि तत्रसुः ॥१६॥ [१६
तत[5]ः क्रोधा[6]द् विवृत्ताऽक्षः कुम्भ-कर्णो महा-बलः ।
१८] निष्-कु[7]ष्यैरावणाद् दन्तं जघानोरसि वासवम् ॥१७॥ [१७
कुम्भकर्ण-प्रहाराऽऽर्[8]तः स विह्वलित-मान[8]सः ।
१९] ततो वि-षेदुः सहसा दे[9]व-गन्धर्व-दानवाः ॥१८॥ [१८
प्र-जाभिः सह शक्र[10]स् तु[10] ययौ स्थानं स्वयं-भुवः ।
२०] कुम्भ-कर्णस्य दौरात्म्यं प्र-विवक्षुः प्रजा-पतेः । [१९
२१पू] प्र-जानां भक्षणं चैव देवा[11]नां चैव[11] भक्ष[12]णम् ॥[13]१९॥ [२०पू
एवं यदि प्र-जा नित्यं[14] भक्षयिष्यति राक्षसः ।
२२] अ-चिरेणैव कालेन लोक[15]ः शून्[15]यो भविष्यति ॥२०॥ [२१

---

१. ल₁ ल₂ ब प्र-सत्त्वानि । २. म-महताम् ॥ ३. अतः परमधिकः पाठः—रा₁ रा₂-तच्छ्रुत्वा तु वचस्तासां शक्रस्तु त्वरयान्वितः । ऐरावणं समारुह्य वज्रमुद्यम्य वीर्यवान् ॥ जगाम सहितो देवैर्देवराजो महाबलः । तं तु देशं समासाद्य यत्रास्ते स निशाचरः ॥ ४. रा₁-वज्रपाताभि० ॥ ५. रा₂-तत्र । ६. रा₁ म-कोपाद् । ७. ल₁ल₂ ब अ प्र-विकृष्यै० ॥ ८. रा₁ ल₁ ल₂ ब अ प्र फ म-०तवासवः । ९. रा₁-देवा ब्रह्मर्षिसत्तमाः ॥ १०. रा₁-शक्रश्च । ११. रा₂ फ म-०नामपि । १२. रा₁-वर्षणं । १३. अतः परमधिकः पाठः—रा₁ रा₂-आश्रमध्वंसनं चैव परस्त्रीहरणानि च ॥ १४. रा₁-त्वेष । १५. ल₁ ल₂ ब अ प्र रा₂ फ म-शून्या भूमिर् ॥

वासवस्य वचः श्रुत्वा सर्व-लोक-पितामहः ।
२३] रक्षः समा-ह्वयामास कुम्भ-कर्णं ददर्श च[1] ॥२१॥ [२२
कुम्भ-कर्णं सम्[2]-ईक्ष्यैव वि-स्मितोऽभूत् प्रजा-पतिः ।
२४] [3]कुम्भ-कर्णं महा-वीर्यं स्वयं-भूर् इदम् अब्रवीत् ॥२२॥ [२३
२५पू] [4]ध्रुवं लोक[5]विनाशाऽर्थं पौलस्त्येनाऽसि निर्-मितः ।[6]
तस्मात् त्वम् अद्य-प्रभृति मृत-कल्पः शयिष्यसि ॥२३॥ [२४
२६] ब्रह्मशापाऽभि[7]भूँतस् तुँ[8] नि-पपात स राक्षसः । [२५पू
२७] भ्रातरं पतितं दृष्ट्वा रावणो वाक्यम् अब्रवीत् ॥[9]२४॥ [N
कृत्वा किं काञ्चनं वृक्षं फल-काले नि-पात्यते ।
२८] न नप्तारं स्वयं न्याय्यं शप्तुम् एवं प्रजा-पते ॥२५॥[10] [२६
न च त्वद्-वचनं मिथ्या स्वप्स्यत्य् एष न सं-शयः ।[11]
२९] कालस् तु क्रियताम् अस्य स्वप्ने जागरणे तथा ॥२६॥ [२७
रावणस्य वचः श्रुत्वा स्वयं-भूर् इदम् अब्रवीत् ।[12] [N
३०] [13]शयिता ह्य् [13]एष षण् मासान् एकाऽहं जागरिष्यति ॥२७॥
३१पू] असौ तु वीर एकाऽहे क्षुधितो वि-चरन् भुवि ।[14]
N] व्यात्ताऽऽस्यो भक्षयेल् लोकान् सं-क्रुद्ध इव पावकः ॥२८॥ [२९
आत्म-व्यसनम् आ-साद्य कुम्भ-कर्णो वि-बोधितः ।
३२] त्वत्-पराऽऽक्रम-भीतश् च राजा सम्प्रति रावणः ॥२९॥ [३०

---

१. रा$_1$-ह ॥ २. रा$_1$-निरीक्ष्यैव । ३. रा-$_1$-तत एनं ॥ ४. रा$_2$-एवं । ५. ल$_1$ ल$_2$ ब अ प्र-लकावि० । ६. अतः परमधिकः पाठः—रा$_1$-यस्मात्त्वमीदृशः क्रूरो लोकं हिंसितुमुद्यतः ॥ ७. रा$_1$ रा$_2$ फ म-०भूतश्च । ८. रा$_1$-निद्रयामिपरिप्लुतं । ९. अतः परमधिकः पाठः—रा$_1$-ततः परमसंभ्रान्तो रावणो वाक्यमब्रवीत् ॥ १०. अ-अत आरभ्य २७-शश्लोकपूर्वार्धं यावन्नास्ति ॥ ११. ल$_1$ ल$_2$ ब प्र-नास्ति ॥ १२. अतः परमधिकः पाठः—रा$_1$-पुरा हि वृतवान्निद्रां गोकर्णोऽसौ यदृच्छया । १३. रा$_1$-स्वपिता त्वेष ॥ १४. अतः परमधिकः पाठः—रा$_1$-आत्मतुल्यं महत्कर्म,आहारं च करिष्यति ॥

स एष क्षुधितो वीरो[1] निर्-गमिष्यत्य् अ-संशयम् ।
३३] वानरान् भृश-संक्रुद्धो भक्षयिष्यति वीर्य-वान् ॥३०॥ [३१
कुम्भ-कर्णं सम्-ईक्ष्यैव हरयो विप्र-दुद्रुवुः ।
३४] कथम् एनं रणे क्रुद्धं वारयिष्यन्ति वानराः ॥३१॥ [३२
उच्यतां (?न्तां) वानराः सर्वे मतम्[2] एतत् समुच्[3]-छ्रितम् ।
३५] तर्कयन्तोऽर्थं[4] बुध्यन्तो भविष्यन्तीऽह निर्-भयाः ॥३२॥ [३३
विभीषण-वचः श्रुत्वा हेतु-मद् ग्राहकं तथा ।
३६] उवाच राघवो वाक्यं नीलं सेना-पतिं तदा ॥३३॥ [३४
गच्छ सर्वाणि सैन्यानि व्य्-ऊह्य तिष्ठस्व पावके !
३७] द्वाराणि सं-क्रमांश् चैव लङ्काया यूथ-पैः सह ॥३४॥ [३५
शैल-शृङ्गाणि वृक्षांश् च शिलाश् चाऽऽदाय सर्व-तः[5] ।
३८] भवन्त्व् आत्ताऽऽयुधाः सर्वे वानराः शैल-पाणयः ॥३५॥ [३६
राघवेण समा-दिष्टो नीलो हरि-चमूपतिः ।
३९] शशास वानराऽनीकं यथा-वत् कपि-कुञ्जरः ॥३६॥ [३७
ऋषभः शरभो नीलो हनू-मान् अङ्ग-दो नलः ।
४०] शैल-शृङ्गाणि शैलाऽऽभा गृहीत्वा द्वारम् अभ्य्-अयुः ३७ [३८
ततो हरीणां तद् अनीकम् उग्रं
रराज भीमोद्[6]यतवृक्षशैलम् ।
गिरेः समीपाऽनुगतं यथैव
४१] महा-स्वनं तोयद-जालम् उग्रम् ॥३८॥ [४०

इत्यार्षे रामायणे युद्ध[7]-काण्डे कुम्भकर्ण-दर्शनो[8] नामैकोनचत्वारिंशः सर्गः ॥३९॥

---

१. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-वीर ॥ २. रा$_1$ ल$_1$ फ म-मंत्रम् । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_1$ म-समुत्थितं । ४. रा$_1$-०न्तो हि बु० । म-०न्तो भविष्यन्ति हरयो निर्भया रणे ॥ ५. रा$_1$-सर्वशः ॥ ६. रा$_1$-दीप्तोद्यतभीमशैलं ॥ ७. रा$_1$ प्र-लंकाकांडे । म-युद्धपर्वणि । ८. ल$_1$ ल$_2$ ब अ प्र म-०र्णवृत्तवर्णनं । रा$_2$-०र्णवृतान्तवर्णनं ॥

 [ चत्वारिंशः सर्गः] 

स तु राक्षस-शार्दूलो निद्रा-बले[1]-समाकुलः ।
१] राज-मार्गं श्रिया जुष्टं ययौ[2] विपुल[2]-विक्रमः ॥१॥ [१
राक्षसानां सहस्रैस् तु वृतः पर-पुरं-जयः ।
२] गृहेभ्यः पुष्प-वर्षैश् च कीर्यमाणस् तदा ययौ ॥२॥ [२
स हेम-जाल-विततं भ्रातुर्[3] भास्वर-दर्शनम्[3] ।
३] ददर्श वि-पुलं रम्यं राक्षसेन्द्र-निवेशनम् ॥३॥ [३
अभि-गम्य गृहं भ्रातुः कक्ष्याश् चाऽपि वि-गाह्य सः ।
४] ददर्शाऽऽसीनम् आ[4]-विष्टं वि-माने पुष्पके गुरुम् ॥४॥ [६
स तं तदा सूर्य इवाऽभ्र-जालं
प्र-विश्य रक्षोऽधिपतेर् नि-वेशम् ।
दूराद् ददर्शाऽग्र-जम् आसन-स्थं
N] स्वयं-भुवं शक्र इवाऽऽसन-स्थम् ॥५॥ [४
अथ दृष्ट्वा दश-ग्रीवः कुम्भ-कर्णम् उप-स्थितम् ।
५] किं-चिद् उत्था(द्-स्था)य सं-हृष्टः सन्नि-कर्षम् उपाऽऽनयत्६[७
अथाऽऽसीनस्य पर्य्-अङ्के कुम्भ-कर्णो महा-बलः ।
६] स जग्राह तदा भ्रातुः पादौ राक्षस-पुङ्गवः । [८
उत्-पत्य[6] चैनं मुदितो रावणः परि-षस्वजे ॥७॥
७] स भ्रात्रा सम्परि-ष्वक्तो यथा[7]-वच् चाऽभि-नन्दितः । [९
कुम्भ-कर्णस् ततो दिव्यं प्रति-पेदे वराऽऽसनम् ॥८॥
८] स तदाऽऽसनम् आ-विश्य[8] कुम्भ-कर्णो महा-बलः ।
संरक्त-नयनः कोपाद् रावणं वाक्यम् अब्रवीत् ॥९॥ [१०

---

१. रा$_1$ ब रा$_2$ म-निद्रावशस० । २. रा$_1$-ययावतुल० ॥ ३. रा$_1$-सुभानुसुरद० । ल$_1$ ल$_2$ ब ञ-भ्रातुर्भास्वरविक्रमः ॥ ४. रा$_1$-अत्युग्रं ॥ ५. रा$_1$-उत्थाप्य । ६. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ म-चैव ॥ ७. ल$_1$ ल$_2$ ब ञ-विधिवच् । प्र-विविधाच् ॥ ८. रा$_1$-आसाद्य ॥

९] किम्-अर्थम् अहम् आ-हृत्य त्वया राजन् प्र-बोधितः ।
शंस कस्माद् भयं तेऽद्य कोऽद्य प्रेतो भविष्यति ॥१०॥ [११पू
१०] यदीऽन्द्रात् ते भयं राजन् यदि वा सलिलेश-तः ।
शत-क्रतुं वि-जेष्यामि त्रैलोक्ये पार्थिवो भव ॥११॥ [N
१२] दीर्घ-काल-प्रसुप्तस्य कुम्भ-कर्णस्य वि-क्रमम् ।
अद्य पश्यन्तु भूतानि भक्ष्यमाणानि सर्व-शः ॥१२॥ [N
१३] नन्व् इदं त्रि-दिवं सर्वम् आ-हारो युज्यते मम ।
सोऽद्य तृप्तिं गमिष्यामि भक्षयित्वा सुराऽसुरान् ॥१३॥ [N
१४] कुम्भकर्ण-वचः श्रुत्वा जहृषे रावणस् तदा ।
पुनर् जातम् इवाऽऽत्मानं मेने स रजनी-चरः ॥१४॥ [N
१५] कुम्भकर्ण-बलाऽभिज्ञो जानंस् तस्य पराऽऽक्रमम् ।
बभूव मुदितो राजा शशाऽङ्क इव वि-ग्रहः ॥१५॥ [N
१६] तम् ईक्ष्य परि-वृत्ताभ्यां नेत्राभ्यां कुपितोऽब्रवीत् [N
भ्रातरं रावणः प्रेक्ष्य कुम्भ-कर्णम् उप-स्थितम् ॥१६॥ [१२पू
१७] अद्य ते सु-महान् कालः शयानस्य निशा-चर ।
स्वपितस् त्वं न जानीषे मम रामान् महद् भयम् ॥१७॥ [१३
१८] न देवाऽसुर-नागेभ्यो गन्धर्वेभ्यः कदा-चन ।

---

१. रा$_1$ल$_1$अ-सहसाहत्य ॥ २. रा$_1$-यदीन्द्रतो । ३. रा$_1$-वापि जलेशतः । रा$_2$-०लेश्वरात् । ४. अतः परमधिकः पाठः—रा$_1$-यमं हि मर्दयिष्यामि भक्षयिष्यामि पावकं । पर्वतांश्चूर्णयिष्यामि चालयिष्यामि मेदिनीं ॥ रा$_2$-आदित्यं पातयिष्यामि सनक्षत्रं महीतले । ५. रा$_1$-देवान्विद्रावयिष्यामि ॥ ६. रा$_1$ ल$_1$-भक्षमा० ॥ ७. रा$_1$-न त्वयं । ८. रा$_1$-सर्वोप्याहारे पूर्यते । ९. रा$_1$-तृप्तो भविष्यामि ॥ १०. रा$_1$-शारदः ॥ ११. रा$_1$-ईषत् । १२. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-०वृत्ताक्षो । १३. ल$_1$ ल$_2$ ब अ प्र-०कर्णं मिथः स्थितम् । रा$_2$ फ म-०कर्णमवस्थितम् ॥ १४. रा$_1$-०रयक्षेभ्यो न गन्धर्वपतत्त्रितः ।

भूत-पूर्वं भयं तादृग् यादृशं मानुषाद् इदम्[1] ॥१८॥ [N
१९] पुरा त्वं नाऽभि-जानीषे यथा[2] सीता मया हृता ।
सीता-हरण-सन्तप्ताद् रामान् मे सु-महद् भयम् ॥१९॥ [N
२०] एष दाशरथी रामः सुग्रीव-सहितो बली ।
सम्-उद्रं स-बलस् तीर्त्वा मूलं[3] नः परि-कृन्तति ॥२०॥ [१४
२१] तावद्[4] ईक्षस्व लङ्कायाः द्वाराण्य् उप-वनानि च ।
सेतुना सुख-गम्यो हि वानरैर् (?काऽ)अर्णवः कृतः[5] ॥२१॥ [१५
२२] ये राक्षसा मुख्य-तमा हतास् ते युधि वानरैः ।[6]
वानराणां क्षयं[7] युद्धे न पश्यामि कदा-चन ॥२२॥ [१६
२३] नगरं शत्रुणा रुद्धं युद्धे हत-सुहृज्-जनम् । [N
२४पू] कोशश् च क्षपितः सर्वः स त्वम् अद्य[8] प्र-पश्य माम् ॥२३॥
२५उ] त्रायस्व मां च नगरीं बालवृद्धाऽवशेषिताम् । [१९
भ्रातुर् अर्थे महा-बाहो कुरु साहाय्यम् उत्-तमम् ॥२४॥
२६] मयैवं नोक्त-पूर्वं हि कश्-चिद् भ्रातः परं-तप[9] । [२०
त्वय्य् अस्ति[10] हि[10] मम स्नेहः परा सं-भावना च मे ॥२५॥
२७] देवाऽसुर-विमर्देषु बहु-शो राक्षसर्षभ ।
२८पू] देवा[11]ऽसुराः परिव्य्-ऊढा निर्[11]-जिताश् चाऽसुरा युधि ।[12] [२१
न हि ते सर्व-भूतेषु दृश्यते सदृशो बली[13] ॥२६॥

---

१. रा$_{1}$-भयम् ॥ २. ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$ फ म-यदा ॥ ३. प्र रा$_{2}$ फ म-मूलान् ॥ ४. रा$_{1}$ रा$_{2}$ फ म-हतान् । ५. ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$-०गम्येन वानरैरागतैर्वृतम् ॥ ६. अतः परमधिकः पाठः—रा$_{1}$-तदेतद्भयमुत्पन्नं त्रासनं नो महाबलं । तस्माद्भयस्य नाशार्थं मया प्रबोधितो भवान् ॥ ७. ल$_{1}$ ल$_{2}$ ब-भयं ॥ ८. रा$_{1}$-अभ्युपपद्य ॥ ९. अतः परमधिकः पाठः—रा$_{1}$-निरयेष्वेव पतनं यथा दुष्कृतकर्मणः । १०. रा$_{1}$ प्र फ म-अस्ति तु । रा$_{2}$-अस्त्विति ॥ ११. रा$_{1}$-त्वया देवाः प्रतिव्यूढास्तर्जिताश् । १२. अतः परमधिकः पाठः—रा$_{1}$-तव देवैरनाधृष्यं वीर्यं भीमपराक्रम । १३. रा$_{1}$-बले ॥

२९] स त्वं मया समा-दिष्टो वीर भीम-पराऽऽक्रम । [२२
निर्-गच्छ शूलम् आ-दाय पाश-हस्त इवाऽन्तकः ।
३०] वानरान् राज-पुत्रौ च भक्षयस्व प्र-मर्द[1] च ॥२७॥ [N
समा-लोक्यैव ते रूपं वि-द्रविष्यन्ति वानराः ।
३१] राम-लक्ष्मणयोश्[2] चाऽपि[2] हृदयं प्र-स्फुटिष्यति ॥२८॥ [N
अति[3]-बल महतो[3] भयाद् वि-मुक्तो
भवतु जनः सुखितो ममाऽद्य सर्वः ।
तव भुज-बल-संश्रयाऽभिगुप्तस्
३२] त्रिदश-रिपो जहि[4] राघवं[4] स-सैन्यम् ॥२९॥ [N
कुरुष्व मे प्रिय-हितम् एतद् उत्-तमं
यशस्-करं प्रिय-करं बान्धव-प्रियम् ।
स्व-तेजसा वि-धम सपत्न-वाहिनीं
३३] शरद्-घनं पवन इवोद्-धतो महान्[5] ॥॥३०॥ [२३

इत्यार्षे[6] रामायणे[6] युद्ध[7]-काण्डे कुम्भकर्ण-समादेशो[8] नाम
चत्वारिंशः सर्गः ॥ ४० ॥

---

## [वं-४०]= [ एकचत्वारिंशः सर्गः ] =[दा-६३]

तस्य[9] राक्षस-राजस्य नि-शम्य परि-देवितम्[10] ।
१] कुम्भ-कर्णो बभाषेदं वचनं प्र-जहास च ॥१॥ [१

---

१. ल१ ल२ ब अ प्र-प्रमर्दय ॥ २. रा१-रामस्य लक्ष्मणस्यापि ॥ ३. रा१-कपिबल (?लान्) । ४. ल१ ल२ ब अ प्र-हरिराघवं ॥ ५. रा१-महात्मन् ॥ ६. फ म-नास्ति । ७. रा१ ब प्र-लंकाकांडे । रा२-नास्ति । म-युद्धपर्वणि । ८. ल१-०कर्णवधो । रा२-०कर्णोपदेशो ॥ ९. रा१-स तु । १०. रा१-०देवनम् ॥

दृष्टो दोषो हि[1] योऽस्माभिः पुरा मन्त्र-विनिश्चये ।
२] हितेऽप्य् अनु-अभियुक्तेन[2] सोऽयम् आ-सादितस् त्वया॥२[२
इदं खलु फलं प्राऽऽप्तं शीघ्रं पापस्य कर्मणः[3] ।
३] निर्-अयस्याऽव-पतनं यथा दुष्कृत-कर्मणः[4] ॥३॥ [३
प्रथमं वै महा-राज कृत्यम् एतद् वि-चिन्तितम्[5] ।
४] केवलं वीर्य-दर्पेण नाऽनु-बन्धो वि-चारितः ॥४॥ [४
यः पश्चात् पूर्व-कार्याणि करोत्य्[7] ऐश्वर्य-मोहितः ।
५] पूर्वं[8] चोत्तर-कार्याणि न स वेद नयाऽनयौ ॥५॥ [५
देश-काल-विहीनानि कर्माणि[9] विपरीऽत-वत् ।

१. ल१ ल२ ब अ प्र-दृष्टदोषोऽपि । २. रा१-अनतिरक्तेन ॥ ३. रा१-कर्मणां । ४. अतः परमधिकः पाठः—स-पूर्वमेव मया प्रोक्तो रामो नारायणः स्वयम् । सीता च योगमायेति बोधितोऽसि न बुध्यसे ॥ एकदाहं वने सानौ विशालायां स्थितो निशि ॥ दृष्टो मया मुनिः साक्षान्नारदो दिव्यदर्शनः ॥ तमब्रुवं महाभाग कुतो गन्तासि मे वद । इत्युक्तो नारदः प्राह देवानां मंत्रणे स्थितः ॥ तत्रोत्पन्नमुदंतं वो वक्ष्यामि शृणु तत्त्वतः । युवाभ्यां पीडिता देवाः सर्वे विष्णुमुपागताः ॥ ऊचुस्ते देवदेवेशं स्तुत्वा भक्त्या समाहिताः । जहि रावणमक्षोभ्यं देव त्रैलोक्यकंटकम् ॥ तथेत्याह महाविष्णुः सत्यसंकल्प ईश्वरः । जातो रघुकुले देव राम इत्यभिविश्रुतः ॥ स हनिष्यति सर्वानित्युक्त्वा प्रययौ ऋषिः । अनुजानीहि रामं त्वं परब्रह्म सतानम् ॥ त्यज वैरं भजस्वाद्य मायामानुषरूपिणम् । भजतो भक्तिभावेन प्रसीदति रघूत्तमः ॥ भक्तिर्जनित्री ज्ञानस्य भक्तिर्मोक्षप्रदायिनी । भक्तिहीनेन यत्किंचित्कृतं सर्वमसत्समम् ॥ अवताराः सन्ति बहवो विष्णोर्लीलानुकारिणः । तेषां सहस्रसदृशो रामो ज्ञानमयः शुभः । रामं भजन्ति निपुणा मनसा वचसानिशम् । अनायासेन संसारं तीर्त्वा यान्ति हरेः पदम् ॥ ५. ल१ ल२ ब अ रा२ फ मएतन्न चिन्ति० ॥ ६. रा१-सर्वका० । ७. रा१-कुर्याद् । ८. रा१-पश्चात्कार्याणि पूर्वं तु ॥ ९. ल१ ल२ ब अ प्र रा२ फ-रूपाणि ॥

६] क्रियमाणानि दुष्यन्ति [1]हवींष्य् अ-प्रयतेष्व् इव ॥६॥ [६
त्रयाणां पञ्च-धा योगं कर्मणां प्रति-पद्यते[2] ।
७] सचिवैः सं-विदं कृत्वा स सम्यग् वर्तते पथि ॥७॥ [७
याथातथ्येन वै[3] राजा समयं वि-जिगीषति[4] ।
८] बुध्यते स शुचिर् बुद्ध्या सु-हृदश् चाऽनु-पश्यति[5] ॥८॥ [८
धर्मम् अर्थं च कामं च सर्व-र्थ्रां रक्षसां पते ।
९] भजते पुरुषः[7] काले सर्व-द्वन्द्वानि[6] वै[9] पुनः ॥९॥ [९
त्रिषु[8] चैतेषु यच् छ्रेष्ठं श्रुत्वा तन् नाऽव-बुध्यते ।
१०] राजा वा राज-पुत्रो वा वृथा[10] तस्य बहु-श्रुतम् ॥१०॥ [१०
उपप्र-दानं सान्त्वं च भेदं काले च वि-क्रमम् ।
११] योगं च राक्षस-श्रेष्ठ ताव् उभौ च नयाऽनयौ ॥११॥ [११
काले धर्माऽर्थकामान् यः सं-मन्त्र्य सचिवैः सह ।
१२] नि-षेवेद् आत्म-वांल् लोके न तं व्य्-असनम् आ-श्रयेत् १२ [१२
१३पू] हिताऽनुबन्धम् आ-लोक्य कार्याऽकार्यम् इहाऽऽत्मनः[11] ।
N] राजा [12]संहाऽर्थ-तत्त्व-ज्ञैः सचिवैर् बुद्धि-निश्चितैः॥१३॥ [१३
अन्-अभिज्ञा हि शास्त्राणां बहवः पशु-बुद्धयः ।
१४] प्रागल्भ्याद् वक्तुम् इच्छन्ति मन्त्रेष्व् अभ्यन्तरी-कृताः १४ [१४
मन्त्रि-रूपा हि रिपवः सं-भाव्यास् ते वि-चक्षणैः ।
N] ये हितं नयम् उत्-सृज्य विपरीऽतोपसेविनः ॥१५॥ [N
मूर्खैर् मन्त्रिगुणाऽपेतैर् भ्राता मे[13] पाप-बुद्धिभिः ।
N] वस्त्राऽन्तेष्व् आ-हरन्न् अग्निं पापैर् न प्रति-षेधितः ॥१६॥ [N

---

१. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-हविर् ॥ २. रा$_1$-यः प्रपश्यति ॥ ३. रा$_1$-यो । ४. रा$_1$-जेतुमिच्छति । ५. ल$_1$ ल$_2$ ब म-नास्ति ॥ ६. रा$_1$ रा$_2$ फ म-सर्वान्वा । ७. प्र रा$_2$ फ-पुरुषान् । ८. रा$_1$-त्रीणि द्व० । ९. रा$_1$-वा ॥ १०. ल$_1$ ल$_2$ ब अ प्र-समर्थ्य ॥ ११. अतः परमधिकः पाठः—रा$_1$-अन्तः-सारैरकुटिलैरच्छिद्रैः मुनिरूपितैः । १२. रा$_1$ ल$_1$ ल$_2$-महार्थ० ॥ १३. रा$_1$-भ्रातासौ ॥

अ-शास्त्रविदुषां तेषां न कार्यम् अ-हितं वचः ।
१५] अर्थशास्त्राऽनभिज्ञानां वि-पुलां श्रियम् इच्छताम् ॥१७॥ [१५
अ-हितं हि हिताऽऽकारं[1] धाष्टर्याज् जल्पन्ति ये जनाः[2] ।
१६] अवेक्ष्य मन्त्र-बाह्यास् ते कर्तव्याः कृत-दूषणाः ॥१८॥ [१६
वि-नाशाय च भर्तुर् हि भेदिताः[3] शत्रुभिर् बुधैः[4] ।
१७] विपरीऽतानि कृत्यानि कारयन्तीऽह मन्त्रिणः ॥१९॥ [१७
तान् भर्ता मित्र-सङ्काशान् अ-मित्रान् मन्त्र-निर्णये ।
१८] व्यव-हारे च[5] जानीयात् सचिवान् उपसं-हितान् ॥२०॥ [१८
चपलस्य हि[6] कृत्यानि सहसाऽनुप्र-धावतः ।
१९] क्षिप्रम् अन्ये[7] प्र-पद्यन्ते क्रौञ्च-च्छिद्रम् इव द्वि-जाः ॥२१॥[१९
शक्तो व्यव-सितः शत्रुः स्वेन चाऽर्थेन[8] तुष्यति ।
२०] सर्वं[9] तस्मै प्र-दातव्यम् इति बुद्धि-मतां नयः ॥२२॥ [N
यो हि शत्रुम् अव-ज्ञाय[10] नाऽऽत्मानं[11] परि-रक्षति ।
२१] अवाऽऽप्नोति हि सोऽन्-अर्थान् स्थानाच् च[12] व्यव-रोप्यते[12]२३[२०
न श्रुतं न मया दृष्टं[11] सागरे सेतु-बन्धनम् ।
N] नूनम् अस्मद्-विनाशाय दैवेन भुज उच्-छ्रितः ॥२४॥ [N
स तु श्रुत्वा महा-राजः कुम्भ-कर्णस्य भाषितम् ।
२२] भ्रूकुटिं चैव सं-चक्रे क्रुद्धश् चैनम् उवाच ह ॥२५॥ [२२
मान्यो गुरुर् इवाऽऽचार्यः किं मां[13] त्वम् अनु-शोचसि[13] ।
२३] किम्[14] एवं वाक्-छ्रमं कर्तुं[14] काल-युक्तं वि-धीयताम् ॥२६॥ [२३

---

१. रा$_1$-हितकाराय । २. रा$_1$-नराः ॥ ३. रा$_1$ म-सहिताः । ल$_1$ ल$_2$ ब अ प्र-संहिताः । ४. ल$_1$ ल$_2$ ब प्र-बुधाः ॥ ५. रा$_1$-विजा० ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब म-च । ७. रा$_1$-एव ॥ ८. रा$_1$-शत्रुर्येनार्थेन स । ९. रा$_1$-स च तस्मै ॥ १०. रा$_1$-अभिज्ञाय । ११. ल$_1$ ल$_2$ ब-नास्ति । १२. रा$_1$-चैवावरोप्यते ॥ १३. रा$_1$-भवाननुशास्ति माम् । १४. रा$_1$-अलं वाक्यश्रमं कृत्वा ॥

वि-भ्रमाच् चित्त-मोहाद् वा बलवीर्योच्छ्रयेण वा ।
२४] नाऽभि-पन्नम् इदानीं यद् वृथा तस्य पुनः कथा[1] ॥२७॥ [२४
अस्मिन् काले तु यद् युक्तं तद् इदानीं वि-धीयताम् ।[1]
२५] ममाऽपनय-जं दोषं वि-क्रमेण शमी[2]-कुरु ॥२८॥ [२५
यदि खल्व्[3] अस्ति[3] ते स्नेहो भ्रातृ-त्वं चाऽव-गच्छसि ।
२६] यदि वा कार्यम् एतत्[4] ते हृदि कार्यम्[5] अ-तन्द्रितम् ॥२९॥ [२६
स सुहृद् यो विपन्नाऽर्थं दीनम् अभ्यव[6]-पद्यते ।
२७] स बन्धुर् योऽप-नीतेषु साहाय्यायोप-कल्पते[7] ॥३०॥ [२७
तम्[8] अथैवं[8] ब्रुवाणं तु वचनं दीन-दारुणम् ।
२८] क्रुद्धोऽयम् इति वि-ज्ञाय शनैः श्लक्ष्णम् उवाच ह ॥३१॥ [२८
अतीऽव हि[9] समा[9]-लक्ष्य भ्रातरं कुपितं[10] भृशम्[10] ।
२९] कुम्भ-कर्णः शनैर् वाक्यं बभाषे परि-सान्त्वयन् ॥३२॥
शृणु[11] राजन्न् अत्र[11]-हितो मम वाक्यम् अरिं-दम । [२९
३०] यद्-अर्थं तु पुरा सौम्य नारदाच् छ्रुतवान् अहम्[12] ॥३३॥ [N
षण्-मासाद् अहम् उत्था(द्-स्था)य अशित्वा[13] भक्ष्यम् उत्-तमम् ।
३१] न च तृप्तोऽस्मि राजेन्द्र ततोऽहं प्र-स्थितो वनम् ॥३४॥ [N
बहूनि भक्षयित्वाऽहं सत्त्वानि वि-विधानि वै[14] ।
३२] भुक्त्वा प्राणा[15]ऽयनं कृत्वा शिला-तलम् उपाऽऽविशम् ॥३५॥ [N
शिला-तल-स्थोऽपश्यं तं नारदं मुनि[16]-सत्तमम् ।

---

१. ल१ ल२ ब-नास्ति ॥ २. ल१ ल२ ब अ रा२ फ म-समी० ॥ ३. रा१-स्वल्पोपि । ४. प्र-एतद्धि । ५. रा१ रा२-कार्यसमं मम । म-कार्यमिदं मम ॥ ६. रा१-अभ्युपप० । ७. रा१-०कल्प्यते ॥ ८. रा१-तं मिथ्यैवं ॥ ९. ल१ ल२ ब अ प्र-सममालक्ष्य । १०. रा१-कुपितेंद्रियम ॥ ११. रा२ फ-शृणुष्वेदं महाराज ॥ १२. म-अतः श्लोकादारभ्य सर्गसमाप्तिं यावन्नास्ति ॥ १३. ल१ ल२ ब अ-ह्यशित्वा ॥ १४. ल१ ल२ ब-च । १५. रा२ फ-प्रीणयनं ॥ १६. रा२ प्र फ-शशिसप्रभम् ।

३३] आ-काशेन द्रुतं यान्तं मां च दृष्ट्वा स[1] तु स्थितम्[1](?ः)॥३६॥[N
अव-तीर्णश् च सहसा मया चैवाऽभि-वादितः ।
३४] उप-विष्टं[2] शिलायां तु ततोऽहं तम् अथाऽब्रुवम् ॥३७॥ [N
कुत आ-गम्यते ब्रह्मन् कुतो वा प्रति-गम्यते[3] ।
३५] एवम् उक्तो महा-राजे[4] नारदो माम् उवाच ह ॥३८॥ [N
देवानाम् आ-लयं मेरुं गतोऽहं देव-संसदि ।
३६] युष्मत्[5]-तो भय-भीतानां समाजस् तत्र सं-बभौ ॥३९॥ [N
तत्र[6] ब्रह्मा च रुद्रश् च विष्णुश् च जयतां वरः ।
३७] देव-राजो महेन्द्रश् च लोक-साक्षी च पावकः ॥४०॥ [N
मरुतो वसवश् चैव चन्द्राऽऽदित्यौ ग्रहास् तथा ।
३८] गन्धर्वा गुह्यकाश् चैवं ऋषयो गरुडोरगाः ॥४१[7]॥ [N
मन्त्रम्[8] आ-मन्त्रिरे तत्र वधं रक्षः-कुलस्य च[9][7] ।
३९] देव-राजो नि-बद्धश् च येन सं[10]-ख्ये परा-जितः ॥४२॥ [N
जितौ तु स-बलौ[11] सं-ख्ये कुवेर-वरुणाव् अपि ।
४०] चन्द्राऽऽदित्यौ वशं[12] नीतौ त्रैलोक्यं स-चराऽचरम् ॥४३॥[N
यज्ञा वि-ध्वंसिताः सर्वे धर्मिष्ठाश् च हता नृपाः ।
४१] देवोद्यानानि भग्नानि स्त्रियो नीता यथेष्ट-तः ॥४४॥ [N
रक्षसा तेन रौद्रेण रावणेन बलीयसा ।
४२] ब्रह्मणो वर-दानेन गर्वितेन सुरोत्तमाः ॥४५॥ [N
इत्य् उवाच ततो देवान् सर्वान् देव-पुरोहितः[13] ।

---

१. रा$_1$-तु धिष्ठितः । रा$_2$-समुपस्थितं ॥ २. ब प्र रा$_2$ फ-०विष्टः ॥ ३. रा$_1$-गम्यते प्रभो । ४. रा$_1$-महाभाग ॥ ५. रा$_1$-युष्मद्भ्यो ॥ ६. रा$_1$-मनुर् ॥ ७. अ-नास्ति ॥ ८. रा$_1$-मंत्रं प्रचक्रिरे । ९. रा$_1$-ते । फ-नः ॥ १०. रा$_1$-निबद्धस्तु यमश्चैव ॥ ११. रा$_1$-सकले । १२. रा$_2$ फ-वशे ॥ १३. ल$_1$ ल$_2$ ब रा$_2$-अत आरभ्य ४७-शश्लोकस्य तृतीयपादं यावन्नास्ति ।

४३] चिन्तयध्वं वधोपायं रावणस्य[1] दुर्-आत्मनः ॥४६॥ [N
एवम् उक्ते तु वचनं ब्रह्मा देवान् उवाच ह ।
४४] अवध्य-त्वं मया दत्तं देवैर् दैत्यैश् च रक्षसः ॥४७॥ [N
मनुष्येभ्यो[2] भयं तस्य वानरेभ्यश् च देवताः ।
४५] सुराऽसुर-समूहेऽपि वधस् तस्य न विद्यते ॥४८॥ [N
तस्माद् एष हरिर् देवः पद्म-नाभस् त्रि-विक्रमः ।
४६] पुत्रो दश-रथस्याऽस्तु चतुर्-व्यूहः[3] सना-तनः ॥४९॥ [N
भवन्तो वसु-धां गत्वा विष्णोर् अस्य महाऽऽत्मनः ।
४७] वानराणां[4] तनुं कृत्वा सहाय-त्वं करिष्यथ ॥५०॥ [N
एवम् उक्त्वा ततो ब्रह्मा तत्रैवाऽन्तर्-अधीयत ।
४८] देवा अपि यथा-न्यायं जग्मुर् वै[5] यत्र वासवः ॥५१॥ [N
एतद् आ-ख्यातवान् मह्यं नारदो भग-वान् ऋषिः ।
४९] यथा-तत्त्वम् अ-शेषेण ततो यातः सुराऽऽलयम्[6] ॥५२॥ [N
सोऽयं विष्णुः सुरैः सार्धं वानर-त्वम् उपाऽऽगतैः[7] ।
५०] रामाऽभिधानो राजेन्द्र अस्मान् हन्तुम् उपाऽऽगतः ॥[8]५३॥ [N
तन् मह्यं रोचते सीता रामार्थं[9] प्रति-दीयताम् ।
५१] कुरु मा वि-ग्रहं तेन सन्धिस्[10] तेनेह रुच्यताम् ॥५४॥ [N
त्रैलोक्ये तु नमस्यस् तु पूज्यश् च सततं प्र-भुः ।
५२] नमस्व रामं राजेन्द्र रक्ष चाऽऽत्मानम् आत्मना ॥५५॥ [N

---

१. रा$_1$-दारुणस्य ॥ २. अ प्र रा$_2$ फ-मानु० ॥ ३. रा$_2$-चतु-र्बाहुः ॥ ४. रा$_1$-वानरीं च ॥ ५. ल$_1$ ल$_2$ ब-यत्र स ॥ ६. प्र रा$_2$ फ-०लये ॥ ७. रा$_1$-नरवानरतां गतः । ८. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-नास्ति ॥ ९. ल$_1$ ल$_2$ ब अ-रामायैव प्रदीयताम् । १०. रा$_1$-नास्ति ॥

योग्यश् च राघवो मित्रं [1]सन्धिस् तेनोत्-[1]तमो भवेत् ।
५१] स-कामा न च वै देवा भविष्यन्ति निर्-उद्यमाः ॥५६॥ [N

इत्यार्षे रामायणे युद्धे[2]-काण्डे कुम्भकर्ण-वाक्यं नामैक-
चत्वारिंशः सर्गः ॥ ४१ ॥[3]

---

## [वं-४१]= [ द्वाचत्वारिंशः सर्गः ] =[दा-६३]

कुम्भकर्ण-वचः श्रुत्वा रावणो [4]राक्षसेश्वरः ।[5]
१] तूष्णीं-भूतश्[6] चिन्तयित्वा ततो वाक्यम् उवाच ह ॥१॥ [N
कुम्भ-कर्ण महा-प्राज्ञ [7]कुरुष्व वचनं मम ।
२] कोऽसौ विष्णुर् इति ख्यातो यस्मात् त्वं तात[8] बिभ्यसे ॥२॥ [N
देव-त्वे तं न मन्येऽहं तथाऽन्यान्[9] देव-दानवान्[9] ।
३] मानुष-त्वं[10] गते तस्मिन् किं भयं त्वाम् उप-स्थितम् ॥३॥ [N
नित्यम् आहार-भूतास् तु मानुषाः[11] सन्ति चाऽबलाः[11] ।
४] खादयित्वा तु यं[12] तु पूर्वं कथं पश्चात् नमाम्य् अहम् ॥४॥ [N
प्र-णम्य मानुषं रामं सीतां[13] दत्त्वा तु तस्य वै ।
५] हास्य-भूतम् तु लोकानाम् अनु-[14]यास्यामि पृष्ठ-तः ॥५॥ [N
राघवं तं महा-बाहो दीन-रूपो[15] ह्य् उपाऽऽस्य वै[15] ।

---

१. ल$_1$ ल$_2$ ब अ प्र फ-सन्धिश्चोत्तमो । रा$_2$-सन्धिश्चात्मनो ॥ २. रा$_1$ ब प्र-लंकाकांडे । ३. म-सर्गसमाप्तिर्न दृश्यते ॥ ४. रा$_1$-राक्षसाधिपः । ५. म-अत आरभ्य २५-शश्लोकपर्यन्तं नास्ति । ६. प्र-तूष्णीं स्थितश् ॥ ७. रा$_1$-शृणुष्व । ८. ल$_1$ ल$_2$ ब अ-वै बिभेषि च ॥ ९. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-तथान्ये देवदानवाः । १०. रा$_2$-०त्वे ॥ ११. रा$_1$ रा$_2$-सुमहाबलाः । १२. रा$_1$-तान् ॥ १३. ल$_1$ ल$_2$ ब-सीता । १४. ल$_1$ ल$_2$ ब-०यास्यसि ॥ १५. रा$_1$-०रूपोथ दासवत् ।

६] ऋद्धिं[1] तां पश्यमानोऽस्यं कथं शक्ष्यामि जीवितुम् ॥६॥ [N
हृत्वा तस्य पुरा भार्यां मानं कृत्वा सु-दारुणम् ।
७] प्र-णमेद् रावणो रामम् एष बुद्धेर्[2] विपर्य्-अयः[2] ॥७॥ [N
यदि रामः स्वयं विष्णुर् लक्ष्मणोऽपि[3] शत-क्रतुः ।
८] सु-ग्रीवस् त्र्यम्बकः साक्षात् स्वयं ब्रह्मा च जाम्ब-वान् ॥८॥ [N
अहो शास्त्राण्य् अ-श्रुतानि[4] तस्य ते बुद्धिर् ईदृशी ।
९] अत्यन्त[5]-वैरिणं रामं यो नमस्[6]-कर्तुम् इच्छसि[7] ॥९॥ [N
देव-त्वं यः परि-त्यज्य मानुषीं योनिम् आ-स्थितः ।
१०] अस्मान् हन्तुं किला[8]ऽऽयातः स सं-धेयः कथं मया[9] ॥१०॥ [N
यदि वा[11] राघवो[11] विष्णुर् व्यक्तं ते श्रोत्रम् आ-गतः ।
११] देवतानां हिताऽर्थाय[12] प्र-विष्टो मानुषीं तनुम् ॥११॥ [N
स वानराणां राजानं सु-ग्रीवं शरणं[13] गतः[13] ।
१२] अहोऽस्य स-दृशं सख्यं तिर्यग्-योनि-गणैः[14] सह ॥१२॥ [N
वीर्य-हीनस् तु किं विष्णुर् यो गतो ह्य्[15] अ(?ऋ)क्ष[15]-वानरान् ।
१३] अथवा वीर्य-हीनोऽसौ येन पूर्वं महाऽसुरः ॥१३॥ [N
वामनं रूपम् आ-स्थाय याचितस्[16] त्रि-पद-क्रमम् ।
१४] बलिस् तु दीक्षितो यज्ञे तेन त्वं सख्यम् इच्छसि ॥१४॥ [N
येन दत्ता मही सर्वा स-सागरवनाऽऽकरां[17] ।
१५] उप-कारः कृतः[18] पूर्वः स बद्धो यज्ञ-दीक्षितः[19] ।

---

१. रा$_1$-परामृद्धिं समालोक्य । रा$_2$-हृदि च प० । फ-ऋद्धिं च प० ॥ २. रा$_1$रा$_2$-ते बुद्धिनिर्णयः ॥ ३. रा$_1$ प्र-०णो वा ॥ ४. रा$_1$-अधीतानि । ५. रा$_1$-अलं ते वैं० । ६. रा$_1$-मित्रं । ७. रा$_1$-अर्हसि । ल$_1$ल$_2$ब म इच्छति ॥ ८. रा$_1$-आश्रितः । ९. ल$_1$ल$_2$ब-इहायातः । १०. रा$_2$-भवेत् ॥ ११. रा$_1$-रामाभिधो । १२ रा$_1$-हितार्थं च ॥ १३. रा$_2$-शरणागतः । १४. रा$_1$रा$_2$-०गतैः ॥ १५. ल$_1$प्र रा$_2$ फ-ऋक्षवा० ॥ १६. ल$_1$ल$_2$ ब फ-याचितं ॥ १७. रा$_2$प्र-वनान्तरा । १८. ल$_1$-ल$_2$ ब अ प्र रा$_2$ फ-उपचारः कृतः सर्वो । १९. ल$_1$ ब अ प्र रा$_2$ फ-यज्ञस्य दी० । ल$_2$-यज्ञस्य धीमतः ।

उप-कारी[1] हतो[2] येन[2] सोऽस्मान् रक्षति वैरिणः ॥१५॥ [N
१६] यदा मे निर्-जिता देवाः स्वर्गं गत्वा त्वया सह ।
तदा किं नाऽस्ति[3] विष्णु-त्वं तस्य देवस्य राक्षस ।
१७] साम्प्रतं कुत आ-यातः स विष्णुर् येन बिभ्यसे[4] ॥१६॥ [N
शरीर-रक्षणाऽर्थाय ध्रुवं[5] ते वाक्यम् ईदृशम् ।
१८] नाऽयं क्लीबयितुं कालः काल[6]-युद्धे निशा-चर ॥१७॥ [N
आयुः पिता-महात् प्राऽऽप्तं त्रैलोक्यं च[7] वशी[8]-कृतम् ।
१९] राघवं प्र-णमे कस्माद् धीन-वीर्य-पराऽऽक्रमम् ॥१८॥ [N
गच्छस्व शयनीयाय शेष्व[9] त्वं विगत-ज्वरः ।
२०] शयानं न च हन्यात् त्वां राघवो लक्ष्मणस् तथा ॥१९॥ [N
अहं रामं वधिष्यामि[10] स-सुग्रीवं स[11]-लक्ष्मणम् ।
२१] वानरांश् च वधिष्यामि[12] ततो देवान् महा-रणे ॥२०॥ [N
विष्णुं चैव हनिष्यामि[13] ये च विष्णु-अनुयायिनः ।
२२] गच्छ गच्छ स्व-कं क्षेत्रं चिरं जीव सुखी भव ॥२१॥ [N
भ्रातरं त्व[14] एवम्[14] उक्त्वाऽसौ रावणः काल-चोदितः ।
२३] साऽवलेपं स[15] गर्जन् वै[15] पुनर् वचनम् अब्रवीत् ॥२२॥ [N
जानामि सीतां धरणी-प्रसूतां
जानामि रामं[16] मधु-सूदनोऽयम् ।
अहं हि जाने स्वयम्[17] अस्य वध्यस्
२४]　　तेनाऽऽहृता मे जनकाऽऽत्मजैषा ॥२३॥ [N

---

१. अ प्र-०कारो । २. रा$_2$ फ-हतस्तेन ॥ ३. ल$_1$ ल$_2$ ब-नास्य । ४. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-बिभ्यसि ॥ ५. रा$_1$-त्वं ब्रूषे । ६. ल$_1$ ल$_2$ ब अ रा$_2$ फ-कालो युद्धे ॥ ७. रा$_1$- तु । ८. रा$_2$ फ-वशो कृ० ॥ ९. ल$_1$ ल$_2$ ब अ प्र-शेषे ॥ १०. ल$_1$ ल$_2$ ब-हनिष्यामि । ११. रा$_1$-च ल० । १२. रा$_1$-हनिष्यामि ॥ १३. प्र रा$_2$ फ-वधिष्यामि ॥ १४. रा$_1$-चैवम् । १५. रा$_1$-सगर्वं च ॥ १६. ल$_1$ ल$_2$ ब अ प्र-रामो । १७. रा$_1$-त्वहम् ॥

न कामान् नैव च क्रोधात् त्यजामि जनकाऽऽत्मजाम् ।
२५] नि-हतो गन्तुम् इच्छामि तद् विष्णोः परमं पदम् ॥२४॥ [N
स०४२]रावणस्य वचः श्रुत्वा क्रुद्धस्य परि-देवितम् ।
१] कुम्भ-कर्णः पुनर् वाक्यम् अश्रु-पूर्णम् अभाषत ॥२५॥ [N
अलं राक्षस-शार्दूल सं-तापम् उप-गम्य हि ।
२] रोष-शोकौ परि-त्यज्य स्व-स्थो भवितुम् अर्हसि ॥२६॥ [३०
नैवम् अर्हसि वक्तुं त्वं मयि जीवति पार्थिव ।
३] तम् अहं शातयिष्यामि यत्-कृते परि-तप्यसे ॥२७॥ [३१
अवश्यं तु हितं वाच्यः सर्वाऽवस्थो मही-पतिः ।
४] बन्धु-भावाद् अभि-हितं भ्रातृ-स्नेहाच् च पार्थिव ॥२८॥ [३२
सदृशं यत् तु कार्येऽस्मिन् कर्तुं स्निग्धेन बन्धुना ।
५] शत्रूणां कदनं पश्य क्रियमाणं मयाऽनघ ॥२९॥ [३३
अद्य पश्य महा-बाहो मया समर-मूर्धनि ।
६] हते रामे सह भ्रात्रा द्रवन्तीं कपि-वाहिनीम् ॥३०॥ [३४
अद्य रामस्य दृष्ट्वा त्वं मयाऽऽनीतं रणाच् छिरः ।
७] सुखी भव महा-राज सीता भवतु दुःखिता[11] ॥३१॥ [३५
अद्य रामस्य नि-धनं पश्यन्तु सु-महत् प्रियम् ।
८] लङ्कायां राक्षसाः सर्वे ये ते निहत-बान्धवाः ॥३२॥ [३६
अद्य शोक-परीऽतानां स्व-बन्धु-वध-शोचिनाम् ।

---

१. रा$_1$-हरामि । टि० अन्तर्भावितः ण्यर्थः द्र० ॥ २. रा$_1$ ल$_1$ ल$_2$ ब प्र रा$_2$ फ-साश्रुपूर्णमभा० । ल$_1$ ल$_2$ ब अ-०र्णमुखोऽब्रवीत् ॥ ३. रा$_1$-दोषायासौ ॥ ४. रा$_1$ ल$_1$ अ प्र रा$_2$ फ-वाक्यं । ५. रा$_1$ प्र रा$_2$-०वस्थं । ६. रा$_1$-मया तव ॥ ७. ल$_2$ ब अ-वक्तुं । ८. रा$_1$-मयाद्य तत् ॥ ९. ल$_1$ ल$_2$ ब अ-राजन् । १०. रा$_1$-हरिवा० ॥ ११. अतः परमधिकः पाठः—रा$_1$ रा$_2$-अद्य तस्य विनाशेन मारुतेर्मारुताश्रयं । क्रोधं निर्वापयिष्यामि लंका येन प्रधर्षिता ॥ सुखी भव महाबाहो लंका भवतु निर्वृता । भविष्यति न ते शोकः शत्रुपक्षे मया हते ॥

९] शत्रोर् युधि वि-नाशेन करोम्य् अश्रु-प्रमार्जनम् ॥३३॥ [३७
अद्य पर्वतकूटाऽऽभं [1]सं-सूर्यम् इव तोय-[1]दम् ।
१०] वि-शीर्णं पश्य सम्-अरे सु-ग्रीवं वानरेश्वरम् ॥३४॥ [३८
अहम् एकोऽद्य यास्यामि [2]रणं रण-विशारदे[2] ।
११] अ[2]-साधारणम् इच्छामि तव दातुम् अहं जयम् ॥३५॥ [N
१२पू] नाऽपरे प्रेषणीयास् ते युद्धायाऽतुल-विक्रम ।[3] [४१उ
अहम् उत्-सादयिष्यामि शत्रुं तव रिपुं-जय ॥३६॥ [४२
१५] यदि शक्रो यदि यमो यदि पावक-मारुतौ ।
तान् अहं [4]साधयिष्यामि कुवेर-वरुणाव् अपि ॥३७॥ [४३
१६] गिरि-मात्र-शरीरस्य [5]शितं-शूल-धरस्य मे ।
नदतस् तीक्ष्ण-दंष्ट्रस्य [6]बिभीयाद् अपि वासवः ॥३८॥ [४४
१७] अथवा न्यस्त-शस्त्रस्य मृद्नतस् तरसा [7]चमूम् ।[8]
१८उ] न मे प्रमुख-तः कश्-चिच् छक्तः स्थातुं जिजीविषुः ॥३९॥ [४५
नैव शक्त्या न गदया नाऽसिना न शितैः शरैः ।
१९] वारयेन् मां [9]हि सं-[9]रब्धं साक्षाद् अपि पुरं-दरः । [N
हस्ताभ्याम् एव सं-रब्धो हन्याम् अपि हि वज्रिणम् ॥४०॥ [४६
२०] यदि मे मुष्टि-वेगं स राघवो वि-[10]षहिष्यते ।
ततः पास्यन्ति बाणौघा रुधिरं राघवस्य वै ॥४१॥ [४७

---

१. रा$_1$-सूर्यपुत्रं प्लवंगमं ॥ २. ल$_1$ल$_2$ ब-नास्ति ॥ ३. अतः परमधिकः पाठः—रा$_1$ रा$_2$-कथं त्वं राक्षसैरेभिर्मया च परिरक्षितः । जिघांसुभिर्दाशरथेस्तप्स्यसे राक्षसाधिप ॥ यदि पूर्वं निपतिते मयि त्वां हन्ति राघवः । नाहमात्मनि संतापं गच्छेयं राक्षसाधिप ॥ कामं नान्यमिदानीं त्वमादेक्ष्यसि परंतप ॥ ४. रा$_1$-योधयिष्यामि । ल$_1$ ल$_2$ ब अ प्र-शोषयि० ॥ ५. ल$_1$ल$_2$ब अ प्र रा$_2$-शिलाशू० । ६. रा$_1$ल$_2$अ प्र-बिभियाद् ॥ ७. रा$_1$म-रिपून् । ८. अतः परमधिकः पाठः—रा$_1$-पवनस्येव वेगेन भंजतस्तरसा द्रु(?रि) मा(?पू)न् ॥ ९. म-सुसं० ॥ १०. ल$_1$ ल$_2$ब अ प्र रा$_2$फ म-विषहिष्यति ॥

२१] चिन्तया बाध्यसे[1] राजन् किम्-अर्थं मयि तिष्ठति ।
सोऽहं शत्रु-विनाशाय तव निर्-यातुम् उद्-यतः ॥४२॥ [४९
अद्य रामं स-सौमित्रिं स-सुग्रीवं स-मारुतिम् । [५०उ
२२] सर्वान् एक-पदे[2] हन्मि प्रति-ज्ञाने[3] तवाऽग्र-तः ॥४३॥ [N
वधेन ते दाशरथेः सुखाऽहं
सुखं[4] समा-हर्तुम् अहं प्र-यामि ।
नि-हत्य रामं सह लक्ष्मणेन
N] खादामि सर्वान् हरि-यूथ[5]-मुख्यान् ॥४४॥ [५७
रमस्व कामान् पिब चाऽग्र्य[6]-वारुणीं
कुरुष्व कृत्यान्य्[7] अप-नीयतां[8] ज्वरः ।
तवाऽद्य रामे गमिते यम-क्षयं
२३] चिराय सीता वश-गा भविष्यति ॥४५॥ [५८

इत्यार्षे रामायणे युद्ध-काण्डे कुम्भकर्ण-गर्जनं[10] नाम द्विचत्वारिंशः सर्गः ॥४२॥

---

## [वं-४३]= [ त्रिचत्वारिंशः सर्गः ] =[दा-६४]

तद् उक्तम् अति-कायेन बलिना बल-शालिना ।[11]
१] कुम्भ[12]-कर्णेन वचनं श्रुत्वोवाच महोदरः ॥१॥ [१
कुम्भ-कर्ण कुले जातो वृथा[13] प्राकृत-दर्शनः ।
२] अव[14]-लिप्तो न शक्नोति कृत्यं सर्व-त्र वेदितुम् ॥२॥ [२

---

१. रा$_1$-दह्यसे ॥ २. फ म-एकायने । ३. ल$_1$ ल$_2$ ब अ रा$_2$ फ-प्रतिज्ञा मे ॥ ४. ल$_1$ ल$_2$ ब अ-शत्रुं । ५. अ प्र म-हरियोधमु० ॥ ६. ल$_1$ ल$_2$-चाग्रवा० । ७. ल$_1$ ल$_2$ ब अ प्र-कार्याण्य् । ८. ल$_1$ अ-अपयातु ते ॥ ९. रा$_1$ ब म-लंकाकां० । १०. रा$_2$म-०गर्जनो ॥ ११. रा$_1$-एवं विकत्थमानस्य धन्विनो बलशालिनः । १२. रा$_1$-कुम्भकर्णस्य ॥ १३. रा$_1$-यथा । १४. ल$_1$ ल$_2$ ब-अविलुप्तो ॥

न हि राजा[1] न जानीते[1] कुम्भ-कर्ण नयाऽनयौ ।
३] त्वं तु कैशोरकाद् धृष्टं केवलं वक्तुम् इच्छसि[2] ॥३॥ [३
स्थानं वृद्धिं च हानिं च देश-काल-विभाग-वित्[3] ।
४] आत्मनश् च परेषां च बुध्यते राक्षसर्षभ[4] ॥४॥ [४
यत्[5] तु[5] शक्यं बल-वता वक्तुं प्राकृत-बुद्धिना ।
५] अनुपासित-वृद्धत्वात्[6] तवैतत्[7] तादृशं वचः[8] ॥५॥ [५
यश् च धर्माऽर्थकामांस् त्वं ब्रवीषि पृथग्-आश्रयान् ।
६] अनु-पश्यसि नो भावं नहि लक्षणम् अस्ति ते[9] ॥६॥ [६
कामम्[10] एवं[10] हि सर्वेषां कारणानां[11] प्र-योजनम् ।
७] श्रेयः-पापीयसां चाऽत्र फलं भवति कर्मणाम् ॥७॥ [७
निःश्रेयस-फलत्वे[12] च[12] धर्माऽर्थाव् इतराव् अपि ।
८] इह[13] धर्माऽर्थयोः प्राऽऽप्तिः फलं च[14] प्रेत्य-भाविकर्मसु[15] ॥८॥ [८
इहलौकिक-पारत्र्यं[16] कर्म[17] पुंभिर् नि-षेव्यते ।
९] कर्मणाऽत्र नु[18] कल्याणं लभते कामम् आ-स्थितः ॥९॥ [९
न प्र[19]-मादो ह्य् अयं[19] राज्ञा[20] हृदि कार्यः[21] कदा-चन[22] ।
१०] शत्रोर् हि सम्-अरे हिंसा किम् इवाऽत्र[23] वि-धीयते[23] ॥१०॥ [१०

---

१. रा$_1$-राजन् विजा० । २. रा$_1$-अर्हसि ॥ ३. रा$_1$-०विभागतां । ४. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ-०सेश्वर ॥ ५. रा$_1$-यत्र । ६. रा$_1$ फ-०वृद्धेन । म-०वृद्धस्तु । ७. म-कः कुर्यात् । ८. रा$_1$ ल$_1$-भाषितं त्वया । म-०शं बुधः ॥ ९. रा$_1$-नास्ति ॥ १०. ल$_1$-कामश्चैषां । ल$_2$ ब ञ प्र फ-कामश्चैव । रा$_2$-कामस्त्वेवं । ११. रा$_1$-कारणं तु ॥ १२. रा$_1$ म-०फलं चैव । फ-०फलत्वेन । १३. ल$_1$ल$_2$ब प्र रा$_2$ फ म-अथ । ञ-अत्र । १४. ल$_1$ल$_2$ब ञ प्र रा$_2$ फ म-व । १५. ल$_1$ल$_2$ब ञ प्र रा$_2$-भावितं ॥ १६. रा$_1$-०पारत्र्यं । १७. म-फलं । १८. ल$_1$ल$_2$ब प्र-कर्मण्यर्थे तु । रा$_2$-कर्मणामथ । फ-कर्मण्यपि च ॥ १९. रा$_1$ प्र रा$_2$ फ-प्रमादमिदं । २०. प्र रा$_2$-राज्ञो । २१. प्र रा$_2$-कार्यं । २२. ल$_1$ ल$_2$ ब-कथंचन । २३. रा$_2$-इवात्रापनीयते । ल$_1$ ल$_2$ ब प्र रा$_2$-एवात्र वि० ॥

सीतायांश्[1] चोप-नयने हेतुर् यः प्र-कृतस्[2] त्वया ।
११] तत्राऽप्य् अन्-उपपन्नं ते[3] वक्ष्यामि यद् अ-साधु वां[4] ॥११॥ [११
येन पूर्वं जन-स्थाने बहवो राक्षसा हताः ।[5]
१२] तं शूरं राघवं सं-ख्ये कथम् एको हनिष्यसि[6] ॥१२॥ [१२
ये पुरा निर्-जितास् तेन जन-स्थाने महौजसः ।
१३] राक्षसास् तस्य तान् भीतान् सर्वान् एवाऽत्र लोकय ॥१३॥[7] [१३
तं सिंहम् इव सं-क्रुद्धं रामं दशरथाऽऽत्मजम् ।
१५] सर्पं सुप्तम् इवाऽप्राज्ञः प्र-बोधयितुम् इच्छसि ॥१४॥ [१४
ज्वलितं तेजसा नित्यं क्रोधेन च दुरा-सदम् ।
१६] कथं मृत्युम् इवाऽसह्यम् आ-सादयितुम् इच्छसि ॥१५॥ [१५
संशय-स्थम् अन्-आचीर्णं शत्रुं प्रति च हासनम् ।
१७] एकस्य गमनं तत्र न मह्यं रोचते तव ॥१६॥ [१६
हीनाऽर्थस् तु समृद्धाऽर्थं को रिपुं प्राकृतो यथा ।
१८] निश्-चितं जीवित-त्यागी वशम् आ-नेतुम् अर्हति ॥१७॥ [१७
यस्य नाऽस्ति मनुष्येषु सदृशो राक्षसोत्तम ।
१९] तेनेच्छसि कथं योद्धुं तुल्येनेह वि-वैस्वतः ॥१८॥ [१८
एवम् उक्त्वा तु सं-क्रुद्धः कुम्भ-कर्णं महोदरः ।
२०] उवाच रक्षसां मध्ये रावणं रावणोपमंः ॥१९॥ [१९
लब्ध्वा पुनस् त्वं वैदेहीं किम् अस्मान् अभि-भाषसे ।
२१] यदीऽच्छसि सतीं सीताम् अ-वशां वशम् आ-गताम् ॥२०॥[२०

---

१. ल₁ ल₂ ब श्र प्र रा₂-सीतावशोप० । फ-सीता तस्योपनयनो । २. रा₁ प्र रा₂ फ म-प्राकृ० । ३. फ-हि । ४. रा₁-०वत् ॥ ५. अतः परमधिकः पाठः—रा₁ रा₂-खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा । ६. रा₁-बलिनं राघवं हंतुं कथमेको भविष्यति ॥ ७. अतः परमधिकः पाठः—रा₁ रा₂-येऽपि चान्ये महात्मानो राक्षसाः शूरसंमताः । रामं पश्यंति भीतास्ते स्वप्नेऽपि नरसत्तमं ॥ ८. ल₁ ल₂ ब श्र प्र-शयनस्थम् ॥ ९. रा₁ रा₂ फ-विवस्वता ॥ १०. रा₁-राक्षसाधिपं ॥

दृष्टः कश्-चिद् उपायो मे सीतोपा[1]ऽऽदान-कारकः ।
२२] रुचितश् च स्व-बुद्ध्या मे राक्षसर्षभ तं शृणु ॥२१॥ [२१
अहं[2] द्वि-जिह्वः सं-ह्रादी कुम्भ-कर्णो[3]ऽति-गर्जनः ।
२३] मुञ्च राम-वधायाऽद्य गच्छन्त्व् इत्य् अव-घोषय ॥२२॥ [२२
ततो गत्वा रणे[4] युद्धं दास्यामस् तस्य यत्न-तः ।
२४] तं वधिष्यामहे शत्रुं नोपायैः कार्यम् अस्ति नः ॥२३॥ [२३
अथ जीवति शत्रुस् ते वयं च कृत-संयुगाः ।
२५] ततः समभि-पश्यामो मनसा यत् सम्-अर्थितम्[5] ॥२४॥ [२४
वयं युद्धाद् इहैष्यामो रुधिरेण सम्-उक्षिताः ।
२६] वि-दार्य स्व-तनुं बाणैर् रामनामाऽङ्कितैर् युधि ॥२५॥ [२५
२७उ] नि-हतो राघवोऽस्माभिर् लक्ष्मणश् चेति वादिनः[6] ।
तव पादौ गृहीष्यामस्[7] त्वं नः कामं परि-ष्वजेः ॥२६॥ [२६
२८] ततोऽव-घुष्य नगरे गज-स्कन्देन पार्थिव ।
हतो रामः सह भ्रात्रा स-सेन[8] इति सर्व-तः ॥२७॥ [२७
२९] प्रीतो नाम ततो भूत्वा भृत्यानां त्वम् अरिं-दम ।
भोगांश् च परि-बर्हांश् च कामान् वसु च दापय ॥२८॥ [२८
३०] ततो माल्यानि वासांसि वराऽन्नम् अनु-लेपनम् ।
पेयं च दत्त्वा योधेभ्यः स्वयं च मुदितः पिब ॥२९॥ [२९
३१] ततोऽस्मिन् बहुली-भूते कौलीने सर्व-तो गते ।
N] भक्षितः सम्-अरे रामो राक्षसैर् इति वि-श्रुते ॥३०॥ [३०
प्र-विश्याऽऽश्वास्य चा[9]ऽपि त्वं सीतां रहसि पार्थिव ।

---

१. रा$_1$-सीतां वाऽऽदान० ॥ २. ल$_1$ ल$_2$ ब ञ प्र-अनर्हजिह्वः । ३. रा$_1$-०कर्णो विमर्दनः ॥ ४. रा$_1$-वयं ॥ ५. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब ञ प्र रा$_2$-यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम ॥ ६. ल$_2$-वादितः । ७. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ सं-गृही० ॥ ८. स-ससैन्य ॥ ९. रा$_1$-चापि ।

३२] वर-माल्यैश्[1] च कामैश् च रत्नैश् चैतां प्र-लोभय ॥३१॥ [३१
अनयोप-धया राजन् भयशोकाऽवरुद्धया ।
३३] अ-कामा वश-गा सीता नष्ट-नाथा[2] भविष्यति ॥३२॥ [३२
रञ्जनीयं हि भर्तारं वि-नष्टम् अव-गम्य[3] सा ।
३४] वै-राग्यात् स्त्री-लघुत्वाच् च त्वद्-वशं प्रति-पत्स्यते ३३॥ [३३
सा पुरा सुख-संवृद्धा सुखाऽर्हा दुःख-कर्षिता ।
३५] त्वय्य् अ-दृष्टं सुखं ज्ञात्वा सर्व[4]-थोप-गमिष्यति ॥३४॥ [३४
एतत् सु-नीतं हि वचो ममाऽद्य
रामं हि दृष्ट्वैव भवेद् अन्-अर्थः ।
इहैव ते सेत्स्यति मोत्[5]-सुको भूर्
३६] [6]महान् अ-युद्धेन सुखस्य लाभः ॥३५॥ [३५
अदृष्टसैन्यो ह्य् अन्-अवाऽऽप्तसंशयो
रिपून्[7] अ-युद्धेन जयेज् जनाऽधिपः ।
यशश् च पुण्यं च महीं च भू-पतिः
३७] श्रियं च कीर्तिं च चिरं सम्-अश्नुते ॥३६॥ [३६

इत्यार्षे रामायणे युद्ध[8]-काण्डे महोदर-वाक्यं नाम
त्रिचत्वारिंशः सर्गः ॥४३॥

---

१. म-धनधान्यैश् ॥ २. रा१ ल१ ल२ ब अ प्र-तव नाथ ॥ ३. प्र रा२ फ-अधिगम्य ॥ ४. रा१ ल१ ल२ ब-सर्वशोथाग० ॥ ५. रा१ ल१ ल२ ब प्र फ-सोत्सुको । ६. रा१ ल१ ल२ ब-महा-हेयु० ॥ ७. रा१ ल१ ल२ ब अ प्र-रिपूंश्च यु० ॥ ८. ब प्र रा२-लंकाकाण्डे ॥

स तथोक्तो विनिर्-भर्त्स्य कुम्भ-कर्णो महोदरम् । [१पू
१] आ-ददे नि-शितं शूलं शत्रु-शोणित-रञ्जितम् ॥१॥ [१८उ
सर्व-कालाऽऽयसं दीप्तं तप्त-काञ्चन-भूषणम्[1] ।
२] इन्द्राऽशनि-समं घोरं वज्र[2]-प्रतिम-गौरवम् ॥२॥ [१९
देव-दानव-दर्प-घ्नं यक्ष-गन्धर्व-सूदनम् ।
N] रक्त-माल्याऽम्बर-धरं शिखा-प्रोद्धत[3]-पावकम् ॥३॥ [२०
३उ] आ-दाय नि-शितं शूलं शत्रु-शोणित-रञ्जितम् ।
कुम्भ-कर्णो महा-तेजा रावणं वाक्यम् अब्रवीत् ॥४॥ [२१
४] गमिष्याम्य् अहम् एवैकस् तिष्ठत्व् इह बलं तव ।
N] अद्य तान् क्षुधितः[4] कोपाद् भक्षयिष्यामि वानरान् ॥५॥ [२२
अहं तेऽद्य भयं घोरं वधात् तस्य दुर्-आत्मनः ।
५] रावणैतत्[5] प्र-मार्जामि निर्-वैरस् त्वं सुखी भव ॥६॥ [२
गर्जन्ति न वृथा[6] शूरा निर्-जला इव तोय-दाः ।
६] पश्य सं-पाद्यमानं वै गर्जितं युधि कर्मणा ॥७॥ [३
नाऽमर्षयन्त्य् आत्मनो ये ते न सं-भावयन्त्य्[7] उत ।
७] अमर्षयित्वा शूरास् तु कर्म कुर्वन्ति दुष्-करम् ॥८॥ [४
वि-क्लवानाम् अ-बुद्धीनां राज्ञां(?ज्ञः) पण्डित-मानिनाम् ।
८] शृण्वतां[8](?तो) व्या-हृतम् इदं त्वद्-विधानां महोदर ॥९॥ [५
युद्धे का-पुरुषैर् नित्यं भवद्भिः प्रिय-वादिभिः ।
९] राजानम् अनु-वर्तद्भिः कृत्यम् एतद् वि-नाशितम् ॥१०॥ [६
कृच्छ्राऽवस्था कृता लङ्का क्षीणः कोशो बलं हतम् ।

---

१. म-०भूषितं । २. फ-अत आरभ्य षष्ठश्लोकस्य प्रथमपादं यावन्नास्ति ॥ ३. रा$_2$-शिखास्फूर्जितपा० ॥ ४. रा$_2$-क्रुधितः ॥ ५. म-रामं च प्रमथिष्यामि ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब-तथा ॥ ७. फ-संभाषयंत्य् ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-शृण्वतामाहतम् ॥

१०] राजानम् एनम् आ-साद्य सुहृच्-चित्तम् इवाऽर्पितम् ॥११॥ [७
एष निर्-याम्य् अहं युद्धम्[1] उद्-यतः शत्रु-निग्रहे[2] ।
११] दुर्[3]-णयं भवताम् अद्य समी-कर्तुं[4] महाऽऽहवे ॥१२॥ [८
एवम् उक्तवतो वाक्यं कुम्भ-कर्णस्य धी-मतः ।
१३] प्रत्यु-उवाच ततो वाक्यं प्र-हसन् राक्षसेश्वरः ॥१३॥ [९
महोदरोऽयं रामस्य परि-त्रस्तो न सं-शयः ।
१४] न हि रोचयते तात युद्धं युद्ध-विशारद ॥१४॥ [१०
न कश्-चित् त्वत्-समो ह्य्[4] अस्ति सौहृदेन[5] बलेन च ।
१५] गच्छ शत्रु-वधाय त्वं कुम्भ-कर्ण जयाय च ॥१५॥ [११
बलैः[6] परि-वृतो भ्रातः कर्तव्यं वचनं च[7] मे । [२३पू
१६] अ-सहायस्य गमनं मम बुद्ध्या न रोचते ॥१६॥ [N
वानरा हि महाऽऽत्मानः शीघ्राश् च व्यव-सायिनः । [२३उ
१७] एकाकिनं प्र-मत्तं च[8] गमयेयुर् हि सं-शयम् ॥१७॥
तस्मात् त्वं[10] रामं दुर्[9]-धर्षं[6] सैन्यैः परि-वृतो व्रज ।
१८] अ-हितं राक्षसानां त्वं शत्रु-पक्षं नि-षूदय ॥१८॥ [२४
अथाऽऽसनात् समुत्-पत्य मणिं सूर्य-सम-प्रभम् ।
१९] आ-बबन्ध महा-तेजाः कुम्भ-कर्णस्य मस्तके ॥१९॥ [२५
अङ्ग-दान्य् अङ्गुलीयानि[11] कवचं च महा-धनम्[12] ।
२०] हारं च शशि-सङ्काशं स बबन्ध महाऽऽत्मनः ॥२०॥ [२६
दिव्यं सु-गन्धं माल्यं[13] च[13] रत्नानि वि-विधानि च ।
२१] गात्रेषु योजयामास कुण्डले च महा-भुजः ॥२१॥ [२७

---

१. ल$_{1}$ ल$_{2}$-युद्धे । २. ल$_{1}$ ल$_{2}$ ब-०विग्रहे । ३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब-दुर्जयं ॥ ४. म-नास्ति । ५. रा$_{1}$ प्र फ म-पौरुषेण ॥ ६. म-सैन्यैः । ७. ल$_{1}$ ल$_{2}$ ब-न ॥ ८. प्र-प्रमत्ताश्च ॥ ९. रा$_{2}$ फ म-परमदु० ॥ १०. रा$_{2}$ म-रावणः ॥ ११. प्र-०लीयांश्च । १२. म-महादढं ॥ १३. रा$_{2}$-माल्यांश्च । म-माल्यानि ॥

काञ्चनाऽङ्गदकेयूरो निष्क-प्रवर-भूषणः ।
२२] कुम्भ-कर्णो महा-बाहुर् हुतोऽनल इवाऽऽबभौ ॥२२॥ [२८
श्रोणि-सूत्रेण महता काञ्चनेन वि-राजता ।
२३] अमृतोत्पादने नद्धो भुज-गेनेव[1] मन्दरः ॥२३॥ [२९
स काञ्चनं भार-सहं[2] वि-मानं[3]
विद्युत्-प्रभं दीप्तम् इवाऽऽत्म-भासा ।
आ-बध्यमानः[4] कवचं बभासे
N] सन्ध्याऽभ्रं-संवीत इवाऽद्रि-राजः ॥२४॥[5] [३०
सर्वाऽऽभरण-पुष्टाऽङ्गः शूल-पाणिः स राक्षसः ।
२४] वि-क्रमाय कृतोत्साहो नारायण इवाऽऽबभौ ॥२५॥ [३१
स रावणं परि-ष्वज्य कृत्वा चाँऽपि[6] प्र-दक्षिणम् ।
२५] प्र-णम्य शिरसा चैव सम्प्र-तस्थे महा-बलः ॥२६॥ [३२
तस्य सूतो रथं दिव्यं नवँ-नल्वं[7] प्रमाण-तः ।
२६] युक्तं खर-सहस्रेण युद्ध[8]-ध्वज-विभूषितम् ॥२७॥ [N
महा-जलद-निर्घोषं कैलास[9]शिखरोपमम् ।
२७] अष्ट-चक्रं महा-वेगम् उप-नीय महा-रथम् ॥२८॥ [N
जयाऽऽशिषा वर्धयित्वा वि-नीतः प्राऽञ्जलिः स्थितः ।
२८] स तम् आ-रुह्य च ययौ मेघ-गम्भीर-निस्वनम् ॥२९॥ [N
सोऽति-कायो महा-तेजा रथस्योपरि राक्षसः ।
N] गन्धर्वनगराऽऽकारः प्रगृहीताऽऽयुधो बभौ ॥३०॥ [N
तम् आशीर्भिः प्रसन्नाभिः[10] प्रेषयामास रावणः । [N
२९] शङ्ख-दुन्दुभि-निर्घोषैः सैन्यैश् चाऽत्र वराऽऽयुधैः ॥३१॥

१. रा१-नास्ति ॥ २. म-भारसहस्रनिर्मितं । ३. ल१ ल२ ब श्र प्र रा२ फ-०मानं । ४. म-०भ्रपीताभ । ५. म-अतः परं सर्गसमाप्तिः—इति रामायणे लंकाकाण्डे आभरणप्रदायको नाम सर्गः॥ ६. ल१ब श्र म-चाभिप्र० । प्र-वाभिप्र० । रा२-वागिभः प्र० ॥ ७. रा२ फ-पंचनल्वं । ८. रा१ ल१ ल२ ब-युधि ध्वज० ॥ ९. रा१ ल१ ल२ ब श्र प्र-कैलास० ॥ १०. म-प्रशस्ताभिः ॥

तं गजैश् च चतुर्-दन्तैः स्यन्दनैश् चाऽम्बुद-स्वनैः । [३४
३०] अन्व्-अगच्छन् महाऽऽत्मानं रथिनो रथिनां वरम् ॥३२॥ [३५
नागोष्ट्र-खर-हस्त्य्-अश्व-सिंह-द्वीपि-मृग-द्विजैः ।
N] अनु-जग्मुर् महाऽऽत्मानं देव-दानव-दुर्जयम् ॥३३॥ [३६
स पुष्प-वर्षैर् अव-कीर्यमाणो
धृताऽऽतपत्रः शित-शूल-पाणिः ।
मदोत्कटः[1] शोणित-पान-मत्तो[2]
३१] विनिर्-ययौ राक्षस-योध-मुख्यः॥[3]३४॥ [३७
निष्-पतन्तं महा-नादं महा-कायं महा-बलम् । [३३पू
३२] अन्व्-अयू राक्षसा घोरा भीमाऽक्षं शस्त्र-पाणयः ॥३५॥ [३८उ
राक्षसाश् च महा-काया नीलाऽञ्जनचयोपमाः ।
३३] शूलान्य् उद्-यम्य खड्गांश् च वि-विधांश् च परश्वधान् ३६ [३९
बहु-व्यामांश् च परि-घान् गदाश् च मुशलानि[4] च ।
३४] साल-स्कन्धांश् च वि-विधान् छत-घ्नीश् च दुरा-सदाः ३७ [४०
स पुर-द्वारम् आ-साद्य राक्षसो घोर-दर्शनः । [N
३५] निष्-पपात महा-तेजाः कुम्भ-कर्णः प्रताप-वान् ॥३८॥ [४१
धनुः-शत-परीणाहः षड्-बाण-शतम् उच्-छ्रितः ।
३६] रौद्रः शकटचक्राऽक्षो गिरिशृङ्गोपमो[5] महान् ॥३९॥ [४२
सन्नि-पत्य[6] स रक्षांसि दग्धशैलोपमो बली ।
३७] कुम्भ-कर्णो महा-वक्त्रः प्र-हसन् वाक्यम् अब्रवीत् ॥४०॥ [४३
अद्य[7] वानर-मुख्यानां तानि यूथानि भाग-शः ।

---

१. अ रा$_2$ फ म-महोत्कटः । २. म-०तगंधमत्तो । ३. अतः परमधिकः पाठः—रा$_2$-पदातयश्च बहवो महाकाया महाबलाः ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ-मुसुलानि । प्र म-मुसलानि ॥ ५. प्र फ म-गिरिकूटोपमो । रा$_2$-चित्रकूटोपमो ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब-सन्निपात्य ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ-एष । प्र-अथ ।

३८] निर्-दहिष्यामि सं-क्रुद्धः शलभान् इव पावकः ॥४१॥ [४४

N] सर्वे राम-सहायाश् च ये चाऽन्ये मम शत्रवः । [N

नाऽप-राध्यन्ति मे कामं वानरा वन-चारिणः ।

३९] जातिर् एतद्[1]-विधानां सा[2] पुरोद्यान-विदूषणम् ॥४२॥[3] [४५

पुर-रोधस्य मूलं तु राघवः सह-लक्ष्मणः ।

४०] हते तस्मिन् हतं सर्वं तं हनिष्यामि सं-युगे ॥४३॥ [४६

एवं तस्य ब्रुवाणस्य कुम्भ-कर्णस्य राक्षसाः[4] ।

N] नादांश् चक्रुर् महा-घोरान् कम्पयन्त इवाऽर्णवम् ॥४४॥[४७

तस्य निष्-पततः पुर्याः कुम्भ-कर्णस्य रक्षसः ।[5]

४१] बभूवुर् घोर-रूपाणि निमित्तानि समन्त-तः ॥४५॥ [४८

शुष्काऽशनि-युता मेघा वि-चेरुर् गर्दभाऽरुणाः ।

४२] स-सागर-वना चैव वसु-धा सम्-अकम्पयत् ॥४६॥ [४९

घोर-रूपाः शिवा नेदुः स-ज्वाल-कवलैर् मुखैः ।

४३] मण्डलान्य् अप-सव्यानि बबन्धुश् च विहं-गमाः ॥४७॥[५०

नि-पपात[6] च गृध्रोऽस्य रथस्योपरि गच्छतः ।

४४] अस्फुरन्[7] नयनं चाऽस्य सव्यो बाहुर् अकम्पत ॥४८॥ [५१

गगनान् निष्-पपातोल्का ज्वलन्ती भीम-निर्स्वना[8] ।

४६] आदित्यो निष्प्र-भश् चाऽऽसीत् प्र-ववौ न च मारुतः ४९॥[५२

अ-चिन्तयन् महोत्पातान् उत्थि(द्-स्थि)तान् जीविताऽन्तकान्

४७] निर्-ययौ कुम्भ-कर्णः स कृताऽन्त-बल-नोदितः ॥५०॥[५३

स निष्-क्रम्य पुर-द्वारात् कुम्भ-कर्णो महा-बलः ।

---

१. रा₂ फ-अस्मद्वि० । २. रा₁ ल₁ ल₂ ब अ-सपुरो० । प्र-०वि-भीषणं । रा₂ फ म-०विभूषणं । ३. अतः परमधिकः पाठः—रा₂-पातश्चास्मद्विधावाशु वानराणां पुरःसरः ॥ ४. प्र रा₂-रक्षसः ॥ ५. ब अ म-नास्ति ॥ ६. म-०पाताथ । ७. रा₂ फ म-प्रास्फुरत् ॥ ८. रा₁ ल₁ ल₂ ब अ-भीमदर्शना ॥

४८] शारदाऽभ्र-घन-प्रख्यं वानराऽनीकम् अद्भुतम् ॥५[1]१॥ [५४
तं दृष्ट्वा [2]वानर-श्रेष्ठा [2]राक्षसं पर्वतोपमम् ।
N] वायु-नुन्ना यथा मेघा जग्मुः सर्वा दिशस् [3]तदा ॥५[4]२॥ [५५
विपुलपरिघ-वांस् तु कुम्भ-कर्णो
रिपु-निधनाय विनिः-सृतो महौजाः ।
कपि-गण-भयम् आ-चरन् सु-तीव्रं
N] प्र-भुर् इव किङ्करदण्ड-वान् युगाऽन्ते ॥५३॥ [५८

इत्यार्षे रामायणे [5]युद्ध-काण्डे कुम्भकर्ण-[6]निर्याणं नाम
चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## [वं–४५]= [पञ्चचत्वारिंशः सर्गः] =[दा–६६]

स ननाद महा-नादं सम्-उद्र इव [8]पर्वणि ।
२] जनयन्न् इव निर्-[7]घातं कम्पयन्न् इव मेदिनीम् ॥१॥ [२
तम् अ-वध्यं मघ-वता यमेन वरुणेन च ।
३] प्रेक्ष्य [9]भीमाऽक्षम् आ-यान्तं वानरा विप्र-दुद्रुवुः ॥२॥ [३

---

१. अतः परमधिकः पाठः—रा₂-वानरान्वीक्ष्य संहृष्टो ननाद विकृतं स्वनं ॥ २. ल₁ ल₂ ब-राक्षसश्रेष्ठं वानराः । ३. अ रा₂ फ-तथा। ४. अतः परमधिकः पाठः—रा₂-तं तस्य नादं तुमुलं निशम्य यथा निनादं दिवि वारिदस्य । पेतुर्धरण्यां बहवः प्लवंगा निकृन्तमूला इव शाल-वृक्षाः ॥ कृच्छ्रेण तु समाश्वस्य संगम्य तु परस्परं । वृक्षाद्रिहस्ता हरयः संग्रामं प्रतितस्थिरे ॥ ५. ब प्र रा₂-लंकाकाण्डे । फ म-युद्धपर्वणि । ६. रा₂ फ-०निर्याणो ॥ ७. अ रा₂-०वातं । ८. रा₂ फ म-पर्वतान् ॥ ९. फ-भीममनुयान्तं ॥

तं[1] दृष्ट्वा वानर[2]-श्रेष्ठा राक्षसं पर्वतोपमम् ।
N] वायु-क्षिप्ता यथा मेघा ययुः सर्वा दिशम् तदा ॥३॥ [N
तद् वानराऽनीकम् अति-प्रचण्डं
दिशो द्रवद् भिन्नम् इवाऽभ्र-जालम् ।
स कुम्भ-कर्णः प्रसम्[3]-ईक्ष्य हर्षान्
N] ननाद[4] भीमं घन-वद् घनाऽऽभः ॥४॥[5] [N
तांस् तु वि-द्रवतो दृष्ट्वा राज-पुत्रोऽङ्ग-दोऽब्रवीत् ।
४] गवाऽक्षं गवयं[6] नीलं कु-मुदं च महा-बलम् ॥५॥ [४
आत्मानम् अभिसं-स्मृत्य वीर्याण्य् अभि-जनानि च ।
५] क्व गच्छथ भय-त्रस्ताः प्राकृता हरयो यथा ॥६॥ [५
६पू] सर्वे सौम्या नि-वर्तध्वं किं प्राणान् परि-रक्षथ ।
८उ] नाऽलं युद्धाय वै रक्षो महतीऽयं वि-भीषिका ॥७॥ [६
महतीम् उत्थिंं[7](दु-स्थि)ताम् एतां वानराणां वि-भीषिकाम् ।
९] वि-क्रमाद् वि-धमिष्यामो नि-वर्तध्वं प्लवं-गमाः ॥८॥ [७
कृच्छ्रेण महता स्व-स्थाः सं-स्तभ्य च परस्परम् ।
१०] शिला-पादप-हस्तास् ते तस्थुः संग्राम-मूर्धनि ॥९॥ [८
ते प्र-हृष्टा नि-वृत्तास् तु स-मदा इव कुञ्जराः ।
११] नि-जघ्नुः परम-क्रुद्धाः कुम्भ-कर्णं वनौकसः ॥१०॥ [९
प्रांऽशुभिः साल-तालैश् च शिलाभिश् च महा-बलाः ।
१२] पाद-पैः पुष्पिताऽग्रैश् च हन्यमानो[8] न चुक्षुभे[9] ॥११॥ [१०
ततः पर्वतम् उत्-पाट्य द्वि-विदः प्लवगर्षभः ।
१३] दुद्राव ज्वलनाऽऽकारो राक्षसं सु-महाबलम् ॥१२॥ [N

---

१. रा$_2$ फ-ते । २. फ-वानराः श्रेष्ठा ॥ ३. रा$_2$ फ म-समवेक्ष्य । ४. रा$_2$ म-नादं । ५. अतः परमधिकः पाठः—रा$_2$ फ म-ततस्तु घोरं निनदं निशम्य यथाहवे दानवसंप्रमुक्तम् । पेतुर्धरण्यां बहवः प्लवङ्गा निकृत्त-मूला इव शालवृक्षाः ॥ ६. म-शरभं ॥ ७. फ-उच्छ्रितां ॥ ८. प्र रा$_2$ फ म-वध्यमानो । ९. रा$_1$ ल$_1$ ल$_2$ ब अ म-चक्षमे ॥

स तं महामेघ-निभं चिक्षेप प्लवगर्षभः[1] ।
१४] तम् अ-प्राऽऽप्य महा-कायं तस्य[2] सैन्ये[2] पपात ह ॥१३॥ [N
तस्य गात्रेषु पतिता भिद्यन्ते वि-पुलाः शिलाः ।
१५] पाद-पाः पुष्पिताऽग्राश् च भग्नाः[3] पेतुर् मही-तले ॥१४॥ [११
स हि सैन्यानि सं-क्रुद्धो द्रावयामास[4] राक्षसैः[4] ।
१६] ममन्थ परमाऽऽयस्तो[5] वनान्य्[6] अग्निर् इवोत्थि(दु-स्थि)तः१५[१२
वानरास् तु सु-संक्रुद्धा गिरि-शृङ्गैर्[7] महा-बलाः ।
१७] राक्षसानाम् अनीकानि विनि-जघ्नुः[8] सहस्र-शः ॥१६॥ [N
तं[9] च शैलवेगाऽभिहतं हताऽश्वरथवारणम् ।
१८] रक्षो-रुधिर-संक्लिन्नं[10] बभूवा[11]ऽऽयोधनं महत् ॥१७॥ [N
रथिनो वानरेन्द्राणां शरैः कालाऽन्तकोपमैः ।
१९] शिरांसि सहसा जघ्नुर् नदन्तो भीम-निःस्वनाः ॥१८॥ [N
वानराश् च महाऽऽत्मानः समुत्-पाट्य महा-द्रुमान् ।
२०] रथिनश् च गजान् उष्ट्रान् राक्षसांश् चाऽप्य् असूदयन् १९ [N
लोहिताऽऽर्द्रास् तु बहवः शेरते वानरर्षभाः ।
२१] निर्-अस्ताः पतिता भूमौ ताम्र-पुष्पा इव द्रुमाः॥२०॥ [१३
वध्यमानास् ततो[12] वीरा राक्षसेन जघन्य-तः । [१५उ
२२] सागरं[13] येन सं-तीर्णाः[13] पथा तेनैव दुद्रुवुः ॥२१॥ [१६
ते स्थलान्य् अथ निम्नानि विषण्ण-वदना भृशम् । [१७पू
२३] लङ्घयन्ति सर्वे[14] धावन्तो[14] निर्-अपेक्षाः प्लवं-गमाः॥२२॥ [१४

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-प्लवगाधिपः । २. रा$_1$ ल$_1$ ल$_2$ ब-सर्व-सैन्ये ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ रा$_2$-तस्य ॥ ४. म-वानराणां महौजसां । ५. रा$_2$-०मास्त्रज्ञो । ६. रा$_2$-बलवान् ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब-०शृङ्गा । ८. रा$_2$-०जग्मुः ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-तद्वायुवेगा० । १०. प्र रा$_2$ फ-०संक्लेदं । ११. रा$_2$-बभौ च यो० ॥ १२. रा$_2$ म-तु ते। १३. अ रा$_2$-सागरो येन संतीर्णः ॥ १४. रा$_2$-समुद्रस्य ॥

के-चित् सम्-उद्रे[1] पतिताः के-चिद्[2] गगनम् आ-श्रिताः[2] । [१९पू
२४] के-चिद् वृक्षान् समा-रूढा ममज्जुः के-चिद् अर्णवे ॥२३॥ [१८पू
के-चिद् गिरीन् आ-रुरुहुर् गुहाः के-चित् समा-श्रिताः । [१७उ
२५] नि-पेतुर् वानराः के-चित् के-चिन् नैवाऽव-तस्थिरे ॥२४॥[१८उ
सम्[3]-ईक्ष्यैवाऽङ्ग-दो भग्नान् वानरान् इदम् अब्रवीत् । [१९उ
२६] सं-तिष्ठध्वं हि[4] युध्यामो वि-द्रुताश् च हताश् च ये ॥२५॥
भग्नानां वो न पश्यामि परि-गम्यां महीम् इमाम् ।
२७] स्थानं सर्वे नि-वर्त्याऽऽशु युध्यध्वं वानरोत्तमाः ॥२६॥ [२०
२८उ] निर्-आयुधानां द्रवतां समं गमन-चेतसाम् ।
स्त्रीणाम् औपयिकस् त्रासः सर्वेषां वो जघन्य-तः ॥२७॥ [२१
२९] कुलेषु जाताः सर्वे स्मो वि-स्तीर्णेषु महत्सु च । [२२पू
अन्-आर्यं खलु यद् भीतास् त्यक्त्वा युद्धं पलायथ ॥२८॥ [२३
३०] वि-कत्थितानि वो यानि गर्जित्वा जन-संसदि ।
तानि वः काऽद्य यातानि सोर्दग्राणि गतानि च ॥२९॥[२४
३१] भीरोः[9] प्र-वादाः श्रूयन्ते न[10] स जीवति धिक्-कृतः ।
मार्गं सत्-पुरुषैर् जुष्टं सेवामस् त्यज्यतां[11] भयम् ॥३०॥ [२५
३२] स्वप्स्यामो वाऽद्य नि-हताः पृथिव्यां त्यक्त-जीविताः । [२६पू
अवाऽऽप्स्यामोऽथवा कीर्तिं नि-हत्वा शत्रुम् आहवे । [२७पू
३३] दुष्पाऽऽपं ब्रह्म-लोकं वा प्राऽऽप्स्यामो युधि निर्-जिताः ३१[२६उ
न कुम्भ-कर्णः काकुत्स्थं दृष्ट्वा जीवितुम्[12] अर्हति[12] ।

---

१. रा$_2$ फ-समुद्रं । २. प्र रा$_2$ फ म-गगनं केचिदाश्रिताः ॥ ३. रा$_2$-स पश्यंश्चांगदो । ४. रा$_1$ ल$_1$ ल$_2$ ब-च ॥ ५. रा$_2$-०त्यांथ ॥ ६. रा$_2$ फ-०न्यजः ॥ ७. प्र रा$_2$ फ म-वीर्यं ॥ ८. ल$_1$ ल$_2$ ब-ह्युदग्राणि ॥ ९. रा$_2$ फ म-भीरुप्र० । १०. रा$_2$-स्म जीवन्ति धिक्कृताः । ११. रा$_1$ ल$_1$ ल$_2$ ब-त्यजतां ॥ १२. रा$_2$ फ-जीवनमिष्यति ।

३४] दीप्यमानं समा-साद्य पतं-गो ज्वलनं यथा ॥३२॥ [२८
पलायनेन स्वान् प्राणान् यदि रक्षामहे वयम् ।
३५] एकेन बहवो भग्ना यशो नोऽद्य वि-नङ्क्ष्यति ॥३३॥ [२९
एवं ब्रुवाणं तं शूरम् अङ्ग-दं वानरर्षभाः ।
३६] द्रवमाणास् तदाऽन्योऽन्यम् ऊचुः शूर-विगर्हितम् ॥३४॥ [३०
कृतं नः कदनं घोरं कुम्भ-कर्णेन रक्षसा ।
३७] न स्थान-कालो गच्छामो द[1]यितं जीवितं हि नः ॥३५॥ [३१
एतावद् उक्त्वा प्लव-गाः सर्वे ते भेजिरे दिशः ।
३८] भीमं भीमाऽक्षम् आ-यान्तं दृष्ट्वा राक्षसम् आ-हवे ॥३६॥ [३२
द्रवमाणास् तु ते त्रासाद् अङ्ग-देन बली-मुखाः ।
३९] सान्त्वैश् चैवाऽनु-मानैश् च सर्वे ते विनि-वर्तिताः ॥३७॥ [३३
ततः पुनर् हरि-वृषभा महौजसस्
तदा बृहच्-छिखरिशिलाद्रुमाऽऽयुधाः ।
युयुत्सवः समुदित-भीम-विक्रमा
N] व्यव-स्थिताः पर-बल-दर्प-नाशनाः ॥३८॥[2] [N

इत्यार्षे रामायणे युद्ध[3]-काण्डे वानर-समा[4]श्वासो नाम
पञ्चचत्वारिंशः सर्गः ॥४५॥

---

१. रा₂-दीयतां ॥ २. प्र-नास्ति ॥ ३. ब प्र-लंका० । म-युद्धपर्वणि ।
४. म-कुम्भकर्णयुद्धे रावणाश्वासनो ॥

ते नि-वृत्ता महा-कायाः श्रुत्वाऽङ्गद-वचस् तदा ।
१] नैष्ठिकीं बुद्धिम् आ-स्थाय सर्वे सङ्ग्राम-काङ्क्षिणः ॥१॥ [१
समुदीरित-वीर्यास् ते समारोपित-विक्रमाः ।
२] पर्यव-स्थापिता वाक्यैर् अङ्ग-देन प्लवं-गमाः ॥२॥ [२
चक्रुर् युद्धं सु-तुमुलं वानरास् त्यक्त-जीविताः ।
३] प्र-हर्षाद् आगतोत्साहा मरणे कृत-बुद्धयः ॥३॥ [३
अथ वृक्षान् महा-कायाः शृङ्गाणि सु-महान्ति च ।
४] वानरास् तूर्णम् उत्-पाट्य कुम्भ-कर्णम् उपाऽद्रवन् ।४ [४
तान् समा-पततो दृष्ट्वा कुम्भ-कर्णः प्रताप-वान् ।
५] व्य्-अद्रावयत् सु-संरब्धो मेघान् इव सदा-गतिः ॥५॥ [N
ततस् तु तं महा-वीर्यं दश वानर-यूथपाः ।
६] शिलाः प्रोद्-यम्य वि-पुलाः कुम्भ-कर्णम् उपाऽद्रवन् ॥६॥ [N

---

१. म-ययुर् ॥ २. म-च म० । ३. म-उद्यम्य ॥ ४. फ म-सुसंक्रुद्धो । ५. अतः परमधिकः पाठः—म-कुम्भकर्णं तदा दृष्ट्वा गदापाणिर्विभीषणः । ननाम चरणौ तस्य भ्रातुर्ज्येष्ठस्य बुद्धिमान् ॥ विभीषणोऽहं भ्रातर्मे दयां कुरु महामते । रावणस्तु मया भ्राता बहुधा परिबोधितः ॥ सीतां देहीति रामाय रामः साक्षाज्जनार्दनः । न शृणोति च मां हंतुं खड्गमुद्यम्य चोक्तवान् ॥ धिक् त्वां गच्छेति मां हत्वा तदाहं वाग्भिराहतः । चतुर्भिर्मंत्रिभिः साकं रामं सुशरणमागतः ॥ तच्छ्रुत्वा कुम्भकर्णोऽपि ज्ञात्वा भ्रातरमागतम् । समालिङ्गय च वत्स त्वं जीव रामपदाश्रयः ॥ कुलस्य रक्षणार्थाय राक्षसानां हिताय च । महाभागवतोऽसि त्वं पुरा मे नारदाच्छ्रुतम् ॥ गच्छ तात ममेदानीं दृश्यते न च किंचन । मदीयश्चापरो वापि मदमत्तविलोचनः ॥ इत्युक्तोऽश्रुमुखो भ्रातुश्चरणावभिवाद्य सः । रामपार्श्वमुपागम्य चिंतापर उपस्थितः ॥ कुम्भकर्णोऽपि हस्ताभ्यां पादाभ्यां पेषयन् हरीन् । चचार वानरीं सेनां कलयन् गंधहस्तिवत् ॥ ६. प्र फ म-शिलाश्चोद्यम्य ॥

अङ्ग-दः कु-मुदो नीलो गवाऽक्षो गवयो हरिः ।
७] मैन्दश् च द्वि-विदश् चैव जाम्ब-वान् वि-नतस् तथा ।
युगपत् प्राऽहरन् सर्वे कुम्भ-कर्णं महा-बलाः ।।७।। [N
८] तस्य गात्रे विनिर्-भिन्नाः शिलाः शैल-निभास् तदा[1] ।
ध्वजं रथं शरांश् चैव सूतं चैव न्य्-अपातयन् ।।८।।[2] [N
९] सोऽव-प्लुत्य रथाद् वीरो गदाम् उद्-यम्य स-त्वरः ।
वेगेनाऽभ्युत्-पपाताऽऽशु पक्ष-वान् इव पर्वतः ।।९।। [N
१०] स कुम्भ-कर्णः सं-क्रुद्धो गदाम् उद्-यम्य वीर्य-वान् ।
अर्दयन्[3] सु-[4]महातेजाः समन्ताद् वि-क्षिपन् गिरीन् ।।१०।। [५
११] शतानि सप्त चाऽष्टौ च सहस्रं चाऽपि वानराः ।
प्र-कीर्णाः शेरते भूमौ कुम्भकर्ण-निपातिताः ।।११।।[5] [६
१२] षोडशाऽष्टौ च दश च त्रिंशद् विंशच् च वानरान् ।
१३पू] सम्परि-ष्वज्य बाहुभ्यां निष्-पिपेष स राक्षसः ।।१२।। [७
१४उ] हनु[6]-मान् शैल-शृङ्गाणि शत[7]-शोऽथ सहस्र-शः[8] ।
ववर्ष कुम्भ-कर्णस्य शरीरे वानरर्षभः ।।१३।। [१५
तानि पर्वत-शृङ्गाणि शूलेन परमाऽऽहवे ।
१५] बिभेद परमाऽऽयस्तः कुम्भ-कर्णो मदोत्कटः[9] ।।१४।। [१६
ततो हरीणां तद् अनीकम् उग्रं
दुद्राव शूलं नि-शितं प्र-गृह्य ।
तस्थौ च तस्याऽऽपततः पुरस्तान्
१६] महीधराऽग्रं हनु-मान् प्र-गृह्य ।।१५।। [१७

---

१. ल$_{1}$-तथा । २. प्र-नास्ति ॥ ३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-अदर्शयन् म० । रा$_{2}$फ-०यन् स महा० । म-०यन् सुमहाकायः ॥ ४. रा$_{2}$फ-वापि । ५. अ-नास्ति ॥ ६. फ म-हनूमान् । ७. म-वृक्षांश्च विविधान्बहून् । प्र-"शतशः" इत्यारभ्य चतुर्दशश्लोकस्य प्रथमपादं यावन्नास्ति । ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ-वानरस्तदा । म-तानि सर्वशः ॥ ९. ल$_{1}$ ल$_{2}$ब अ रा$_{2}$-महोत्कटः ॥

तम् आ[1]-पतन्तं त्रिदशेन्द्र-शत्रुं
जघान शैलेन कपि-प्रवीरः ।
स चाऽपि तेनाऽभि-हतस् तरस्वी
१७] न चुक्षुभे काल-सम-प्रभावः ॥[2]१६॥ [N
स शूलम् आ-विध्य तडित्-प्रकाशं
गिरिं[3] यथा प्रज्वलिता[4]ऽग्रशृङ्गम् ।
बाह्व्[5]-अन्तरे मारुतिम् आ-जघान
१८] गुहोऽचलं क्रौञ्चम् इवाऽऽत्म-शक्त्या ॥१७॥ [१९
स तेन[6] वीरोऽभि-हतः स्तनाऽन्तरे
सु[7]-विह्वलः शोणितम् उद्-वमन् मुखात् ।
ननाद भीमं हनु-मान् महा-यशा
१९] यथा तपाऽन्ते जल[8]-दो बलाहकः[9] ॥१८॥ [२०
ततो वि-नेदुः सहसा प्र-हृष्टा
रक्षो-गणास् तं[10] व्यथितं नि-शम्य ।
प्लवं-गमाश् चाऽपि तथा व्यथाऽऽर्ताः
२०] प्र-दुद्रुवुस् ते सहसा[11] भयाऽऽर्ताः[11] ॥१९॥ [२१
नीलश् चिक्षेप शैला[12]ऽग्रं कुम्भ-कर्णाय धी-मते[13] । [२२उ
२१] तम् आ-पतन्तं सम्प्रेक्ष्य मुष्टिनाऽभि-जघान ह ॥२०॥
मुष्टि-प्रहाराऽभिहतं तच् छैलाऽग्रं व्य्-अशीर्यत[14] । [२३
२२] स-विस्फुलिङ्गं स-ज्वालं नि-पपात च[15] भू[15]-तले ॥२१॥ [२४

---

१. फ-समापतंस्तं । २. म- नास्ति ॥ ३. म-गिरेर् । ४. म-वै चलिता० । ५. अ फ-बह्वन्तरे ॥ ६. म-चापि तेनाभि० । ७. रा₁ रा₂ फ म-स वि० । ८. प्र रा₂ फ-सजलो । ९. म-बहूदकः ॥ १०. रा₂-ते । ११. रा₂ म-०सात्मभीताः फ-०सा यथार्ताः । १२. रा₁ ल₁ ल₂ ब अ प्र-शैलेन्द्रं । १३. म-रक्षसे ॥ १४. प्र-व्यदीर्यत । रा₂ फ-व्यकीर्यत । १५. प्र-महीतले । रा₂-च भूमुखे ॥

२३उ] ऋषभः शरभो नीलो गवाऽक्षो गन्ध-मादनः ।
पञ्च वानर-शार्दूलाः कुम्भ-कर्णम् उपाऽद्रवन् ॥२२॥ [२५
२४] शैलैर् वृक्षैस् तलैश् चाऽपि मुष्टिभिश् च महा-बलाः ।
कुम्भ-कर्णं महा-कायं सर्व-तोऽभ्य्-अहनन्[1] दृढम्[2] ॥२३॥ [२६
२५] सर्वैर्[3] अपि प्र-वीरैस् तैर् हन्यमानो[4] न विव्यथे ।
ऋषभं च महा-वेगं बाहुभ्यां परि-षष्वजे ॥२४॥ [२७
२६] कुम्भकर्ण-भुजाभ्यां च पीडितो वानरर्षभः[5] ।
पपात भूमाव् ऋषभो[6] मुखाद् आगत-शोणितः ॥२५॥ [२८
२७] मुष्टिना शरभं[7] चाऽपि[8] जानुना[9] नीलम् आ-हवे ।
२८पू] आ-जघान गवाऽक्षं च तलेनेन्द्र-रिपुस् तदा । [२९
N] शरीरे मर्दितस् तत्र सु-गन्धाद् गन्ध-मादनः ॥२६॥
२८उ] एते[10] प्रहार-व्यथिता मुमुहुः शोणितोक्षिताः । [३०
नि-पेतुश् चाऽपि मेदिन्यां नि-कृत्ता इव किं-शुकाः ॥२७॥
२९] तेषु वानर-मुख्येषु पतितेषु[11] महाऽऽत्मसु ।
वानराणां सहस्राणि कुम्भ-कर्णं प्र-दुद्रुवुः[12] ॥२८॥ [३१
३०] तं शैलम् इव शैलाऽऽभाः परि-तः[13] प्लवगर्षभाः ।
N] समा-रुरुहुर् उत्-पत्य नि-नदन्तो महा-बलाः ॥२९॥ [३२
तं नखैर् दशनैश् चैव जानुभिर् मुष्टिभिस् तलैः ।
३१] कुम्भ-कर्णं महा-कायं ते नि-जघ्नुः प्लवं-गमाः[14] ॥३०॥ [३३
तैः स वानर-साहस्रैः परि-क्षिप्तः समन्त-तः[15] ।

---

१. रा₁ ल₁ ल₂ ब म-०भ्यहरन् । २. म-भृशम् ॥ ३. रा₂फ-सर्वान् । ४. रा₂ फ म-प्रहारान् तान् मन्य० ॥ ५. रा₂ फ म-वानरोत्तमः । ६. प्र रा₂ फ म-ऋषभो भूम्यां ॥ ७. म-पनसं । ८. रा₂-वापि । ९. म-जानुभ्यां ॥ १०. प्र रा₂फ म-एतैः प्रहारैर्व्य० ॥ ११. प्र रा₂-पातितेषु । १२. प्र रा₂ फ-विदुद्रुवुः ॥ १३. प्र रा₂फ म-सर्वतः ॥ १४. प्र रा₂फ म-महाबलाः ॥ १५. रा₂-सहस्रशः ।

३२] रराज राक्षस-व्याघ्रो गिरिर् आत्म-रुहैर् इव ॥३१॥ [३४
बाहुभ्यां वानरान् सर्वान् आ-कृष्य स महा-बलः ।
३३] भक्षयामास सं-क्रुद्धो हरीन् पर्वत-सन्निभान् ॥३२॥ [३५
प्र-क्षिप्ताः कुम्भ-कर्णेन वक्त्रे पाताल-सन्निभे ।
३४] नासा-पुटाभ्यां निष्-पेतुः कर्णाभ्यां चैव वानराः॥३३॥ [३६
N] मर्दयन् पर्वताऽग्रैश् च प्र-हारै राक्षसर्षभः[1] । [३७उ
मांस-शोणित-संक्लेदां कुर्वन् भूमिं स राक्षसः ।
३५] चचार हरि-सैन्येषु कालाऽग्निर्[2] इव मूर्च्छितः ॥३४॥ [३८
वज्र-हस्तो यथा शक्रः पाश-हस्तो यथाऽन्तकः ।
३६] शूल-हस्तो बभौ तद्-वत् कुम्भ-कर्णो महाऽऽहवे ॥३५॥ [३९
यथा शुष्काण्य् अरण्यानि ग्रीष्मे दहति पावकः ।
३७] तथा वानर-सैन्यानि स ददाह महा-बलः ॥३६॥ [४०
ततस् ते वध्यमानास् तु हत-यूथा[3] वि-नायकाः[3] ।
३८] वानरा भय-संविग्ना वि-नेदुर् वि-स्वरं तदा ॥३७॥ [४१
ततो नि-पात्यमानास् तु कुम्भ-कर्णेन वानराः ।
३९] राघवाभ्यां समा-जग्मुर् व्यथाऽऽर्ता नष्ट-चेतसः ॥३८॥ [४२
तम् आ-पतन्तं सम्प्रेक्ष्य कुम्भ-कर्णं महा-बलम् ।
४०] उत्-पपात महा-वीरः सु-ग्रीवो वानरोऽधिपः[4] ॥३९॥ [५२
स साल-वृक्षं सहसा समा-विध्य महा-कपिः ।
४१] अभि-दुद्राव वेगेन कुम्भ-कर्णं महा-बलम् ॥४०॥ [५३
तम् आ-पतन्तं सम्प्रेक्ष्य कुम्भ-कर्णो महा-बलः ।
N] तस्थौ विकृत-सर्वाऽङ्गो वानरेन्द्रं सम्-उत्सुकः ॥४१॥ [५४
कपिशोणित-दिग्धाऽङ्गं भक्षयन्तं महा-हरीन्[5] ।
४२] कुम्भ-कर्णं स्थितं दृष्ट्वा सु-ग्रीवो वाक्यम् अब्रवीत् ॥४२॥ [५५

---

१. प्र. रा$_2$ फ म-राक्षसोत्तमः । २. म-नास्ति ॥ ३. ल$_1$ रा$_3$-०यूथवि० । फ-अत आरभ्य ३८-शश्लोकस्य प्रथमपादं यावन्नास्ति ॥ ४. प्र-वानरेश्वरः ॥ ५. प्र-महाकपीन् । म-महाबलः ॥

नि-हताः कपि-शार्दूलाः कृतं कर्म सु-दुष्करम् ।
४३] भक्षितानि च सैन्यानि प्राऽऽप्तं ते परमं यशः ॥४३॥ [५६
त्यजैतान् वानरान् सर्वान् किम् एभिर् दीन-चेष्टितैः ।
४४] सहस्वैकं नि-पातं मे साल-वृक्षस्य राक्षस ॥४४॥ [५७
तद् वाक्यं हरि-राजस्य सत्त्व-धैर्य-समन्वितम् ।
४५] श्रुत्वा राक्षस-शार्दूलः कुम्भ-कर्णोऽब्रवीद् वचः ॥४५॥ [५८
श्रुतः पौरुष-संपन्नः कस्माद् गर्जसि वानर । [५९उ
४७] कर्मणा दर्शयाऽऽत्मानं [1]यावत् त्वां प्र-मथाम्य् अहम् ॥४६॥ [N
स कुम्भ-कर्णस्य वचो निशम्य
व्याक्षिप्त-शूलस्य मुमोच सालम् ।
तेनाऽऽजघानोरसि कुम्भ-कर्णं
४८] वृक्षेण [2]शक्राऽशनि-सन्निभेन ॥४७॥ [६०
स साल-वृक्षः सहसा [3]वि-मुक्तो
भुजाऽन्तरे तस्य तदा प्र-भग्नः ।
ततो [4]वि-षेदुः सहसा [5]प्लवं-गा
४९] रक्षो-गणाश् चाऽपि [6]तदा [7]प्र-णेदुः ॥४८॥ [६१
स साल-वृक्षाऽभिहतश् चुकोप
जहास चैवाऽथ वि-वृत्य वक्त्रम् ।
विव्याध शूलं च तडित्-प्रकाशं
५०] चिक्षेप हर्य्-ऋक्ष-पतेर् वधाय ॥४९॥ [६२
तत् कुम्भ-कर्णस्य [8]भुर्ज-प्रविद्धं

---

१. म-यथावत्कथयाम्य् ॥ २. म-कालानलसन्नि० ॥ ३. रा$_1$ल$_1$ल$_2$ब अ-०सावभग्नो । रा$_2$ फ म-०सा च भग्नो । ४. ल$_1$ ल$_2$ ब अ-निषेदुः । प्र रा$_2$-विनेदुः । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-प्लवंगमाः । ६. म-मुदा । ७. प्र रा$_2$ फ म-विनेदुः ॥ ८. रा$_1$ ल$_1$ ल$_2$ब अ प्र-भुजाप्रवृद्धं ।

शूलं शितं काञ्चन-व[1]ज्र-जुष्टम् ।
क्षिप्रं समुत्-पत्य नि-गृ[2]ह्य दोर्भ्यां
८१] [3]बभञ्ज वीर[3]म् तरसा कपीऽ[4]न्द्रः ॥८०॥ [६३
कृतं भार-सहस्रस्य शूलं कालाऽऽयसं दृढम् ।
८२] बभञ्ज [5]जानुम् आ-रो[5]प्य सम्प्र-हृष्टः प्लवं-गमः ॥८१॥ [६४
स तं[6] तदा भग्नम् अवेक्ष्य शूलं
चुकोप रक्षोऽधिपतिर् महाऽऽत्मा ।
उत्-पाट्य शृङ्गं सहसाऽचलस्य
८३] जघान सु-ग्रीवम् अतिप्र-म[7]र्दम् ॥८२॥ [६७
स शैलशृङ्गाऽभिहतो वि-संज्ञः
पपात भूमौ युधि वानरेन्द्रः ।
तं प्रेक्ष्य भूमौ पतितं वि-संज्ञं
८४] नेदुः प्र-हृष्टा युधि यातु-धानाः [8]॥८३॥ [६८
तम् अभ्युपेत्याऽथ सुवीर-कर्मा
स कुम्भ-कर्णो युधि वानरेन्द्रम् [8]।
[9]जहार सु-ग्रीवम् अति-प्र[10]गृह्य
८५] यथाऽनिलो मेघम् अति-प्र[11]चण्डः ॥८४॥ [६९
स तं महामेघ-निकाश-रूपम्
उत्-पा[12]ट्य ग[12]च्छन् युधि कुम्भ-कर्णः ।
रराज मेघ-प्रतिमान-रूपो
N] मेरुर् यथाऽत्युच्छ्रित-सा[13](?शा)र-शृङ्गः॥८५॥ [७०

---

१. रा$_2$-०नरज्जुजु० । २. फ म-विगृह्य । ३. रा$_1$ ल$_1$ ल$_2$ ब-नभो बभंज । प्र म-ननाद भीमं । ४. प्र रा२ फ म-बलेन ॥ ५. रा$_1$ अ-जानुन्यारोप्य । ल$_1$ल$_2$ब-जानुनारोप्य । म-जानुनाक्रम्य ॥ ६. रा$_1$ल$_1$ल$_2$ब अ प्र म-तत् । ७. रा$_1$ल$_1$ल$_2$ ब अ प्र रा$_2$ फ-अभिप्रमर्दयन् ॥ ८. म-नास्ति ॥ ९. रा$_2$-जहास । १०. अ-अभिप्र० । ११. रा$_2$-०प्रचण्डम् ॥ १२. फ-उत्साद्य ग० । म-उद्यम्य शूलं । १३. फ-०तघोरशृङ्गः ॥

स तं समुत्-पाट्य जगाम वीरं[1]
संस्तूयमानो युधि राक्षसेन्द्रैः[2] ।
शृण्वन् नि-नादं त्रिदिवा[3]ऽऽलयानां
५६] प्लवङ्ग-राज-ग्रह-विस्मितानाम् ॥५६॥ [७१

ततस् तम् आ-दाय[4] तदा स मेने
हरीऽन्द्रम् इन्द्रोपम-तुल्य-वीर्यम्[5] ।
अस्मिन् हते सर्वम् इदं वि-शस्तं
५७] स-राघवं सैन्यम् इहैव चोग्रम्[6] ॥५७॥ [७२

वि-द्रुतां वाहिनीं दृष्ट्वा वानराणां ततस् ततः ।
५८] कुम्भ-कर्णेन सु-ग्रीवं गृहीतं चाऽपि वानरम् ॥५८॥ [७३

हनू-मांश् चिन्तयामास मति-मान् मारुताऽऽत्मजः ।
५९] एवं गृहीते सु-ग्रीवे किं कार्यं वै मया भवेत् ॥५९॥ [७४

यत् तु न्याय्यं समा-कर्तुं तत् करिष्यामि सर्व-था ।
६०] महापर्वत-सङ्काशं नाशयिष्यामि राक्षसम् ॥६०॥ [७५

मया हते सम्प्रति कुम्भ-कर्णे
महा-बले मुष्टि-निपात-भग्ने ।
वि-मोक्षिते वानर-पार्थिवे च[7]
६१] भवन्तु हृष्टाः प्लव-गाः सम्-अग्राः॥६१॥ [७६

अथवा स्वयम् एवैष मोक्षं प्राऽऽप्स्यति पार्थिवः ।
६२] गृहीतो यद्य् अपि भवेत् त्रि-दशैः स-महोरगैः ॥६२॥ [७७

मन्ये न तावद् आत्मानं बुध्यते वानराऽधिपः ।
६३] शैल-प्रहाराऽभिहतः कुम्भ-कर्णेन सं-युगे ॥६३॥ [७८

---

१. प्र म-वीरः । २. रा$_2$फ-०सेन्द्रः । रा$_2$ फ-राक्षसौघैः । ३. प्र रा$_2$-०त्रिदशाल० ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब-समादाय । ५. रा$_2$-०वीर्यः । ६. रा$_2$-स राघवशत्रुमितीन्द्रशत्रुः ॥ ७. रा$_2$-०पार्थिवर्षभे । म-पार्थिवेन्द्रे ॥

अयं मुहूर्तात् सु-ग्रीवो लब्ध-संज्ञो महाऽऽहवे ।
६४] आत्मनो वानराणां च यत् पथ्यं तत् करिष्यति ॥६४॥ [७९
मया वि-मोक्षितस्याऽस्य सु-ग्रीवस्य महाऽऽत्मनः ।
६५] अ-कीर्तिश् च भवेत् कष्टा कीर्ति-नाशश् च शाश्वतः ॥६५॥ [८०
तस्मान् मुहूर्तं वीऽऽक्षिष्ये वि-क्रमं पार्थिवस्य तु[1] ।
६६] भिन्नं च वानराऽनीकं यावद् आ-श्वासयाम्य् अहम् ॥६६॥ [८१
इत्य्[2] एवं[2] चिन्तयित्वा स हनु[3]-मान् मारुताऽऽत्मजः ।
६७] भूयः सं-स्तम्भयामास वानराणां महा-[4]चमूम् ॥६७॥[5] [८२
स कुम्भ-कर्णोऽथ विवेश लङ्कां
स्फुरन्तम् आ-दाय महाहरीऽ[6]न्द्रम् ।
विमान-[7]चर्या-गृह-गोपुर-स्थैर्
६९] माल्याऽग्रवर्षैर् अभि-कीर्यमाणः ॥६८॥ [८३
ततः स सं-ज्ञां प्रति-[8]लभ्य कृच्छ्रात्
बलीयसस् तस्य भुजाऽन्तर-स्थः ।
अवे[9]क्षमाणः पुर-राजमार्गं
७०] वि-चिन्तयामास मुहुर् महाऽऽत्मा ॥६९॥ [८५
एवं गृहीतेन कथं नु नाम
शक्यं मया सम्प्रति-[10]कर्तुम् अद्य ।
तथा करिष्यामि यथा हरीणां[11]
७१] भविष्यतीऽष्टं मम चैव पथ्यम् ॥७०॥ [८६

---

१. प्र रा$_{2}$ फ म-हि ॥ २. रा$_{2}$ फ-इतीव । ३. रा$_{2}$ फ म-हनूमान् । ४. म-महाबलं । ५. अतः परमधिकः पाठः—रा$_{2}$-कृच्छ्रेण तु समाश्वस्य संगम्य च ततस्ततः । वृक्षाद्रिहस्ता हरयस्तस्थुः सर्वे प्लवंगमाः ॥ ६. प्र रा$_{2}$ फ-०हरीशं । ७. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब ञ प्र-०नवर्यं गृ० ॥ ८. रा$_{2}$-पुनरेत्य । ९. ञ प्र रा$_{2}$ फ-अवेक्ष्यमाणः ॥ १०. रा$_{2}$-सप्रतिकूलं । ११. म-नास्ति ॥

ततः कराऽग्रैः सहसोर्ध्वम् एत्य
राजा हरीणाम् अमरेन्द्र-शत्रोः ।
चकर्त कर्णौ दशनैश् च नासां
७२] ददार पार्श्वेषु च कुम्भ-कर्णम् ॥७१॥ [८७
स कुम्भ-कर्णो [1]हृत-कर्ण-नासो
भृशं नदन् वेदनयाऽन्वितश् च ।
रोषाऽभिभूतः क्षतजाऽऽर्द्रगात्रः
७३] सु-ग्रीवम् आ-विध्य पिपेष भूमौ ॥७२॥ [८८
स भू-तले भूरि-बलेन पिष्टः
सुराऽरिभिस् तैर् अभि-हन्यमानः ।
जगाम [2]खं वेग-वद् अभ्युपेत्य
७४] पुनश् च रामं सहसा जगाम ॥७३॥ [८९
कर्ण-नासा-विहीनस् तु कुम्भ-कर्णो महा-बलः ।
७५] रराज शोणितोत्सेकैर् गिरिः प्र-स्रवणैर् इव ॥७४॥ [९०
पुनः स पुर्याः सहसा महाऽऽत्मा
निष्-क्रम्य तद् वानर-सैन्यम् उग्रम् ।
अभक्षयत् [3]क्रोध-विवृत्त-नेत्रः
७६] प्र-जा [4]युगाऽन्तोऽग्निर् इव प्र-दीप्तः ॥७५॥ [९४
बुभुक्षितः शोणित-मांस-[5]गृध्नुः
प्र-विश्य तद् वानर-सैन्यम् आशु ।
चखाद [6]रक्षांसि [6]हरीन् वि-[7]मिश्रान्
७७] [8]ऋक्षांश् च मोहाद् युधि कुम्भ-कर्णः ॥७६॥ [९५

---

१. रा$_2$ म-हत० ॥ २. ल$_1$-खे ॥ ३. म-रोषवि० । ४. रा$_1$ म-युगान्तेऽग्निर् ॥ ५. ल$_1$ ल$_2$ ब ञ प्र म-०मांसगंधी । ६. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ म-रक्षः स ह० । ७. ल$_1$ ल$_2$ ब ञ प्र फ-पिशाचान् । ८. ल$_1$ ल$_2$ ब ञ प्र-रक्षश् ॥

एकं द्वौ त्रीन् बहूंश् चा[1]ऽपि वानरान् राक्षसैः सह ।
७८] समा-दायैक-हस्तेन मुखे प्र-क्षिपति स्म सः[2] ॥७७॥ [९७
मुखात् प्रस्रुत-मेदोऽसृग् घोर-रूपः स राक्षसः ।
७९] व[3]ध्यमानो गिरीऽन्द्राऽऽभान् भक्षयामास वा[4]नरान् ॥७८॥ [९८
ते व[5]ध्यमाना हरयो रामं जग्मुस् तदा गतिम् । [९९
८०] राघवश् च समुत्-पत्य ध[6]नुर् उ[6]ग्रं समा-ददे ॥७९॥ [१३६उ
स चापम् आ-दाय भुजङ्ग-कल्पं
दृ[7]ढ- ज्यम् उ[7]ग्रं तपनीय-पृष्ठम् ।
हरीन् समा-श्वास्य समुत्-पपात
८१] रामो निबद्धोत्तमबा[8]णतूणः ॥८०॥ [१३८
स वानर-गणैस् तैस् तु वृतः पर-पुरञ्जयः ।
८२] लक्ष्मणाऽनुचरो रामः सम्प्र-तस्थे महा-धनुः ॥८१॥[9] [१३९

---

पुरस्-ताद् राघवस्याऽर्थे गदा-पाणिर् वि-भीषणः ।[10]
N] अभि-दु[11]द्राव वेगेन भ्रा[12]ता भ्रातरम् आ-हवे ॥८२॥ [N
वि-भीषणं पुरो दृष्ट्वा पा[13]लनीयं लघुं स[13]दा ।
N] करुणा-क्रोध-लज्जाभिर् व्य्-आप्तोऽन्तर् वाक्यम् अब्रवीत्[14] ८३ [N
प्र-हरस्व रणे शीघ्रं क्षत्र-धर्मे स्थितो भ[15]वान् ।
N] भ्रातृ-स्नेहं परि-त्यज्य राघवस्य प्रियं कुरु ॥८४॥ [N
अ[16]स्मत्-कार्यं कृतं वत्स यस् त्वं रामम् उपा-गतः ।

---

१. रा१-वापि । २. रा१-तान् ॥ ३. ल१ ल२ ब-महाबलो । ४. प्र रा२ फ-वीर्यवान् ॥ ५. ल१ ल२ ब अ-हन्यमाना । ६. रा१-धनू रत्नं ॥ ७. ल१ ल२ ब अ प्र-दृढं समग्रं । ८. ल१-०बाणचापः ॥ ९. ल१ ल२ ब अ प्र-नास्ति ॥ १०. रा१ ल१ ल२ ब अ प्र-नास्ति । म-८२-तमश्लोकादारभ्य ९१-तमश्लोकपर्यन्तं नास्ति । ११. रा२-अभिविध्य च । १२. ल१ ल२ ब अ प्र-रक्षो ॥ १३. रा१ रा२-कुम्भकर्णोऽब्रवीदिदं । १४. रा१ रा२-नास्ति॥ १५. रा१-भव । अ ब फ-महान् ॥ १६. रा२-आत्मकार्यं ।

N] त्वम् एको रक्षसां लोके सत्यधर्मा[1]ऽभिरक्षिता ॥८५॥ [N
नास्ति सत्याऽभिषक्तानां[2] व्य्-असनं हि कदा-चन ।
N] सन्तानाऽर्थं त्वम् एवैकः कुलस्याऽस्य भविष्यसि ॥८६॥[N
राघवस्य प्र-सादाच् च रक्षसां राज्यम् आप्स्यसि[3] ।[4]
N] प्र-कृत्याऽति-दुर्धर्षः[5] शीघ्रं मार्गाद् अप-क्रम ॥८७॥ [N
न स्थातव्यं पुरस्-तान् मे सं-भ्रमान् नष्ट-चेतसः ।
न वेद्मि[6] सं-युगे सक्तः स्वान् परान् वा निशा-चर ।
N] रक्षणीयोऽसि मे वत्स सत्यम् एतद्[7] ब्रवीमि ते ॥८८॥ [N
एवम् उक्तो (?क्तं) वचस् तेन कुम्भ-कर्णेन धी-मता ।
N] वि-भीषणो महा-बाहुः कुम्भ-कर्णम् उवाच ह ॥८९॥ [N
मन्त्रितं[8] मे[9] कुलस्याऽस्य रक्षणाऽर्थम् अरिं-दम ।
न कृतं सर्व-रक्षोभिस् ततोऽहं रामम् आ-गतः ।
N] काङ्क्षितव्यं तु भवता सु-कृतं दुष्-कृतं नु[10] वा ॥९०॥ [N
एवम् उक्त्वाऽश्रुपूर्णाऽक्षो गदा-पाणिर् वि-भीषणः ।
N] एकाऽन्तम् आ-श्रितो भूत्वा चिन्तयामास[11] तत्-क्षयम्[11]॥९१॥[N

---

स ददर्श महाऽऽत्मानं किरीटिनम् अव-स्थितम् ।
८३] शोणिताऽऽप्लुत-सर्वाऽङ्गं कुम्भ-कर्णं महा-बलम् ॥९२॥ [१४०
सर्वान् समभि-धावन्तं यथा दृप्तं[12] महा-गजम् ।
८४] मार्गमाणं हरीन् क्रुद्धं राक्षसैः[13] परि-वारितम्[13] ॥९३॥ [१४१

---

१. रा$_2$-शुभकर्मा० ॥ २. ल$_1$ ल$_2$ ब रा$_2$ फ-०भिषिक्तानां ॥ ३. रा$_1$-अवाप्स्य० । ४. रा$_2$-नास्ति । ५. रा$_1$-०त्या नास्मि दु० ॥ ६. रा$_1$-वेत्ति । ७. रा$_2$ एव ॥ ८. ल$_1$ ल$_2$ ब श्र प्र रा$_2$ फ-गदितं । ९. ल$_1$ ल$_2$ ब श्र-च । प्र-हि । १०. रा$_1$ रा$_2$- तु ॥ ११. रा$_1$-रोदयामास दुःखितः । श्र-०स तत्क्षणं ॥ १२. ल$_1$ ल$_2$ ब श्र प्र फ-दृष्टं । १३. रा$_1$-रक्षः सैन्यविवर्जितं ॥

विन्ध्य-मन्दर-सङ्काशं काञ्चनाऽद्[1]भुतभूषणम् ।
८५] स्रवन्तं रुधिरं गात्रात् साक्षान् मेघम् इवोदितम् ॥९४॥ [१४२
लि[2]हन्तं जिह्वया घोरं तद् व[3]क्त्रं शोणितोक्षितम् ।
८६] मर्दन्तं वानरान् सं-ख्ये कालाऽन्तकयमोपमम् ॥९५॥ [१४३
तं दृष्ट्वा राक्षस-श्रेष्ठं प्रदीप्ताऽनल-वर्चसम् ।
८७] वि-स्फारयामास तदा कार्मुकं पुरुषर्षभः ॥९६॥ [१४४
स तस्य चाप-निर्घोषात् कुपितो [3]राक्षसर्षभः ।[4]
८८] अ-मृष्यमाणस् तं घोषम् अभि-दुद्राव राघवम् ॥९७॥ [१४५
तस्मिन् काले सु-मित्रायाः पुत्रः परबलाऽर्दनः ।
८९] चकार लक्ष्मणः प्रादुर् अस्त्रम् अस्त्र-विदां वरः॥९८॥ [१०३
स कुम्भ-कर्णस्य शरान् शरीरे सप्त वीर्य-वान् ।
९०] नि-शितान् आ-ददे चाऽन्यान् वि-ससर्ज च लक्ष्मणः॥९९[5] [१०४
अति-क्रम्य स सौमित्रिं कुम्भ-कर्णो महा-बलः ।
९१] रामम् एवाऽभि-दुद्राव कम्पयन्न् इव मेदिनीम् ॥१००॥ [११८

ततस् तु वातोद्धत-वह्नि-कल्पं
भुजङ्गराजोत्तमभोग-बाहुम् ।
तम् आ-पतन्तं धरणीधराऽऽभं
९२] प्रोवाच रामो युधि कुम्भ-कर्णम् ॥१०१॥ [१४६
आ-गच्छ रक्षोऽधिप मत्-समीप[6]म्
अयं स्थितोऽहं प्रगृहीत-चापः ।
उपै(? पे)हि मां मृत्युम् उप-स्थितं स्थिरं
९३] प्रेतो मुहूर्ताद् भविताऽसि पाप-क॥१०२॥ [१४७

---

१. रा$_1$ रा$_2$ फ-०नांगदभू० ॥ २. रा$_1$-लेलिहानमसृग्रक्षो जिह्वया ॥ ३. रा$_2$ फ-नैर्ऋतर्षभः । ४. प्र-नास्ति ॥ ५. म-नास्ति ॥ ६. म-०मीपे ॥

रामोऽयम् इति वि-ज्ञाय जहास विकृत-स्वरम् ।
९४] पातयन्न् इव सर्वेषां हृदयानि वनौकसाम् ॥१०३॥ [१४८
प्र-हस्य वि-कृतं भीमं[1] स मेघस्तनितोपमम् ।
९५] कुम्भ-कर्णो महा-तेजा राघवं वाक्यम् अब्रवीत् ॥१०४॥ [१४९
नाऽहं वि-राधो वि-ज्ञेयो न कबन्धः खरो न च ।
९६] न वाली न च मारीचः कुम्भ-कर्णम् अवै(?वे)हि माम् १०५ [१५०
पश्य मे मुद्गरं घोरं सर्व-कालाऽऽयसं दृढम् ।
९७] अनेन निर्-जिता देवा दानवाश् च मया रणे[2] । [१५१
N] शक्रश् च निर्-जितो राम नष्टाऽहं च स्वयं-भुवः ॥१०६॥ [N
वि-कर्ण-नास[3] इति मां नाऽव-ज्ञातुम् इहाऽर्हसि ।
९८] अल्पा हि न मे पीडा कर्णनासाऽवकर्तनात् ॥१०७॥ [१५२
दर्शयेक्ष्वाकु-शार्दूल वीर्यं गात्रेषु मे लघु ।
९९] ततस् त्वां भक्षयिष्यामि दृष्ट्वा पौरुष-विक्रमम् ॥१०८॥ [१५३
स कुम्भ-कर्णस्य वचो निशम्य
रामः सु-पुङ्खान् वि-ससर्ज बाणान् ।
तैर् आ-हतो वज्र-सम-प्रभावैर्
१००] न चुक्षुभे सं-यति कुम्भ-कर्णः ॥१०९॥ [१५४
यैः सायकैस् ताल-वरा नि-कृत्ता
वाली हतो वानर-पुङ्गवैश्[4] च ।
ते कुम्भ-कर्णस्य तदा शरीरं[5]
१०१] वज्रोपमा न व्यथयाम्बभूवुः[6] ॥११०॥ [१५५
स वारि-धारा इव सायकांस् तान्
पिबन् शरीरेण महेन्द्र-शत्रुः ।

---

१. म-भीमं । २. रा$_2$-महारणे । म-पुरा मया ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-विकीर्ण० ॥ ४. प्र रा$_2$फ म-राक्षसपुंगवाश् । ५. रा$_2$-शरीरे । म-कुलीरे । ६. म-व्यथयांप्रचक्रुः ॥

जघान तं राम-शर-प्रवेकं
१०२] व्या-विध्य तं मुद्गरम् उग्र-वेगम्॥११२॥ [१५६
स शत्रुगात्रक्षतजाऽनुलिप्तं
वि-त्रासनं देव-महाचमूनाम् ।
[1]व्या-विध्य तं मुद्गरम् उग्र[2]-वीर्यं
१०३] वि-त्रासयामास रघु-प्रवीरः ॥११३॥ [१५७
अथ दाशरथी रामो रौद्रम् अस्त्रं प्र-योजयन्[3] ।
१०४] कुम्भ-कर्णस्य हृदये नि-चखान शितान् शरान् ॥११४॥ [११९
तस्य रामेण विद्धस्य वानरान्[4] विप्र-धावतः ।
१०५] अङ्गार-मिश्राः क्रुद्धस्य मुखान् निश्-चेरुर् अर्चिषः॥११५॥[१२०
तस्योरसि नि-मग्नास् ते शरा बर्हिण-लक्षणाः[5] ।[१२२पू
१०६] हृदयं पीडयामासुः क्रोध[6]-मुक्ता महाऽऽत्मना ॥११६॥ [N
हस्ताच् चाऽस्य परि-भ्रष्टं पपातोर्व्यां[7] महाऽऽयुधम् ।[१२३पू
१०७] स निर्-आयुधम् आत्मानं यदा मेने महा-बलः ॥११७॥
१०८पू] मुष्टिभ्यां[8] स जघानाऽर्थं चकार कदनं तदा[9] ।[१२४
N] आ-ददेऽथ पुनर् घोरं भूमेर् मुद्गरम् आयसम् ॥११८॥ [N
१०८उ] स बाणैर् अति-विद्धाऽङ्गो [10]रुधिरेण सम्-उक्षितः ।
रुधिरं [11]परि-सुस्राव गिरिः प्र-स्रवणैर् इव ॥११९॥ [१२५
१०९] स तीव्रेण च कोपेन रुधिरेण स[12]म्-उक्षितः ।
वानरान् राक्षसांश् चैव खादन् विपरि-धावति ॥१२०॥[१२६
११०] तस्मिन् काले स धर्माऽऽत्मा लक्ष्मणो वाक्यम् अब्रवीत् ।
कुम्भकर्ण-वधे यत्तो योगान् परि-मृशन् बहून् ॥१२१॥[१३०

---

१. म-नास्ति । २. रा$_2$ फ-उग्रवेगं ॥ ३. रा$_2$-अयोजयत् । म-प्रयुक्त-वान्॥ ४. म-सहसा ॥ ५. ल$_1$ल$_2$ब रा$_2$फ म-०लक्ष्मणाः । ६. प्र-क्रोधान्मुक्ता ॥ ७. प्र-नास्ति ॥ ८. रा$_2$ फ-चरणाभ्यां च । ९. प्र-तथा ॥ १०. प्र रा$_2$ फ म-क्षतजेन । ११. फ-प्रतिसु० ॥ १२. रा$_1$-च सूदितः । रा$_2$ फ म-स मूर्च्छितः ॥

१११] नैवाऽयं वानरान् खादन् न च जानाति राक्षसान् ।
मत्तः शोणित-गन्धेन स्वान् परांश् चैव खादति ॥१२२॥ [१३१
११२] साध्व् एनम् अधि-रोहन्तु सर्व-तो वानरर्षभाः ।
यूथ-पाश् च तथा मुख्यास् तिष्ठन्त्व् अस्य समीप-तः।१२३[१३२
११३] अथाऽयं दुर्-मतिः काले गुरु-भारम् अ-पारयन् ।
नि-पतेद् राक्षसो भूमौ न च हन्यात् प्लवं-गमान् ॥१२४॥[१३३
११४] तस्य तद् वचनं श्रुत्वा राज-पुत्रस्य धी-मतः । [१३४पू
गजो गवाऽक्षो गवयः शरभो गंध-मादनः ॥१२५॥ [N
११५] नीलश् च कु-मुदश् चैव जाम्ब-वान् अङ्ग-दस् तथा । [N
ते समा-रुरुहुर् हृष्टाः कुम्भ-कर्णं प्लवं-गमाः ॥१२६॥[१३४उ
११६] कुम्भ-कर्णः सु-संक्रुद्धः समा-रूढैः प्लवं-गमैः ।
व्य्-अधूनयत् तान् वेगेन दुष्ट-हस्तीऽव हस्ति-पान् ॥१२७[१३५
तान् दृष्ट्वा निर्-धुतान् रामो रोषाद् वानर-यूथपान् ।
११७] ज्ञात्वा महाऽनुभावं तं दिव्यान्य् अस्त्राणि सं-दधे।१२८[१३६
वायव्यम् आ-हूय ततो महाऽस्त्रं
रामः प्र-चिक्षेप निशा-चराय ।
स-मुद्गरं तेन जहार बाहुं
११८] निकृत्त-बाहुस् तुमुलं ननाद ॥१२९॥ [१५८
स तस्य बाहुर् गिरि-शृङ्ग-कल्पः
स-मुद्गरो राघव-बाण-कृत्तः ।
पपात तस्मिन् हरि-सैन्य-मध्ये
११९] जघान तां वानर-वाहिनीं च ॥१३०॥ [१५९
ते वानरा भग्नहताऽवशेषाः
पर्य्-अन्तम् आ-श्रित्य भयाऽवसन्नाः ।

---

१. म-नास्ति ॥ २. प्र-अभिधावन्तु ॥ ३. रा१ ब ऋ रा२ फ म-गुरुं भारं ॥ ४. प्र-नास्ति ॥

प्रवेपिताऽङ्गा ददृशुः सु-घोरं
१२०] नरेन्द्र-रक्षोऽधिप-सन्निपातम् ॥१३१॥ [१६०
स कुम्भ-कर्णोऽस्त्र-निकृत्त-बाहुर्
महान् निकृत्ताऽग्र इवाऽचलेन्द्रः ।
उत्-पाटयामास करेण वृक्षं
१२१] ततोऽभि-दुद्राव रणे नरेन्द्रम् ॥१३२॥ [१६१
ततोऽस्य बाहुं सह-साल-वृक्षं
सम्-उद्यतं पन्नग-भोग-कल्पम् ।
इन्द्राऽस्त्र-युक्तेन जहार रामो
१२२] बाणेन जाम्बूनद-भूषितेन ॥१३३॥ [१६२
स कुम्भ-कर्णस्य भुजो नि-कृत्तः
पपात बाहुः पतगेन्द्र-कल्पः ।
वि-चेष्टमानोऽभि-जघान तत्र
१२३] शैलान् छिला राक्षस-वानरांश् च ॥१३४॥ [१६३
तं कृत्त-बाहुं समवेक्ष्य रामः
समा-पतन्तं सहसोन्-नदन्तम् ।
ततोऽर्ध-चन्द्रौ सुं-शितौ गृहीत्वा
१२४] चिच्छेद पादौ युधि राक्षसस्य ॥१३५॥ [१६४
स कृत्त-बाहुर् विनिकृत्त-पादो
वि-वृत्य वक्त्रं वडबामुखाऽऽभम् ।
दुद्राव रामं सहसाऽभि-गर्जन्
१२५] राहुर् यथा चन्द्रम् इवाऽन्तरिक्षे ॥१३६॥ [१६६

---

१. प्र-०सन्निवेशं ॥ २. म-नरेन्द्रकल्पं ॥ ३. ब-०गतुल्यं । ४. म-०दस-न्निभेन ॥ ५. रा$_1$ल$_1$ल$_2$ब ञ प्र रा$_2$फ-०न्द्रमुक्तः । ६. ल$_2$-विशीर्यमाणो० । ७. फ-० वानराश् ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-रणे सहर्षः सहसोन्ननाद । ९. म-०चन्द्रं । १०. प्र-निशितौ । म-सहसा ॥

[1]अपूरयत् तस्य मुखं शिताऽग्रै
रामः शरैर् हेम-पिनद्ध-पुङ्खैः ।
[2]स पूर्ण-वक्त्रो न शशाक वक्तुं
१२६] चुकोप कृच्छ्रेण मुमोह चाऽपि ॥१३७॥ [१६७
[3]अथाऽऽददे सूर्य-मरीचि-कल्पं
स ब्रह्मदण्डाऽन्तक-[4]तुल्य-रूपम् ।
अरि-घ्नम् ऐन्द्रं नि-शितं सु-पुङ्खं
१२७] रामः शरं मारुत-तुल्य-वेगम् ॥१३८॥ [१६८
अ-पारणीयं वि-शिखं वीर्य-वन्तं महा-बलम् ।
१२८] भयं-करम् अ-मित्राणां ज्ञातीनां [5]नन्द-वर्धनम् ॥१३९॥ [N
तं कार्मुकं समा-दाय वि-कृष्य च महा-बलः ।
१२९] ससर्ज कुम्भ-कर्णस्य वधाय शरम् उत्-तमम् ॥१४०॥ [N
दिव्यं मघ-वता दत्तं ज्वलन्तम् इव तेजसा ।
१३०] स वि-सृष्टो बल-वता रामेण नि-शितः शरः ॥१४१॥ [N
कुम्भ-कर्णस्य हृदयं भित्त्वा धरणिम् आऽविशत् ।
१३१] अथाऽऽददे शरं चाऽन्यं दिव्यमन्त्राऽभिमन्त्रितम् ॥१४२ [N
तं वज्र-जाम्बूनद-चारु-पुङ्खं
प्रदीप्त-सूर्य-ज्वलन-प्रकाशम् ।
महेन्द्र-वज्राऽशनि-तुल्य-वेगं
१३२] रामः स [6]चिक्षेप निशा-चराय ॥१४३॥ [१६९
स सायको राघव-[7]बाहु-विच्युतो
दिशः स्व-भासाऽति-भृशं प्र-काशयन् ।

---

१. ल$_2$-आपू० । २. रा$_2$ फ-संपूर्ण० ॥ ३. म-समाददे । ४. प्र रा$_2$ फ म-०क्कालतुल्यं ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ फ म-नंदिव० । रा$_2$-हर्षव० ॥ ६. रा$_2$ म-प्रचि० ॥ ७. प्र-०बाणवि० । म-०बाहुमुक्तो ।

विधूम-वैश्वानर-तुल्य-दर्शनो
१३३] जगाम शं[1]क्राऽशनि-तुल्य-विक्रमः ॥१४४॥ [१७०
स तन् महापर्वत-कूट-सन्निभं
विवृत्तदंष्ट्रोज्वल-चारु-भूषणम्[2] ।
चकर्त रक्षोऽधिपतेः शिरस् तदा
१३४] यथैव वृत्रस्य पुरा पुरं-दरः ॥१४५॥ [१७१
तद् रामबाणाऽभिहतं पपात
रक्षः-शिरः पर्वत-सन्निकाशम् ।
बभञ्ज पुर्या गृह-गोपुराणि
N] प्राकार-साऽट्टालचयांश् च तत्र ॥१४६॥ [१७३
अथ[3] ते[4] राक्षसाः सर्वे व्यू-अद्रवन् राक्षसे हते ।
१३५] वानराणां[5] सहस्रे द्वे कायेनाऽर्थं व्यू-अपोथयत् ॥१४७॥ [N
सम्प्राऽकम्पन्त लङ्कायाः प्राकारास् तोरणानि च ।
१३६] तस्मिन् नि-पतिते भूमौ चुक्षुभे च[6] महोदधिः ॥१४८॥ [N
तं तु भूमौ नि-पतितं दृष्ट्वा विक्षिप्त-भूषणम् ।
१३७] बभूवुर् व्यथिताः सर्वे हत-शेषा निशा-चराः ॥१४९॥ [N
ते विषण्ण-मुखा दीनाः प्रहार-जनित-श्रमाः ।
१३८] वि-नेदुर् उच्चैर् बहवः सहसा वि-स्वरैः स्वनैः[7] ॥१५०॥ [N
स चाऽति-कायो हिमवत्-प्रकाशो
रक्षः-पतिम् तोय-निधेः समीपे ।
ग्रहान् महामीन-चयान्[8] भुजं-गान्
N] वि-क्षोभ्य भूमिं च तदा पपात[9] ॥१५१॥ [१७५

१. रा₁-शक्तयाश० ॥ २. म-०रुकुण्डलं ॥ ३. प्र फ म-पातिते । रा₂-पतिते । ४. रा₁ ल₁ ल₂ ब ञ प्र फ म-राक्षसानां । ५. प्र रा₂ फ-०नाति-व्य० । म-०नापि व्य० ॥ ६. रा₁ ल₁ल₂ ब-सहसोदधिः ॥ ७. प्र रा₂-स्वरैः ॥ ८. प्र रा₂ फ-०नवरान् । ९. म-नास्ति ॥

तस्मिन् हते ब्राह्मण-देव-शत्रौ

महा-बले सं-यति कुम्भ-कर्णे ।

चचाल भूर् भूमि-धराश् च सर्वे

N] हृष्टाश्[1] च देवाः प्र-सभं वि-नेदुः ॥१५२॥ [१७६

प्रहर्ष-युक्ता बहवश् च वानराः

प्रबुद्ध-पद्म-प्रतिमैस् तदाऽऽननैः ।

अपूजयन् राघवम्[2] इष्ट[2]-भागिनं

१४०] हते[3] रिपौ भीम-बले दुरा-सदे[3] ॥१५३॥ [१८०

स कुम्भ-कर्णं सुर-शत्रुम्[4] उग्र[4]-तमं

महत्सु युद्धेष्व् अ-जितं कदा-चन[5] ।

ननन्द हत्वा भरताऽग्रजो रणे

१३९] महाऽसुरं वृत्रम् इवाऽमराऽधिपः[6] ॥१५४॥ [१८१

ततः सदेवर्षि-सगुह्यकाऽप्सरः-

सुराऽसुरा भूत-सुपर्ण-पन्नगाः ।

सयक्षगन्धर्व-सदैत्यदानवाः

१४१] प्र-हर्षिता राम-पराऽऽक्रमात् तदा ॥१५५॥[7] [१७७

इत्यार्षे रामायणे युद्ध-काण्डे कुम्भकर्ण-वधो नाम

षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

१. रा₂ फ म-हर्षाच् ॥ २. रा₂-०वमित्रभा० । रा₂-०मिष्टभाषिणं । म-०वमाजिवर्धनं । ३. फ-नास्ति ॥ ४. रा₁-सुरदैत्यसूदनं । ५. फ-नास्ति । ६. ल₁ ल₂ ब-इव सुरद्विषः ॥ ७. ल₁ ल₂ ब अ प्र रा₂ फ म-नास्ति ॥ ८. रा₁ ब प्र-लङ्काकाण्डे युद्धपर्वणि ॥

[ वं–४७ ]= [ सप्तचत्वारिंशः सर्गः ] =[ दा–६८ ]

कुम्भ-कर्णं हतं दृष्ट्वा[1] राघवेण महाऽऽत्मना ।
१] राक्षसा राक्षसेन्द्राय रावणाय न्य्-अवेदयन् ॥१॥ [१
स श्रुत्वा नि-हतं सं-ख्ये कुम्भ-कर्णं महा-बलम्[2] ।
२] रावणः शोक-सन्तप्तो मुमोह च पपात च ॥२॥ [६
पितरं पतितं[3] दृष्ट्वा देवान्तक-नरान्तकौ ।
३] त्रि-शिराश् चाऽति-कायश् च रुरुदुः शोक-पीडिताः ॥३॥[७
भ्रातरं नि-हतं श्रुत्वा रामेणाऽक्लिष्ट-कर्मणा ।
४] महोदर-महापार्श्वौ शोकाऽऽक्रान्तौ बभूवतुः ॥४॥ [८
ततः कृच्छ्रात् समा-साद्य सं-ज्ञां राक्षस-पुङ्गवः ।
५] कुम्भकर्ण-वधाद् दीनो वि-ललापाऽर्थे रावणः ॥५॥ [९
हा वीर रिपु-दर्प-घ्न कुम्भ-कर्ण महा-बल । [१०पू
६] शत्रु-सैन्यं प्र-तार्यै(?प्यै)कः क मां सं-त्यज्य गच्छसि॥६॥[११उ
इदानीं खल्व् अहं नाऽस्मि यस्य मे पतितो[6] भुजः ।
७] दक्षिणो यं समा-श्रित्य न बिभेमि दिवौकसाम् ॥७॥ [१२
कथम् एवं-विधो नाम देव-दानव-दर्प-हा ।
८] कालाऽग्नि-प्रतिमः सं-ख्ये राघवेणाँऽसि पाँतितः ॥८॥ [१३
ननु ते वज्र-निष्पेषा नाऽकुर्वन्त व्यथां तदा ।

---

१. ल$_1$ ल$_2$ ब अ प्र रा$_2$-०कर्णवधं श्रुत्वा ॥ २. ल$_1$ ब अ प्र रा$_2$ फ-०बलः ॥ ३. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-व्यथितं ॥ ४. म-०लाप स ॥ ५. रा$_2$ फ-प्रतप्यैकः ॥ ६. ल$_1$ ल$_2$ ब अ प्र म-०तोऽनुजः ॥ ७. रा$_1$म-०वेण निपा० । रा$_2$-०वेण हि पा० ॥ ८. रा-यस्य कुर्वन्ति न व्यथां । ९. म-नास्ति ।

९] स कथं रामबाणाऽऽर्तः प्र-सुप्तोऽसि मही-तले[1] ॥९॥ [१४
एते[2] देव-गणाः सार्धम्[3] ऋषिभिर् गगने स्थिताः ।
१०] त्वाम्[4] अद्य दृष्ट्वा नन्दन्ति रामेण नि-हतं[6] शरैः[5] ॥१०॥ [१५
अद्य वैवस्वतो राजा प्र-भुः[7] स[8] प्रति-भाति मे ।
N] येन त्वं काल-सदृशो योजितः काल-धर्मणा ॥११॥ [N
N] त्वां भूमौ पतितं दृष्ट्वा भूयो रार्मरणोत्सुकाः[4] । [N
ध्रुवम् अद्यैव सं-हृष्टा लब्ध-लक्षाः[9] प्लवं-गमाः ।
११] समा-रोक्ष्यन्ति दुर्गाणि लङ्का-द्वाराणि सर्व-शः ॥१२॥ [१६
राज्येन नाऽस्ति मे कृत्यं[10] किं करिष्यामि सीतया ।
१२] कुम्भकर्ण-विहीनस्य जीविते नाऽस्ति मे[11] स्पृहा ॥१३॥ [१७
यद्य् अहं भ्रातृ-हन्तारं न हन्मि युधि राघवम् ।
१३] ननु मे मरणं श्रेयो न त्व्[12] इदं[12] व्यर्थ-जीवितम् ॥१४॥ [१८
अद्यैव[13] तं[13] गमिष्यामि देशं[14] यत्राऽनु-जो मम ।
१४] नहि भ्रातृ-परित्यक्तः क्षणं जीवितुम् उत्-सहे[15] ॥१५॥ [१९
१५पू] देवा मां च हसिष्यन्ति हृष्टाः[16] सर्वाऽपकारिणम्[15] ।
कथम् इन्द्रं[17] वि-जेष्यामि कुम्भ-कर्ण मृते त्वयि ॥१६॥ [२०
१६] तद् इदं माम् अनुप्राऽऽप्तं विभीषण-वचः शुभम् ।
यद् अ-ज्ञानान् मया तस्य न गृहीतं महाऽऽत्मनः ॥१७॥[18] [२१
१७] विभीषणाऽभिशापोऽयं कुम्भकर्ण-प्रहस्तयोः[18] ।

---

१. म-नास्ति ॥ २. ल$_1$ ल$_2$ ब अ प्र फ-हतं । ३. रा$_1$-सर्वे ऋषयो । ४. म-नास्ति । ५. ल$_1$ ब-निशितैः । ६. रा$_1$-निहतं त्वां रणे दृष्ट्वा विहसन्ति प्रहर्षिताः ॥ ७. रा$_1$-प्रभुर्हि । प्र रा$_2$-प्रभावः । फ-प्रभावं ॥ ८. रा$_1$-भूधराहर० । रा$_2$-भूधराभर० । ९. ल$_1$ ल$_2$प्र-०लक्ष्याः ॥ १०. रा$_1$-कार्यं । ११. रा$_1$-न मम ॥ १२. रा$_1$प्र रा$_2$ म-न चेदं ॥ १३. ल$_1$ल$_2$ ब अ प्र फ-अद्यैवाहं । १४. रा$_1$-कुम्भकर्ण हते त्वयि । १५. अ रा$_2$फ-नास्ति ॥ १६. अ-सर्वे । १७. रा$_1$-वैवस्वतं देवं वरुणं च महाबलं ॥ १८. अ-नास्ति ॥

वि-नाशोऽयं समुत्-पन्नो[1] मां पीडयति दारुणः ॥१८॥[2] [२२
तस्याऽयं कर्मणः प्राऽऽप्तो वि-पाको मम शोक-दः ।
१८] यन् मया धार्मिकः श्री-मान् स निर्-अस्तो वि-भीषणः॥१९॥[२३
इति रजनी-चर-वरस् तदानीं
पितृपति-राष्ट्र-गतं तदा नि-शम्य ।
अनु-जम् अनु-शुशोच नैकधाऽसौ
१९] मृत्युम् अपश्यद् इवाऽऽत्मनस् तथा सः ॥२०॥[3] [N

इत्यार्षे रामायणे युद्धे[4]-काण्डे रावण-विलापो नाम
सप्तचत्वारिंशः सर्गः[5] ॥४७॥

---

## [वं–४८]= [अष्टाचत्वारिंशः सर्गः] =[ दा–६९]

एवं वि-लप्य[6]मानस्य रावणस्य दुर्-आत्मनः ।
१] श्रुत्वा शोकाऽभिसन्तप्तस् त्रि-शिरा वाक्यम् अब्रवीत् ॥१॥ [१
एवम्[7] एतन् महा-सत्त्व न श्रुतं यद् वि-भीषणात् ।
२] न तु[8] सत्-पुरुषा ह्य्[9] एवं वि-लपन्ति यथा भवान् ॥२॥ [२
ननु त्रि-भुवनस्याऽपि पर्य्-आप्तस् त्वं विनि-ग्रहे ।
३] स कथं[10] प्राकृताऽऽत्मेव शोचस्य् आत्मानम् ईश्वरं[11] ॥३॥ [३

---

१. रा१ ०न्नस्तन्मां पीडयते दृढं । २. अतः परमधिकः पाठः— रा१-यद्वाक्यं कुम्भकर्णस्य मारीचस्य च यद्वचः । उक्तं विभीषणेनाऽपि हितं तथ्यं च साधु च ॥ ३. ल१ ल२ ब ञ प्र रा२ फ म-नास्ति ॥ ४. रा१-लङ्काकाण्डे । ५. ल२ ब ञ प्र फ म-सर्गसमाप्तिर्न दृश्यते ॥ ६. ब प्र रा२ फ म-विलाप्य० ॥ ७. म-मैवं । ८. रा१-च । ९. रा१-एवं ॥ १०. रा१-कस्मात् । ११. ल१ ल२ ब ञ प्र रा२ म-ईश्वरः ॥

ब्रह्म-दत्ताऽस्ति ते शक्तिः कवचं सायका[1] धनुः ।

४] सहस्र-खर-युक्तश्[2] च रथो मेघ-निभ-स्वनः ॥४॥[3] [४

तदा[4] त्वया वि-शेषेण[5] निर्-अस्ता देव-दानवाः ।

५] स सर्वाऽऽयुध-सम्पन्नो राघवं हन्तुम् अर्हसि ॥५॥ [५

कामं तिष्ठ महा-राज निर्[6]-गमिष्याम्य् अहं रणे[6] ।

६] उद्-धरिष्यामि ते[7] शत्रुं गरुडः पन्न-गं यथा ॥६॥ [६

शम्बरो[8] देव-राजेन नरको विष्णुना यथा ।

७] तथाऽद्य शयिता रामो मया युधि[9] नि-पातितः[10] ॥७॥ [७

श्रुत्वा त्रि-शिरसो वाक्यं रावणो राक्षसोऽधिपः[11] ।

८] पुनर् जातम् इवाऽऽत्मानं मेने तस्य सु-भाषितैः[12] ॥८॥ [८

श्रुत्वा[13] तु तस्य[13] तद् वाक्यं देवाऽन्तक-नराऽन्तकौ ।

९] अति-कायश् च तेजस्वी बभूवुर् युद्ध-काङ्क्षिणः ॥९॥ [९

ततो हर्ष-समाविष्टा जगर्जुर् नैर्ऋतर्षभाः ।

१०] रावणस्य सुता वीराः शक्र-तुल्य-पराऽऽक्रमाः ॥१०॥ [१०

अन्तरिक्ष-चराः सर्वे सर्वे[14] माया-विशारदाः ।

११] सर्वे त्रिदश-दर्प-घ्नाः सर्वे सङ्ग्राम-काङ्क्षिणः[15] ॥११॥ [११

सर्वेऽस्त्र-बल-सम्पन्नाः सर्वे विपुल-कीर्तयः ।

---

१. रा$_{1}$-सायकं । प्र-सायको । २. रा$_{1}$-०रसंयुक्तः । ३. अतः परमधिकः पाठः—रा$_{1}$-शूलश्चान्तकसंकाशः परिघश्चापि दारुणः । यमदत्ता तथा शक्तिरेका शत्रुविनाशिनी ॥ तथा खड्गो महाघोरो नानास्त्राणि च मानद ॥ ४. रा$_{1}$-तथा । ५. रा$_{1}$-च शस्त्रेण वित्रस्ता देवतागणाः ॥ ६. रा$_{1}$-वधिष्यामि च ते रिपुं । ७. रा$_{1}$-शत्रुं ते गरुत्मानिव पन्नगं ॥ ८. रा$_{1}$-नमुचिर् । ९. रा$_{1}$-समरे । १०. रा$_{1}$-जानीहि सूदितः ॥ ११. रा$_{1}$-राक्षसेश्वरः । १२. रा$_{2}$-सुभाषितं ॥ १३. रा$_{2}$-ततः श्रुत्वा तु ॥ १४. रा$_{1}$ प्र-सर्वमाया० । १५. रा$_{1}$-०मयोधिनः ॥

१२] सर्वे समरम् आ-साद्य न श्रूयन्ते स्म[1] निर्-जिताः ॥१२॥[2] [१२

स तैस् तदा भास्कर-वह्नि-संनिभैः[3]
सुतैर्[3] वृतः शत्रु-बल-प्रमर्दनैः[4] ।
रराज राजा मघवाँ[5] यथाँऽमरैर्[6]
१३] वृतो[6] महा-दानव-दर्प-नाशनैः ॥१३॥ [१४

इत्यार्षे रामायणे युद्ध-काण्डे[7] रावण-प्रबोधो[8]
नामाऽष्टाचत्वारिंशः सर्गः ॥४८॥

---

## [वं–४९]= [ एकोनपञ्चाशः सर्गः ] =[दा–६९]

ततस्[9] तान् स परि-ष्वज्य[9] भूषयित्वा[10] च भूषणैः[10] ।
१] आशीर्भिः[11] सु-प्रशस्ताभिः[11] प्रेषयामास सं-युगे[12] ॥१॥ [१५
महोदर-महापार्श्वौ भ्रातराव् अपि[13] रावणः[13] ।
२] रक्षणाऽर्थं कुमाराणां प्रेषयामास[14] सं-युगे[15] ॥२॥ [१६

---

१. रा$_1$-पराजिताः । २. अतः परमधिकः पाठः—रा$_1$-सर्वेऽस्त्रविदुषां श्रेष्ठाः सर्वे युद्धविशारदाः । सर्वे प्रवरविज्ञानाः सर्वे लब्धवरास्तथा ॥ ३. रा$_1$ अ ब फ म-०सन्निभैः सुतैः ।४. रा$_2$-वृतः शतैः शक्रबल० । ५. रा$_1$-०वामरैर् । ६. रा$_1$-यथा । रा$_2$ फ-तथा ॥ ७. रा$_1$ अ प्र-लंकाकाण्डे । ८. ल$_1$ ल$_2$ ब प्र रा$_2$ फ म-०णविलापो ॥ ९. रा$_1$-स पुत्रान् संपरि० । १०. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-पूजयित्वा विभू० । ११. ल$_1$ल$_2$ ब अ म-०भिश्च प्र० । प्र रा$_2$फ-०भिस्तु प्र० । १२. रा$_1$-संयुगं ॥ १३. रा$_1$-उग्रविक्रमौ । म-अग्रविक्रमौ । १४. रा$_1$-रावणः । १५. म-नास्ति ॥

तेऽभि-वाद्य महाऽऽत्मानो[2] रावणं राक्षसेश्वरम्[3] ।
३] कृत्वा प्र-दक्षिणं सर्वे[4] महा-कायाः प्र-तस्थिरे ॥३॥ [१७
सर्वौषधीभिर् गन्धैश् च समा-लब्धा महा-बलाः ।
४] निर्-जग्मुर् नैर्ऋत-व्याघ्राः षड् जना युद्ध-काङ्क्षिणः ॥४॥ [१८
ततः सु-दर्शनं नागं नील-जीमूत-सन्निभम् ।
५] ऐरावण-कुले जातम् आ-रुरोह महोदरः ॥५॥ [२०
सर्वाऽऽयुध-समायुक्तं तूण-तोमर-सङ्कुलम् ।[7]
६] रराज गजम् आ-स्थाय सवितेवाऽस्त-मूर्धनि ॥६॥ [२१
हयोत्तम-समायुक्तं सर्वाऽऽयुध-समन्वितम् ।
७] आ-रुरोह रथ-श्रेष्ठं त्रि-शिरा रावणाऽऽत्मजः ॥७॥[8] [२२
त्रि-शिरा रथम् आ-स्थाय वि-रराज धनुर्-धरः ।
९] स-विद्युदुल्कः स-ज्वालः सेन्द्रचाप इवाऽम्बु-दः ॥८॥ [२३
त्रिभिः किरीटैस् त्रि-शिराः शुशुभे स रथोत्तमे ।
१०] हिम-वान् इव शैलेन्द्रस् त्रिभिः काञ्चन-पर्वतैः ॥९॥[11] [२४

---

१. म-ततस्ते । २. रा$_{1}$ म-०त्मानं । ३. रा$_{1}$-रिपुरावणं । ४. रा$_{1}$-चैव महावीर्याः ॥ ५. रा$_{1}$-सन्नद्धा यु० । ल$_{1}$ल$_{2}$ब अ-षड् नानायु० । रा$_{2}$-षडेते यु० । म-षड्गणा यु० ॥ ६. रा$_{1}$-शूलतो० । अ म-अत आरभ्य ७-मश्लोक-पूर्वार्धं यावन्नास्ति । ७. अतः परमधिक पाठः—रा$_{1}$-मत्तसर्वाङ्गसंयुक्तं स्वर्णजालैरलङ्कृतं ॥ ८. अतः परमधिकः पाठः—रा$_{1}$-पुष्पैर्मालायुधैश्चित्रैः कांचनैश्च विराजितं । किंकिणीशतनिर्घोषं सवरूथं घनस्वनं ॥ नीलपीतसिताभिश्च पताकाभिर् विराजितं । हयैः परमकैर्युक्तं सर्वायुधसमन्वितं ॥ मनोमारुतरंहोभिश्चामरापीडधारिभिः ॥ ९. रा$_{1}$-संज्वालः ॥ १०. रा$_{2}$-शृङ्गैर्हिरण्मयैः । ११. अतः परमधिकः पाठः—रा$_{1}$-विरराज रथेऽन्यस्मिन राजसूनुर्महाबलः ॥

अति-कायो[1]ऽति-तेजस्वी राक्षसेन्द्र-सुतस् तदा ।
११] आ-रुरोह रथ-श्रेष्ठं श्रेष्ठः सर्व-धनुष्मताम् ॥१०॥ [२५
सु[2]-चक्राऽक्षं सु-संयुक्तं साऽनुकर्षं स-कू[3]बरम् ।
१२] सतूण-बाण-संयुक्तं प्राऽऽसाऽसिपरिघाऽऽकुलम्॥११ [२६
स काञ्चन-विचित्रेण किरीटेन[4] वि-राजता ।
१३] भूषणैश् च बभौ चारु[5] प्र-भाभिर् इव भास्-करः ॥१२॥ [२७
वि-रराज रथे तस्मिन् राज-सूनुर् महा-र[6]थः ।
१४] वृतो नैर्ऋत-शार्दूलैर् वज्र-पाणिर् इवाऽमरैः ॥१३॥ [२८
हयम् उच्चैःश्रव-प्रख्यं श्वेतं कनक-भूषणम् ।
१५] मनो-जवं महा-कायम् आ-रुरोह नराऽन्तकः ॥१४॥ [२९[7]
प्राऽऽसम् उल्का-निभं गृह्य वि-रराज नराऽन्तकः[8] ।
१६] शक्तिम् आ-दाय तेजस्वी हुताऽशन इवाऽऽबभौ ॥१५॥[9] [३०
देवाऽन्तकः समा-दाय परि-घं वज्र-भूषणम् ।
१७] भुजैर् मन्दरम् उत्था(दु-स्था)प्य बभौ विष्णुर् इवाऽऽहवे[10]१६ [N
१८पू] महा-पार्श्वो महा-तेजा गदाम् आ-दाय वीर्य-वान् । [३२पू
N] प्र-तस्थे रथम् आ-स्थाय सर्वाऽऽयुध-समन्वितम्[11] । [N
१८उ] वि-रराज गदा-पाणिः कुबेर इव सं-युगे ॥१७॥[12] [३२उ

---

१. रा$_1$ रा$_2$-०योऽपि ते० ॥ २. रा$_1$ ल$_2$ ब प्र रा$_2$ फ-सच० । ३. म-सुकू० ॥ ४. ल$_1$ ल$_2$ ब अ प्र फ-लांछनेन । ५. रा$_1$-मेरौ ॥ ६. रा$_1$ रा$_2$-महाबलः ॥ ७. अतः परमधिकः पाठः—रा$_1$-कवचेन विचित्रेण भूषणैश्च विचित्रितः । ८. अतः परमधिकः पाठः—रा$_1$-रराज हयपृष्ठे स सविद्युदिव तोयदः ॥ ६. अतः परमधिकः पाठः—रा$_1$ल$_2$ ब अ प्र रा$_2$ फ-आरुरोह रथं वीरो दीप्ताग्निकनकप्रभं । १०. प्र-नास्ति ॥ ११. रा$_1$-नास्ति । १२. अतः परमधिकः पाठः—रा$_1$-महोदरोऽपि बलवान्निर्ययौ राक्षसोत्तमः ॥

ते प्र-तस्थुर् महाऽऽत्मानो बलैर् अ-प्रतिमैर् वृताः ।
१९] सुरा इवाऽमरावत्यां बभूवुर् युद्ध-दर्पिताः ॥१८॥ [३३
तान् गजैश् च तुरं-गैश् च रथैश् चाऽम्बुद-निस्वनैः ।
२०] अनु-जग्मुर् महाऽऽत्मानो राक्षस-प्रवरा युधि ॥१९॥ [३४
ते वि-रेजुर् महाऽऽत्मानः कुमाराः सूर्य-वर्चसः ।
२१] किरीटिनः श्रिया युक्ताः सप्तर्षय इवाऽम्बरे ॥२०॥ [३५
प्र-गृहीता बभौ तेषां छत्राणाम् आ-वली सिता ।
२२] शारदाऽभ्र-प्रकाशानां हंसानाम् आ-वली यथा ॥२१॥ [३६
मरणं वाऽपि निश्-चित्य शत्रूणां वा परा-जयम् । [३७
२३] इति कृत्वा मतिं वीरा निर्-जग्मुः संयुगाऽर्थिनः ॥२२॥ [३८
जगर्जुश् चाऽपि ते नेदुश् चिक्रीडुश् चाऽपि राक्षसाः ।
२४] जहृषुश् च दुर्-आत्मानो निर्-यान्तो युद्ध-दुर्मदाः ॥२३॥ [३९
उत्-क्रुष्टा स्फोटिता नादैः सं-चचालेव मेदिनी ।
२६] रक्षसां सिंह-नादैश् च स्फुटतीऽव द्वि-धाऽम्बरम् ॥२४॥ [४०
तेऽभिनिष्-क्रम्य मुदिता राक्षसेन्द्रा महा-बलाः ।
२७] ददृशुर् वानराऽनीकं समुद्यत-शिलाऽऽयुधम् ॥२५॥ [४१
हरयोऽपि महाऽऽत्मानो ददृशुर् नैर्ऋतं बलम् ।
२८] हस्त्य्-अश्व-रथ-सम्बाधं किङ्किणी-शत-नादितम् ॥२६॥ [४२
नील-जीमूत-सङ्काशैः समुद्यत-महाऽऽयुधैः ।

---

१. रा$_1$-राक्षसप्रवरा युधि । २. रा$_1$-०मरावत्या नानाप्रहरणायुताः ॥ ३. रा$_1$-०दसन्निभैः । ४. रा$_1$-बलैरप्रतिमैर्वृताः ॥ ५. ल$_1$ल$_2$ब अ प्र रा$_2$फ म-स्थिता ॥ ६. रा$_1$-मरणं चाऽत्र निःश्रेयो न तु युद्धे पराजयः । ७. ल$_1$ल$_2$ब-युद्धकांक्षिणः ॥ ८. रा$_1$-०चुक्रुशुश् । ९. रा$_1$-०द्धदर्पिताः । रा$_2$-०द्धहर्षिताः । १०. अतः परमधिकः पाठः—रा$_1$-ततो भेरीः समाजघ्नुः शंखान्दध्मुश्च हृष्टवत । पटहान् डिंडिमांश्चापि तथान्यानथ वादयन् ॥ ११. रा$_1$-वसुंधरा ॥ १२. रा$_2$-०तशिलायुधैः ।

२९] दीप्ताऽनल-रवि-प्रख्यैर् नैर्ऋतैः सर्व-तो वृतम् ॥२७॥ [४३
तद्[1] दृष्ट्वा बलम् आ-यातं लब्ध-लक्षाः[2] प्लवं-गमाः ।
३०] सं[3]मुद्यत-महाशैला मुदा नेदुः पुनः पुनः[3] ॥२८॥ [४४
ततः स-सुग्रीवरवं निशम्य
रक्षो-गणा वानर-यूथपानाम् ।
अ-मृष्यमाणाः पर-वीर्य-हर्षं
३१] महा-बला भीम-रवं प्र-णेदुः ॥२९॥[4] [४५
तद् राक्षस-बलं घोरं प्र-विश्य हरि-पुङ्गवाः[4] ।
३२] वि-चेरुश् चोद्-यतैः शृङ्गैर्[5] न-गाः[6] शिखरिणो यथा[7]॥३०॥ [४६
के-चिद् आ-काशम् आ-विश्य के-चिद् उर्व्यां प्लवं-गमाः[8]।
३३] क्रुद्धा राक्षस-सैन्येषु चेरुर् द्रुम-शिलाऽऽयुधाः॥३१॥[9] [४७
नि-जघ्नुः शैल-शृङ्गाऽग्रैर् विव्यथुश् च परस्परम् । [N
३४] सिंह-नादान् वि-नेदुश् च रणे राक्षस-वानराः ॥३२॥[10] [५०पू
ते पादप-शिला-शैलैश् चक्रुर् वृष्टिम् अन्-उत्तमाम् ।
३५] बाणौघैर् वार्यमाणांश् चं हरयो भीम-विक्रमाः ॥३३॥[11] [N
शिखरैः शिखराऽऽभास् ते यातु-धानान् प्लवं-गमाः । [N
३६] नि-जघ्नुः सं-युगे क्रुद्धा हरयो राक्षसर्षभान्[12] ॥३४॥
के-चिद् रथ-गतान् वीरान् गज-वाजि-गतान् अपि । [५१
३७] नि-जघ्नुः सहसाऽऽप्लुत्य यातु-धानान् बली-मुखाः॥[13]३५॥

---

१. रा$_{1}$ रा$_{2}$-तं । २. रा$_{1}$ रा$_{2}$ ब म-०लक्ष्याः । ३. रा$_{1}$-०लाः प्रणेदुर्मुहुर्मुहुः । प्र-नास्ति ॥ ४. ल$_{1}$ ल$_{2}$ ब ञ प्र रा$_{2}$ फ म-नास्ति ॥ ५. ल$_{1}$ ल$_{2}$ ब प्र रा$_{2}$ फ म-शैलैर् । ६. ल$_{1}$ ल$_{2}$ ब प्र-नागाः । ७. ञ-नास्ति ॥ ८. म-नास्ति ॥ ९. ल$_{1}$ ल$_{2}$ ब ञ प्र रा$_{2}$ फ म-नास्ति ॥ १०. रा$_{1}$ रा$_{2}$ प्र-०णापि । ११. म-नास्ति ॥ १२. रा$_{1}$-निर्जग्मुः समरे क्रुद्धाः कालान्तकयमोपमाः ॥ १३. म-नास्ति ॥

शैल-शृङ्ग-विभिन्नाङ्ग्[1] ते मुष्टि-निर्यात-लोचनाः । [५२
३८] चेलुः पेतुश् च नेदुश्[2] च[3] ततो राक्षस-पुङ्गवाः[3] ।
राक्षसास् तु शरैस् तीक्ष्णैर् बिभिदुः कपि-कुञ्जरान् ॥३६॥ [५३
३९] ततः[4] शूलैश् च वृक्षैश् च वि-सृष्टैर् हरि-राक्षसैः[3] । [५५उ
शूल-मुद्गर-खड्गैश् च नि-शितैः शर-वृष्टिभिः । [५४पू
४०] मुहूर्तेनाऽऽवृता भूमिर् अभवच् छोणिता[5]ऽऽप्लुता ॥३७॥
४१पू] वि-कीर्णाः पतिता[6] बाणै रक्षोभिर् उप[7]-मर्दिताः । [५६
आ-क्षिप्ताः[8] क्षिप्यमाणाश् च भग्न-शीर्षाश् च वानराः ॥३८ [५७पू
४२] अन्योऽन्यं पातयामासुः परस्पर-जिघांसया[9] ।
४३पू] रिपु-शोणित-दिग्धाऽङ्गैस् तत्र वानर-कुञ्जरैः[11] ॥३९॥ [N
वानरं[10] वानरेणैव जघ्नुर्[11] योधा हि राक्षसाः ।
४४] राक्षसं[12] राक्षसेनैव पिपिषुर्[13] वानरा भुवि[14] ॥४०॥[15] [५८
आ-च्छिद्य च शिलास् तेभ्यो नि-जघ्नू राक्षसा हरीन्[16] ।
४५] तेषाम् आ-च्छिद्य शस्त्राणि[17] जघ्नू रक्षांसि वानराः ॥४१॥ [५९
नि-जघ्नुः शैल-शिखरैर् बिभिदुश् च परस्परम् ।
४६] सिंह-नादान् वि-नेदुश् च रणे वानर-राक्षसाः[18] ॥४२॥ [६०
छिन्न-वर्म-तनुत्राणा राक्षसा वानरैर् हताः ।
४७] सुस्राव रुधिरं तेभ्यः सलिलं[19] पर्वताद् इव ॥४३॥ [६१

१. फ-०ष्टिभिः क्रांतलो० । म-०ष्टिभिर्वान्तलो० । २. ल$_1$ ल$_2$-नेदुस्ते । ३. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-नास्ति ॥ ४. रा$_1$-पंचशाखैश् । ५. रा$_1$ म-०णितप्लुता ॥ ६. रा$_1$-पर्वताकारै । ७. रा$_1$-अवमर्दितैः । ८ रा$_1$-आक्षिप्याक्षिप्य० ॥ ९. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-नास्ति ॥ १०. रा$_1$-वानरान् । ११. रा$_1$-जघ्निरे चैव । १२. रा$_1$-राक्षसान् । १३. रा$_1$-निजघ्नुर् । १४. रा$_1$-युधि । १५. म-नास्ति ॥ १६. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-आक्षिप्ता बलिनो जघ्नू राक्षसा वानरास् तथा । म-नास्ति । १७. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-गात्राणि निजघ्नुश्चापि ॥ १८. म-नास्ति ॥ १९. ल$_1$ ल$_2$ ब अ प्र फ म-स्वरसः ॥

रथेन रथिनं[1] चाऽपि वारणं वारणेन च[1] । [६२
४८] हयेन च हयं के-चिन् निष्-पिपिषुर् बली-मुखाः ॥४४॥ [६३पू
क्षुर-प्रैर् अर्ध-चन्द्रैश् च भल्लैश् च नि-शितैः शरैः । [६५पू
४९] वैतस्तिकैश् च नि-शितैस् तथ्यं[2]-तोमर-मुद्गरैः ॥४५॥[3] [N
राक्षसा वानरेन्द्राणां बिभिदुश् चिच्छिदुर् बहून् । [६५उ
५०] शिलाश् च गिरि-सानूनि वृक्षांश् च महतस् तथा ॥४६॥ [N
वि-कीर्णैः पर्वतैश् चैव द्रुमैश् छिन्नैश् च सं-युगे ।
५१] हतैश् च कपि-रक्षोभिर् धरणी दुर्-गमाऽभवत् ॥४७॥[3] [६६
तस्मिंस्[4] तथा सं-यति सम्प्र-वृत्ते[4]
प्र[5]-हृष्यमाणे तु बले कपीनाम्[5] ।
नि-पात्यमानेषु[6] च राक्षसेषु[6]
५२] महर्षयो देव[7]-गणाश् च नेदुः । [६८
ते चाऽपि सर्वे हरयः प्र-हृष्टा
वि-नेदुर् आक्ष्वेडित-सिंह-नादैः ॥४८॥[8] [N
ततो हयं मारुत-तुल्य-वेगम्
५३] आ-रुह्य शक्तिं नि-शितां प्र-गृह्य ।
नराऽन्तको वानर-राज-सैन्यं
विवेश मीनस् तु यथाऽर्णवौघम् ॥४९॥[9] [६९
स वानरान् सप्त-दशाऽति-वीरान्
५४] प्राऽऽसेन दीप्तेन विनिर्-बिभेद ।

---

१. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-०थिनश्चापि राक्षसं राक्षसेन वा ॥ २. आयुधविशेषः, तु. पंजा. धद्धा, धप्पा । ३. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-नास्ति ॥ ४. रा$_2$-तस्मिन् प्रवृत्ते तुमुले विमर्दे । ५. ब अ प्र रा$_2$ फ म-नास्ति । ६. ल$_2$ अ प्र रा$_2$ म-प्रगृह्यमाणेषु महारथेषु । ७. रा$_2$ फ म-भूतग० । ८. रा$_2$-अतः परं सर्गसमाप्तिः—इति संकुलयुद्धं नाम सर्गः ॥ ९. रा$_2$- नास्ति ॥

एक-क्षणेनेन्द्र-रिपुर् दुर्[1]-आत्मा
जघान सैन्यं हरि-पुङ्गवानाम् ॥५०॥[2] [७०
दद्दशुश् च महा[3]ऽऽत्मानं हय-पृष्ठे प्रति-ष्ठितम् ।
५५] चरन्तं हरि-सैन्येषु भूत-विद्याधरर्षभाः ॥५१॥ [७१
स तस्य दद्दशे मार्गं[4] मांस-शोणित-कर्दमम्[5] ।
५६] पतितैः पर्वताऽग्राऽऽभैर् वानरैर् अभिसं-वृतम्[6] ॥५२॥[7] [७२
यावद् वि-क्रमितुं बुद्धिं चक्रुः प्लवग-पुङ्गवाः ।
५७] तावद् वेगेन निष्-क्रम्य[8] निर्-बिभेद नराऽन्तकः ॥५३॥[9] [७३
N] धावमानान् कपीन् सर्वान् प्राऽऽस-भृत् सोऽनु-धावति[10] [N
५८पू] सर्वासु दिक्षु बल-वान् प्रावृषीऽव बलाहकः ॥५४॥[11] [७६पू
यतो यतः स दद्दशे प्राऽऽस-पाणिर् नराऽन्तकः ।[12]
५९] ततस् ततस्[13] तं मन्यन्ते कालोऽयम् इति वानराः ॥५५॥[14] [N
ज्वलन्तं प्राऽऽसम् उद्-यम्य सङ्ग्रामाऽग्रे नराऽन्तकः ।
N] ददाह हरि-सैन्यानि काननानि यथाऽनलः ॥५६॥ [७४
यावद् उत्-पाटयामासुः शैलान् वृक्षांश् च वानराः ।
६०] तावत् प्राऽऽस-हताः पेतुर् वज्राऽऽक्रान्ता इवाऽचलाः ॥५७[15] [७५
न शेकुर् द्रवितुं वीरा न स्थातुं न च मर्दितुम् ।

---

१. रा$_1$ म-महात्मा । २. रा$_2$-नास्ति । रा$_1$-अतः परं सर्गसमाप्तिः 'इत्यार्षे रामायणे युद्धकांडे पंचकुमारनिर्याणं नाम सर्गः ॥ ३. रा$_1$-दुरात्मानं ॥ ४. रा$_1$ल$_1$ल$_2$ ब अ-मार्गो । प्र फ-मार्गे । ५. रा$_1$ल$_1$ल$_2$ब अ रा$_2$ फ-०कर्दमः । ६. रा$_1$ अ प्र-०वृतः । ७. ल$_1$ ल$_2$ ब फ-नास्ति ॥ ८. अ प्र रा$_2$ म-एतानतिक्रम्य ॥ ९. रा$_1$ ल$_1$ल$_2$ ब-नास्ति । १०. रा$_1$ अ-विचचार नरान्तकः । ११. अतः परमधिकः पाठः—रा$_1$-कर्षन्वानरसैन्यानि महाभ्राणीव मारुतः । ल$_1$ ल$_2$ ब-नास्ति ॥ १२. म-नास्ति । १३. रा$_1$-ततोऽभ्यमन्यन्त । १४. ल$_1$ ल$_2$ ब-नास्ति ॥ १५. ल$_1$ ल$_2$ ब अ-नास्ति ॥

६१] स्थितं चैवोत्-पतन्तं च धावन्तं च स विव्यधे ॥५८॥ [७७
एकेनाऽन्तक-कल्पेन प्राऽऽसेनाऽऽदित्य[1]-तेजसा ।
६२] भिन्नानि हरि-सैन्यानि नि-पेतुर् धरणी-तले ॥५९॥ [७८
वज्र-निष्पेष-निनदं प्राऽऽसस्य विनि-पातनम्[2] ।
६३] न शेकुर् वानराः सोढुं स्पर्शम्[3] अग्नेर् इव प्र-जाः[3] ॥६०॥ [७९
पततां हरि-वीराणां रूपाणि प्र-चकाशिरे ।
६४] विद्युद्-भग्नाऽग्रकूटानां शैलानां पतताम् इव ॥६१॥ [८०
ये नै[4] पूर्वं[4] महाऽऽत्मानः कुम्भ-कर्णेन पातिताः[5] ।
६५] [नराऽन्तकेन ते सर्वे द्राविता निर्-जिता हताः ।[6] ] [८१पू
N] तेऽस्वस्था वानर-श्रेष्ठाः सु-ग्रीवं पर्युपा[7]ऽऽसते ॥६२॥ [N
वि-चेष्टमानां सु-ग्रीवो ददर्श हरि-वाहिनीम् । [८१उ
६६] नराऽन्तक-भय-त्रस्तां वि-द्रवन्तीं ततस् ततः ॥६३॥ [८२
वि-द्रुतां वाहिनीं दृष्ट्वा ददर्श स[8] नराऽन्तकम्[8] ।
६७] प्राऽऽस-हस्तं[9] तम्[9] आ-यान्तं हय-पृष्ठेन दर्पितम् ॥६४॥ [८३
अथोवाच महा-तेजाः सु-ग्रीवो हरि-पुङ्गवः ।
६८] कुमारम् अङ्ग-दं वीरं[10] शक्र-तुल्य-पराऽऽक्रमम् ॥६५॥ [८४
गच्छैनं[11] राक्षसं वीर घोरं तुर-गम् आ-स्थितम् ।
६९] क्षोभयन्तं[12] हरि-बलं[12] क्षिप्रं प्राणैर् वि-योजय ॥६६॥ [८५
स[13] च[13] भर्तुर् वचः श्रुत्वा निष्-पपाताऽङ्ग-दस् तदा ।

---

१. ल$_1$ ल$_2$ ब अ-०नान्तकवर्चसा । रा$_2$ फ-०नान्तकते० ॥ २. ल$_1$ ब रा$_2$ फ-०पातितं । ३. ल$_1$-ततो नेदुर्महास्वनाः । ल$_2$ब अ प्र फ म-तेऽतिनेदुर्महास्वनाः । रा$_2$-ते विनेदुर्महास्वराः ॥ ४. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-च । ५. ल$_1$ ल$_2$ ब अ प्र फ-योधिनः । ६. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-नास्ति । ७. रा$_1$-उपतस्थिरे ॥ ८. रा$_1$-च नरा० । ल$_1$ ल$_2$ब-नरकान्तकं । ९. रा$_1$ रा$_2$-०सपाणिनं । ल$_1$ ल$_2$ ब अ-०स्तं स ॥ १०. रा$_1$-पुत्रं ॥ ११. रा$_1$-जह्येनं । १२. ल$_2$ब अ प्र फ-०न्तं च सैन्यानि । रा$_2$-०यन्निव सैन्यानि । म-०न्तं हि सैन्यानि ॥ १३. रा$_1$-तु पितुर् ।

७०] अनीकान् मेघ-सङ्काशान् मेघाऽनीकाद् इवांऽशु-मान् ॥६७ [८६
स हरिः शैल[1]-सङ्काशो हरीणाम् उत्-तमोऽङ्ग-दः ।[2]
N] रराजाऽङ्गद-नद्धाऽङ्गः स-धातुर् इव पर्वतः ॥६८॥ [८७
निर्-आयुधो महा-तेजाः केवलं नखदंष्ट्र[3]-वान् ।
७१] नराऽन्त[4]कम् उपाऽऽगम्य वालि-सूनुर् उवाच ह ॥६९॥ [८८
७२पू] तिष्ठ किं प्राकृतैर्[5] एभिर् हरिभिस्[6] त्वं करिष्यसि ।[7]
अस्मिन् वज्र-सम-स्पर्शे प्राऽऽसं मे क्षिपं वक्षसि[8] ॥७०॥ [८९
अङ्ग-दस्य वचः श्रुत्वा प्र-चुक्रोध[9] नराऽन्तकः ।
७३] सं-पीड्य दशनैर् ओष्ठौ निः-श्वस्य च पुनः पुनः ॥७१॥ [९०
स प्राऽऽसम् आ[10]-दाय तदाऽङ्ग-दाय
समुज्[11]-ज्वलन्तं सहसा ससर्ज[12] ।
स वालिपुत्रोरसि वज्र-कल्पे
७४] बभूव भग्नः पतितश् च भूमौ ॥७२॥ [९२
तं प्राऽऽसम् आ-लोक्य तदा च भग्नं[13]
सुपर्णकृत्तोरगभोग-कल्पम् ।
तलं[14] समुद्-यम्य स वालि-पुत्रस्
७५] तुरं-गमं तस्य जघान मूर्ध्नि[15] ॥७३॥ [९३
स तस्य वाजी नि-पपात भूमौ
तल-प्रहारेण विशीर्ण-शीर्षः ।

---

१. ल१ ल२ ब अ प्र रा२ फ-शैलसंघातसं० । २. म-नास्ति ॥ ३. ल१ ल२ ब अ-०दंतवान् । ४. ल२ ब-नरकान्तकं ॥ ५. रा१-वानरैर् । ६. रा१-प्राकृतैस् । ७. अतः परमधिकः पाठः—रा१-युध्यस्वाद्य मया सार्धं दर्पं ते विनयाम्यहं । ८. ल१ल२ब अ प्र फ-क्षेप्तुमर्हसि ॥ ९. रा१-जातक्रोधो ॥ १०. ल१ ल२ ब अ प्र म-आविध्य । ११. रा२ फ-समुज्वलन्तं । १२. रा२ फ-ससर्ज वेगेन च वानराय ॥ १३. रा१ ल१ल२ब अ प्र-तदावभग्नं । रा२-तदा प्रभग्नं । १४. ल१ ल२ ब अ प्र रा२ फ म-मुष्टिं । १५. ल१ ल२ ब अ प्र-भूमौ ॥

निर्भग्न[1]-तालुः स्फुटिता[2]ऽक्षितारो
७६] निर्यात[3]-जिह्वोऽचल-सन्निकाशः ॥७४॥ [९४
नराऽन्तकः क्रोध-वशं जगाम
हतं तुरं-गं पतितं सम्-ईक्ष्य ।
स मुष्टिम् उद्-यम्य महाऽनुभावो
७७] जघान शीर्षे युधि वालि-पुत्रम् ॥७५॥ [९५
तदाऽङ्ग[4]-दो मुष्टि-निपात-भग्नात्
सुस्राव तीव्रं रुधिरं च[5] शीर्षात् ।
मुहुः प्र-जज्वाल मुमोह चाऽपि
७८] सं-ज्ञां समा-साद्य[6] च वि-स्मितोऽभूत् ७६॥ [९६
अथाऽङ्ग-दो वज्र-सम-प्रवेगं[7]
सं-वर्त्य[8] मुष्टिं गिरि-वज्र-कल्पम् ।
नि-पातयामास तदा[9] महाऽऽत्मा
७९] नराऽन्तकस्योरसि वालि-पुत्रः ॥७७॥ [९७
स मुष्टि-निष्पेष-विभिन्न-वक्षा
रक्तं वमच् छोणित-दिग्ध-गात्रः ।
नराऽन्तको भूमि-तले पपात
८०] यथाऽचलो वज्र-निपात-भग्नः[10] ॥७८॥ [९८
अथाऽन्तरिक्षे त्रिदशोत्तमानां[11]
वनौकसां चाऽपि महा-निनादः ।
बभूव तस्मिन् नि-हतेऽति-वीर्ये

---

१. रा१-विभिन्नतालुः । २. रा१ ल१ ल२ ब म-०ताक्षतारो । रा२ फ-स्फुरिताक्षि० । ३. ल१ ल२ ब अ प्र-निर्घातजि० । रा२-निरस्तजि० ॥ ४. ल१ ल२ ब अ प्र रा२ फ म-अथांगदो । ५. रा१-प्रमूर्ध्नः । ल१ ल२ ब अ प्र-स्वशी० । ६. रा१-समालभ्य ॥ ७. ल१ ल२ ब अ-०समानवेगं । ८ रा२ फ-संबध्य ॥ ९. रा२ फ-तथा । १०. रा१-०तभिन्नः ॥ ११. रा१-त्रिदिवेश्वराणां ।

८१] नराऽन्तके वालि-सुतेन सं-ख्ये[1] ॥७९॥ [९९

अथाऽङ्ग-दो राम-मनः-प्रहर्षणं[2]

सु-दुष्करं तत् कृतवान् हि कर्म ।

वि-सिष्मिये नाऽति[3] च[3] भीम-विक्रमः

८२] पुनश् च युद्धाय मनो दधे तदा ॥८०॥ [१००

इत्यार्षे रामायणे युद्धे[4]-काण्डे नराऽन्तक-वधो नामैको-
नपञ्चाशः सर्गः ॥ ४९ ॥

---

[वं-५०]= **[ पञ्चाशः सर्गः ]** =[दा-७०]

नराऽन्तकं[5] हतं दृष्ट्वा चुक्रुधुर्[6] नैर्ऋतर्षभाः ।

१] देवाऽन्तकस् त्रि-मूर्धा च पौलस्त्यश् च महोदरः ॥१॥ [१

आ-रूढो मेरु-सङ्काशं वारणेन्द्रं महोदरः ।

२] वालि-पुत्रं महा-वीर्यम् अभि-दुद्राव वीर्य-वान्[7] ॥२॥ [२

भ्रातृ-व्यसन-सन्तप्तस् तथा[8] देवाऽन्तको बली ।

३] आ-दाय परि-घं घोरम् अङ्ग-दं सम्प्र[9]-दुद्रुवे ॥३॥ [३

रथम् आदित्य-सङ्काशं युक्तं परम-वाजिभिः ।

४] आ-स्थाय त्रि-शिराश् चाऽपि वालि-पुत्रम् उपाऽद्रवत् ॥४॥ [४

स त्रिभिर् मेघ[10]-सङ्काशैर् नैर्ऋतैस्[11] तैर्[11] अभि-द्रुतः[12] ।

---

१. म-वीरे ॥ २. रा$_1$-०मनः प्रहर्षयन् । ३. रा$_1$-चाति स ॥ ४. रा$_1$ प्र-लंकाकांडे । म-युद्धपर्वणि ॥ ५. ल$_1$ ल$_2$ ब अ प्र-०न्तकवधं श्रुत्वा । ६. रा$_1$-शुशुचुर् ॥ ७. म-नास्ति ॥ ८. रा$_1$-तदा । ९. ल$_1$ ल$_2$ ब अ प्र फ-स प्र० ॥ १०. रा$_1$-देवसं० । ११. रा$_1$-नैर्ऋतेन्द्रैर् । १२. अतः परमधिकः पाठः—ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-हर्षाद् द्विगुणितोत्साहश्चकार मतिमान्बलं ।

५] महा-विटपम् आ-साद्य शालम् उत्-पाट्य[1] वीर्य-वान्॥५॥[2] [५
देवाऽन्तकाय तं वीरश् चिक्षेप बल-वद् बली ।
६] महा-वृक्षं[3] महा-शैले शक्रो दीप्तम् इवाऽशनिम् ॥६॥ [६
त्रि-शिरास् तं तु चिच्छेद शरैर् आशीविषोपमैः ।
७] वृक्षं नि-कृत्तम् आ-लक्ष्य[4] समुत्-पाट्य[5] ततोऽङ्ग-दः[6] ॥७॥ [७
स ववर्ष ततो वृक्षान्[7] छिलाश् च कपि-कुञ्जरः ।
८] त्रि-शिरास्[8] तान् प्र-चिच्छेद सं-क्रुद्धो नि-शितैः शरैः॥८॥ [८
परिघाऽग्रेण तान् वृक्षान् छिलाश् च नि-जघान सः[9] ।
९] त्रि-शिरास् त्व् अङ्ग-दं वीरम् अभि-दुद्राव सायकैः ॥९॥ [९
गजेन समभि-द्रुत्य[10] वालि-पुत्रं महोदरः ।
१०] आ-जघानोरसि व्य्-ऊढे तोमरैर् वज्र-सन्निभैः ॥१०॥[11] [१०
देवाऽन्तकश् च सं-क्रुद्धः परि-घेण ततोऽ[12]ङ्ग-दम् ।
११] उप-गम्याऽभि-हत्वा च मुहुर् मुहुर् अपाऽक्रमत् ॥११॥ [११
[13]स त्रिभिर् नैरृत-श्रेष्ठैर् युगपत् समभि-द्रुतः ।
१२] [14]न विव्यथे महा-तेजा वालि-पुत्रः प्रताप-वान् ॥१२॥ [१२
तलेन भृशम् उत्-पत्य जघान गजम् अङ्ग-दः[15] । [१३उ
१३] नि-पेततुम् ततो नेत्रे ननादाऽथ स वारणः ॥१३॥ [१४पू
विषाणं चाऽस्य निष्-कृष्य वालि-पुत्रो महा-बलः ।
१४] देवाऽन्तकम् अभि-द्रुत्य स जघान ततो(?थो)रसि॥१४॥ [१५

---

१. ल$_2$ ब अ प्र-उद्यम्य । २. म-नास्ति ॥ ३. रा$_1$-०वृक्षे ॥ ४. ल$_1$ ल$_2$ ब अ-आलोक्य । ५. ल$_1$ ल$_2$ ब अ प्र-उत्पत्य च । ६. म-नास्ति ॥ ७. रा$_1$-शैलान् । ८. रा$_1$-तान्प्रचिच्छेद संक्रुद्धस्त्रिशिरा ॥ ९. रा$_1$-शिलाश्च परिघाग्रेण बभंज विबुधांतकः ॥ १०. ल$_1$ ल$_2$ अ प्र फ-०भिप्लुत्य । ११. अतः परमधिकः पाठः—रा$_2$-परिघाग्रेण निष्पेष्य शिलाश् च रजनीचरः ॥ १२. रा$_1$ म-तदांग० ॥ १३. रा$_1$-निशितैस्तोमरैश्चैव । १४. रा$_1$-तैस्तु विद्धो ॥ १५. रा$_1$-अत आरभ्य १५-शश्लोकपूर्वार्धं यावन्नास्ति ॥

स विकलित-सर्वाऽङ्गो वातोद्धूत इव द्रुमः ।
१५] लाक्षा-रस-सवर्णं च सुस्राव रुधिरं मुखात् ॥१५॥ [१६
अथाऽऽश्वस्य महा-तेजाः कृच्छ्राद् देवाऽन्तको बली ।
१६] आ-विध्य परि-घं वेगाद् आ-जघान पुनर् अङ्ग-दम् १६॥[१७
परिघाऽभिहतश् चाऽपि वानरेन्द्राऽऽत्मजस् तदा ।
१७] जानुभ्यां पतितो भूमौ पुनर् अभ्युत्-पपात ह ॥१७॥ [१८
तम् उत्-पतन्तं त्रि-शिराः शरैर् आशीविषोपमैः ।
१८] रोषाद् घरि-पतेः पुत्रं ललाटेऽभि-जघान ह ॥१८॥ [१९
ततोऽङ्ग-दं परि-क्षिप्तं त्रिभिर् नैर्ऋत-पुङ्गवैः ।
१९] हनू-मान् अभिवि-ज्ञाय नीलश् चाऽपि प्र-तस्थतुः॥१९॥ [२०
ततश् चिक्षेप शैलाऽग्रं नीलस् त्रि-शिरसे तदा ।
२०] तद् रावण-सुतः शूरो निर्-बिभेद शितैः शरैः ॥२०॥ [२१
तद्-बाण-शत-निर्भिन्नं विदारित-शिला-घनम् ।
२१] स-विस्फुलिङ्गं स-ज्वालं नि-पपात गिरेः शिरः ॥२१॥ [२२
तत् तु चूर्णितम् आ-लोक्य हर्षाद् देवाऽन्तकस् तदा ।
२२] परि-घेणाऽभि-दुद्राव मारुताऽऽत्मजम् आ-हवे ॥२२॥ [२३
तम् आ-पतन्तम् उत्-पत्य हनु-मान् कपि-कुञ्जरः ।
२३] आ-जघान तदा मूर्ध्नि वज्र-वेगेन मुष्टिना ॥२३॥ [२४

---

१. रा₁-संचचाल च सुस्राव शोणित च मुखाद् बहु ॥ २. रा₁-क्रोधान्तको । ३. ल₁ ल₂ ब अ प्र रा₂ फ-तदा । म-ततो ॥ ४. रा₁-चोत्प० । ५. अतः परमधिकः पाठः—रा₁-त्रिभिर्विव्याध निशितैर्वालिपुत्रं महोरसि । पुनः स निशितैस्तीव्रैः कंकबर्हिणवर्जितैः ॥ ६. रा₁-०मानथ वि० । ल₁ ल₂ ब प्र-हनूमान्नाम वि० । म-०मानपि वि० ॥ ७. रा₁-०सुतो भीमो ॥ ८. रा₁-०शिलातलं ॥ ९. रा₁ म हनू० । १०. रा₁-वज्रकल्पेन ॥

स मुष्टि-निष्पिष्ट-विदीर्ण[1]-मूर्धा
विशीर्ण-दन्ताऽक्षिबिलं वि-जिह्वः ।
देवाऽन्तको राक्षस-राज-सूनुर्[2]
२४] गताऽसुर् उर्व्यां सहसा पपात ॥२४॥ [२६

तस्मिन् हते राक्षस-राज-सूनौ
महा-बले सं-यति देव-शत्रौ ।
महोदरः[3] क्रोध-वशाच् छरौघैर्[3]
२५] ववर्ष जाम्बूनद-चित्र-पुङ्खैः ॥२५॥ [२७

स[4] तैः शरौघैर्[4] अभि-वर्ष्यमाणो
विभिन्न-गात्रः कपि-सैन्य-पालः ।
विष्टब्ध[5]-गात्रोऽपि बभूव नीलो
२६] वि-ष्टम्भितस्[6] तेन[6] महा-बलेन ॥२६॥ [३०

ततस् तु नीलः प्रति-लभ्य सं-ज्ञां
स शैलम् उत्-पाट्य स-वृक्षखण्डम् ।
सु[7]-दूरम् उत्-पत्य खम् उग्र-वेगो[8]
२७] महोदरं तेन जघान मूर्ध्नि ॥२७॥ [३१

स तेन शैलेन समा-हतस् तदा
रक्षोऽधिपो भूमि-तले पपात ।
महोदरो जीवितम् उत्-ससर्ज
२८] यथा गजः[9] सिंहबलाऽभिभूतः ॥२८॥ [३२

इत्यार्षे रामायणे युद्ध-काण्डे[10] देवाऽन्तक-महोदर-वधो नाम पञ्चाशः सर्गः ॥५०॥

---

१. ल$_1$ल$_2$ब अ प्र रा$_2$फ म-०विकीर्ण० । २. रा$_1$-०जपुत्रो ॥ ३. ल$_1$ल$_2$ ब अ प्र रा$_2$फ म-नीलं त्रिमूर्धा कुपितः शरौघैर् ॥ ४. ल$_1$ ल$_2$ब अ प्र रा$_2$फ म-शितैः शरैस्तैर् । ५. ल$_1$ल$_2$ब अ प्र म-विस्रष्टगा० । ६. रा$_1$-०म्भितेनाशु ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-स दू० । ८. रा$_1$-तमुग्रवेगं ॥ ९. ल$_1$ ल$_2$ ब अ-द्विपः ॥ १०. रा$_1$ प्र-लंकाकाण्डे ॥

[1]पितृव्यं नि-हतं दृष्ट्वा त्रि-शिराः क्रोध-मूर्च्छितः ।
२९] हनु-मन्तं सु-स[2]ङ्क्रुद्धो विव्याध[3] नि-शितैः शरैः ॥१॥ [३३

स वायु-पुत्रः कुपितश् चिक्षेप शिखरं गिरेः ।
३०] त्रि-शिरास् तच् छरैस् तीक्ष्णैर् बिभेद बहु-धा बली ॥२॥[4] [३४
तच् छिन्नं शिखरं दृष्ट्वा द्रुम-वर्षं महा-बलः ।
३१] वि-ससर्ज महा-वीरो रावणस्य सुतं प्रति ॥३॥ [३५
ताम् आ-पतन्तीं सहसा द्रुम-वृष्टिं प्रताप-वान् ।
३२] त्रि-शिरा नि-शितैर् बाणैश् चिच्छेद च ननाद च ॥४॥[4] [३६

ततो हनू-मान् उत्-पत्य हयांस् त्रि-शिरसस् त[5]दा ।
३३] वि-ददार नखैः क्रुद्धो[6] गजेन्द्रं मृग-राड् इव ॥५॥ [३७
अथ शक्तिं समा[7]-दाय काल-रात्रिम् इवाऽन्तकः ।
३४] हनू-मन्तं[8] प्र-चिक्षेप त्रि-शिरा रावणाऽऽत्मजः ॥६॥ [३८
दिवि क्षिप्तां महोल्काऽऽभां शक्तिं तां तु म[9]हा-प्रभाम् ।
३५] बभञ्ज हनु-मांस् तस्य हर्षाच् च वि-ननाद ह ॥७॥ [३९
[तां दृष्ट्वोरग-सङ्काशां शक्तिं भग्नां हनू-मता ।
३६] वि-नेदुर् वानराः सर्वे प्र-हृष्टा जल-दा इव ॥८॥][10] [४०

---

१. इतः पूर्वमधिकः पाठः—म-हनूमंतं सुसंक्रुद्धो विव्याध निशितैः शरैः । तलेन हनुमानुत्पत्य हयान् चिक्षेप मूर्धनि ॥ २. रा१-सुसंरब्धो । ३. म-अत आरभ्य पञ्चमश्लोकस्य तृतीयपादं यावन्नास्ति ॥ ४. ल१ ल२ ब अ प्र रा२ फ-नास्ति ॥ ५. रा२-तथा । ६. रा२ फ-तीक्ष्णैर् ॥ ७. ल१ ल२ ब अ-उपादाय । ८. रा१-हनूमति विचि० । ल१ ल२ ब अ म-हनुमते प्र० ॥ ९. रा१-सुमहा० ॥ १०. ल१ ल२ ब अ प्र रा२ फ म-नास्ति ॥

ततः खड्गं समुद्-यम्य त्रि-शिरा राक्षसोत्तमः ।
३७] नि-चखान तदा[1] शूरो वानरेन्द्रस्य वक्षसि ॥९॥ [४१
खड्ग-प्रहाराऽभिहतो हनू[2]-मान् प्लवगोत्तमः ।
३८] आ-जघान त्रि-शिरसं तलेनोरसि वीर्य-वान् ॥१०॥ [४२
स तथाऽभि-हतस् तेन खड्ग-हस्तस् तदा भुवि[3] ।
३९] नि-पपात महा-तेजास् त्रि[4]-शिरा राक्षसोत्तमः ॥११॥ [४३
पततस् तस्य खड्गं तु समा-क्षिप्य महा-कपिः ।
४०] ननाद गिरि-सङ्काशस् त्रासयन् सर्व[5]-राक्षसान् ॥१२॥ [४४
अ-मृष्यमाणस् तं घोषं[6] त्रि-शिराः क्षिप्रम् उत्थि(द्-स्थि)तः ।
४१] उत्-पत्य च हनू-मन्तं आ-जघान स मुष्टिना ॥१३॥ [४५
तेन मुष्टि-प्रहारेण स चचाल महा-कपिः ।
४२] कुपितश् चाऽपि जग्राह किरीटे राक्षसर्षभम् ॥१४॥[7] [४६
स तेन खड्गेन महा-शिरांसि
कपिः समस्तानि स-कुण्डलानि
क्रुद्धः प्र-चिच्छेद तदा हनू-मांस्
४३] त्वष्ट्रात्मजस्येव शिरांसि शक्रः ॥१५॥ [४७
तान्य् आयताऽक्षीण्य् अग-सन्निभानि
प्रदीप्त-वैश्वानर-भास्वराणि[8]
पेतुः[9] शिरांसीऽन्द्र- रिपोर् धरण्यां
४४] ज्योतींषि मुक्तानि यथाऽर्क-मार्गात् ॥१६॥ [४८

---

१. रा$_1$-ततः ॥ २. ल$_1$ ल$_2$ व प्र रा$_2$-हनु० ॥ ३. रा$_1$म-शस्त्रहस्तो बलायुधि । ४. ल$_1$ ल$_2$ व श्र प्र रा$_2$ फ म-विसंज्ञस्त्रिशिरास्तदा ॥ ५. ल$_1$ ल$_2$ व प्र-०यन्निव रा० । म-त्रासयामास रा० ॥ ६. ल$_1$ ल$_2$ व श्र प्र रा$_2$ फ म-घोरं ॥ ७. ल$_1$ ल$_2$व श्र प्र फ म-नास्ति ॥ ८. रा$_1$-०भासुराणि । ९. रा$_1$-बभुः ॥

तस्मिन् हते देव-रिपौ त्रि-शीर्षे
हनू-मता शक्र-पराऽऽक्रमेण ।
नेदुः प्लवं-गाः प्र-चचाल भूमी
४५] रक्षांसि सर्वाणि वि-दुद्रुवुश् च ॥१७॥[1] [४९
हतं त्रि-शिरसं दृष्ट्वा तथैव च महोदरम् ।
हतौ च प्रेक्ष्य तेजस्वी देवाऽन्तक-नराऽन्तकौ । [५०
४६] मुहूर्तं मोहम् आ-स्थाय[2] नैवाऽचेष्टत राक्षसः ॥[3]१८॥ [N
N] ततश् चिरं स तु ध्यात्वा महाऽऽत्मा भीम-विक्रमः । [N
चुकोप सु-महातेजा महा-पार्श्वो महा-बलः ।
४७] जग्राहाऽर्चिष्-मतीं चाऽपि गदां सर्वाऽऽयसीं तदा ।१९ [५१
हेम-पट्ट-शतैर्[4] नद्धां मांस-शोणित-लेपनाम् ।
४८] वि[5]-रोचमानां वपुषा शत्रु-शोणित-तर्पिताम् ॥२०॥ [५२
तेजसा सम्प्रदीप्ताऽग्रां रक्त-माल्य-विभूषिताम् ।
४९] ऐरावतकराऽऽकारां सर्व-भूत-भयाऽऽवहाम् ॥[6]२१॥ [५३
गदाम् आ-दाय सं-क्रुद्धो महा-पार्श्वो महा-यशाः[7] ।
५०] हरीन् समभि-दुद्राव युगाऽन्ताऽग्निर् इव प्र-जाः ॥२२॥ [५४
ऋषभस् तं समुत्-पत्य वानरो वरुणाऽऽत्मजः ।
५१] महा-पार्श्वं समा-साद्य तस्थौ तस्याऽग्र-तो बली[8] ॥२३॥ [५५
तं पुरस्-तात् स्थितं दृष्ट्वा वानरं पर्वतोपमम् ।
५२] आ-जघानोरसि क्रुद्धो[9] गदया वज्र-कल्पया ॥२४॥ [५६

---

१. रा$_1$-अतः परं सर्गसमाप्तिः—इत्यार्षे रामायणे लंकाकांडे त्रिशिरोवधो नाम सर्गः ॥ २. ल$_1$ल$_2$ब अ प्र रा$_2$ फ-आसाद्य । ३. म-मुहूर्तं शोकमाविष्टः शांतिं चैव न लब्धवान् ॥ ४. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-०शताबद्धां । ५. रा$_1$-०तचर्चितां ॥ ६. ल$_1$ ल$_2$ ब अ म-नास्ति ॥ ७. म-महाबलः ॥ ८. रा$_1$ म-हरिः ॥ ९. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-क्रोधाद् ॥

स तथाऽ[1]भि-हतस् तेन गदया वानरर्षभः ।
५३] भिन्न-वक्षाः समा-धूतः सुस्राव रुधिरं बहु[2] ॥२५॥ [५७
स सम्प्रा[3]ऽऽप्य चिरात् सं-ज्ञाम् ऋषभो वानरर्षभः ।
५४] क्रुद्धो विस्फुरमाणौष्ठो महा-पार्श्वम् अवैक्षत[4] ॥२६॥ [५८
अभि-दुद्राव वेगेन राक्षसेन्द्रम् अ-मर्षणः । [६४
N] आऽक्षिपत् स ततो वीरस् तामेव महतीं गदाम् ॥२७॥[5] [N
गृहीत्वा तां गदां वीरो व्या[6]-विध्य च पुनः पुनः ।
५५] दुर्-आत्मानं[7] महा-पार्श्वं जघान रण-मूर्धनि ॥२८॥ [६५
स तया[8] गदया भिन्नो निर्यात[9]-दशनेक्षणः ।
५६] नि-पपात महा-पार्श्वः शम्बरो[10] वेन्द्र-सूदितः ॥२९॥ [६६
तस्मिन् हते भ्रातरि रावणस्य
तन्नैर्ऋतानां[11] बलम् अर्णवाऽऽभम् ।
त्यक्त्वाऽऽ[12]युधं केवलजीविताऽर्थि[13]
५७] दुद्राव भीतं[14] निहत-प्रधानम् ॥३०॥ [७८

इत्यार्षे रामायणे युद्ध[15]-काण्डे त्रिशिरो-महापार्श्व-वधो नामैकपञ्चाशः सर्गः ॥ ५१ ॥

---

१. रा$_1$ रा$_2$-तयाभि० । २. ल$_1$ ल$_2$ ब अ-नास्ति ॥ ३. रा$_1$-समवाप्य । ४. रा$_1$-निरैक्षत ॥ ५. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-नास्ति ॥ ६. ल$_1$ ल$_2$ ब अ प्र फ म-विव्याध । ७. ल$_1$ रा$_2$-महात्मानं महा० । ल$_2$ ब अ फ म-महापार्श्वं महात्मानं ॥ ८. रा$_2$-तदा । ९. ल$_1$ ल$_2$ ब अ प्र फ-निर्घात० । १०. रा$_1$-वज्राहत इवाचलः ।. ११. रा$_1$-तद्राक्षसानां । १२. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-मुक्तायु० । १३. ल$_1$ल$_2$ब अ प्र फ म-०वितार्थं । १४. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-भिन्नार्णवसन्निकाशं ॥ १५. रा$_1$ प्र फ म-लंकाकांडे ॥

## [ वं-५१ ]= [ द्विपञ्चाशः सर्गः ] =[ दा-७१]

स्व-बलं व्यथितं[1] दृष्ट्वा तस्मिन् सङ्ग्राम-मूर्धनि ।
१] भ्रातॄंश् च[2] नि-हतान्[2] सं-ख्ये शक्र-तुल्य-पराऽऽक्रमान् १ [१
पितृव्यौ नि-हतौ चैव समरेष्व् अ-पलायिनौ ।
२] महोदर-महापार्श्वौ भ्रातरौ रावणस्य[3] तौ ॥२॥ [२
चुकोपाऽथ महा-तेजा ब्रह्म-दत्त-वरो भुवि[4] ।
३] अति-कायो महा-वीर्यो देव-दानव-दर्प-हा ॥३॥ [३
स भास्कर-सहस्रस्य सं-घाते इव भास्वरः[5] ।
४] [रथम् आ-स्थाय शक्राऽरिर् दुद्राव हरि-यूथपान् ।][6] [४
N] सूतं सं[7]-चोदयामास वाक्यं चेदम् उवाच ह ॥४॥ [N
नि-हतानाम् अमात्यानां दग्धस्य नगरस्य च ।
N] सम्प्र-मार्क्ष्येऽहम्[8] अद्याऽऽशु हत्वा तौ राम-लक्ष्मणौ ॥५॥ [N
रघु-वृक्षं हनिष्यामि मैथिली-फल-पुष्प-द्रुमम्[9] ।[10]
N] प्र-शाखा यस्य सु-ग्रीवः सर्वे च हरि-यूथपाः ॥६॥ [N
कर्मणो[11]ऽस्य हि तौ[11] मूलं भ्रातरौ राम-लक्ष्मणौ ।
N] मूले हते हतं सर्वं तौ हनिष्यामि सं-युगे ॥७॥ [N
स दिशो दश घोषेण रथेनाऽति-रथो[12] भृशम्[13] ।
N] नादयंश्[14] च धनुस् तूर्णं राघवं प्रति जग्मिवान् ॥८॥ [N

---

१. रा१-निहतं । २. ल१ ल२ ब अ प्र-चाभिह० ॥ ३. ल१ ल२ ब प्र रा२ फ म-राक्षसर्षभौ ॥ ४. रा१-विभुः ॥ ५. रा१-संघातमिव राक्षसः । ६. ल१ ल२ ब अ प्र रा२फ म-नास्ति । ७. रा२-स नोद० ॥ ८. रा१-संप्रमार्क्ष्यामि च भयं हत्वोभौ ॥ ९. रा२ फ-०लीपुष्पपादपं । १०. ल१ल२ब अ प्र म-नास्ति ॥ ११. रा१-०णोऽपि हि यन् ॥ १२. रा१-०रथी । १३. म-ब्ली । १४. ल१ ल२ ब अ-०यन् समरे सर्वं । प्र रा२ फ-०यन् परमं सर्वं । म-०यन् परमं क्रुद्धो ॥

पूरिता तेन शब्देन स-नदी-गिरि-कन्दरा ।
N ] सं-चचाल मही सर्वा त्रस्त-सिंह-मृग-द्विजा ॥९॥ [N
स वि-स्फार्य महच्[1] चापं[1] किरीटी मृष्ट-कुण्डलः ।
५] नाम वि-श्रावयामास[2] ननाद च महा-स्वनम् ॥१०॥ [५
तेन सिंह-प्रणादेन[3] नाम-विश्रावणेन[4] च ।
६] ज्या-शब्देन च भीमेन त्रासयामास वानरान् ॥११॥ [६
तस्य ते[5] रूपम् आ-लोक्य[5] यथा विष्णोस् त्रि-विक्रमे । [८पू
७] भयाऽऽर्ता वानरास् तत्र[6] व्य्-अद्रवन्त दिशो[7] दश[7]ः ॥१२॥ [७उ
अति-कायं समा-साद्य सर्वे[8] ते[8] मूढ-चेतसः ।
८] शरण्यं शरणं जग्मुर् लक्ष्मणाऽग्रजम् आ-हवे ॥१३॥ [९
ततोऽति-कायं काकुत्स्थो रथ-स्थं पर्वतोपमम् ।
९] ददर्श धन्विनं[9] दूराद् गर्जन्तं काल-मेघ-वत् ॥१४॥ [१०
तं[10] तु[10] दृष्ट्वा महा[11]-घोरं राघवोऽथ[12] वि-सिष्मिये[12] ।
१०] वानरान् सान्त्वयित्वा[13] च[13] वि-भीषणम् उवाच ह ॥१५॥ [११
कोऽयं पर्वत-सङ्काशो धनुष्-मान्[14] हरि-लोचनः ।
११] युक्ते हरि[15]-सहस्रेण वि-शाले स्यन्दने स्थितः ॥१६॥ [१२
शरैः शूलैः शितैः खड्गैर् मुद्गरैश् च परश्वधैः ।
१२] अर्चिष्[16]-मद्भिर् वृतो भाति भूतैर् इव महेश्वरः ॥१७॥ [१३
काल-जिह्वा-प्रकाशाभिर् य एषोऽति[17]-विराजते ।

---

१. ल$_1$ ल$_2$ ब अ प्र-महाचापं । २. ल$_1$ ल$_2$ ब अ-विस्फारया० ॥ ३. ल$_1$ ल$_2$ ब-सिंहविनादेन । ४. रा$_1$-संश्रव० ॥ ५. रा$_1$-रूपं समालोक्य । ६. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-त्रस्ता । ७. रा$_1$ म-परस्परं ॥ ८. रा$_1$-सर्वतो ॥ ९. रा$_1$-ध्वजिनं ॥ १०. रा$_1$-स तं । ११. रा$_1$-दुरात्मानं । १२. रा$_1$-०वो विस्मितोऽभवत् । १३. रा$_1$-०यित्वैवं ॥ १४. रा$_1$-वपुष्मान् । १५. रा$_2$-खरस० ॥ १६. प्र रा$_2$ फ-सार्चिष्मद्भिर् ॥ १७. ल$_1$ ल$_2$ ब अ म-एषोऽभिवि० । प्र-एषोऽभिविगर्जते । रा$_2$ फ-एषोऽत्र वि० ।

N] आ-वृतो रथ-शक्तीभिर् वि-द्युद्भिर् इव तोय-दः ॥१८॥ [१४
धनूंषि चाऽस्य स-ज्यानि[1] हेम-पृष्ठानि सर्व-शः[2] ।
१३] शोभयन्ति रथ-श्रेष्ठं शक्र-चाप[3] इवाऽम्बु-दम् ॥१९॥[4] [१५
कोऽयं राक्षस-शार्दूलो रण-भूमिं वि-राजयन् ।
१४] अभ्य्-एति रथिनां श्रेष्ठो रथेनाऽऽदित्य-वर्चसा ॥२०॥ [१६
ध्वज-श्रृङ्ग-प्रतिष्ठेन राहुणाऽभिवि-राजते[4] ।
१५] सूर्य-रश्मि-मुखैर्[5] बाणैर् दिशो दश वि-राजयन् ॥२१॥ [१७
त्रि-णतं मेघ-निर्ह्रादं हेम-पृष्ठम् अलं-कृतम् ।
N] इन्द्रस्येव धनुश् चाऽस्य कार्मुकं भाति बिभ्रतः ॥२२॥[6] [१८
स-ध्वजः स-पताकश् च साऽनुकर्षो महा-रथः[7] ।
१७] चापाऽसिभिः समा-युक्तो मेघ-स्तनित-निस्वनः ॥२३॥[8] [१९
विंशतिर् दश च द्वे च तूणा रथ-वरे स्थिताः ।
१८] कार्मुकाणि च भीमानि गदाश् चोग्र-प्रदर्शनाः ॥२४॥[8] [२०
द्वौ च खड्गौ रथ-गतौ पार्श्व-स्थौ पार्श्व-शोभिनौ[9] ।
१९] चतुष्-किष्कू त्सरू दिव्यौ[10] दश-हस्तौ प्रमाण-तः ॥२५॥ [२१
रक्तमाल्याऽम्बर-धरो महापर्वत-सन्निभः ।
२०] कालः काल-महावक्त्रो[11] मेघ-वक्त्रम् इवाऽम्बरम् ॥२६॥ [२२
काञ्चनाऽङ्गद-नद्धाभ्यां भुजाभ्याम् एष[12] शोभते ।
२१] श्रृङ्गाभ्याम् इवं दीप्ताभ्यां[13] हिम-वान् पर्वतो यथा ॥२७॥[14] [२३

---

१. रा$_{१}$-सज्जानि । २. रा$_{१}$ रा$_{२}$ फ-सर्वतः । ३. ल$_{१}$ ल$_{२}$ ब अ प्र रा$_{२}$ फ-०चापम् । ४. म-नास्ति ॥ ५. म-०रश्मिप्रभैर् ॥ ६. रा$_{१}$-नास्ति ॥ ७. रा$_{२}$ फ-महाबलः । ८. ल$_{१}$ ल$_{२}$ ब अ प्र-नास्ति ॥ ९. रा$_{२}$-०शोभितौ । १०. म-चतुर्हस्तौ च दिव्यौ च ॥ ११. ल$_{१}$ ल$_{२}$ ब अ प्र-महावक्त्रो । रा$_{२}$-महारौद्र ॥ १२. रा$_{१}$-एव शोभितः । १३. ल$_{१}$ ल$_{२}$ ब-अतिदी० । १४. अ-नास्ति ॥

कुण्डलाभ्यां च यस्यैतद् भाति वक्त्रं शुभेक्षणम्[1] ।[2]
२२] पुनर्वस्व्-अन्तरे यद्-वद् भाति पूर्णो निशा-करः ॥२८॥ [२४
आ-चक्ष्व मे महा-बाहो कोऽयं राक्षस-पुङ्गवः ।
२३] यं दृष्ट्वा वानराः सर्वे भयाऽऽर्ता वि-द्रुता दिशः ॥२९॥ [२५
स पृष्टो राज-पुत्रेण रामेणाऽमित-तेजसा ।
२४] आ-चचक्षे महा-तेजा राघवाय[3] वि-भीषणः[3] ॥३०॥ [२६
दश[4]-ग्रीवो महा-तेजा[4] राजा वैश्रवणाऽनुजः ।
२५] भीम-कर्मा महोत्साहो रावणो राक्षसाऽधिपः ॥३१॥ [२७
तस्यैष वीर्य-वान् पुत्रो रावण-प्रतिमो रणे ।
२६] वृद्ध-सेवी श्रुत-धरः सर्वाऽस्त्र-विदुषां वरः ॥३२॥ [२८
अश्व-पृष्ठे रथे नागे खड्गे धनुषि कल्पते ।
२७] भेदे सान्त्वे प्र-दाने च नये मन्त्रे च सं-मतः ॥३३॥ [२९
अस्य[5] प्र-भावः सु-महान् कथ्यते देव-दानवैः । [N
२८] तनयं विद्धि मालिन्यास् त्व् अतिकायेति यं विदुः ३४॥ [३०उ
अनेनाऽऽराधितो ब्रह्मा तपसा भाविताऽऽत्मना ।
२९] अस्त्राणि चाऽस्य दत्तानि रिपूणां च परा-जये[6] ॥३५॥ [३१
सुराऽसुरैर् अवध्य-त्वं दत्तम् अस्य स्वयं-भुवा ।
३०] एतच् च कवचं दिव्यं रथश् चैवैष भास्वरः ॥३६॥ [३२
एतेन शत-शो देवा दानवाश् च परा-जिताः ।
३१] रक्षितानि च रक्षांसि यक्षाश् च युधि सूदिताः[8] ॥३७॥ [३३
वज्रं वि-ष्टम्भितं बाणै रणे चेन्द्रस्य धी-मतः ।
३२] पाशः सलिल-राजस्य युद्धे प्रति-हतः पुरा ॥३८॥ [३४

---

१. ल$_1$, ल$_2$ ब प्र-सुशोभनं । २. अ-नास्ति ॥ ३. प्र-नास्ति ॥
४. ल$_1$ ल$_2$ ब-प्रमाणे ॥ ५. रा$_2$-तस्य ॥ ६. रा$_1$-०जयं ॥ ७. अ-निर्जिताः ।
८. ल$_1$ ल$_2$ ब-नास्ति ॥

एषोऽति-कायो बल-वान् राक्षसानां महा-रथः[1] ।
३३] रावणस्य सुतो धी-मान् देव-दानव-दर्प-हा ॥३९॥ [३५
तद् अस्मिन् क्रियतां यत्नः क्षिप्रं पुरुष-पुङ्गव ।[2]
३४] पुरा वानर-सैन्यानि क्षयं नयति सायकैः ॥४०॥ [३६
ततोऽति-कायो बल-वान् प्र-विश्य हरि-वाहिनीम् ।
३५] वि-स्फारयामास धनुर् ननाद च पुनः पुनः ॥४१॥ [३७
तं भीम-दर्शनं[3] दृष्ट्वा रथ-स्थं[4] रथिनां वरम् ।
३६] अभि-पेतुर् महाऽऽत्मानः प्र-धाना[5] ये वनौकसः ॥४२॥ [३८
द्वि-विदः कु-मुदो मैन्दो नीलः शरभ एव च ।
३७] पाद-पैर् गिरि-शृङ्गैश् च युगपत् समुपाऽद्रवन् ॥४३॥ [३९
तेषां वृक्षांश् च शैलांश् च शरैः कनक-भूषितैः ।
३८] अति-कायोऽति-तेजस्वी चिच्छेदाऽस्त्र[6]-विदां वरः ॥४४॥ [४०
तांश् च[7] सर्वांश् च स[8] हरीन् शरैः सर्वाऽऽयसैर् बली[9] ।
३९] विव्याधाऽभि-मुखान् सं-ख्ये भीम-कर्मा निशा-चरः ४५ [४१
तेऽर्दिता[10] बाण-वर्षेण भिन्न-गात्राः प्लवं-गमाः ।
४०] न शेकुर् अति-कायस्य पुर-तः स्थातुम् आ-हवे ॥४६॥ [४२
तत् सैन्यं[11] हरि-वीराणां[11] त्रासयामास राक्षसः ।
४१] मृग-यूथम् इव क्रुद्धः[12] केसरी बले[12]-दर्पितः ॥४७॥ [४३
स राक्षसेन्द्रो हरि-सैन्य-मध्ये
त्व् अ-युध्यमानं न जघान कं-चित्
उपेत्य[13] रामं च महा-धनुष्मान्

---

१. रा$_2$फ म-महाबलः ॥ २. रा$_1$-ततस्तस्मिन्क्रियायत्तं कुरु राघवपुंगव ॥ ३. ल$_1$ ल$_2$ ब अ-भीमपौरुषं । प्र रा$_2$ फ-भीमपुरुषं । ४. रा$_1$-रथिनं । ५. रा$_1$-०नाश्च ॥ ६. ल$_1$ ल$_2$ब अ प्र-०स्त्रभृतां ॥ ७. रा$_1$-चैव सर्वान्स । ल$_1$ ल$_2$ ब अ-समग्रानपि । म-ववर्ष शरैः । ८. म-सर्वान्हरीन् । ९. रा$_1$-बलैः ॥ १०. प्र-ते भिन्ना ॥ ११. म-सर्वं हरिसैन्यं तु । १२. ल$_1$ ल$_2$ब अ प्र रा$_2$-क्रुद्धो हरियौवनद० ॥ १३. रा$_1$-उत्पत्य ।

४२] स-गर्वितं वाक्यम् इदं बभाषे ॥४८॥ [४४
अयं स्थितोऽहं शर-चाप-पाणिर्
न प्राकृतं कं-चन योधयामि ।
यस्याऽस्ति शक्तिर् व्यवसाय-युक्ता
४३] ददातु मे शीघ्रम् इहाऽद्य युद्धम् ॥४९॥ [४५
तत् तस्य वाक्यं ब्रुवतो नि-शम्य[1]
चुकोप सौमित्रिर् अमित्र-हन्ता ।
अ-मृष्यमाणश् च समुत्-पपात
४४] जग्राह बाणांश् च ततः प्र-हस्य ॥५०॥ [४६
पुरस्ताच् चाऽति-कायस्य वि-चकर्ष महद्-धनुः । [४७पू
४५] पूरयित्वा महा-शैलान् आ-काशं सागरं दिशः ।
N] ज्या-शब्दो लक्ष्मणस्योग्रस्[2] त्रासयन् रजनी-चरान्[3] ॥५१॥ [४८
सौमित्रेर् धनुषो घोषं श्रुत्वा प्रति-भयं तदा ।
४६] विसिष्मिये महा-तेजा राक्षसेन्द्र-सुतो बली ॥५२॥ [४९
अथाऽति-कायः कुपितो दृष्ट्वा लक्ष्मणम् अग्र-तः ।
४७] आ-दाय नि-शितं बाणम् इदं वचनम् अब्रवीत् ॥५३॥ [५०
बालस् त्वम् असि सौमित्रे वि-क्रमेष्व् अ-विचक्षणः ।
४८] गच्छ किं काल-सदृशं मां योधयितुम् इच्छसि[4] ॥५४॥ [५१
न हि मद्-बाहु-सृष्टानां शराणां नत-पर्वणाम् ।
४९] सोढुम् उत्-सहते वेगम् अन्तरिक्षम् अथो मही ॥५५॥[5] [५२
सुख-प्रसुप्तं कालाऽग्निं किं बोधयितुम्[6] इच्छसि[5] ।
५०] न्य्-अस्य चापं नि-वर्तस्व मा प्राणैस् त्वं वि-मोक्ष्यसे ॥५६॥ [५३
अथवा त्वं प्रति-ष्टम्भान् न नि-वर्तयितुम् इच्छसि[7] ।

१. रा$_1$-प्रशम्य ॥ २. ल$_1$ ल$_2$ ब प्र-०णस्याग्रे । फ-०णस्याथ । ३. ल$_1$ ल$_2$ ब श्र प्र-अनुजीविनः ॥ ४. म-अर्हसि ॥ ५. ल$_1$ ल$_2$ ब श्र प्र-नास्ति ॥ ६. रा$_1$-चोदयितुमर्हसि ॥ ७. रा$_1$-नास्ति ।

५१] तिष्ठ प्राणान्[1] परि-त्यज्य गमिष्यसि यम-क्षयम्[2] ॥५७॥ [५४
पश्य मे[3] नि-शितान् बाणान् अरि-दर्प-विनाशनान् ।
५२] ईश्वराऽऽयुध-सङ्काशाम् तप्त-काञ्चन-भूषणान्[4] ॥५८॥ [५५
N] सितपीताऽमलस् तीक्ष्णो मुक्ता-विद्रुम-भूषणः । [N
५३पू] एष ते सूर्य-सङ्काशो बाणः पास्यति शोणितम्[5] ।
N] मृग-राज इव क्रुद्धो नाग-राजस्य शोणितम्[6] ॥५९॥ [५६
यद्य् अपि त्वां वधिष्यामि न मे[7] कीर्तिर् भविष्यति ।
५४] अज्ञात[8]-वीर्यं बालं च ख्यातस्य[9] त्रिदशाऽऽलये[10] ॥६०॥ [N
कामस्[11] तु यदि[11] ते मोहान् मां योधयितुम् आ[12]-हवे ।
५५] यत्नाद् गृहाण वि-शिखां[13]स् ततस् त्यक्ष्यसि जीवितम् ६१ [N
श्रुत्वाऽति-कायस्य वचः स-रोषं
स-गर्वितं[14] सं-यति राज-पुत्रः ।
न चैव चुक्रोध बले[15] धृताऽऽत्मा
५६] प्रोवाच चैनं स ततो महाऽऽत्मा ॥६२॥ [५७
न वाक्य-मात्रेण भवान् प्र-धानो
न कत्थना[16]ः सत्-पुरुषा भवन्ति ।
मयि स्थिते धन्विनि बाण-पाणौ
५७] वि-दर्शय स्वाऽऽत्म[17]-बलं दुर्-आत्मन् ॥६३॥ [५८
कर्मणा दर्शयाऽऽत्मानं न वि-कत्थितुम् अर्हसि ।

---

१. ल$_1$ ल$_2$ ब अ प्र फ म-त्रासं । २. रा$_1$-यमालयं ॥ ३. रा$_1$-पश्येमान् । ४. ल$_1$ ल$_2$ ब-०भूषितान् ॥ ५. म-नास्ति । ६. रा$_1$-नास्ति ॥ ७. ल$_1$ ल$_2$ ब अ-ते । ८. ल$_1$ ल$_2$ प्र म-अजात० । ९. रा$_1$-ख्यातं च । १०. रा$_2$-त्रिदिवाल० ॥ ११. ल$_1$ ल$_2$ ब अ-कामाद्वा यदि वा । १२. ल$_1$ ल$_2$ ब अ-इच्छसि । १३. प्र रा$_2$ फ-स्वशरान् ॥ १४. रा$_1$-जगर्ज तं । ल$_1$ ल$_2$ ब अ-सुग० १५. ल$_1$ ल$_2$ ब अ-बली ॥ १६. रा$_1$ ल$_1$ प्र रा$_2$ फ-०नात् । १७. रा$_1$-०यस्वाद्य बलं ॥

५८] पौरुषेण हि यो युक्तः स वै[1] शूर इहोच्यते[2] ॥६४॥ [५९
सर्वाऽऽयुध-समायुक्तो धन्वी रथ-वरे स्थितः ।
५९] शरैर् वा यदि वाऽप्य् अस्त्रैर्[3] दर्शय स्व-पराक्रमम् ॥६५॥[६०
ततः शिरस्[4] ते नि-शितैः पातयिष्याम्य् अहं शरैः[5] ।
६०] मारुतः काल-सम्पक्वं वृन्तात्[6] ताल-फलं यथा ॥६६॥ [६१
अद्य[7] ते मामका बाणास् तप्त-काञ्चन-भूषणाः[8] ।
६१] पास्यन्ति रुधिरं देहात् पुरा देवा यथाऽमृतम् ॥६७॥ [६२
बालोऽयम् इति वि-ज्ञाय न[9] माऽव-ज्ञातुम् अर्हसि । [६३
६२] बालो वा यदि वा वृद्धो मृत्युम्[10] अभ्य्-एति[11](?षि) सं-युगे६८[६४पू
लक्ष्मणस्य वचः श्रुत्वा हेतु-मत्[12] परमाऽर्थ-वत्[13] ।
६३] अति-कायः प्र-चुक्रोध[14] बाणं चाऽथं[15] समा-ददे[16] ॥६९॥[६५
तम् आ-पतन्तं सौमित्रिस् त्रि-धा चिच्छेद लाघवात्[17] ।
६४] रावणिः परमाऽमर्षी[18] शरैर्[19] एनम् उपाऽद्रवत् ॥७०॥ [N
ततः शर-सहस्रेण सं-छाद्य रघु-नन्दनम् ।
६५] वि-भीषणं च साऽमात्यं यूथ-पांश् चाऽभि-दुद्रुवे[20] ॥७१॥ [N
सं-त्रास्य वानरीं सेनां शर-वर्षैर् महा-भुजः ।
६६] सौमित्रिम् अभि-दुद्राव पुनर् एव महा-मृधे[21] ॥७२॥ [N
तम् आ-पतन्तं सहसा प्रत्य्-अगृह्णान् महा-भुजः ।[21]

---

१. रा$_1$ रा$_2$ फ म-नः । २. रा$_1$-इवोच्यते । ल$_1$ल$_2$ब-इव कथ्यते । अ-इति कथ्यते ॥ ३. रा$_1$-वाप्यथवा शस्त्रैर् ॥ ४. रा$_1$-शरैस् । ५. रा$_1$-शिरः । ६. ल$_1$ल$_2$ ब अ प्र फ-वृक्षान्तात् ॥ ७. रा$_1$-अथ । ८. रा$_1$-०भूषिताः ॥ ९. रा$_2$-नावज्ञातुमिहार्हसि । १०. रा$_1$-मृत्युर् । प्र-मृत्युश् । ११. ल$_1$ ब अ फ-नाभ्येति । प्र-चाभ्येति ॥ १२. म-बलवान् । १३. प्र रा$_2$ म-०र्थवित् । १४. रा$_1$-प्रभुः क्रोधाद् । १५. रा$_1$ प्र रा$_2$ फ म-चास्य । १६. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-समादधे ॥ १७. रा$_1$-राघवः । १८. रा$_1$-०मर्षः । १९. ल$_1$ ल$_2$ ब अ-शनैर् ॥ २०. रा$_1$-च विदुद्रुवे । रा$_2$ म-चापि दु० ॥ २१. ल$_1$ म-नास्ति ॥

६७] लक्ष्मणो राक्षस-श्रेष्ठं शरैर् अ[1]त्यग्नि-सन्निभैः ॥७३॥ [N
ततो विद्या-धरा भूता देवा देवर्षयस् तथा ।
६८] गुह्यकाश् च महाऽऽत्मानस् तद् युद्धं ददृशुस् [2]तदा [3]॥७४॥ [६६
ततोऽति-कायः कुपितो धनुष्य् आ-धाय सायकम् ।
६९] लक्ष्मणाय प्र[4]-चिक्षेप सं[5]-क्षिपन्तम् इवाऽम्बरम् ॥७५॥ [६७
तम् आ-पतन्तं वि-शिखं शरम् आशीविषोपमम् ।
७०] अर्ध-चन्द्रेण चिच्छेद लक्ष्मणः पर-वीर-हा ॥७६॥ [६८
तं नि-कृत्तं शरं दृष्ट्वा कृत्त-भोगम् इवोर-गम् ।
७१] अति-कायोऽति-सं[6]रब्धः पञ्च बाणान् समा[7]-ददे ॥७७॥ [६९
तान् छरान् स प्र[8]-चिक्षेप लक्ष्मणाय निशा-चरः ।
७२] तान् अ-प्राप्तान् छरैस् तीक्ष्णैर् चिच्छेद युधि लक्ष्मणः ७८ [७०
स तान् छित्वा[9] शरैस् तीक्ष्णैर् लक्ष्मणः पर-वीर-हा ।
७३] आ-ददे नि-शितं बाणं ज्वलन्तम् इव तेजसा ॥७९॥ [७१
तम् आ-दाय धनुः-श्रेष्ठे योजयामास लक्ष्मणः ।
७४] वि-चकर्ष च वेगेन वि-ससर्ज च रक्षसे[10] ॥८०॥ [७२
पूर्णाऽऽयत-विसृष्टेन शरेणाऽऽनत-पर्वणा ।
७५] ललाटे राक्षस-श्रेष्ठम् आ-जघान स वीर्य-वान् ॥८१॥ [७३
स ललाटे शरो मग्न[11]स् तस्य भीमस्य रक्षसः ।
७६] ददृशे शोणितेनाऽक्तः पन्नगेन्द्र इवाऽऽहवे [12]॥८२॥ [७४

---

१. प्र-आदित्यस० ॥ २. ल$_1$ ल$_2$ ब अ-पुरा । ३. प्र-नास्ति ॥ ४. ल$_1$ ल$_2$ ब अ प्र-विचि० । ५. रा$_2$-प्रदीप्तमिव पावकं । अ-अत आरभ्य ७८-तमश्लोकस्य प्रथमपादपर्यन्तं नास्ति ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब प्र फ-०संक्रुद्धः । ७. ल$_2$ ब प्र-०दधे ॥ ८. रा$_1$-संप्र० ॥ ९. रा$_1$-दृष्ट्वा शरांस्तीक्ष्णान् । ल$_2$ ब अ प्र फ म-छित्वा शरांस्तीक्ष्णान् ॥ १०. रा$_1$-लक्ष्मणः। ल$_1$ ल$_2$ ब अ प्र रा$_2$-राक्षसे ॥ ११. रा$_1$-मग्नो धीमतस्तस्य । ब प्र-लग्नस्तस्य भी० । १२. प्र-नास्ति ॥

राक्षसः प्र-चकम्पे च लक्ष्मणेषु-प्रचालितः ।[1]
७७] रुद्र-बाण-हतं घोरं यथा त्रिपुर-गोपुरम् ॥८३॥ [७५
चिन्तयामास चाऽऽश्वस्य वि-श्रम्य च महा-बलः ।[2]
७८] साधु-[3]मुक्तेन बाणेन श्लाघनीयोऽसि मे रिपुः ॥८४॥ [७६
इत्य् एवं [4]स वि-चिन्त्याऽथ वि-गृह्य च भुजाव् उभौ ।[5]
७९] स्यन्दनोपस्थम् आ-[6]स्थाय चापम् आ-दाय चोत्-तमम् ८५ [७७
त्रीण्य् एकं पञ्च सप्तेति सायकान् राक्षस[7]र्षभः ।
८०] आ-ददे सं-द[8]धे चाऽपि त्रि-चक[9]र्षोत्-ससर्ज च[10] ॥८६॥ [७८
हेम-पुङ्खा रवि-प्रख्याश् चक्रुर् दीप्तम् इवाऽम्बरम् ।
८१] ते बाणाः काल-सङ्काशा राक्षसेन्द्र-धनुश्-च्युताः ॥८७॥ [७९
ततस् तान् राक्षसोत्सृष्टाञ् छरौघान् राघवो[11]ऽनुजः ।
८२] अ-सम्भ्रान्तः प्र-[12]चिच्छेद नि-शितैर् ब[12]हुभिः शरैः ॥८८॥ [८०
तां[11]ञ् छरान् युधि सम्प्रेक्ष्य नि-कृ[11]त्तान् रावणाऽऽत्मजः ।
८३] चुकोपाऽति सुरेन्द्राऽरिर् जग्राह च शितं [13] शरम् ॥८९॥ [८१
तं सं-धाय महा-तेजाः स[13]सर्ज च म[14]हा-मृधे ।
८४] तेन सौमित्रिम् आ-यान्तम् आ-जघान स्तनाऽन्तरे९०॥ [८२
[15]सोऽति-विद्धो बल-वता लक्ष्मणो लक्ष्मि-वर्धनः ।
८५] सुस्राव रुधिरं भूरि [16]मदं मत्त इव द्वि-पः ॥९१॥ [८३

---

१. प्र-मुदा चकम्पे बलवांश्चालितो लक्ष्मणेषुणा ॥ २. म-अतिकायस्तु सक्रोधो लक्ष्मणं वाक्यमब्रवीत् । ३. रा$_1$-०साधुयुक्तेन ॥ ४. रा$_1$-सन्निशम्यास्य निगृह्य वपुषा बभौ । फ म-संनिनम्यास्यं वि० । ५. अतः परमधिकः पाठः—रा$_2$-ननाद सुमहानादं यथा प्रावृषि तोयदः । ६. ल$_1$ ल$_2$ ब श्र प्र-आसाद्य ॥ ७. रा$_1$-राक्षसेश्वरः । ८. प्र म-०दधे । ९. रा$_1$रा$_2$फ-०कर्ष ससर्ज । १०. रा$_2$ फ-वै ॥ ११. ब-नास्ति ॥ १२. रा$_1$-तदायस्तश्चिच्छेद निशितैः ।म-०द राघवो निशितैः। १३. रा$_1$-ससर्जाथ । १४. म-महाहवे ॥ १५. रा$_1$म-अतीव तेन सौमित्रिस्ताडितो युधि वक्षसि । १६. ल$_1$ ल$_2$ ब श्र प्र-हतो ॥

स चकाराऽऽत्मनाऽऽत्मानं वि-शल्यं सहसा वि-भुः[1] ।
८६] जग्राह च शरं तीक्ष्णं[2] तम् अस्त्रेणाऽभिसं-दधे[3] ॥८२॥ [८४
आग्नेयेन महा-तेजाः[4] सर्वा वि-द्योतयन् दिशः ।
८७] स जज्वाल महा-बाणो धनुष् चाऽस्य महाऽऽत्मनः ॥८३॥[5] [८५
ततस् तं ज्वलितं तीक्ष्णं लक्ष्मणः शरम्[6] अञ्जसा[7] ।
८८] अति-कार्याय[8] चिक्षेप ब्रह्म-दण्डम् इवाऽपरम्[9] ॥८४॥[10] [८६
अति-कायोऽति-तेजस्वी सौम्यम्[11] अस्त्रं समा-ददे ।
८९] तेन बाणं भुजङ्गाऽऽभं हेम-पुङ्खम् अयोजयत् । [८७
९०उ] उत्-ससर्ज च वेगेन दीप्तं सूर्याऽस्त्र-संयुतम्[12] ॥८५॥ [८८उ
ताव् उभाव् अन्तरे बाणाव् अन्योऽन्यम् अभि-जघ्नतुः ।
९१] तेजसा[13] सम्प्रदीप्ताऽङ्गौ क्रुद्धाव् इव भुजं-गमौ[14] ॥८६॥ [८९
ताव् अन्योऽन्यं विनिर्-भिद्य पेततुर् धरणी-तले ।
९२] ताव् उभौ शर-हीनौ[15] तु न भ्राजेते स्म सं-युगे ॥८७॥ [९०
ततोऽति-कायस् त्व् ऐषीकं ससर्जाऽस्त्रं निशा-चरः ।
९३] लक्ष्मणस् तं प्र-चिच्छेद ऐन्द्राऽस्त्रेण महा-बलः[16] ॥८८॥ [९१
ऐषीकं नि-हतं दृष्ट्वा कुमारो रावणाऽऽत्मजः ।
९४] याम्येनाऽस्त्रेण सं-क्रुद्धो योजयामास सायकम् ॥८९॥ [९२
ततस् तद् अस्त्रं चिक्षेप लक्ष्मणाय निशा-चरः ।
९५] वायव्येन तद्[17] अस्त्रेण निर्-जघान स[18] लक्ष्मणः ॥१००॥[19] [९३

---

१. रा$_1$रा$_2$-भुवि । २. ल$_1$ल$_2$ब-घोरं । ३. म-नास्ति । ४. रा$_2$फ-महाबाहुः । ५. रा$_1$-योजयित्वा च चिक्षिपे । ६. ल$_1$ ल$_2$ ब अ प्र म-नास्ति ॥ ७. रा$_1$-परवीरहा । ८. ल$_1$ ल$_2$ ब अ प्र-अतिसंधाय । ९. ल$_1$ ल$_2$ ब अ-इवोद्धतं ॥ १०. अतः परमधिकः पाठः—ल$_1$ल$_2$ब प्र फ-दृष्ट्वा तु तं महाबाहुः शरं जग्राह कोपनः । ११. रा$_1$-सौरं । १२. अ-नास्ति ॥ १३. रा$_2$-तेजसौ संप्रदीप्तौ तौ । १४. ल$_1$ल$_2$ ब अ प्र रा$_2$फ-कल्पक्षये यथा प्राप्ते द्वावेवार्कौ सुतेजसौ ॥ १५. ल$_1$ल$_2$ ब अ-च ॥ १६. रा$_1$-तं प्रचिच्छेद सौमित्रिरस्त्रेणैन्द्रेण वीर्यवान् ॥ १७. ल$_1$ल$_2$ ब अ प्र रा$_2$फ-तं । १८. ल$_1$ल$_2$ब अ प्र-च । १९. अतः परमधिकः पाठः—ल$_1$ ल$_2$ ब अ प्र-कुबेरदत्तेनास्त्रेण त्रासयामास लक्ष्मणं ॥

अथैनं शर-धाराभिर् धाराभिर् इव तोय-दः ।
९६] प्र-ववर्ष सु-सङ्क्रुद्धो लक्ष्मणो रावणाऽऽत्मजम् १०१॥ [९४
तेऽति-कायस्य सम्प्राऽऽप्य कवचं वज्र-विग्रहम् ।
९८] भग्नाऽग्रशल्याः सहसा नि-पेतुर् भुवि सायकाः[1]॥१०२॥ [९५
तान् मोघान् अभिसम्प्रेक्ष्य लक्ष्मणः पर-वीर-हा ।
९९] अभ्य्-अवर्षत बाणानाम् अयुतेन महा-यशाः[2]॥१०३॥ [९६
स वध्यमानो बाणौघैर् अति-कायो महा-बलः[3] ।
१००] ब्रह्म-दत्त-वरो वीरो राक्षसेन्द्रो न[4] विव्यथे ॥१०४॥ [९७
न शशाक रुजं कर्तुं यदा तस्य महा-शरैः ।
१०१] अथैनम् अभ्युपाऽऽगम्य वायुर् वाक्यम् अभाषत १०५ [१०१
ब्रह्म-दत्त-वरो ह्य् एष ह्य् अभेद्यकवचाऽऽवृतः । [१०२
१०२] ब्रह्माऽस्त्रेणैव भग-वन् जहि दैवत-कण्टकम् ॥१०६॥ [१०३पू
ततस् तु वाक्यं स नि-शम्य वायोः
सौमित्रिर् इन्द्र-प्रतिमान-वीर्यः ।
समा-ददे बाणम् अमोघ-वेगं
१०३] [8]तं ब्रह्मणोऽस्त्रेण युयोज चैव ॥१०७॥ [१०४
तस्मिन् वराऽस्त्रे[9] विनि-युज्यमाने
सौमित्रिणा बाण-वरे शिताऽग्रे ।
देवाः स-चन्द्राऽर्क-महाग्रहाश् च
१०४] नभो-गतास् त्रेसुर् अकम्पतोर्वी[10] १०८॥ [१०५

---

१. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-सर्वे ते विफलीभूतास्तस्य लक्ष्मणसायकाः । म-ततः प्रसह्य सहसा नि० ॥ २. म-नास्ति ॥ ३. ल$_1$ ब अ-महाभुजः । ४. रा$_1$-अभेद्यकवचः संख्ये राक्षसो नैव ॥ ५. रा$_1$-अभेद्य० ॥ ६. ल$_1$ ल$_2$ ब अ प्र-तद्ब्रह्मणोस्त्रेण विभो । फ-ब्रह्मणोस्त्रेण भ० ॥ ७. ल$_1$ ल$_2$ ब अ प्र-०दधे । ८. प्र-नास्ति ॥ ९. ल$_1$ ल$_2$ ब अ फ-०स्त्रेण नि० । १०. ल$_1$ ल$_2$ ब अ रा$_2$ फ म-रराज चोर्वी ॥

तं लक्ष्मणोत्सृष्टम् अमोघ-वेगं
समा-पतन्तं श्वसन[1]-प्रकाशम् ।
कालाऽग्नि-तुल्यं सित-पीत-पुङ्खं[2]
१०६] ततो[3]ऽति-कायः सम्-अरे ददर्श॥१०९॥ [१०७
तं प्रेक्ष्यमाणस् तरसा[4]ऽति-कायो
जघान[5] बाणैर् नि-शितैर् अनेकैः ।
स सायकस् तस्य सुपर्ण-वेगस्
१०७] तदाऽति-वेगेन जगाम पार्श्वम् ॥११०॥[5] [१०८
तम्[6] आ-गतं प्रेक्ष्य तदाऽति-कायो
बाणं प्रदीप्ताऽनल-काल-कल्पम्[7] ।[8]
जघान शक्त्य्-ऋष्टि-गदा-कुठारैः[9]
१०८] शूलैर्[10] हुलैश्[10] चाऽप्य् अविपन्न[11]-चेष्टः॥१११॥ [१०९
तान्य् आ-युधान्य् अ-प्रति[12]विक्रमाणि
मोघानि कृत्वा[13] स शरोऽग्नि-कल्पः ।
स-कुण्डलं[14] तस्य किरीट-जुष्टं[14]
१०९] तदाऽति-कायस्य शिरो जहार॥११२॥ [११०
तच् छिरः स-शिरस्त्राणं लक्ष्मणेन प्र-मर्दितम् ।
११०] पपात सहसा भूमौ शृङ्गं हिम-वतो यथा ॥११३॥ [१११
ततो हतान् राक्षस-पुङ्गवांस् तान्
स-कुम्भकर्णाऽतिरथाऽतिकायान् ।

---

१. म-ज्वलनप्र० । २. रा$_1$-तीक्ष्णाग्रधारोन्नतचित्रपुंखं । ३. रा$_1$-तदातिवीर्यः ॥ ४. रा$_1$-सहसाति० । ५. रा$_1$ प्र फ-नास्ति ॥ ६. रा$_1$ फ-नास्ति ७. ल$_1$ ल$_2$ ब श्र फ-०कालतुल्यं । ८. प्र-नास्ति । ९. रा$_1$-०गदाप्रहारैः । १०. रा$_1$-शूलार्गलैश् । ल$_1$ ल$_2$ब श्र प्र फ-शूलैर्नगैश् । ११. रा$_1$-अभिप० ॥ १२. रा$_1$-अप्रतिमक्र० । १३. ल$_1$ ल$_2$ ब श्र रा$_2$-हत्वा । १४ ·रा$_1$-प्रगृह्य तच्चारुकि० ॥

रक्षो-गणा वीरहताऽवशिष्टास्
१.१.१] ते रावणाय त्वरिता: शशंसु: ॥११४॥ [N

इत्यार्षे रामायणे युद्ध[1]-काण्डे अतिकाय-वधो नाम
द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## [ वं-५२,५३ ]= [ त्रिपञ्चाशः सर्गः ] =[ दा-७३,७४]

तेषां[2] वचस् तत् तु निशम्य राजा[2]
मुमोह शोकाऽश्रु-परिप्लुताऽक्षः ।
भ्रातुर् वधं पुत्र-वधं च[3] घोरं[3]
N] वि-चिन्त्य राजा तुमुले[4] प्र-मोहे ॥१॥ [२
ततस् तु राजानम् अवेक्ष्य दीनं
सु[5]-विह्वलं शोक-परीत-देहम्[5] ।
रथर्षभो राक्षस-राज-सूनुर्
३] अथेन्द्र-जिद् वाक्यम् इदं बभाषे ॥२॥ [३
न तात[6] मोह-प्र[6]विषाद-कालो
यद् इन्द्र-जिज् जीवति राक्षसेन्द्रः ।

---

१. प्र-लंकाकांडे । म-युद्धपर्वणि ॥ २. रा₁-ततो हतांस्तान् स नि० । रा₂-०चस्तत्र नि० । इतः पूर्वमधिकः पाठः—रा₂-तच्छ्रुत्वा वचनं तेषां रावणः शोकविह्वलः । न किंचिदप्युवाचार्तो दीनात्मा क्षुब्धचेतनः ॥ तं दृष्ट्वा राक्षसश्रेष्ठं मन्युनातिपरिप्लुतं । न किंचित्कंचिदप्याह सर्वः शोकान्वितोऽभवत् ॥ ३. रा₁-सुघोरं । ४. रा₁-०ले प्रगाढं ॥ ५. रा₁ म-शोकार्णवे संप्रति वर्तमानं । रा₂-स विह्वलः शो० ॥ ६. रा₁-तात ते मोहवि० ।

नेन्द्राऽरि-बाणाऽभिहतोऽस्ति कश्-चित्
४] प्राणान् हि शक्तो युधि धारयेद् यः ॥३॥ [४
पश्याऽद्य रामं सह लक्ष्मणेन
मद्-बाण-निर्भिन्न-विकी[1]र्ण-देहम् ।
गताऽऽयुषं भूमि-तले शयानं
५] शितैः शरैर् आर्चि[2]त-सर्व-गात्रम् ॥४॥ [५
इमां प्रति-ज्ञां शृणु चेन्द्र-शत्रोः
सु-निश्चितां पौरुष-दैव-युक्ताम् ।
यथाऽद्य रामं सह लक्ष्मणेन
६] सं-तर्पयिष्यामि शरैर् अ-मोघैः ॥५॥ [६
अद्ये[3]न्द्र-वैवस्वत-विष्णु-मित्राः
साध्याऽश्वि-वैश्वानर-चन्द्र-सूर्याः ।
द्रक्ष्यन्ति मे वि-क्रमम् अ-प्रमेयं
७] त्रि[4]-विक्रमे विक्रम-वद्[4] धि विष्णोः ॥[5]६॥ [७
स एवम् उक्त्वा त्रिदशेन्द्र-शत्रुर्
आ-पृच्छ्य राजानम् अ-दीनसत्त्वः ।
समा-रुरोहाऽनिल-तुल्य-वेगं
८] र[6]थं ख[6]र-श्रेष्ठ-सहस्र-युक्तम् ॥७॥ [८
तम् आ-स्थाय महा-तेजा रथं हरि-रथोपमम् ।
९] जगाम सहसा तत्र यत्र युद्धम् अरिं-दमः[7] ॥८॥ [९

---

१. प्र-०विशीर्ण० । २. रा२-अर्चितस० ॥ ३. ल१ ल२ ब प्र फ-अथेन्द्र० । ४. रा१-त्रिविक्रमस्येव जयं च । प्र फ म-०मे विक्रममेव । ५. अतः परमधिकः पाठः—रा२-ये चागता राघवकार्यहेतोरवेहि मत्सायकभिन्नगात्रान् ॥ ६. ल१ल२ब अ-रथोत्तमं श्रेष्ठसमर्द्धियु० । रा२फ-०ष्ठसमाधियु० ॥ ७. रा१-०दमं ॥

तं प्र-स्थितं महाऽऽत्मानम् अनु-जग्मुर् महा-बलाः ।
१.०] सं-स्पर्धमाना बहवो धनुःप्राऽऽसाऽसि-पाणयः ॥९॥[1] [१.०
गज-स्कन्ध-गताः[1] के-चित् के-चिद् धुर्य[2]-गतास् तथा । [११पू
११] प्राऽऽस-मुद्गर-निस्त्रिंश-परश्वध-धराः परे ॥१०॥ [१३पू
स शङ्ख-निनदैः पुण्यैर् भेरीणां च महा-स्वनैः ।
१२] जगाम त्रिदशेन्द्राऽरिः स्तूयमानः सपत्न-जित् ॥११॥ [१४
स शङ्ख-शशि-वर्णेन छत्रेण रिपु-सूदनः ।
१३] रराज प्र-गृहीतेन नभश् चन्द्रमसा यथा ॥१२॥ [१५
ततस् [3]तं विविजुर्[3] भीमं मेघाऽऽभं हेम-भूषणम् ।
१४] चारु-चामर-मुख्यैश्[4] च मुख्यं सर्व-धनुष्मताम् ॥१३॥ [१६
ततस् त्व् इन्द्र-जिता लङ्का सूर्य-प्रतिम-तेजसा ।
१५] रराजाऽप्रतिवीर्येण द्यौर् इवाऽर्केण भास्वता ॥१४॥ [१९
स तु[5] दृष्ट्वा विनिर्-यान्तं बलेन महताऽऽवृतम् ।
१६] राक्षसाऽधिपतिः श्री-मान् रावणः पुत्रम् अब्रवीत् ॥१५॥ [१७
त्वम् अ-प्रतिरथः पुत्र जितस् ते युधि वासवः ।
१७] किं पुनर् मानुषं धृष्यं[6] न वधिष्यसि[7] राघवम् ॥१६॥ [१८
तथोक्तो राक्षसेन्द्रेण प्रति-गृह्य महाऽऽशिषः ।
१८] रथेनाऽश्व-युजा वीरः शीघ्रं गत्वा नि-कुम्भिलाम् । [N
१९उ] स्थापयामास रक्षांसि रथांश् चैव समन्त-तः ॥१७॥ [२०उ

सर्व-तोऽग्निं समा-स्तीर्य शस्त्र-पात्रैः[8] स-तोमरैः ।
२३] जुहाव[9] रक्तं कृष्णस्य कण्ठाच् छागस्य जीवतः ॥१८॥[10] [२४

१. ल$_1$-नास्ति ॥ २. प्र-रथग० ॥ ३. ल$_1$ल$_2$ब अ-तु भेजिरे । ४. म-०रपुष्पैश् ॥ ५. रा$_1$-तं ॥ ६. रा$_1$-दस्यं । ७. ल$_1$ल$_2$ब अ म-हनिष्यसि ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब-०पातैः सतोरणैः । अ प्र-०त्रैः सतोरणैः । ९. रा$_2$-आदाय । १०. टि० अयं मध्यपाठः २७-शश्लोकात्परमधिकश्च पाठः २०-शसर्गेण तु० । अतः परमधिकः पाठः— रा$_2$ फ-जुहाव पावकं रात्रौ रक्ताक्ताः समिधस्तथा ॥

ततस् तं हुत-भोक्तारं हुतभुक्-सदृश[1]-प्रभः ।
२०] अजुहोद् राक्षस-श्रेष्ठो मन्त्राऽस्त्रं विधि-वत् तदा ॥१९॥ [२१
जुह्वतस् तस्य तत्राऽग्निं रक्तोष्[2]णीष-वर-स्रजः ।
२१] आ-जग्मुर् अथ सं-भ्रान्ता राक्षसा यत्र रावणिः ॥२०॥[3] [N
शस्त्राणि शित-धाराणि सम्-इधश् च वि-भीतकान् ।
२२] लोहितानि च वासांसि स्रुवं कार्ष्णाऽऽयसं तथा ॥२१॥ [२३
स हविर् होम-लाजाऽऽद्यैर् माल्य-गन्ध-सुसंयुतैः ।
N] अजुहोत् पावकं तत्र राक्षसेन्द्रः प्रताप-वान् ॥२२॥ [२२
सकृद् एव सम्[4]-इद्धस्य वि-धूमस्य महाऽर्चिषः ।
२४] बभूवुस् तानि लिङ्गानि वि-जयं यान्य् अदर्शयन् ॥[5]२३॥ [२५
प्रदक्षिणाऽऽवर्त-शिखस् तप्त-हाटक-सन्निभः ।
२५] हविस् तत् प्रति-जग्राह पावकः स्वयम् उत्थि(द्-स्थि)तः॥२४[5] [२६

---

सोऽस्त्रम् आ-वाहयामास ब्राह्मम् अस्त्र-विदां[6] वरः ।
२६] धनुः शरान् रथांश् चैव सर्वं तत्राऽभ्य्-अमन्त्रयत् ॥२५॥ [२७
तस्मिन्न् आ-हूयमाने च हूयमाने च पावके ।
२७] साऽर्क-चन्द्रा स-नक्षत्रा वि-तत्रास मही तदा ॥२६॥ [२८
स पावकं पावक-तुल्य-तेजा
जुहाव शक्र-प्रतिम-प्रभावः ।
स-चाप-बाणाऽसि-रथाऽश्व-सूतं
N] खेऽन्तर्-दधे त्मानम् अचिन्त्य-रूपः ॥[7]२७॥ [२९

---

१. रा₂ फ म-०शः प्रभुः ॥ २. रा₂-रक्तोष्णीषधरास्त्रयः । ३. रा₁ ल₁ ल₂ ब अ प्र म-नास्ति ॥ ४. रा₂-ततः समिद्भिरिद्धस्य । ५. रा₁ ल₁ ल₂ ब अ प्र फ म-नास्ति ॥ ६. म-अस्त्रविशारदः ॥ ७. अतः परमधिकः पाठः— रा₂ फ-इन्द्रजित्त्वथ संहृष्टो राक्षसेन्द्रसुतस्तदा । हुत्वाग्निं तर्पयित्वा च दैत्यदानवदर्पहा ॥ आरुरोह रथं दिव्यमन्तर्धानगतं शुभं । चतुर्भिर्वाजिभिर्युक्तं बाणतूणीरसंयुतं ॥

स सैन्यम् उत्-सृज्य समुत्-ससर्ज[1]
बाणान्[2] रणे[2] वानर-वाहिनीषु ।
अ-दृश्यमानः शर-जालम् उग्रं
३१] ववर्ष मेघो हि यथाऽम्बु-धाराः ॥२८॥ [५३
ते शक्रजिद्-बाण-विशीर्ण-देहा[3]
मायाऽविदो[4] वि-स्वरम् उन्-नदन्तः ।
[रणे नि-पेतुर् हरयः सु-घोरा
३२] यथेद्रवज्राऽभिहता नगेन्द्राः ॥२९॥[5] [५४
ते केवलांस् तान् ददृशुः सु-घोरान्
प्र-णर्दतो वानर-वाहिनीषु[5] ।]
यथा नि-गूढं हि सुरेन्द्र-शत्रुं

---

आरोपितमहाचापः शुशुभे राक्षसात्मजः । जाज्वल्यमानो वपुषा तपनीयविभूषितः ॥ तोमरैरर्धचन्द्रैश्च स्वरथे बह्वलंकृते । नानारक्तविचित्रे च पताकाध्वजशोभिते ॥ नीलजीमूतसंकाशे शुशुभे स्यंदने स्थितः । रावणस्यात्मजो वीरः शक्रजेता महाबलः ॥ किरीटकेयूरधरः संग्रामेष्वनिवर्तकः । जाम्बूनदमहावंशो दीप्तपावकसन्निभः ॥ बभूव चेन्द्रजित्केतुर्वैडूर्यसमलंकृतः । तेन चादित्यकल्पेन ब्रह्मास्त्रेण सुपालितः । बभूव हर्षद्धतरो रावणिः समलंकृतः ॥ स्वेन वीर्येण समः श्रीमानस्त्रेण च महाद्युतिः ॥ राक्षसैश्च महामात्यैः सपत्नायुधि दुर्जयः । अग्न्यागारात्स निर्याय शक्रजिच्च महाबलः ॥ अब्रवीद्राक्षसां मध्ये वचनं स दुरासदः । अद्य हत्वा वधार्हौ तौ मिथ्याप्रव्रजितौ रणे ॥ जयं पित्रे प्रदास्यामि हत्वा तौ रामलक्ष्मणौ । अद्य निर्वानरामुर्वीं हतराघवलक्ष्मणां । करिष्यामि सुसंक्रुद्ध इत्युक्त्वान्तरधीयत ॥

१. रा१ ल१ ल२ ब अ म-ससर्ज बाणान् । २. रा१ ल१ ल२ ब अ-महारणे । म-भीमान्रणे ॥ ३. रा२ फ-०विकीर्ण० । ४. रा२-मायाहता वि० । म-नास्ति । ५. रा१ ल१ ल२ ब अ प्र फ म-नास्ति ॥

३३] न तत्र रक्षोऽधिपतिं व्य्-अपश्यन्[1] ॥३०॥ [५५

ततः स रक्षोऽधिपतिर् महाऽऽत्मा
सर्वासु वै[2] दिक्ष्व् अभि-वर्षमाणः ।
प्र-च्छादयामास रवि-प्रभां[3] च
३४] वि-द्रावयामास च वानरेन्द्रान् ॥३१॥ [५६

स शूल-निस्त्रिंश-परश्वधानि
दीप्ताऽनिलाऽर्क-द्युति-सन्निभानि ।
स-विस्फुलिङ्गोज्वल-पावकानि
३५] ववर्ष तस्मिन् प्लवगेन्द्र-सैन्ये ॥३२॥ [५७

ततस् तैः[4] पावक-प्रख्यैः शस्त्रैर् वानर-पुङ्गवाः ।
३६] पीडिताः पृथिवीं जग्मुर् वज्राऽऽक्रान्ता[5] इवाऽचलाः ३३ [५८

तेऽन्योऽन्यम्[6] अभि-सर्पन्तो वि-नदन्तश् च सु-स्वरम् ।
३७] राक्षसेन्द्राऽस्त्र-निर्भिन्ना वि-नेदुर् वानरर्षभाः ॥३४॥ [५९

सं-वीक्ष्यमाणा गगनं के-चिन् नेत्रेषु ताडिताः ।
३८] शरैर् विविशुर् अन्योऽन्यं नि-पेतुर् धरणी-तले ॥३५॥ [६०

स सु-ग्रीवं हनू-मन्तम् अङ्ग-दं गन्ध-मादनम् ।
३९] जाम्ब-वन्तं सुषेणं च वेग-वन्तं च वानरम् ॥३६॥ [६१

मैन्दं च द्वि-विदं नीलं गजं गवयम् एव च ।
४०] विद्युद्-दंष्ट्रं केसरिणं हरि-लोमानम्[7] एव च ॥३७॥[8] [६२

सूर्याऽऽननं ज्योतिर्-मुखं तथा दधि-मुखं हरिम्[9] ।
४१] पावकाऽक्षं नलं चैव कु-मुदं चैव वामनम्[10][11] ॥३८॥ [६३

---

१. म-नास्ति ॥ २. रा$_2$-दिक्षु प्रववर्ष बाणान् । ३. रा$_2$-०प्रभावान् ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-ते । ५. रा$_1$ ल$_1$ल$_2$ ब अ-०क्रान्त इवाचलः ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब-अन्यो० ॥ ७. म-नास्ति । ८. अ-नास्ति ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-नास्ति । १०. रा$_1$ ल$_2$ ब प्र फ-वानरं । ११. अ म-नास्ति ॥

उल्का-मुखं शरभं च हरिं पनसम् एव च [1]।
४२] धूम्रं शत-बलिं तारं गवाऽक्षम् अपरान् हरीन् ॥३९॥ [N
बाणैः शूलैः शितैः खड्गैर् भिण्डि-पालैः परश्वधैः ।
४३] विव्याध कपि-शार्दूलान् सर्वांस् तान् राक्षसोत्तमः ॥४०॥[६४
स तांस् तदा वानर-राज-वीरान्
निर्-भिद्य बाणैस् तपनीय-पुङ्खैः ।
ववर्ष रामं शर-वृष्टि-जालैः
४४] स-लक्ष्मणं वज्र-सम-प्रवेगैः ॥४१॥ [६५
स बाण-वर्षैर् अभि-वर्षमाणो[2]
धारा-निपातैर् इव पर्वतेन्द्रः ।
तं वीक्ष्य(?क्ष)माणः परमाऽद्भुत-श्री
४५] रामस् तदा लक्ष्मणम् इत्य् उवाच ॥४२॥ [६६
असौ पुनर् लक्ष्मण राक्षसेन्द्रो
ब्रह्माऽस्त्रम् आ-श्रित्य सुरेन्द्र-शत्रुः ।
सं-छाद्य सर्वं हरि-सैन्यम् एतद्
४६] आवां रथ-स्थो वि-वृणोति वीरः[3] ॥४३॥[६७
स्वयं-भुवा दत्त-वरो दुर्-आत्मा
N] खम् आ-प्लुतोऽन्तर्हित-भीम-देहैः[4] ।
कथं नु[5] शक्यो युधि नष्ट-रूपो
नि-हन्तुम् अद्येन्द्र-जिद् अस्त्र-पाणिः॥४४॥ [६८
मन्ये स्वयं-भूर् भग-वान् अ-चिन्त्यो
४७] मन्ये तद् अस्त्रं हुत-भुक् च देवः । [६९पू

---

१. म-नास्ति ॥ २. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र फ-अभिवृष्यमाणो ॥
३. म-धीरः ॥ ४. प्र-०भीमरूपः । म-०भीमकर्मा । ५. प्र रा$_2$ म-तु ॥

त्रयः सम्-अर्था[1] मम वीर्य-धैर्ये[2]
N] माया-बलाच्[3] छादयितुं रणाऽग्रे ॥४५॥ [N
प्र-च्छादयत्य् एष च[4] राक्षसेन्द्रः
४८उ] सर्वा दिशः सायक-शूल-जालैः ।
एतच् च सर्वं प्रविभग्न-शूरं
प्र-मुह्यते वानर-राज[5]-सैन्यम् ॥४६॥ [७०
आत्रां तु[6] दृष्ट्वा पतितौ वि-संज्ञौ
४९] निवृत्त-युद्धोत्तम-जात-हर्षः । [७१पू
प्र-याति भीमः पुनर् एव लङ्कां
N] प्र-हर्षयन् राक्षस-सैन्यम् एतद् ॥४७॥ [N
ततस् तु ताव् इन्द्र-जितो[7]ऽस्त्र-जालैर्
बभूवतुस् तत्र तदा वि-षण्णौ ।
स राघवौ तौ बलिनौ वि-षाद्य
५१] ननाद हर्षाद् युधि राक्षसेन्द्रः ॥४८॥ [७२
स तद् तदा वानर-राज-सैन्यं
स-राम-सौमित्रिम् अथाऽप्रमेयम् ।
वि-षाद्य सर्वं सहसा विवेश
५२] पुरीं दशग्रीव-भुजाऽग्र-गुप्ताम् । [७३
सं-स्तूयमानः स तु यातु-धानैः

---

१. रा$_1$ ल$_1$ ल$_2$ ब प्र अ फ म-समस्ता । २. प्र-वीर्यवंतो । म-वीर्यध्येया । ३. रा$_1$ ल$_2$ ब अ प्र फ म-०लाच्छादयतो । ल$_1$-०बलो छादयति । रा$_2$-मया बलान् छा० ॥ ४. रा$_2$ फ म-हि । ५. अ-०रसैन्यमुग्रं ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-च ॥ ७. अ प्र फ-०जितास्त्र० ॥ ८. म-अत्रैव सर्गसमाप्तिर्दृश्यते-युद्धपर्वणि इन्द्रजित्कर्म नाम सर्गः ॥

N] पित्रे च सर्वं हृषितोऽभ्य्-उवाच ॥४९॥[2] [७४उ
वं-९३] तयोस् तु तत्राऽर्दितयो रणाऽग्रे [दा-७४
मुमोह सैन्यं हरि-यूथपानाम् ।
सर्वे वि-षण्णौ विगत-प्रभावा
१] न चाऽपि किं-चित् प्रति-पेदिरे स्म ९०॥ [१
ततो वि-षण्णं समवेक्ष्य सैन्यं
वि-भीषणो धर्म-भृतां वरिष्ठः ।
उवाच शाखामृग-राज-वीरान्
२] आ-श्वासयन् वाग्भिर् अ-दीनसत्त्वः॥५१॥ [२
मा भैष्ट नास्त्य् अत्र विषाद-कृत्यं
यद् आर्य-पुत्रौ वि-वशौ वि-षण्णौ ।
स्वयं-भुवो वाक्यम् अभिप्र-पन्नौ
३] सं-छादिताव् इन्द्र-जितोऽस्त्र-जालैः॥९२ [३
तस्मै हि दत्तं परमाऽस्त्रम् एतत्
स्वयं-भुवा ब्राह्मम् अमोघ-वीर्यम् ।
तन् मानयन्तौ यदि राज-पुत्रौ
४] वि-षीदितौ[5] नाऽत्र विषाद-कालः॥९३॥ [५
स ब्राह्मम् अस्त्रं तद् धी-मान् मानयित्वा तु मारुतिः ।[5]
५] विभीषण-वचः श्रुत्वा हनू-मान् इदम् अब्रवीत् ॥९४॥ [६
अस्मिन् शस्त्र-हते सैन्ये वानराणां तरस्विनाम् ।

---

१. रा$_1$ ल$_1$ प्र-स । २. अतः परमधिकः पाठः—रा$_2$-ततो रावणमासाद्य अभिवाद्य कृताञ्जलिः । आचचक्षे प्रियं पुत्रो निहतौ रामलक्ष्मणौ ॥ स हर्षवेगानुगतान्तरात्मा श्रुत्वा गिरस्तस्य महारथस्य । जहौ ज्वरं दाशरथेः समुत्थं प्रतीतचित्तश्च ननंद पुत्रं ॥ रा$_2$-अत्रैव सर्गसमाप्तिर्दृश्यते । ३. म-विवर्णा ॥ ४. रा$_1$ ल$_1$ ल$_2$ व अ प्र-विषादितौ । ५. म-नास्ति ॥ ६. रा$_1$ ल$_1$ ल$_2$ व प्र फ-स । अ-च ॥

६] यो यो धारयति प्राणांस् तं तम् आ-श्वासयामहे ॥५५॥ [७
ताव् उभौ युगपद् वीरौ वायुपुत्र-विभीषणौ ।
७] उल्का-हस्तौ तदा रात्रौ रण-शीर्षे[1] वि-चेरतुः ॥५६॥ [८
छिन्न-लाङ्गूल-हस्तैश् च विप्रकीर्ण-शिरोधरैः[2] ।
८] स्रोतोभिः क्षत-जं चाऽपि[3] वि-स्रवद्भिः समन्त-तः॥५७॥ [९
पतितैः पर्वताऽऽकारैर् वानरैर् अभिसं-कुला ।
९] अस्त्रैश्[4] च पतितैर् दीप्तैर् अभि-कीर्णा वसुं-धरा॥५८॥ [१०
सु-ग्रीवम् अङ्ग-दं नीलं शरभं गन्ध-मादनम् ।
१०] जाम्ब-वन्तं सु-षेणं च वेग-वन्तं दधी-मुखम्[5] ॥५९॥ [११
११पू] ज्योतिर्-मुखं नलं मैन्दं द्वि-विदं पनसं[6] गजम्[7] । [१२पू
N] गवाऽक्षं गवयं धूम्रम् ऋषभं वि-नतं हरम्[8] ॥६०॥ [N
एतांश् चाऽन्यांश् च सु-बहून् वानरेन्द्रान् महा-बलान् ।
१३] विभीषण-हनूमन्तौ ददृशाते हतान् रणे[9] ॥६१॥ [१२उ
सप्त-षष्टिर् हताः[10] कोटयो वानराणां तरस्विनाम् ।
१४] अह्नः[11] पश्चिम-भागेन वल्लभेन स्वयं-भुवः ॥६२॥ [१३
सागरौघ-निभं घोरं दृष्ट्वा व्या-पादितं बलम् ।
१५] विभीषण-हनूमन्तौ जाम्ब-वन्तं समागतौ[12] ॥६३॥ [१४
स्वभावे[13]-जरया युक्तं[14] वृद्धं शर-शतैश् चितम् ।
१६] प्रजा-पतिं गतं वीरं शाम्यन्तम् इव पावकम्[15] ॥६४॥ [१५

---

१. रा$_2$ प्र फ-०शीर्षं ॥ २. म-०धराः । ३. रा$_2$-वापि ॥ ४. रा$_2$म-शस्त्रैश् ॥ ५. म-च वानरं ॥ ६. म-चापि वानरं । ७. रा$_2$प्र-हरिं । ८. म-नास्ति ॥ ९. म-रणाजिरं ॥ १०. ल$_1$ल$_2$ब प्र म-हतान् । ११. रा$_2$-दिवसस्याष्टमे भागे वरदानात् । फ-०मकाले तु व० ॥ १२. म-नास्ति ॥ १३. रा$_1$ ल$_1$ ब अ-०वाजरया । १४. रा$_2$-प्रजापतिसुतं । १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-पर्वतम् ॥

अथैनम् उपसं-गम्य पौलस्त्यो वाक्यम् अब्रवीत्[1] ।

१७] क्व-चिद् आर्य शरै रौद्रैर्[2] न प्राणा हिंसितास् तव[3] ॥६५॥[१६

१८उ] विभीषण-वचः श्रुत्वा जाम्ब-वान् प्लवगर्षभः ।

कृच्छ्रेण धारयन् प्राणान् इदं वचनम् अब्रवीत् ॥६६॥[3] [१७

१९] नैर्ऋतेन्द्र महा-वीर्य स्वरेण त्वाऽभि-लक्षये ।

पीड्यमानः शितैर् बाणैर् न त्वां पश्यामि चक्षुषा ॥६७॥ [१८

२०] अञ्जना सु-प्रजा येन मातरिश्वा च नैर्ऋत ।

कच्चि-चिद् धारयति प्राणान् हनू-मान् प्लवगर्षभः ॥६८॥[१९

२१] श्रुत्वा जाम्ब-वतो वाक्यम् अब्रवीत् तं वि-भीषणः । [२०पू

स्व-भावं तस्य जिज्ञासुः प्र-ज्ञां च प्राज्ञ-सत्तमः ॥६९॥[6] [N

२२] क्लिश्यामहे यत्-कृते स्मः यन्-मूलं चैव नो बलम् । [N

ताव् आर्य-पुत्राव् उत्-सृज्य हनू-मन्तं च पृच्छसि ॥७०॥[२०उ

२३] नैव राजनि सु-ग्रीवे नाऽङ्ग-दे न च राघवे ।

२४पू] आर्येण दर्शितः स्नेहो हनू-मति तु दर्शितः ॥७१॥[10] [२१

वानरेन्द्रान् महा-वीर्यान् अति-क्रम्य महा-बलान् ।

N] बहून् अन्यांस् त्वम् एकं तु कस्मात् पृच्छसि मारुतिम् ७२[N

२४उ] विभीषण-वचः श्रुत्वा जाम्ब-वान् इदम्[12] अब्रवीत्[13] ।

शृणु नैर्ऋत-शार्दूल यन् मां पृच्छसि मारुतिम् ॥७३॥[14] [२२

---

१. अतः परमधिकः पाठः—रा$_2$-कच्चिज्जीवसि ऋक्षेन्द्र कच्चित्ते विपुलं बलं । २. म-तीक्ष्णैर्न प्राणैर्ध्वंसितो रणे । ३. ल$_1$ ल$_2$ ब-नास्ति ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-कच्चिद् । ५. रा$_2$-हनुमान् ॥ ६. म-नास्ति ॥ ७. रा$_1$ ल$_1$ ल$_2$ अ-च । ८. रा$_2$ प्र फ-हि ॥ ९. रा$_2$ फ म-विद० । १०. अतः परमधिकः पाठः—रा$_2$-जाम्बवंश्च महाबाहो यत्त्वां वक्ष्यामि तच्छृणु । गवाक्षं गवयं धूम्रमृषभं गंधमादनं ॥ ११. रा$_2$-हनूमन्तं ॥ १२. म-अब्रवीद् वचः । १३. अ-नास्ति । १४. रा$_1$ ल$_1$ ल$_2$ ब प्र म-नास्ति ॥

२५] तस्मिन् जीवति दुर्-धर्षे हतम् अप्य् अ-हतं बलम् ।
हनू-मति हते सर्वे जीवन्तोऽपि हता वयम् ॥७४॥ [२३
२६] एतच् छ्रुत्वाऽशुभं वाक्यं प्रत्य्-उवाच वि-भीषणः । [N
ध्रियते मारुतिस् तात मारुत-प्रतिमो जवे ॥७५॥
२७] वैश्वानर-समं तेजो धारयन् प्लवगर्षभः । [२४
त्वाम् एव मार्गयन्न् आस्ते मयेहाऽद्य सह प्र-भो[२] ॥७६॥ [N
२८] ततो वृद्धम् उपाऽऽगम्य वि-नयेनाऽभ्य्-अवादयत् ।
जाम्ब-वन्तं महा-तेजा हनू-मान् मारुताऽऽत्मजः ॥७७॥ [२५
२९] श्रुत्वा हनू-मतो वाक्यं तथा स व्यथितेन्द्रियः ।
पुनर् जातम् इवाऽऽत्मानं मेने प्लवग-पुङ्गवः[४] ॥७८॥ [२६
३०] ततोऽब्रवीन् महा-तेजा हनू-मन्तं स जाम्ब-वान् ।
आ-गच्छ हरि-शार्दूल वानरांस् त्रातुम् अर्हसि ॥७९[४]॥ [२७
३१] भवान् विक्रम-सम्पन्नस् त्वम् एषां परमा गतिः ।
त्वत्-पराऽऽक्रम-कालोऽयं नाऽन्यं पश्यामि कं-चन ८०॥ [२८
३२] ऋक्ष-वानर-वीराणाम् अनीकानि प्र-हर्षय ।
वि-शल्यौ कुरु चाऽप्य् एतौ राघवौ राम-लक्ष्मणौ ॥८१॥ [२९
३३] गत्वा परमम् अध्वानम् उपर्य् उपरि सागरम् ।
हिम-वन्तं नग-श्रेष्ठं हनु-मन् गन्तुम् अर्हसि ॥८२॥ [३०
३४] ततः काञ्चनम् अत्य्-उग्रम् ऋषभं पर्वतोपमम् ।
कैलास-शिखरं चैव द्रक्ष्यसि रिपु-सूदन ॥८३॥ [३१

---

१. रा$_2$-वीरे हि ॥ २. म-नास्ति ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र फ-हनु० । ४. म-नास्ति ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-क्षुद्रवा० । ६. रा$_2$-भ्रातरौ । म-सादितौ ॥ ७. ल$_1$ ल$_2$ ब-पर्वतं ॥ ८. म-नास्ति ॥

३५] तयोः शिखरयोर् मध्ये प्र-दीप्तम् अतुल-प्रभम् ।
सर्वौषधि-युतं श्री-मत् तद् द्रक्ष्यस्य् ओषधि-पर्वतम् ॥८४॥[1] [३२
३६] तस्य वानर-शार्दूल चतस्रो मूर्ध्नि स-प्रभाः ।
ओषधीर् द्रक्ष्यसि वीर दीपयन्तीर् दिशो दश ॥८५॥ [३३
३७] मृत-सञ्जीवनी चैव विशल्य-करणी तथा ।
सुवर्ण-करणी चैव सं-धानी च महौषधी ॥८६॥ [३४
३८] गृहीत्वा हनु-मन् सर्वाः क्षिप्रम् आ-गन्तुम् अर्हसि ।
आ-श्वासय हरीन् सर्वान् प्राणैर् गन्धवहाऽऽत्मज ॥८७॥ [३५
३९] श्रुत्वा जाम्ब-वतो वाक्यं हनु-मान् हरि-पुङ्गवः ।
आऽपूर्यत[2] बलौघेन[3] बारि-पूरैर्[3] इवाऽर्णवः ॥८८॥ [३६
४०] स पर्वत-तटाऽग्र-स्थः पीडयन् पर्वतोत्तमम्[4] ।
हनू-मान्[5] अभवत् तत्र द्वितीय इव पर्वतः ॥८९॥ [३७
४१] हरि-पाद-निमग्नश् च नि-षसाद स पर्वतः ।
४२पू] न शशाक तदाऽऽत्मानम् अव-स्थापयितुं ततः[6] ॥९०॥[7] [३८
N] तस्य पेतुर् नगा भूमाव् उर-गाश् चाऽपि जज्वलुः ।
४२उ] शृङ्गाणि च शिलाश् चैव विनि-पेतुः समन्त-तः ॥९१॥ [३९

तस्मिन् प्र-पीड्यमाने तु भग्न-द्रुम-शिला-तले ।
४३] न शेकुर् वानराः स्थातुं घूर्णमाने नगोत्तमे ॥९२॥[10] [४०
सा घूर्णित-महाद्वारा प्रभग्न-गृह-गोपुरा[11] ।
४४] लङ्का सम्भ्रान्त-रक्षोघा[12] प्र-नृत्तेव[13] बभूव ह ॥९३॥ [४१

---

१. म-नास्ति ॥ २. रा$_1$ल$_1$ल$_2$ ब श्र प्र-आपूर्णोतिव० । ३. रा$_1$ल$_1$ल$_2$ब-०पूर्णैर् । प्र रा$_2$ फ म-वारिवेगैर् ॥ ४. रा$_1$ श्र रा$_2$-०तोपमं । ५. रा$_1$श्र रा$_2$-हनुमान् ॥ ६. म-यतः । ७. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र फ-नास्ति ॥ ८. रा$_2$-भूमौ पन्नगाश् ॥ ९. ल$_1$ल$_2$ब श्र प्र फ-०तटे । १०. रा$_2$-नास्ति ॥ ११. म-०हतोरणा । १२. रा$_1$ ल$_2$ ब श्र प्र रा$_2$-०रक्षौघा । १३. म-नृत्यंतीव ॥

पृथिवीधर-सङ्काशो नि-पीड्य पृथिवी-धरम् ।
N] पृथिवीं क्षोभयामास साऽर्णवां मारुताऽऽत्मजः ॥९४॥ [४२
पद्भ्यां स शैलम् आ-पीड्य बडवा-मुख-वन् मुखम् ।
४५] ननाद च वि-वृत्योग्रं त्रासयन्न् इव राक्षसान् ॥९५॥[1][2] [४७
तस्य नानद्यमा[3]नस्य श्रुत्वा नि-नदम् उत्-तमम् ।
४६] लङ्कायां राक्षसाः सर्वे न शेकुः स्पन्दितुं भयात्॥९६॥ [४८
नमस्-कृत्य स देवेभ्यो मारुतिर् भीम-विक्रमः ।
४७] राघवाऽर्थे परं कर्म कर्तुम् इच्छति स-त्वरः ॥९७॥ [४९
स पुच्छम् उद्-यम्य भुजङ्ग-कल्पं
वि-नम्य पृष्ठं श्रवणौ नि-कुञ्च्य ।
वि-वृत्य वक्त्रं भृशम् उन्-ननाद
४८] खम् उत्-पपाताऽद्भुत-चण्डवेगः॥९८॥ [५०
स वृक्ष-खण्डं तरसाऽऽजिघृक्षच्
छैलाञ् छिलाः प्राकृत-पर्वतेभ्यः ।
बाहूऽऽरु-पातोद्धत-सम्प्रणुन्नास्
N] ते क्षीण-वेगाः सलिले नि-पेतुः ॥९९॥ [५१
स तौ प्र-सार्योरग-भोग-कल्पौ
भुजौ भुजङ्गाऽरि-निकाश-कल्पः ।
ददर्श मेरुं सुर-राज-कल्पो
४९] दिशः प्र-कर्षन्न् इव वायु-पुत्रः । [५२
आ-प्लुत्य वेगात् सहसा जगाम
५०] चक्रं यथा विष्णु-भुज[12]-प्रमुक्तम्॥१००॥ [५३

---

१. म-नास्ति । २. रा$_2$-नास्ति ॥ ३. फ-नानर्दमा० ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-भीमदर्शनः॥ ५. रा$_2$ म-०चण्डविक्रमः ॥ ६. ल$_1$ल$_2$ ब ञ म-वृक्षषण्डं । ७. म-०तवानराश्च । ८. रा$_2$-नास्ति ॥ ९. रा$_2$-०कल्पौ । १०. रा$_2$ स-जगास । ११. रा$_2$ म-वायुसूनुः ॥ १२. रा$_2$-विष्णुकरप्रयुक्तं । म-०जप्रयुक्तम् ॥

स पर्वतान् वृक्ष-गणान् सरांसि
नदीस् तडागानि पुरोत्तमानि ।
स्फीतान् जनांस् तान् अपि सम्प्र[1]-पश्यन्
५१] जगाम वेगाद् अति-चण्डवेगः ॥१०१॥ [५४
आदित्य-पथम् आ-साद्य[2] स जगाम ततोऽम्बरम्[3] । [५५पू
५२] स[4] ददर्श महा[4]-शैलं हिम-वन्तं महा-कपिः[7] ॥१०२॥ [५७उ
नाना-प्रस्रवणोपेतं बहु-कन्दर-निर्झरम् ।
५३] श्वेतै रजत-सङ्काशैः शिखरैश् चारु-दर्शनम् ॥१०३॥ [५८
ततः समा-साद्य महा-नगेन्द्रम्
अतिप्रवृद्धोत्तम-घोर-श्रृङ्गम् ।
ददर्श पुण्यानि तपो-वनानि
५४] सुरर्षिसङ्घोत्तम-सेवितानि ॥१०४॥ [५९
स ब्रह्म-लोकं[6] रजताऽचलं च
शक्राऽऽलयं रुद्र-शर-प्रमोक्षम् ।
हयाऽऽननं ब्रह्म-शिरश् च दीप्तं
५५] ददर्श वैवस्वत-किङ्कराणाम् ॥१०५॥ [६०
वज्राऽऽकरं वैश्रवणाऽऽलयं च
सूर्य-प्रभं सूर्य-निबन्धनं च ।
ब्रह्माऽऽसनं शङ्कर-कार्मुकं च
५६] ददर्श नाभिं च वसुं-धरायाः ॥१०६॥ [६१
कैलासम् उग्रं हिमवच्-छिलां च
तं चर्षभं काञ्चन-श्रृङ्गम् उग्रम् ।

१. रा₂-तत्र प० ॥ २. रा₂-अतिक्रम्य । ३. रा₂ म-०म्बरे । ४. म-ददर्श सहसा शैलं । ५. प्र-महागिरिं ॥ ६. रा₁ ल₁ ल₂ ब ञ प्र-ब्रह्मकोशं ॥ ७. प्र रा₂ फ म-०नशैलम् ।

दीप्तं च सर्वौषधि-सम्प्रयुक्तं
५७] ददर्श सर्वौषधि-पर्वतेन्द्रम् ॥१०७॥ [६३
स तं सम्-ईक्ष्याऽनल-सम्प्रदीप्तं
विसिष्मिये वासव-दूत-सूनुः ।[2]
आ[2]-प्लुत्य तं चौषधि-पर्वतेन्द्रं[2]
N] विवेश यत्रौषधयश् चतस्रः ॥१०८॥ [६४
स योजन-सहस्राणि समा-क्रम्य महा-कपिः । [६५पू
५८] अ-विश्रान्तो महा-तेजा वि-चिकाय महौषधीः ॥१०९॥ [N
ततस् ताः काम-रूपिण्यो महौषध्यो महा-कपिम् ।
५९] वि-ज्ञायाऽर्थिनम् आ-यान्तं तदा जग्मुर् अ-दर्शनम् ११० [६६
स तास् त्व् अ-पश्यन् भृशम् आ-चुकोप
ननाद कोपाच् च वि-वृत्य वक्त्रम् ।
अ-मृ[3]ष्यमाणश् च वि-वृत्य नेत्रे
६०] तं शैल-राजानम् उवाच रोषात् ॥१११॥ [६७
किम् एतद् एवं सु[4]-विनिश्चितं ते
यद् राघवे नाऽस्ति तवाऽनु-कम्पा ।
पश्याऽद्य मद्-बाहु-बलाऽभिभूतं
६१] वि-कीर्णम् आत्मानम् इहाऽद्रि-राज ११२ [६८
स तस्य शृङ्गं परमौषधीकं
स-काञ्चनं धातु-सहस्र-युक्तम् ।[5]
विकीर्ण-कूटं ज्वलिताऽग्र-शृङ्गं
६२] प्र-गृह्य वेगात् सहसो[6]द्-बबर्ह ॥११३॥ [६९

१. रा₂-०संघयुक्तं ॥ २. रा₂-नास्ति ॥ ३. म-अवीक्ष्यमा० ॥ ४. रा₂-भुवि नि० । ५. रा₂-नास्ति ॥ ६. फ-०सोद्ववाह । म-०सोन्ममंथ ॥

स तं समुत्-पाट्य खम् उत्-पपात

वि-त्रास्य लोकान् स-सुराऽसुरेन्द्रान् ।

सं-स्तूयमानः सुर-सिद्ध-सङ्घैर्

६३] जगाम वेगाद् अति-चण्डवेगः ॥११४॥ [७०

स तेन शैलेन भृशं रराज

शैलोत्तमे(?पमो) गन्ध-वहस्य सूनुः ।

सहस्र-धारेण स-पावकेन

६४] चक्रेण विष्णुर् दिवि चो(?वो)दू[1]-यतेन ॥११५ [७२

स भास्कराऽध्वानम् अ[2]भिप्र-पन्नस्

तद् भास्कराऽऽभं शिखरं प्र-गृह्य ।

बभौ तदा भास्कर-सन्निकाशो

N] रवेः सकाशे प्रतिभास्कराऽऽभः ११६ [७१

तं वानराः प्रेक्ष्य मुदा प्र-णेदुः

स चाऽपि तान् प्रेक्ष्य [3]मुदा ननाद ।

तेषां समुत्क्रुष्ट-रवं नि-शम्य

६५] लङ्काऽभि(?भृ)तो भीम-तरं वि-नेदुः ११७[७३

स तं गृहीत्वा नि-पपात तस्मिञ्

छैलोत्तमे वानर-सैन्य-मध्ये ।

हर्य्-उत्तमैस् तैर् अभि-शस्यमानो

६६] वि-भीषणेनाऽपि च शस्यमानः॥११८ [७४

ततस् तु तौ सं-यति राज-पुत्रौ

तं घ्रेयम् आ[4]-घ्राय महौषधीनाम् ।

बभूवतुस् तत्र तदा वि-शल्यौ

६७] संरूढ-सर्व-व्रण-नष्ट-शोकौ ॥११९॥ [७५

---

१. रा₁-बोधितेव ॥ २. रा₂ फ म-अनुप्र० ॥ ३. प्र रा₂ फ-समुन्ननाद ॥ ४. म-गन्धमासाद्य ॥

ततः स वै गन्ध-वहस्य सूनुः
संगृह्य हैमं शिखरं प्र-वृद्धम् ।
जगाम वेगाद् हिम-वन्तम् एव
N] पुनश् च रामेण समा-गतश् च ॥१२०॥ [७१

इत्यार्षे रामायणे युद्ध[1]-काण्डे ओषध्या[2]नयनं नाम
त्रिपञ्चाशः सर्गः ॥५३॥

---

[वं-५४,५५]= [चतुःपञ्चाशः सर्गः] =[दा-७५,७६]

ततोऽब्रवीन् महा-तेजाः सु-ग्रीवो वानराऽधिपः ।
१] अर्थं वि-ज्ञापयन्न् एव हनू-मन्तं महा-बलम् ॥१॥ [१
२पू] यतो हतः कुम्भ-कर्णः कुमाराश् च सहाऽनुगाः ।
३पू] नेदा[3]नीम् उप-संहारं रावणः कर्तुम्[4] अर्हति ॥२॥ [२
.................................................[5]?
४] लङ्काम् अभि-पतन्त्व् आशु[6] प्र-गृह्योल्काः सहस्र-शः॥३॥ [३
ततोऽस्तं-गत आदित्ये[7] रौद्रे तस्मिन् निशा-मुखे ।
५] लङ्काम् अभि-मुखा जग्मुः सोल्काम् ते हरि-यूथपाः ४॥ [४
उल्का-हस्तैर् हरि-गणैः सर्व-तः समभि-द्रुताः ।
६] आ-रक्षाम् ते विरूपाऽक्षा राक्षसा विप्र-दुद्रुवुः[8] ॥५॥ [५

---

१. प्र-लंकाकांडे । २. रा$_2$ फ-अस्वबन्धे ओषध्या० ॥ ३. रा$_2$-इदा० । ४. प्र रा$_2$ फ-प्रातुं ॥ ५.टि०-अत्रत्यः पूर्वार्धः पतित इति संभाव्यते । ६.रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म-०तत्याशु ॥ ७. ल$_1$ ल$_2$ ब फ-आदित्यो ॥ ८. रा$_2$-नास्ति ॥

गो-पुरेषु प्र-तोलीषु रथ्यासु वि-विधासु च ।
७] प्रासादेषु च सं-हृष्टाः ससृजुस् ते हुताऽशनम् ॥६॥
तेषां गृह-सहस्राणि ददाह हुत-भुक् तदा । [६
८] राक्षसानां समा-साद्य सर्वेषां द्वार-रक्षिणाम् ॥७॥ [१३उ
हेम-चित्र-तनुत्राणां स्रग्दामा[1]ऽम्बर-धारिणाम् ।
९] शीधु-व्या[2]कुलिताऽक्षाणां मद-मन्थर-गामिनाम्[3] ॥८॥ [१४
कान्ताऽऽलम्बित-वस्त्राणां शत्रु-सङ्घात-भेदिनाम्[4] ।
१०] गदाऽसि[5]शूल-हस्तानां खादतां दशनान् अपि ॥९॥ [१५
११पू] शयनेषु महाऽर्हेषु शयितानां तथैव च ।
१४पू] त्रस्तानां गच्छतां चैव पुत्रान् आ-दाय स-त्वरम्॥१०॥ [१६
तेषां दश-सहस्राणि रक्षसां पुर-वासिनाम् ।
१२] अदहत् पावकस् तत्र जज्वाल च पुनः पुनः ॥११॥ [१७
१७उ] सानु-मन्ति महाऽर्हाणि गम्भीर-[6]गुण-वन्ति च ।
N] हेमचित्राऽर्कचन्द्राणि तपनीय-निभानि च ॥१२॥[7] [१८
रत्न-चित्र-गवाऽक्षाणि साऽधिष्ठानानि सर्व-शः ।
१८] मणि-विद्रुम-चित्राणि स्पृशन्तीऽव भास्-करम् ॥१३॥ [१९
क्रौञ्च-बर्हिण-वीणानां भूषणानां च निः-स्वनैः ।
१९] नादितान्य् आ-कुलानि स वेश्मान्य् अग्निर् ददाह वै १४ [२०
ज्वलनेन परीऽतानि तोरणानि चकाशिरे ।
२०] वि-द्युद्भिर् इव नद्धानि मेघ-जालानि पुष्करे ॥१५॥ [२१
स धूम-माली दीप्ताऽर्चिः सं-बभूव हुताऽशनः ।

---

१. प्र-नास्ति । २. अ प्र-मदविप्लवगा० । रा$_2$म-मदविह्वलगा० । ३. फ-नास्ति ॥ ४. अ फ-नास्ति । ५. रा$_2$-गदात्रिशू० ॥ ६. ल$_2$ अ ब-०गुरुवन्ति । ७. रा$_2$-१२-शश्लोकादारभ्य १६-शपूर्वार्धं यावन्नास्ति ॥ ८. म-०णरावाणां ॥ ९. फ म-घर्मगे ॥

N] युगाऽन्त इव भूतानि दिधक्षुर् अतुल-प्रभः ॥१६॥ [N
ज्वाला-माला-परिक्षिप्तो ददाह पवनाऽन्वितः ।
N] कृष्ण-वर्त्मा ततो घोरो लङ्कां रावण-पालिताम् ॥१७॥ [N
तस्यां तु दह्यमानायां लङ्कायां वानरोत्तमाः ।
N] बभूवुर् हृष्ट-मनसो नदन्तश् च महा-बलाः ॥१८॥ [N
ते राक्षसान् बहूंस् तत्र प्र-गृह्य हरि-पुङ्गवाः ।
N] [1]चिक्षिपुर् ज्वलने दीप्ते[2] किं-चिद् दग्धान् भयाऽऽतुरान् १९ [N
स्पष्टश् चटचटा-शब्दो [3]भवनानां वि-[4]शुश्रुवे ।
N] धूम-जाल-परीऽतानां वि-षमश् चित्र-भानुना [5]॥२०॥ [N
N] [क्व-चित् सं-भूषितान्य् एव दृश्यन्ते भवनानि वै[6]॥२१॥] [N
बहु-रत्न-समाकीर्णां नाना-[7]धातु-समन्विताम् ।
N] ददाह हुत-भुग् लङ्कां तीव्र-वायु-समन्वितः ॥२२[8]॥ [N
युगाऽन्ताऽग्नि-[9]समं वह्निम् उत्थि(द्-स्थि)तं लोम-हर्षणम् ।
N] ददृशुर् व्योम-निलया लङ्कायां मुदिता भृशम् ॥२३॥ [N
काञ्चनानि वि-मानानि मुक्ता-वैडूर्य-वन्ति च ।
N] दह्यमानानि राजन्ते [10]जले प्रत्यग्नि-वत् तदा ॥२४॥ [N
धूम-जाल-परी[11]ऽतांऽग्यो ब[11]हु-धा दहनाऽर्दिताः ।
N] [12]वि-दह्यन्ते स्म राक्षस्यो[12] वह्नि-ज्वाला-भयाऽऽ[13]कुलाः२५॥ [N

---

१. रा$_2$ म-विक्षिपुर् । २. रा$_2$-तीव्रे ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ-भुव० । ४. म-च शु० । ५. म-नास्ति ॥ ६. म-नास्ति । अत्र मलित इति संभाव्यते । यथास्थिते नैराकांक्ष्यादर्शनात् ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-नानायुक्स० । ८. रा$_2$-नास्ति ॥ ९. म-०ग्निनिभं ॥ १०. रा$_2$-भिन्नाः-जज्ञे ॥ ११. फ म-०तास्या बभूवुर् । १२. अ रा$_2$ फ म-राक्षस्यो विनदंति स्म । १३. म-०भयार्दिताः ॥

वि-मानेषु प्र-सुप्ताश् च दह्यमाना वराऽङ्गनाः ।
२१] त्यक्ताऽऽभरण-संसक्ता हाहेत्य्[2] उच्चैर्[3] वि-चुक्रुशुः ॥२६ [२३
काश्-चिद् भर्तॄन् समा-लिङ्ग्य निद्रा-पान-वशं-गताः ।
N] यथा सुप्तास् तथा दग्धाः शयनेषु[4] वराऽङ्गनाः[5] ॥२७॥ [N
काश्-चिन् निद्रा-परीऽताऽक्ष्यः प्र-मृज्य नयनान्य् अथ[6] ।
N] आ-दीप्तं गृहम् आ-लक्ष्य शिशून् आ-दाय दुद्रुवुः[7] ॥२८॥ [N
तत्र चाऽग्नि-परीऽतानि नि-पेतुर् भुवनान्य् अथ[8] ।
२२] वज्रि-वज्र-हतानीऽव शिखराणि मही-भृतांम्[9] ॥२९॥ [२२
तानि निर्-भिद्यमानानि[10] दूर-तः प्र-चकाशिरे ।
२३] हिमवच्-छिखराणीऽव दह्यमानानि सर्व-शः[11] ॥३०॥ [२४
हर्म्याऽग्रैर् दह्यमानैश् च तलैः प्र-ज्वलितैस् तथा ।
२४] रात्रौ सा शुशुभे लङ्का किं-शुकैर् इव पुष्पितैः ॥३१॥ [२५
उष्ट्रैर् मुक्तैर् गजैर् मुक्तैर् मुक्तैश् च तुरंगैर् अपि ।
२५] बभूव लोको लङ्कायां भ्रान्त-ग्राह इवाऽर्णवः ॥३२॥ [२६
अश्वं मुक्तं गजो दृष्ट्वा क-चिद् दुद्राव वेगितः[12] ।
२६] भीतः सोऽपि गजं दृष्ट्वा क-चिद् दग्धो[13] न्य्-अवर्तत[13] ३३ [२७
अपरे हेम-कक्ष्याश् च सं-नद्धा वर-वारणाः ।
N] त्रस्त-बन्धाः समा-क्षिप्य येन केन प्र-दुद्रुवुः ॥३४॥[14] [N
पानीयं पातुम् इच्छन्तः परिभ्रमण-कर्षिताः ।
N] प्रति-बिम्बं जले दृष्ट्वा तम् अग्निम्[15] इति मेनिरे ॥३५॥ [N

---

१. अ प्र रा₂ फ-०णसंयोगान् । २. रा₁ ल₁ ल₂ ब रा₂-हाहेति च । ३. म-नास्ति ॥ ४. रा₂-शरणेषु । ५. फ म-०नास्ति ॥ ६. रा₂-नास्तथा । ७. फ-नास्ति ॥ ८. रा₂ फ-उत । ९. प्र रा₂ फ-धरावृतां ॥ १०. रा₂ फ म-निर्दह्यमानानि । ११. रा₂ फ म-सर्वतः ॥ १२. रा₁ ल₁ ल₂ ब अ-०तं । १३. ल₁-दुद्राव वेगितः ॥ १४. रा₂-नास्ति ॥ १५. रा₁ ल₁ ल₂ ब अ प्र फ-अग्निर् ॥

प्रासादेषूऽत्थि(द्-स्थि)तो ह्य् अग्निः सम्प्र-दीप्तो व्य्-अरोचत ।
N] लङ्कां द्रष्टुम् इवाऽऽरूढो दग्धाम् इति विभा-वसुः ॥३६॥[1] [N
सा बभूव मुहूर्तेन हरिभिः पीडिता पुरी ।
२७] लोकस्याऽस्य क्षये घोरे प्र-दीप्तेव वसुं-धरा ॥३७॥ [२९
स्त्री-पुंसोश् चाऽपि मोहेन व्य्-अक्तिर् नाऽऽसीद् वि-नेदुषोः[1] ।
२८] नादिता च धरा तत्र शुश्रुवे दश-योजनम् ॥३८॥ [३०
प्रदग्ध-कायान् सम्-अरे निर्[2]-गतान् राक्षसान् बहिः ।
२९] सहसाऽभिप्र-पेतुस् [3]तान् क्रोशन्तो हरयो भृशम् ॥३९॥ [३१
उत्[4]-क्रुष्टो वानराणां च राक्षसानां च निः-स्वनः ।
३०] दिशो दश सम्-उद्रं च पृथिवीं च व्य्-अनादयत् ॥४०॥ [३२
प्र-गाह्य च महाऽऽत्मानौ ताव् उभौ राम-लक्ष्मणौ ।
३२] अ-सम्भ्रान्तौ जगृहतुर् धनुषी धन्विनां वरौ ॥४१॥ [३३
ततो वि-स्फारयामास रामस् तद् धनुर् उत्-तमम्[5] । [३४पू
३३] भग-वान् इव सं-क्रुद्धो रुद्रो वेद[6]-मयं धनुः ॥४२॥ [३५पू
राक्षसोत्क्रु[7]ष्ट-घोषश् च वानराणां च निः-स्वनः । [३६पू
३५] ज्या-घोषश् चाऽपि रामस्य त्रयो[8] व्य्-आपुर् दिशो दश४३[३७
तस्य कार्मुक-मुक्तैश् च शरैस् तत् पुर-गोपुरम् ।
३६] पावकेन च निर्-दग्धम् अपतच् छत-शो भुवि ॥४४॥ [३८
ततो राम-शरान् दृष्ट्वा वि-मानेषु गृहेषु च ।

---

१. रा$_2$-नास्ति ॥ २. रा$_1$ ल$_1$ ल$_2$ ब-निर्दग्धान् । ३. रा$_1$ ल$_1$ ल$_2$ ब अ-ते ॥ ४. रा$_1$ ब म-उत्क्रुष्टं । ल$_1$ ल$_2$ अ प्र-उत्क्रुष्टं । फ-तत्क्रुष्टं ॥ ५. अतः परमधिकः पाठः—रा$_2$ म-लक्ष्मणश्च महातेजास्तथा विस्फारयद्धनुः । ६. ल$_1$-वेधमयं । रा$_2$-देवमयं ॥ ७. प्र रा$_2$-०सोत्क्रुष्ट० । ८. म-त्रिभिर्व्याप्ता ॥

३७] सं-[1]नादो राक्षसेन्द्राणां तुमुलः सम्-अपद्यत ॥४५॥[2] [३९
आ-दिष्टा वानरेन्द्रेण सु-ग्रीवेण महाऽऽत्मना ।
४०] आ-स्थिता द्वारम् आ-श्रित्य प्लव-गा युद्ध-काङ्क्षिणः ४६॥ [४१
यश् च नो वि-तथं कुर्यात् तत्र[3] शत्राव् उप-स्थिते[3] ।
४१] स हन्तव्योऽभिसं-[4]हृत्य बल-वान् यः पलायते[4] ॥४७॥ [४२
इत्य् एवं निश्चिताऽर्थेषु सुग्रीव-वश-वर्तिषु ।
४२] स्थितेषु द्वारम् आ-श्रित्य रावणं मन्युर्[5] आऽविशत् ४८॥ [४३
तस्य जृम्भित-विक्षेप[6]-व्यामर्षाद् अति-संकुलैः[7] ।[8]
४३] रूप-वान् इव रुद्रस्य मन्युर् गात्रेष्व् अजायत ॥४९॥ [४४
४४पू] स नि-कुम्भं च कुम्भं च कुम्भकर्णाऽऽत्मजाव् उभौ ।
४५उ] प्रेषयामास सं-क्रुद्धः सं-ग्रामं राक्षसाऽधिपः ॥५०॥ [४५
४६पू] शशास चैव सर्वांस्[10] तान् राक्षसान् राक्षसोऽधिपः ।[11] [४७पू
N] महा-बलान् महा-कायान् सर्व-युद्ध-विशारदान् ।
४६उ] त्वरितं[12] गच्छतेत्य् एवं क्रुद्धः[13] सिंह इवोन्-नंदन्[13] ॥५१॥ [N
तेन सं-नोदितास् ते तु तदा प्रज्वलिताऽऽयुधाः । [N
४७] लंकाया निर्-ययुर् द्वारान् नदन्तो भीम-[14]निस्वनाः ॥५२ [४८उ
कुम्भकर्णाऽऽत्मजौ वीरौ परि-गृह्य[15] समन्त-तः[15] ।

---

१. भ-शर्वर्यां । २. अतः परमधिकः पाठः—अ भ-तेषां सन्नाद्यमानानां सिंहनादं च कुर्वतां । भ-हन्यमानास्ततश्चैवं दह्यमानाश्च वह्निना । राक्षसा निलयं जग्मुर्मेघा वातेरिता इव ॥ अर्दिता बाणजालैश्च निशितै रजनीचराः । बभ्रमुश्चस्खलुर्नेदुः समुत्पेतुर्निशाचराः ॥ ३. भ-न वा युद्धयेत वानरः । ४. भ-०सम्प्रेक्ष्य राजशासनदूषकः ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-मृत्युर् । रा$_2$-मन्युम् ॥ ६. म-०विक्षेपे व्या० । भ-०क्षेपाद् व्या० । रा$_1$ ब अ-व्यामर्शाद् । ७. भ-आकुलात्मनः । ८. रा$_2$-नास्ति ॥ ९. रा$_2$ फ म-सुमहाबलान् । १०. ब-नास्ति । ११. रा$_2$ फ म भ-नास्ति । १२. म भ-राक्षसा । १३. म-सिंहनादं चकार ह । भ-सिंहनादं व्यमुंचत ॥ १४. प्र रा$_2$ फ-भीमविक्रमाः । म-घोरदर्शना । भ-०निःस्वनं ॥ १५. म भ-नास्ति ।

N] बहु-सैन्य-परीवारौ शीघ्रं रावण-चोदितौ [1]॥५३॥ [N
तयोर् आभरण-स्थाभिर् भाभिः स्वाभिश् च सर्व-तः [1]।
N] चक्रुस् ते स-प्रभं व्योम हरयश् चाऽग्निना पुनः ॥५४॥ [४९
तत्र ताराऽधिपस्याऽऽभास् तारा[2]णां च तथैव भाः ।
N] तयोर् आ-भरणे[3]भ्यस् तु प्र-दीप्तम् इव सर्व-तः[4] ॥५५॥ [५०
तत्र चाऽर्ध-प्रदीप्तानां गृहाणां सागरैः[4] पुनः ।
N] भासा संसक्त-पातालश् चलोर्मिः शुशुभे भृशम्॥५६॥[5] [५२
N] तद् वानर-बलं घोरं राक्षसानां त[6]था बलम् । [५४उ
४८उ] ददृ[7]शे ज्वलितं[7]-प्राऽऽसं किंकिणी-शत-शोभितम् ५७॥ [५५पू
भीमाऽश्व-रथ-मातङ्गं हय-वाहन-संकुलम् । [५३उ
४९] दीप्त-शूल-गदा-शक्ति-खड्ग-मुद्गर-धारिणम् [8]। [५४पू
N] हेमजालाचितं(?त-)व्योम(?व्यामं)निशितान्तपरश्वधम् ५८ [५५उ
५०पू] व्याघूर्णित-महाशस्त्रं घन-संसक्त-कार्मुकम् [10]।
N] माल्य-गन्ध-समुत्सेकं समाचित-महाबलम् ।
५०उ] घोर-शूर-जं[11]नाऽऽकीर्णं महद् अम्बुद-निःस्वनम्॥५९॥ [५६
तद् दृष्ट्वा बलम् आ-यातं राक्षसानां महत् तदा ।
५१] सं-चचाल कपीनां तु बलम् उच्चैर् ननाद च [12]॥६०॥ [५७

---

१. म भ-नास्ति ॥ २. फ-तारकाणां तथैव च । ३. म-०भ्यश्च ज्वालानामपि सर्वशः ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-सागराम्बुना । ५. रा$_2$-नास्ति ॥ ६. रा$_2$-तथैव च । ७. रा$_1$-०ते ज्वलितं प्रासं । रा$_2$-तद्दात्रौ ज्व० । भ-उद्यतज्वलित० ॥ ८. रा$_1$ ल$_1$ल$_2$ब अ-नास्ति । अतः परमधिकः पाठः—भ-पताकाध्वजसंयुक्तमुत्तमायुधभूषितं । ९. रा$_2$ म-०तं व्योम निशितन्तु प० । भ ०लावृतभुजं व्यावेष्टितप० ॥ १०. रा$_2$-नास्ति । ११. ब म-०रसमाकीर्णं । भ-०शूलसमाकीर्णं ॥ १२. अतः परमधिकः पाठः—भ-प्रगृहीतमहावृक्षं समुत्थितमहाशिलं । समतिष्ठत्सुदुर्धर्षं परस्परकृतोद्यमं ॥

जवेनाऽऽक्रम्य च पुनस् तद् बलं रक्षसां महत् ।
५३] अभ्य्-अयात् प्रत्य्-अरि-बलं [2]पतं-गा इव पावकम् ॥६१॥ [५८
५४पू] तेषां भुज-परा[3]ऽऽमर्शाद् [4]आमृष्ट-कनकाऽङ्गदः । [५९पू
N] ऋक्ष-[5]नाद-स्वनश् चित्रो दीप्ति-[6]मान् छुशुभे भृशम् ६२॥[7] [N
N] [8]सर्वे ते बलिभिर् भिन्ना वि-चेरुस् तत्र राक्षसाः । [N
N] तथैवाऽप्य् अपरे तेषां कपीनाम् अभि-[9]ताडिताः ।[7] [६१पू
५६उ] प्र-[10]वीरान् अभि-तो जघ्नू राक्षसान् अन्तरे स्थितान् ६३ [६३उ
घ्नन्तम् अन्यं जघानाऽन्यः पतितोऽन्यम् अपातयत् [11]।
५८] गर्हमाणं जगर्हाऽन्यो [12]दशन्तम् अदशत् [12]तथा ॥६४॥ [६६
देहीऽत्य् अन्यो ददात्य् अन्यो ददामीऽत्य् अपरः पुनः[13]।
६१] [14]क्लिश्नासि किं मा हिंसीऽति तत्राऽन्योऽन्यम् अभाषत६५ [६७
तद् उद्यत-गदा-प्राऽऽस-[15]शक्ति-शूलाऽसि-संकुलम् ।
६०] प्राऽवर्तत महा-रौद्रं युद्धं वानर-रक्षसाम् ॥६६॥ [६८
राक्षसान् दश सप्तेति वानरा जघ्नुर् आ-हवे ।
६२] वानरान् अपि सप्ताऽष्टौ दश राक्षस-पुङ्गवाः ॥६७॥ [६९
प्रतिलम्बित-वस्त्रांश् च प्रमुक्त-कवचाऽऽयुधान् ।

---

१. रा$_2$-बलवांस् । २. ल$_1$ ल$_2$ ब भ-पतंग ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र रा$_2$ फ म-०र्षाद् । ४. ल$_2$-अमृ० । ५. रा$_1$ ल$_1$ ल$_2$ ब श्र-ऋक्षनादः स्व० । प्र-ऋक्षवादस्व० । ६. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-दीप्तमाशु० । फ-दीप्तानाशु० । ७. रा$_2$-नास्ति ॥ ८. म-शिलाद्रुमविभिन्नाऽङ्गा । ९. फ-अभिलक्षिताः । १०. भ-प्रवरानभिसंजघ्नू ॥ ११. भ-क्रियमानास्तथा चान्ये ततस्ते पतिताः पृथक् । १२. प्र-नास्ति ॥ १३. प्र भ-नास्ति । १४. रा$_2$-क्लिष्टोऽसि ॥ १५. म भ-०समुष्टिशू० ॥

६३] राक्षसान् सम्प्र-लम्ब्याऽऽशु वानराः पर्य्-अवारयन् ६८[[1]] [७०
वानरा राक्षसाश् चैव व्यति-षक्ताः परस्-परम् ।
६४] आ-विष्टा इव युध्यन्तश् चक्रुस् तुमुलम् अद्भुतम् ॥६९॥[[2]] [N
वं-८५] प्र-वृत्ते सं-कुले व्यर्थं तस्मिन् वीर-वर-क्षये । [दा-७६
१] अङ्ग-दोऽकम्पनं वीरम् आ-ससाद रणोत्कटः ॥७०॥[[3]] [१
आ-हूय सोऽङ्ग-दम् अपि ताडयामास वेगितः ।
२] गदयाऽकम्पनः श्री-मान् स चचालाऽचलोपमः ॥७१॥[[4]] [२
स सं-ज्ञां प्राऽऽप्य तेजस्वी चिक्षेप शिखरं गिरेः ।[[5]]

---

१. रा₂म भ-अतः परं सर्गसमाप्तिः—इति लंकाकांडे उल्काहरणे संकुलयुद्धं नाम सर्गः ॥ २. रा₂म भ-नास्ति ॥ ३. रा₂-नास्ति ॥ ४. भ-गदया चांगदः पूर्वं संचचाल भृशं हतः ॥ ५. अतः परमधिकः पाठः— भ-अर्दितो हि प्रहारेण वज्रकंठोऽपतद्भुवि । वज्रकंठे हते तस्मिन्नंगदेन महात्मना ॥ ततस्तं पतितं दृष्ट्वा भ्रातरं निहतं रणे । रथेनाभ्यपतत् क्षिप्रमथ संकंपनस्तदा ॥ अंगदं बहुभिर्बाणैः शितैर्विव्याध वेगितः । शरीरदारणैस्तीक्ष्णैः कालाग्निसदृशप्रभैः ॥ क्षुरक्षुरप्रनाराचैर्वत्सदंतशिलीमुखैः । कर्णिशल्यविपाटैश्च बहुभिश्च शितैः शरैः ॥ अंगदः प्रतिविद्धांगो वालिपुत्रः प्रतापवान् । रथमश्वान्धनुश्चास्य ममर्द तरसा बली ॥ ततः संकंपनः शीघ्रमसिचर्म समाददे । उत्पपात दिवं चापि वेगवानविचारयन् ॥ तं क्षिप्रं दूरमुत्क्षिप्य दोर्भ्यामादाय चांगदः । करेण तस्य तं खड्गं समाकृष्य ननाद च ॥ तस्याथ गलके खड्गं निचखान तदांगदः । यज्ञोपवीतच्छेदेन चिच्छेद कपिकुंजरः ॥ स प्रगृह्यासिमालुत्य विनदन् खे मुहुर्मुहुः । वालिपुत्रो महावीर्यो दुद्राव प्रहसन्निव ॥ आयसीं तु तदा वीरो गदामादाय राक्षसः । शोणिताक्षः समाविध्य अंगदं समुपाद्रवत ॥ प्रजंघस्तु तदा वीरो यूपाक्षसहितो बली । रथेन हि ययौ क्रुद्धो वालिपुत्रं महाबलम् ॥ तयोर्मध्ये कपिश्रेष्ठः शोणिताक्षप्रजंघयोः । विशाखयोर्मध्यगतः पूर्णचन्द्र इवाबभौ ॥ अंगदं परिरक्षंतौ मैंदो द्विविद एव च । तस्य तस्थतुरभ्यासे परस्परजिघांसया ॥ अथोदीर्णान्महाकायान्प्रतीयुस्तान्महाबलान् । राक्षसा वानरश्रेष्ठानसिबाणगदाधराः ॥ एतस्मिन्नेव काले तु यूपाक्षो राक्षसैर्वृतः । असिशक्तिगदाकुंतैर्द्रावयामास राक्षसः ॥

७] मूर्ध्नि सम्प्राऽपतत् तस्य स पपात हतो भुवि ॥७२॥ [३
हत-प्रवीरा मथिता राक्षसेन्द्रस्य सा चमूः ।
३४] जगामाऽभि-मुखं[1] तूर्णं कुम्भकर्ण-सुतो यतः[2] ॥७३॥ [३६
३५पू] आ-पतन्तीं च वेगेन कुम्भस् तां सान्त्वयंश्[3] चमूम् । [३७
N] अथोत्-क्रुष्ट(?ष्टो)महा-वेगैर् लब्ध-लक्ष्यैः प्लवं-गमैः[4] ॥७४ [३८पू
स-धनुर् धन्विनां श्रेष्ठो वि-रथः सु-समाऽऽहितः ।
३७] मुमोचाऽऽशीविष-प्रख्यान् छरान् हरिषु वीर्य-वान् ७५ [३९

---

त्रयाणां वानरेन्द्राणां त्रिभिः सह निशाचरैः । संसक्तानां बभौ युद्धमेकभावगतात्मनाम् ॥ ते तु वृक्षान्समादाय चिक्षिपुः सुमहाबलाः । खड्गेन तान्प्रचिच्छेद प्रजंघोऽथ महाबलः॥ रथानश्वान् गजांश्चैव ते प्रचिक्षिपुराहवे । शरौघैस्तान्प्रचिच्छेद यूपाक्षो राक्षसर्षभः ॥ मैन्दद्विविदसृष्टांस्तान् द्रुमानुत्पाट्य वीर्यवान् । बभंज गदया मध्ये शोणिताक्षः प्रतापवान् ॥ उद्यम्य विपुलं खड्गं परमर्मनिकृंतनम् । प्रजंघो वालिनः पुत्रमभिदुद्राव वेगितः ॥ तमभ्यासगतं दृष्ट्वा वालिपुत्रो महाबलः । निजघानाश्वकर्णेन द्रुमेणातिबलस्तदा ॥ बाहुं चास्य सनिस्त्रिंशमाजघान स मुष्टिना । अंगदोऽस्य प्रजंघस्य स पपात क्षितावसिः ॥ तं दृष्ट्वा पतितं भूमौ खड्गं वैडूर्यसन्निभम् । मुष्टिं प्रकल्पयामास वज्रकल्पं महाबलः ॥ ललाटे स महावीर्यमंगदं वानरर्षभम् । आजघान महातेजा मुहूर्तं संचचाल सः ॥ स संज्ञां प्राप्य तेजस्वी वालिपुत्रः प्रतापवान् । प्रजंघस्य शिरः कायाद्दारयामास मुष्टिना ॥ तं यूपाक्षोऽश्रुपूर्णाक्षः पितृव्यं वीक्ष्य सूदितम् । अवरुह्य रथात्क्षिप्रं क्षीणेषुः खड्गमाददे ॥ तमापतंतं सम्प्रेक्ष्य यूपाक्षं प्लवगर्षभः । जघानोरसि संक्रुद्धो जग्राह च महाबलः ॥ गृहीतं भ्रातरं दृष्ट्वा शोणिताक्षः प्रतापवान् । आजघान महातेजा वक्षसि द्विविदं तथा ॥ स तथाभिहतस्तेन विचचाल मुहुर्मुहुः । उद्यतां च पुनस्तस्य मुष्टिं दृष्ट्वाथ राक्षसः ॥ द्विविदः शोणिताक्षं तं विददार नखैस्तदा । निष्पिपेष च रोषेण क्षितावाविध्य वीर्यवान् ॥ यूपाक्षमभिसंक्रुद्धो मैन्दो वानरयूथपः ।

१. रा२ ल१ ल२ ब अ प्र फ भ-०मुखी । २. म-नास्ति ॥ ३. रा२-स्वां । भ-स्वकां । ४. रा२-नास्ति ॥

तस्य तच् छुशुभे भूयः स-शरं धनुर् उत्-तमम् ।
४०] वि-द्युतेवाऽऽगताऽर्चिष्मद् द्वितीयेन्द्रधनुर् यथा ॥७६॥[1] [४०
तेन हाटक-वर्णेन पत्रिणा चित्र-वाससा ।
४१] आकुण्डल-विकृष्टेन विव्याध द्वि-विदं बली ॥७७॥ [४१
स तथाऽभि-हतस् तेन विप्रमुक्त-पदः स्फुरन्[2] ।
४२] नि-पपाताऽद्रिकूटाऽऽभो वि-ह्वलो गाढ-वेदनः ॥७८॥ [४२
मैन्दस् तु भ्रातरं दृष्ट्वा वि-ह्वलं गाढ-वेदनम्[3] ।
४३] कुम्भम् अभ्य्-अपतत् क्षिप्रं प्र-गृह्य महतीं शिलाम्॥७९॥ [४३
तां शिलां साल-जालं च तस्मै चिक्षेप रक्षसे ।
४४] तां[4] बिभेद तदा कुम्भः[5] प्र-मुक्तां[6] पञ्चभिः शरैः॥८०॥ [४४
सं-धाय सायकं तीक्ष्णं मुमोच सु-समाहितः ।
४५] वक्षस्य् अपि च तेनाऽसौ मैन्दं विव्याध राक्षसः॥८१॥ [४५
स वानर-वरस् तेन मैन्दः सु-दृढम् आ-हतः ।
४६] रुधिराऽक्तस् ततो भूमौ नि-पपाता[7]ऽभि-मूर्च्छितः ॥८२ [४६
ततोऽङ्गदस् तौ पतितौ मातुलाव् अभि-जग्मिवान् ।
४७] अभि-दुद्राव वेगेन कुम्भम् उद्-यम्य वै शिलाम्॥८३॥ [४७
तम् आ-पतन्तं वेगेन कुम्भः[8] पञ्चभिर् आयसैः ।
N] त्रिभिर्[9] चाऽन्यैर् बिभेदाऽऽशु मातङ्गम् इव तोमरैः ८४ [४८
स शरौघ-विभिन्नाऽङ्गो वालि-पुत्रः स-पादपम्[10] ।

---

१. भ-विद्युद्भिरावृतं व्योम्नि शक्रचापमिवापरं ॥ २. ल$_1$,ल$_2$ब फ-स्फुटन् ॥ ३. भ-नास्ति ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ भ-तं । ५. रा$_1$ भ-क्रुद्धः । ६. ल$_1$ ल$_2$-०क्तं । भ-प्रहसन् ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ फ-०पात हि मू० । प्र भ-०पात ह मू० ॥ ८. रा$_2$-कुम्भश्च त्रिभिः सायकैः । ९. रा$_2$-त्रिभिरन्यैर् ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-सपादपः । भ-प्रतापवान् ।

N] शिला-वर्षम् अचिन्त्याऽऽत्मा ववर्ष सु-चिरं रिपौ ॥८५ [५०
ततश्[1] चिच्छेद तान् वृक्षान् बिभेद च शिलाः शरैः ।
N] कुम्भकर्णाऽऽत्मजः शूरो[2] वालि-पुत्र-समीरितान् ॥८६॥ [५१
समुद्-यम्य शिलाः क्रुद्धम् आ-पतन्तं सु-वेगितम् ।
४८] भ्रुवोर् विव्याध बाणाभ्याम् उल्काभ्याम्[3] इव कुञ्जरम् ॥८७[५२
अङ्ग-दः पाणिना नेत्रे प्र[4]-मृज्य रुधिरोक्षिते ।
४९] सालम्[5] आ-सन्नम्[6] एका(?के)न्ते(?न) परि-[7]जग्राह पाणिना ८८[५३
तम् इन्द्र-केतु-प्रतिमं सालं[8] साल-भुजो बली ।
५०] उत्-ससर्जाऽङ्ग-दो वेगात् तं दूराद् अन्ववैक्षत ॥८९॥ [५५
स चिच्छेद शितैर् बाणैः सं[9]-पत्रैः काय-भेदिभिः ।
५१] कुम्भकर्णाऽऽत्मजो वृक्षं सु-पुङ्खैर् दशभिः शरैः[10] ॥९०॥ [N
ततः स कुम्भः सं-धाय शरान् अग्निशिखोपमान् ।
५२] अङ्ग-दस्य महा-वेगान् मुमोचोरसि राक्षसः ॥९१॥ [N
स वज्राऽशनि-संस्पर्शैः शरैः काञ्चन-भूषणैः ।
५३] वि-क्षतः शर-वेगाऽऽर्त्तः पपात च मुमोह च ॥९२॥ [N
अङ्ग-दं व्यथितं दृष्ट्वा सीदन्तम् इव कुञ्जरम् ।
५४] दुरा-धर्षं राज-पुत्रं धूम्रो ह्य् अभ्य्-अपतद् रुषा[11] ॥९३॥ [५७
N] अथ धूम्रः शिला-हस्तः कोप-संरक्त-लोचनः ।
रिरक्षिषन्[12] अभ्य्-अपतद् अङ्ग-दं वानरर्षभः[13] ॥९४॥ [६०
५५] जाम्ब-वांश् च सु-षेणश् च वेग-दर्शी च वानराः ।
कुम्भम् अभ्य्-अद्रवन् दृष्ट्वा मेघा गिरिम् इवाऽसितम् ९५ [६१

---

१. भ-स प्रचि० । २. भ-श्रीमान् ॥ ३. भ-अंकुशेनेव ॥ ४. रा$_2$ फ म-विमृज्य । भ-पिधाय । ५. म-शालम् । ६. रा$_2$-तु वृक्षं । ७. रा$_2$-प्रतिज० ॥ ८. रा$_2$ म भ-शालं शाल० ॥ ९. रा$_2$ म भ-सप्तभिः । १०. रा$_2$-नास्ति ॥ ११. रा$_2$-नास्ति ॥ १२. अ प्र-रिरक्षिष्यन् । भ-रिरक्षुर् । १३. म-नास्ति ॥

९६] सम्-ईक्ष्याऽऽपततस् तांस् तु वानरेन्द्रांस् तरस्विनः ।
अवारयत् स बाणौघैर् वायुर् घोरान् इवाऽम्बु-दान् ९६ [६२
९७] तस्य बाण-पथं प्राऽऽप्य न शेकुर् अति-वर्तितुम् ।
वानरेन्द्रा महाऽऽत्मानो वेलाम् इव महोर्मयः ॥९७॥ [६३
९८] तांस् तु दृष्ट्वा हरीन् सर्वाञ् छर-वृष्टि-निवारितान् ।
अङ्ग-दं पृष्ठ-तः कृत्वा भ्रातृ-जं स महाऽऽहवे ॥९८॥ [६४
९९] अभि-दुद्राव सु-ग्रीवः कुम्भकर्णाऽऽत्मजं रणे ।
शैलं सानु-चरस्याऽर्थे वेग-वान् केसरी यथा ॥९९॥ [६५
६०] उत्-पाट्य वि-विधान् वृक्षान् अश्व-कर्णान् धवान् अपि ।
N] अन्यांश् च वि-विधान् वृक्षान् सम्प्र-चिक्षेप रक्षसे १०० [६६
तां छादयन्तीम् आ-काशं वृक्ष-वृष्टिं दुरा-सदाम् ।
६१] कुम्भकर्ण-सुतश् चित्रैः शरैश् चिच्छेद नैकधा १०१ [६७
अति-लक्ष्यैर्ण शीघ्रेण कुम्भेन नि-शितैः शरैः ।
६२] आ-चितास् ते द्रुमाः पेतुर् यथा घोराः शत-घ्नयः १०२ [६८
द्रुम-वर्षं ततश् छिन्नं दृष्ट्वा कुम्भेन वीर्य-वान् ।
६३] वानराऽधिपतिः श्री-मान् महा-सत्त्वो न विव्यथे ॥१०३ [६९
निर्-भिद्यमानः सहसा सहमानश् च ताञ् छरान् ।
६४] कुम्भस्य धनुर् आ-च्छिद्य बभञ्जेन्द्राऽऽयुधोपमम् १०४ [७०
अव-प्लुत्य ततः शीघ्रं कृत्वा कर्म च दुष्-करम् ।
६५] अब्रवीत् कुपितः कुम्भं भग्न-शृङ्गम् इवर्षभम् ॥१०५॥ [७१

---

१. म-नास्ति । २. भ-आजघान ॥ ३. प्र रा₂ फ-अभिव० ॥ ४. रा₁ ल₁ ल₂ ब अ प्र म भ-भ्रातृव्यं ॥ ५. रा₁ ल₁ ल₂-सानुचर० । ६. रा₁-नास्ति ॥ ७. प्र स₂ फ म-शैलान् ॥ ८. रा₁ ल₁ ल₂ ब-शैलवृष्टिं ॥ ९. रा₂-०लक्ष्येण । १०. रा₁ ल₁ ल₂ ब अ-शरा रेजुर् । भ-द्रुमा रेजुर् ॥ ११. रा₁ ल₁ ल₂ ब अ प्र फ-चित्रं ॥ १२. रा₂ म भ-सुदुष्करं । १३. भ-इव द्विपं ॥

निकुम्भाऽग्रज वीर्यं ते बलं च महद् अद्भुतम् ।
६६] सं-नतिश् च प्र-भावश् च तव वा रावणस्य वा ।।१०६।। [७२
प्र-कामं चल-चित्त-घ्न माया-बल-विशारद[1] ।
६७] एकस्[2] त्वम् इह जातोऽसि[3] पितुश् च बलवत्-तरः १०७ [७३
त्वम् एको हि महा-वीर्यः शूल-हस्तोऽरि-मर्दनः[4] ।
६८] त्रि-दशानाम् अपि क्रुद्धो वि-जेता[5] रण-मूर्धनि ।।१०८।। [७४
वर-दानात् पितृव्यस् ते समेतान्[6] दैत्य[7]-दानवान् ।
६९] कुम्भ-कर्णस्य वीर्येण संहते वि-बुधान् अपि[8] ।।१०९[9]।। [७६
७०उ] धनुषीऽन्द्रजितस् तुल्यः प्र-तापाद् रावणस्य च ।
७१पू] त्वम् एको रक्षसां मध्ये श्रेष्ठोऽसि बल-वीर्य-तः।।११०।। [७७
वि-मर्दम् आवयोर् एतं समेतस्य मम त्वया[10] ।
७२] अद्य पश्यन्तु भूतानि शक्र-शम्बरयोर् इव[11] ।।१११।। [७८
कृतम् अ-प्रतिमं कर्म दर्शितं चाऽस्त्र-कौशलम् ।
७३] पातिताश् च प्र-वीरा ये त्वयाऽनुपम-तेजसः[12] ।।११२।। [७९
उपाऽऽलम्भ-भयाच् चैव नाऽसि वीर हतो मया ।
७४] कृत-कर्मा परि-श्रान्तो वि-श्रान्तः पश्य मे बलम्[13] ।।११३।। [८०
तेन सुग्रीव-वाक्येन साऽवमानेन मानिनः ।

---

१. रा$_2$-प्रभावबलकृत्यज्ञ माया० । भ-प्रह्लादबलवृत्रेन्द्रवलिसूर्ययमोपम । २. रा$_2$-एषस् । ३. रा$_2$-पूज्योसि । भ-जेता वै ॥ ४. प्र फ-०स्तो विम० । भ-०स्तमरिन्दमं । ५. प्र रा$_2$ फ म-निर्जेता ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$-समेतो । भ-बाधते । ७. म-वै सदानवान् । भ-देवदा० । ८. रा$_1$ ल$_1$ ल$_2$ ब अ-संहतान्दानवानपि । भ-सदृशस्त्वं महाबल । ९. रा$_2$-नास्ति ॥ १०. रा$_2$-नास्ति । ११. रा$_1$ ल$_1$ ल$_2$ ब-अपि ॥ १२. म भ-०सा ॥ १३. रा$_2$-नास्ति ॥

७८] अग्नेर् आज्याऽऽहुतेर् यद्-वत् तेजस् तस्य व्य्-अवर्धत ११४
८१उ] ततः कुम्भः समुत्-पत्य सु-ग्रीवम् अभि-पत्य च । [८१
आ-जघानोरसि क्रुद्धो वज्र-वेगेन मुष्टिना ॥११५॥ [८६पू
८२] चर्म प्र-स्फुटितं तस्य प्र-सुस्राव च शोणितम् ।
स तु मुष्टिर् महा-वेगः पतितो ह्य् अस्थि-सञ्चये ॥११६॥[८७
८३] वेगेन महता तस्य तेजः समुद्-अपद्यत ।
वज्र-निष्पेष-सम्भ्रान्ता ज्वाला मेरौ यथा गिरौ॥११७॥ [८८
८४] स तथाऽभि-हतस् तेन सु-ग्रीवो वानरेश्वरः ।
मुष्टिं सं-वर्तयामास वज्र-वेगं महा-बलः ॥११८॥ [८९
८५] ज्वलिताऽनल-सङ्काशं रवि-मण्डल-सन्निभम् ।
८६पू] मुष्टिं स पातयामास कुम्भस्योपरि वानरः ॥११९॥ [९०

---

१. रा२-०हुतस्यैव व्यवर्धत महाबली । म-०हुतस्येव तेजस्तस्य त्वव० । २.अतः परमधिकः पाठः—भ-युद्धायाभिमुखश्चैवमभ्ययाद्राक्षसर्षभः । सुग्रीवः कौम्भकर्णिश्च युद्धाय समुपस्थितौ ॥ गजाविवापीतमदौ निश्वसंतौ मुहुर्मुहुः । अन्योन्यगात्रमथितौ कर्षन्तावितरेतरम् ॥ कम्पयंतौ महावीरौ पदभारैर्मुहुर्मुहुः । मुष्टिभिर्जानुभिश्चैव जघ्नतुश्च परस्परम् ॥ उल्लिखन्तौ च दंष्ट्राभिः सिंहाविव विरेजतुः । रुधिरोक्षितसर्वांगौ पुष्पिताविव किंशुकौ ॥ तौ मुहूर्त्तं समाश्वस्य पांसुना चावगुंठितौ । करैर्नागकरप्रख्यैर्भूय एवाभिपेततुः ॥ वानरा राक्षसाश्चैव प्रेक्षका निश्चलाः स्थिताः । इतरेतरयोर्वीर्यं कथयंतः परस्परम् ॥ कपिराक्षसराजानौ भर्तृकार्ये व्यवस्थितौ । सधूमा मुखतो ज्वाला विमुंचंतावुभौ श्रमात् ॥ तयोः पादावगाढाच्च निम्नदेशाभवन्मही । विघूर्णिततरंगश्च चुक्षुभे वरुणालयः ॥ ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि । पातयामास वेगेन दर्शयन्नुदधेस्तलम् ॥ ततः कुम्भनिपातेन जलराशिः समुत्थितः । विन्ध्यमन्दरसंकाशो विससर्प समन्ततः ॥ ३. रा२-०पात्य । भ-उपगृह्य । ४. म-नास्ति ॥ ५. रा२-हृदि सं० । भ-अस्थिमंडले । ६. रा२-नास्ति ॥ ७. रा२-नास्ति ॥ ८. म-नास्ति । ६. प्र-नास्ति । अतः परमधिकः पाठः—भ स तु तेन प्रहारेण विह्वलो हृदि पीडितः । रुधिरार्द्रो रणे कुम्भो निर्वपत् पावकार्चिषः ॥

मुष्टिनाऽभि-हतस् तेन नि-पपाताऽऽशु[1] राक्षसः ।
८७] लोहिताङ्ग इवाऽऽकाशाद्[2] दीप्त-रश्मिर् यदृच्छया॥१२०॥[९२
कुम्भस्य पततो रूपं भग्नस्योपरि मुष्टिना ।
८८] ईश्वरेणाऽभि-पन्नस्य ददृशुर् गो-पतेर् इव ॥१२१॥[3] [९३
ततो[4] हते तत्र[5] महा-पराऽऽक्रमे
प्लवं-गमानाम् ऋषभेण सं-युगे ।
मही स-शैला वि-चचाल साऽऽपगा
८९] भयं च रक्षांस्य् अधिकं समाऽविशन्॥१२२॥[९४

इत्यार्षे रामायणे युद्ध[6]-काण्डे कुम्भ-वधो[7] नाम
चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

[वं–५६]= [ पञ्चपञ्चाशः सर्गः ] =[दा–७७]

नि-कुम्भो भ्रातरं दृष्ट्वा सु-ग्रीवेण नि-पातितम् ।
१] प्र-दहन्न्[8] इव कोपेन सु-ग्रीवं प्रत्यवैक्षत[9] ॥१॥ [१
कृत-संग्रामम् आ-तिर्यग् दत्त-पञ्चाऽङ्गुलं शुभम् ।[10]
२] आ-ददे परि-घं वीरो[11] नगेन्द्रशिखरोपमम् ॥२॥ [२
पि-नद्धम् आ-यतैः पट्टैर् हेम-ज्वलितम् आ-यतम्[12] ।[13]
३] यमदण्डोपमं घोरं रक्षसां भय-नाशनम् ॥३॥ [३

---

१. प्र रा₂ म-०पात स । २. ल₁-०काशं । प्र रा₂-०काशे ॥ ३. रा₂-नास्ति ॥ ४. रा₂-कुम्भे । भ-तस्मिन् । ५. रा₂-तेन ॥ ६. ब प्र रा₂ भ-लंकाकाण्डे । म-युद्धपर्वणि ॥ ७. म-निषूदितं । भ-रणे हतं । ८. म-प्रहसन् । ९. म-पर्यवै० । भ-समुदैक्षत ॥ १०. रा₂-नास्ति । भ-ततः स्रग्दामसंछन्नं दत्त० । ११. रा₂ म-घोरं ॥ १२. प्र फ म भ-आयसं । १३. रा₂-नास्ति ॥

तम् आ-विध्य महा-तेजा महाशक्रध्वजोपमम् ।
४] वि-ननाद विवृत्ताऽऽस्यो नि-कुम्भो भैरवं रवम् ॥४॥ [४
उरो-गतेन निष्केन भुज-स्थैर् अपि चाऽङ्ग-दैः ।
५] कुण्डलाभ्यां सु-तप्ताभ्यां[1] स्रजा च सु-विचित्रया ॥५॥ [५
नि-कुम्भो भूषणैर् भाति परि-घेणाऽऽयतेन[2] च ।
६] यथेन्द्र-धनुषा मेघः स-विद्युत् स्तनयित्नु-मान्[3] [4]॥६॥ [६
परिघाऽग्रं तथाऽऽस्फोटच्य वर-ग्रन्थि[5] महा-स्वनम् ।
७] जज्वाल च स-धूमोऽत्र[6] सं-घर्षाद् इव पावकः ॥७॥ [७
नगर्या विटपा-वत्या[7] गन्धर्व-नगरैर् अपि ।
N] सहसैवाऽमरा-वत्या[8] सर्वैश् च भवनैः[9] सह [10]॥८॥ [८
स-तारागण-नक्षत्रं[11] स-चन्द्रं स-महाग्रहम्[12] ।
N] निकुम्भपरिघोद्धूतं भ्रमतीऽव नभस्-तलम् ॥९॥ [९
दुरा-धर्षः स सं-कोपात् परिघाऽऽभरण-प्रभः ।
N] कपीऽन्धनो[13] निकुम्भाऽग्निर् युगाऽन्ताऽग्निर् इवोत्थितः[14] १०[१०
राक्षसान्[15] वानराश् चैव[16] न शेकुर् मथितुं[17] भयात् ।
८] हनु-मांस् तु विवृत्तोरस्[18] तस्थौ प्रति-मुखो बली ॥११॥ [११

---

१. अ प्र-स त० । फ-स मृष्टाभ्यां । म भ-च मृष्टाभ्यां ॥ २. रा$_2$ भ-०णायसेन । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०यित्नुना । म-०यित्नुवान् । ४. रा$_2$-नास्ति ॥ ५. म-०ग्रंथिं । भ-वातग्रंथि । ६. ब-सधूम्रोऽत्र ॥ ७. भ-लंकया सार्धं । ८. भ-सह चैवा० । ९. भ-भुवनैः । १०. रा$_2$-नास्ति ॥ ११. रा$_1$ल$_1$ल$_2$ ब अ-प्र रा$_2$-०नक्षत्रैः भ-ताराग्रहन० । १२. रा$_1$ ल$_1$ ल$_2$ अ फ-तु म० । ब प्र-च म० ॥ १३. प्र रा$_2$फ भ-कोपेन्धनो । म-कोपोक्षितो । १४. अतः परमधिकः पाठः—भ-अभिगम्य गृहीताश्च निपतन्त्युत्पतन्ति च । हरिराजस्तथा दृष्ट्वा तापितान्हरियूथपान् ॥ हनुमन्तमथोवाच शीघ्रं नाशय राक्षसान् ॥ १५. रा$_2$ फ म भ-राक्षसा । १६. म-चाऽपि । १७. रा$_2$-सर्पितुं । म भ-स्पंदितुं । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०त्ताक्षस् । रा$_2$-वृत्योरुस् । म-०वृत्तोरस्को ॥

परिघोपम-बाहुस्[1] तु परि-घं भास्कर-प्रभम् ।
९] बली बल-वतस् तस्य पातयामास वक्षसि ॥१२॥ [१२
क्षिप्तस्[2] तस्योरसि व्यू-ऊढे परि-घः शत-धा गतः ।
१०] वि[3]-शीर्यमाणः प्र-भया ह्य् उल्का-शतम्[4] इवाऽम्बरे॥१३॥ [१३
स तु तेन विनिर्[5]-भिन्नो वि-चचाल महा-कपिः ।
११] परि-घेण समा-धूतो यथा भूमि-चलेऽचलः ॥१४॥ [१४
स तथाऽभि-हतस् तेन हनू[6]-मान् प्लवगर्षभः[7] ।
१२] मुष्टिं सं-वर्तयामास वज्र-वेगोपमं बली ॥१५॥ [१५
तम् उद्-यम्य महा-[8]वीरो नि-कुम्भं प्रति वीर्य-वान्[9] ।
१३] मुष्टिं सं-पातयामास वेग-वांस तं[10]ज्-जिघांसया ॥१६॥ [१६
ततः प्र-स्फोट[11]य चर्माऽस्य प्राऽवर्तत च शोणितम् ।
१४] मुष्टिना तेन सं-जज्ञे ज्वाला वि-द्युद् इवोत्थि(द्-स्थि)ता१७ [१७
स तु तेन प्र-हारेण व्यू-अजृम्भत मुहुर्-मुहुः । [१८पू
१५] आशूऽत्-प्लुत्य नि-जग्राह हनू-मन्तं स राक्षसः[12] ॥१८॥ [N
ततो रक्षोभिर् उत्-क्रुष्टं[13] भीमं लङ्का-गतैर् अपि । [N
१६] नि-कुम्भेनोद्-धतं दृष्ट्वा हनू-मन्तं जयैषिणा[14] ॥१९॥ [१९उ

---

१. रा$_2$ भ-०हुः स ॥ २. रा$_2$-स्थिरस् । फ-स्थिते । म-स्थिरे । भ-भिन्नेषु-स्थितस् । ३. रा$_2$-प्रकीर्य० । भ-विकीर्य० । ४. म-शुष्काशनिर् ॥ ५. म-विभिन्नाङ्गो । भ--प्रहारेण ॥ ६. रा$_1$ ल$_1$ ल$_2$ब अ-परिघेण प्लवंगमः । प्र-हनु० । ७. रा$_2$ भ-नास्ति ॥ ८. प्र म-०वीर्यो । फ-०वेगो । ९. अ-नास्ति । १०. प्र फ म-स विमर्दिषुः ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-पुस्फोट ॥ १२. रा$_2$-शरस्तांश्चाभिजग्राह हनू० । अतः परमधिकः पाठः—भ-जघान शंखदेशे च मुष्टिना कपिकुंजरम् । स तु तेन प्रहारेण किंचिन्मूर्च्छाऽन्वितोऽभवत् ॥ तं मूर्च्छितमादाय गन्तुमैच्छत राक्षसः ॥ १३. ल$_2$ब प्र फ म-उत्कृष्टं । १४. अतः परमधिकः पाठः—भ-अपरे त्वब्रुवंस्तत्र दृष्ट्वा तं रक्षसां गणाः । आ दाहको गृहीतोऽयं निकुंभेन बलीयसा ॥

स तथाऽऽह्रियमाणस् तु कुम्भकर्ण-सुतं तदा ।
१८] नि-जघानोरसि क्रुद्धो वज्र-वेगेन मुष्टिना ॥२०॥ [२
उत्-क्षिप्य हनु-मांस् तं च निष्-पिपेषाऽऽशु वीर्य-वान्। [२२पू
१९] वि-मोक्षयित्वा चाऽऽत्मानं क्षितिम् अभ्या-ससाद ह ॥२१
हनु-मान् उत्-पपाताऽऽशु नि-कुम्भं मारुताऽऽत्मजः । [२१
२०] समुत्-पत्य च वेगेन नि-पपाताऽस्य वक्षसि ॥२२॥ [२२उ
परि-गृह्य च बाहुभ्यां परि-वृत्य शिरो-धराम् ।
२१] [1]अपातयत् [1]तस्य शिरो भैरवं नदतः [2]स्वनम् ॥२३॥ [२३
अथ वि-नदति सूदिते नि-कुम्भे
पवन-सुतेन बभूव तत्र युद्धम् ।
दशरथसुत-राक्षसेन्द्र-[3]चम्वोर्
२२] भृश-तरम् आगत-रोषयोः सु-भीमम् ॥२४॥[4] [२६

इत्यार्षे रामायणे युद्ध-[5]काण्डे निकुम्भ-वधो नाम
पञ्चपञ्चाशः सर्गः ॥५५॥

---

१. रा$_2$-सोऽपातयच्चास्य । भ-उत्पाटयामास । २. रा$_1$ल$_1$ल$_2$ब श्र प्र-स्वरम् । भ-मुहुः ॥ ३. रा$_2$-०सेश्वरयोश्च। भ-०तवाहिनी समग्रा। ४. प्र-नास्ति ॥ ५. ब प्र रा$_2$ भ-लंकाकाण्डे । फ-युद्धपर्वणि ॥

[वं-५७]= [षट्पञ्चाशः सर्गः] =[दा-७८]

नि[1]-कुम्भं नि-हतं[2] श्रुत्वा कुम्भं च विनि-पातितम् ।
१] रावणः परमाऽमर्षी प्र-जज्वाल यथाऽनलः ॥१॥ [१
नैर्ऋतः क्रोध-शोकाभ्यां द्वाभ्यां तु[3] परि-मूर्च्छितः । [२पू
२] ततो[4] वि-चिन्त्य मनसा दश-ग्रीवश् चिरात् स्वयम् । [N
खर-पुत्रं विशालाऽक्षं मकराऽक्षम् अचोदयत् ॥२॥ [२उ
३] गच्छ पुत्र मयाऽऽज्ञप्तो बलेन महताऽऽवृतः ।
राघवं लक्ष्मणं चैव जहि तांश्[5] च वनौकसः ॥३॥ [३
४] शल्यम् उद्-धर मे क्षिप्रं स्व-पौरुष-संमावृतः[6] ।
अयं ते शक्र-जिद् वीर पृष्ठ-तोऽनु-गमिष्यति ॥४॥[7] [N
५] खरस्य सदृशो वीर्ये त्वम् अस्य् अमित-विक्रमः ।
तथा[8] दिव्याऽस्त्र-विच् चैव माया-शत[9]-विशारदः ॥५॥ [N
६] एवम् उक्त्वा खर-सुतं[10] समुत्था(द्-स्था)याऽऽसनात् स्वयम्[11] ।
द्रुतं गन्धैश् च माल्यैश् च वासोभिश् च सम्-अर्चयत् । ६ [N
७] रावणस्य वचः श्रुत्वा शूर[12]-मानी निशा[13]-चरः ।
बाढम् इत्य् अब्रवीद् धृष्टो मकराऽक्षः[14] खराऽऽत्मजः[14] ॥७॥ [४
८] सोऽभि-वाद्य दश-ग्रीवं कृत्वा चाऽभि[15]-प्रदक्षिणम् ।[16] [५पू
रथम् आ-नीयतां शीघ्रं सैन्यं चेत्य्[17] अब्रवीद् द्रुतम्[17] ॥८॥ [६उ

---

१. ब-नास्त्ययं सर्गः । २. रा$_1$ ल$_2$ अ प्र-तु हतं । रा$_2$-च हतं ॥ ३. रा$_2$ म-च । ४. रा$_2$ फ भ-ततः संचिन्त्य । म-अथ संचिन्त्य ॥ ५. म-तौ सवनौकसौ ॥ भ-चाथ व० ॥ ६. रा$_2$-०षमुपाश्रितः । भ-०षसमाश्रितः । ७. अ-नास्ति ॥ ८. रा$_2$ म-त्वं च । भ-बली । ९. म-मायायुद्धवि० ॥ १०. प्र फ म-भ-स्रुतं ॥ ११. प्र रा$_2$ फ म भ-स्वयं ॥ १२. रा$_2$ म-शूरो मानी । १३. अ-विशारदः । प्र रा$_2$फ म भ-खरात्मजः । १४. प्र रा$_2$ फ म भ ०क्षो निशाचरः ॥ १५. रा$_2$म भ-चापि प्र० । १६. अतः परमधिकः पाठः—भ-निर्जगाम गृहाच्छु-भ्राद्रावणस्याज्ञया शनैः । आदिशच्च बलाध्यक्षं खरपुत्रो महाबलः ॥ १७. रा$_2$-चवाब्रवीत्त्वरन् । प्र फ-चेत्यब्रवीत्त्वरन् । म-आहूयतां महत् । भ-चाहूयतामिति ॥

१०] तस्य तद् वचनं श्रुत्वा बलाऽध्यक्षो निशा-चरः ।
स्यन्दनं च बलं चैव समीपं समुपाऽनयत् ॥९॥[1] [७

११] प्र-दक्षिणं रथं कृत्वा ह्य् आ-रुरोह निशा-चरः ।
सूतं सं-चोदयामास[2] शीघ्रं समभि[3]-वाहय ॥१०॥ [८

१२] अथ तान् राक्षसान् सर्वान् मकराऽक्षोऽब्रवीद् इदम् ।
आगच्छत, प्र-यास्यामः[4], पुरस्[5]-तो मम राक्षसाः ॥११॥ [९

१३] अहं राक्षस-राजेन रावणेन महाऽऽत्मना ।
आ-ज्ञप्तः सम्-अरे हन्तुं ताव् उभौ राम-लक्ष्मणौ ॥१२॥ [१०

१४] अद्य रामं वधिष्यामि[5] लक्ष्मणं च निशा-चराः ।
शाखा-मृगं च सु-ग्रीवं वानरांश् च शरोत्तमैः[6] ॥१३॥ [११

१५] अद्य शूल-निपातैश् च [7]वानराणां महा-चमूम् ।
आ-दहिष्यामि सम्प्राऽऽप्य शुष्केन्धनम् इवाऽनलः ॥१४॥[१२

१६] मकराऽक्ष-वचः श्रुत्वा ते च घोरा निशा-चराः ।
सर्वे नानाऽऽयुधोपेता बल-वन्तोऽति-वेगिताः ॥१५॥ [१३

१७] ते काम-रूपिणः शूरा दंष्ट्रिणः पिंगलेक्षणाः ।
मातङ्गा इव नर्दन्तो ध्वस्त-केशा भयानकाः ॥१६॥ [१४

१८] परि-वार्य महा-[8]काया महा-कायं खराऽऽत्मजम् ।
अभि-जग्मुस् तदा[9] हृष्टाश् चालयन्तो [10]वसुं-धराम् ॥१७॥ [१५

१९] शंख-भेरी-सहस्राणाम् आ-हतानां [11]तु सर्व-तः ।
२०पू] क्ष्वेडिताऽऽस्फोटितानां च तत्र शब्दो महान् अभूत्[10]॥१८॥[12][१६

---

१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब-नास्ति ॥ २. फ म-संनोद० । ३. रा$_{2}$-मामति-वाहय । भ-याहीति शंसितः ॥ ४. रा$_{2}$-प्रयास्यध्वं प्रेरिता । भ-०म पुरस्तान् ॥ ५. रा$_{1}$ ल$_{1}$ ल$_{2}$-हनिष्यामि । ६. म-नास्ति ॥ ७. रा$_{1}$ ल$_{1}$ ल$_{2}$ अ प्र फ-नास्ति ॥ ८. रा$_{2}$-०कायं राक्षसास्ते । भ-महामायं महात्मानं । ९. रा$_{1}$ ल$_{1}$ ल$_{2}$ अ प्र-मुदा । १०. म-नास्ति ॥ ११. रा$_{2}$-च । १२. अतः परमधिकः पाठः—

प्र-भ्रष्टोऽथ करात् तस्य प्र-तोदः सारथेस् तदा ।
२४] पपात सहसा चैवं[1] राक्षसस्य[2] रथ-ध्वजः[2] ॥१९॥ [१७
तस्य[3] ये रथ-युक्तास् ते हया विक्रम-वर्जिताः ।
२५] चरणैर् आ-कुलैर् गत्या साऽश्रु[4]पात-मुखा ययुः ॥२०॥ [१८
प्र-वाति पवनस् तस्य स-पांशुः खर-दारुणः[5] ।
२६] निर्-याणे[6] चाऽति-रौद्रस्य मकराऽक्षस्य दुर्-मतेः ॥२१॥ [१९
तानि दृष्ट्वा निमित्तानि राक्षसा वीर[7]-संमताः ।
२७] अ-सञ्चिन्त्य गताः सर्वे यत्र तौ राम-लक्ष्मणौ ॥२२॥ [२०
घन[8]-गज-महिषाऽङ्ग-तुल्य-वर्णाः
समर-मुखेष्व्[9] अ-सकृच् छराऽसि[9]-भिन्नाः ।
अहम् अहम् इति युद्ध-लालसास् ते
N] रजनि-चरा[10]: परि-चुक्रुशुर्[10] नदन्तः ॥२३॥ [२१

इत्यार्षे रामायणे युद्ध[11]-काण्डे मकराऽक्ष-निर्याणं नाम
षट्पञ्चाशः सर्गः ॥५६॥

---

१२ अतः परमधिकः पाठः—भ-समारूढो रथं दिव्यं दीप्तानलशिखोपमम् । रणोपकरणैः सर्वैः कीर्णं हेमपुरस्कृतम् ॥ युक्तं बृहद्भिस्तुरगैर्जाम्बूनद-विभूषणैः ॥ स दंशितः शरी खड्गी किरीटी रुक्मकुंडलः । शुशुभे राक्षस-श्रेष्ठः सूर्यश्लिष्ट इवाम्बुदः ॥ वृतः स बलिभिर्वीरै राक्षसैर्घोरदर्शनैः । विनि-र्ययौ रणे धीरः यियासुर्यमसादनम् ॥ १. रा₂-तस्य । २. रा₂-०स्य रथाद् ध्वजः । म-राक्षसः सहजानुभिः ॥ ३. रा₂-तस्याथ रथ० । भ-तस्य ते वर० । ४. रा₂फ म-साश्रु० ॥ ५. रा₂-खरनिस्वनः । ६. रा₂-निर्वाति ॥ ७. प्र रा₂ फ म भ-वीर्यसं० ॥ ८. भ-वन० । ९. भ-०खेऽथ सकृद्ददासि० । १०. भ-०निवराः परिबभ्रमुर् ॥ ११. प्र रा₂ भ-लंकाकाण्डे ॥

निर्-गतं मकराऽक्षं ते दृष्ट्वा वानर-पुङ्गवाः ।[1]
१] आ-प्लुत्याऽऽप्लुत्य सहसा योद्धु-कामा व्यव-स्थिताः[2] ॥१॥ [१
ततः प्र-वृत्तं युद्धं तु तुमुलं लोम[3]-हर्षणम्[2] ।
२] निशाचर-प्लवङ्गानां देवानां दानवैर् इव[4] ॥२॥ [२
वृक्ष-मूल-निपातैश् च बाण[5]-पातैश् च सं-म (?त) तैः (?तम्)[6] ।
३] अन्योऽन्यं पोथयन्ति स्म तदा[7] कपि-निशाचराः ॥३॥ [३
पट्टिसैर्[8] भिण्डि-पालैश् च खर-पुत्रेण वानराः ।
६] सम्भ्रान्त-मनसः सर्वे दुद्रुवुर् भय-पीडिताः ॥४॥ [६
तान् दृष्ट्वा राक्षसाः सर्वे द्रवमाणान् वनौकसः ।
७] नेदुस् ते सिंह-वद् धृष्टा युध्यन्तो जित-काशिनः ॥५॥ [७
वि-द्रवत्सु तदा तेषु वानरेषु समन्त-तः ।
८] रामस् तान् वारयामास शर-वर्षेण राक्षसान् ॥६॥ [८
वारितान्[11] राक्षसान् दृष्ट्वा मकराऽक्षो निशा-चरः ।
९] क्रोधात् काल-समाविष्टो वचनं चेदम् अब्रवीत्[12] ॥७॥ [९
काऽसौ रामः सु-दुर्बुद्धिर् येन मे नि-हतः पिता ।
१०] जन-स्थान-गतः पूर्वं साऽनुजः स-परिच्छदः ॥८॥ [N
अद्य गन्ताऽस्मि वैरस्य पारं वै रजनी-चराः[12] ।

---

१. ब-नास्त्ययं सर्गः । २. प्र-नास्ति ॥ ३. रा२-रोम० । ४. रा१ ल१ ल२-अपि ॥ ५. रा१ ल१ ल२ अ प्र फ म भ-शिलापरिघपातैः । ६. अतः परमधिकः पाठः—रा२ फ भ-प्रासमुद्गरदण्डैश्च निर्घातैरायसैस्तथा । ७. रा२-कदनं कपियूथानां चक्रुस्ते रजनीचराः । अतः परमधिकः पाठः—अ प्र फ भ-शक्तिशूलगदाप्रासैः तोमरैश्च निशाचराः ॥ ८. रा२-शरौघैर् । भ-पट्टिशैर् । ९. फ-बाणपातैश्च संततं ॥ १०. रा१ ल१ म-दृष्ट्वा ॥ ११. रा२-विषण्णान् । १२. रा१-नास्ति ।

११] सु-हृदां चैव सर्वेषां नि-हतानां रणाऽजिरे ॥९॥ [N
हत्वा रामं सु-दुर्बुद्धिं लक्ष्मणं च नराऽधमम् ।
१२] तयोः शोणित-निष्यन्दैः करिष्ये सलिल-क्रियाम्॥१० [N
एवम् उक्त्वा महा-बाहुर् युद्धे[1] स[1] रजनी-चरः ।
१३] आऽलोकयत तत् सर्वं बलं राम-दिदृक्षया ॥११॥ [N
आ-हूयमानो बहुभिर्[2] वानरैर् बल-शालिभिः ।
१४] युद्धाय सु[3]-महातेजा रामाद् अन्यं न चेच्छति ॥१२॥ [N
मार्ग-माणस् तदा रामं बल-वान् रजनी-चरः ।
१५] रथेनाऽम्बुद-घोषेण व्य्-अचरत् ताम् अनीकिनीम् १३ [N
दृष्ट्वा रामं[4] स दूरे-स्थं लक्ष्मणं च महा-रथम्(?थः) ।
१६] सेषुणा पाणिनाऽऽहूय ततो वचनम् अब्रवीत् ॥१४॥ [N
तिष्ठ राम मया सार्धं द्वन्द्व-युद्धं प्र-यच्छ[5] मे ।
१७] त्याजयिष्यामि[6] ते प्राणान् धनुर्-मुक्तैः शितैः शरैः १५॥ [१०
यन्[7] मया दण्डकाऽरण्ये पितरं हतवान् असि ।
१८] अन्-आगसं स्व-कर्म-स्थं स्मृत्वा कोपो[8] वि-वर्धते ॥१६ [११
दह्यन्ते चाऽपि गात्राणि[9] दुर्-आत्मन् मम राघव ।
१९] यन् मया हि न दृष्टस् त्वं तस्मिन् काले महा-वने[10] ॥१७॥ [१२
दिष्ट्याऽसि गोचरं[11] राम त्वं प्राऽऽप्तो मम दर्शने ।
२०] कांक्षितस्य क्षुधाऽऽर्तस्य सिंहस्येवेतरो[12] मृगः ॥१८॥ [१३
अद्य मद्-बाण-वेगेन प्रेतानां[13] विषयं गतः ।
२१] ये त्वं[14] आजौ[14] नि-हताः शूरास् तैः सहो[15]ऽद्य समेष्यसि १९ [१४

१. भ-युद्धेप्सू ॥ २. रा$_{1}$ ल$_{1}$ ल$_{2}$ म भ-बलिभिर् । ३. म-च म० । भ-स म० ॥ ४. अ म-रामं सुदू० । रा$_{2}$-रामं सुदुर्धर्षं ॥ ५. भ-प्रवर्तय । ६. रा$_{2}$ त्याजयिष्यामि त्वां प्राणैर् ॥ ७. रा$_{2}$ म भ-यत्तदा । ८. भ-कोपोभिव० ॥ ९. अ प्र रा$_{2}$ फ म भ-तेऽद्याऽपि चाऽङ्गानि । १०. भ-महाहवे ॥ ११. भ-दर्शनं प्राप्तो मम राम रणाजिरे । १२. अ-०जनाः । फ म-०तरे मृगाः ॥ १३. भ-प्रेतराड्विषयं । १४. रा$_{2}$ फ म भ-र्वयाजौ । १५. भ-सह त्वं ॥

बहुनाऽत्र[1] किम् उक्तेन शृणु राम वचो मम ।
२२] पश्यन्तु सकला[2] लोकास् त्वां च मां च रणाऽजिरे ॥२०॥ [१५
अस्त्रैर्[3] वा गदया वाऽपि बाहुभ्यां वा महाऽऽहवे ।
२३] अभ्य्-अस्तं येन यद् राम वर्ततां तेन नौ[4] मृधम्[5] । [१६
तेन मां प्रति-युध्यस्व यदि जातोऽसि सत्-कुले ॥२१॥
२४] अद्य मद्-बाण-निर्भिन्नं स्रस्ताऽङ्गं क्षतजोक्षितम् ।
क्रव्याऽद-संघाः कर्षन्तु रणे रेणु-परिष्कृतम् ॥२२॥ [N
२५] मद्-बाहु-गोचर-गतः साम्प्रतं न भविष्यसि । [N
मकराऽक्ष-वचः श्रुत्वा रामो दशरथाऽऽत्मजः ।
२६] अब्रवीत् प्र-हसन् वाक्यम् उत्तरोत्तर-वादिनम् ॥२३॥ [१७
चतुर्दश-सहस्राणि रक्षसां त्वत्-पिता च सः ।
२७] त्रि-शिरा दूषणश् चैव हता मे दण्डके वने ॥२४॥[6] [१९
स्व्[7]-आशितास् तव मांसेन गृध्र-गोमायु-वायसाः ।
२९] भविष्यन्त्य्[8] अद्य ते पाप तीक्ष्णतुण्डनखाऽऽयुधाः ॥२५॥ [२०
रुधिराऽऽर्द्र-मुखा हृष्टा रक्तपक्षाऽण्डजाश्[9] च ये ।
३०] खे[10] गता वसु-धां चैव भ्रमिष्यन्ति समन्त[11]-तः ॥२६॥ [२१
कत्थसे किं वृथा मूढ[12] बहून्य् अ-सदृशानि तु ।
३१] न रणे शक्यते जेतुं विना युद्धेन वाग्-बलात् ॥२७॥[13] [१८

---

१. भ-०ना वा । २. अ प्र रा$_2$ फ म-लोकाः समरे त्वां मां चैव ॥ ३. रा$_1$ ल$_1$ ल$_2$ अ प्र-अस्त्रैश्च । ४. प्र रा$_2$ फ-नो युधि । ५. भ-वर्ततां तेन वा युद्धमभ्यस्तं चापि यत्त्वया ॥ ६. अतः परमधिकः पाठः— भ-त्वामद्य निहनिष्यामि यदि तिष्ठसि संयुगे॥ ७. भ-स्वादुना ८. भ-अद्य तृप्ता भविष्यन्ति ॥ ९. भ-ह । १०. भ - खं । ११. भ-ये चान्ये पिशिताशिनः ॥ १२. भ-रक्षो । १३. अतः परमधिकः पाठः—भ-एवमुक्त्वा महाबाहुः संधाय धनुषि शरम् । आकर्णपूर्णमाकृष्य चिक्षेपाहितवक्षसि ॥ तमापतन्तं संप्रेक्ष्य शरमन्तक-

एवम् उक्तस् तु रामेण खर-पुत्रो निशा-चरः[1] ।
३२] बाणौघान् मुमुचे तस्मै राघवाय रणाऽजिरे ॥२८॥ [२२
ताञ्[2] छरांञ्[3] छर-वर्षेण रामश् चिच्छेद नैकधा ।
३३] नि-पेतुर्[4] भुवि ते छिन्ना रुक्म-पुङ्खाः सहस्र-शः ॥२९॥ [२३
तद् युद्धम् अभवत् तत्र समेत्याऽन्योऽन्यम् ओजसा ।
३४] खर-राक्षस-पुत्रस्य रामस्य च महाऽऽत्मनः[5] ॥३०॥ [२४

---

सन्निभम् । मकराक्षः प्रचिच्छेद त्रिभिर्भल्लैः प्रतापवान् ॥ ततो रामः शितैर्बाणैः षड्भिस्तं राक्षसोत्तमम् । स्नायुनद्धैः शिलाधौतैर्ललाटे समताडयत् ॥ तौ दृष्ट्वा संप्रयुक्तौ तु यमांतकसमप्रभौ । अन्योन्यं समरे जघ्नुः पुनर्वानरराक्षसाः ॥ चिकीर्षुः प्रतिकर्तुं स मकराक्षो महाबलः । मुमोचाशीविषाकारान्नाराचानेकविंशतिं ॥ तैर्हेमपुंखैस्तीक्ष्णाग्रैर्ललाटे ताडितः समम् । चुक्रोध राघवः श्रीमान्नाराचैर्भृशताडितः ॥ चिक्षेप राक्षसे रामो नाराचान्सुसमाहितान् । नाराचमाला सा तस्य शुशुभे वदनाश्रिता । यथा शरदि मत्तानामावली मधुपायिनाम् ॥ भल्लं निशितमादाय ततो रामो भ्रतां वरः । अस्यतः क्षिप्रहस्तस्य धनुश्चिच्छेद भासुरम् ॥ ध्वजमेकेषुणा चैव प्रतोदं सारथेस्तदा । चतुर्भिश्चतुरो वाहान्मकराक्षं च पंचभिः ॥ ततो निमेषादपरं सज्यं कृत्वा महाधनुः । उत्ससर्ज महाबाहुर्मंडलीकृतकार्मुकः ॥ मकराक्षः शरान्घोरान् कालांतकयमोपमान् । तयोर्मुक्तेन च तदा शरजालेन भास्वता । द्वितीयमिव चाकाशं तलबद्धमभूत्तदा । अथाग्नेयं महाघोरं तामसं नाम नामतः । उत्ससर्ज महाबाहुरस्त्रमप्रतिवारणाम् ॥ सौरेणास्त्रेण तं चापि काकुत्स्थः प्रममाथ ह । ततोऽस्त्रयुद्धमभवत्तुमुलं लोमहर्षणम् ॥ अभूतपूर्वं सुमहद्रामराक्षसयोस्तदा । निहत्यास्त्रमहावर्षं मकराक्षस्य रक्षसः ॥ १. भ-नास्ति । २. भ-असृजत् ॥ ३ भ-ततस्तान् । ४. भ-पेतुस्ते भुवि विच्छिन्ना ॥ ५. भ-राक्षसस्य च पुत्रस्य सूनोर्दशरथस्य च ॥

जीमूतयोर् इवाऽऽकाशे शब्दो ज्या-तलयोस् तयोः[1] ।
३५] धनुर्-मुक्तः स्वनोत्कृष्टः श्रूयते हि[2] रणाऽजिरे ॥३१॥ [२५
देव-दानव-गन्धर्वाः किं-नराश्[3] च महोरगाः[3] ।
३६] अन्तरिक्ष[4]-गताः सर्वे द्रष्टु-कामास् तद् अद्भुतम् ॥३२॥[5] [२६
विद्धम् अन्योऽन्य-गात्रेषु द्वि-गुणं वध्यते परः[6] ।
३७]कृतं[7]-(?त्त-)प्रकृत(?त्त)म् अन्योऽन्यं कुर्वाते[7] तौ रणाऽजिरे ३३[5] [२७
शरौघ[8]-सन्तताः सर्वा दिशश् च[9] वि-दिशस्[9] तथा ।
३८] सं-छन्ना वसु-धा चैव सम्-अन्तान् न प्र-काशते ॥३४॥ [२९
राम-मुक्तान् छितान् बाणान् राक्षसोऽप्य् अच्छिनद् रणे[10] ।
३९] रक्षो-मुक्तांश् च रामो[11] वै[11] नैकधा प्राऽच्छिनच् छरैः ॥३५ [२८
ततः क्रुद्धो महा-बाहुर् धनुश् चिच्छेद सं-युगे ।
४०] अष्टभिर्[12] अथ[13] नाराचैः सूतं विव्याध राघवः ॥३६॥ [३०
छित्वा शरै[13] रथं[13] रामो रथाद् अश्वान् अमोक्षयत्[14] ।
४१] वि-रथो[15] वसु-धां प्राऽऽप्य मकराऽक्षो निशा-चरः ॥३७ [३१
अधिकं क्रोध-संरब्धः[16] शूलं जग्राह पाणिना ।
४२] त्रासनं सर्व-भूतानां युगाऽन्ताऽग्नि-सम-प्रभम् ॥३८॥ [३२
स[17] वि-भ्राम्याऽथ तं शूलं प्र-ज्वलन्तं निशा-चरः ।
४३] क्रोधाच् च प्राऽहिणोत् तस्मै राघवाय महाऽऽत्मने ॥३९ [३४
आ-पतन्तं ज्वलन्तं तु[18] खर-पुत्र-कर-च्युतम् ।
४४] बाणैस् तु त्रिभिर् आ-काशे शूलं चिच्छेद राघवः॥४०॥ [३५

---

१. ल$_1$ल$_2$ अ-भुवि । भ-तदा । २. भ-स्म ॥ ३. भ-०राः सम० । ४. फ-०क्षचराः । भ-अन्तरिक्षे स्थिताः । ५. रा$_1$ल$_1$ल$_2$-नास्ति ॥ ६. भ-गात्रेषु विव्यथेन्योन्यं द्विगुणं विव्यथे पुनः । ७. भ-कृतप्रतिकृते यत्नौ चेरतुस् ॥ ८. भ-बाणौघैः संततैः । ९. भ-प्रच्छादितास् ॥ १०. भ-हि बाणांस्तान्रक्षश्चिच्छेद सायकैः । ११. भ-रामोपि ॥ १२. भ-०भिश्चैव ॥ १३. भ-परैस्तथा । १४. भ-व्यपोथयत् । १५. भ-०थोप्यथ भूमिष्ठो ॥ १६. भ-क्रोधरक्तेक्षणः शीघ्रं ॥ १७. भ-प्रहस्याविध्य तच्छूलं मकराक्षो ॥ १८. ल$_1$ ल$_2$ प्र भ-च ॥

तच् छिन्नं वसु-धां शूलं दिव्यं हाटक-भूषितम् ।
४५] व्यू-अदीर्यत महोल्केव राम-बाणाऽर्दितं भृशम् ॥४१॥ [३६
तच् छूलं नि-[1]हतं दृष्ट्वा रामेणाऽद्भुत-कर्मणा ।
४६] साधु साध्व् इति भूतानि व्या-ह[2]रन्ति नभस्-तलात् ४२[३७
तद् दृष्ट्वा वि-फलं शूलं मकराऽक्षो निशा-चरः ।
४७] मुष्टिम् उद्-यम्य काकुत्स्थं तिष्ठ तिष्ठेति चाऽब्रवीत् ।[3] ४३[३८
स तं दृष्ट्वा पतन्तं [4]तुं प्र-हस्य रघु-नन्दनः ।
४८] पावकाऽस्त्रं ततो रामः सं-दधे [5]च [6]शराऽऽसने ॥४४॥ [३९
तेनाऽस्त्रेण हतो रक्षः काकुत्स्थेन रणा[7]ऽजिरे ।
४९] [8]संभिन्न-हृदयस् तत्र पपात च ममार च ॥४५॥ [४०
ततस् ते राक्षसाः सर्वे मकराऽक्षे हते[9] तदा ।
N] लङ्काम् एव प्र-धावन्ति राम-[10]बाण-प्रपीडिताः ॥४६॥ [४१
दशरथ-नृप-पुत्र-बाण-वेगै
रजनि-चरं नि-हतं खराऽऽत्मजं तम् ।
ददृशुर् [11]अति-बलं सुराः प्र-हृष्टा
N] गिरिम् इव वज्र-हतं क्षणाद् [12]वि-शीर्णम् ॥४७॥ [४२

इत्यार्षे रामायणे युद्ध[13]-काण्डे मकराऽक्ष-वधो नाम
सप्तपञ्चाशः सर्गः[14] ॥५७॥

---

१. भ-विहतं । २. भ-०रंत विहायसि ॥ ३. अतः परमधिकः पाठः—भ-स्थितोहं यदि ते शक्तिर्युध्यस्वाद्य मया सह ॥ ४. भ-च । ५. भ-शीघ्रं । ६. भ-स्वश० ॥ ७. भ-तदा रणे । ८. भ-छिन्नवर्मतनुत्राणं ॥ ९. भ-निपातिते । १०. प्र रा₂ फ म-०बाणार्दितास्तदा । भ-रामेणाभ्यर्दिता ययुः ॥ ११. भ-अथ च देवताः । १२. भ-तदा विशालं ॥ १३. प्र रा₂ भ-लंकाकाण्डे । म-युद्धपर्वणि । १४. भ-मकराक्षवधः ॥

मकराऽक्षं हतं श्रुत्वा रावणः समितिं-जयः[१] । [१ पू
N] राक्षसाश् चैव ये तत्र प्रधाना नि-हता रणे[२] ॥१॥ [N
तौ चाऽपि भ्रातरौ श्रुत्वा कुम्भकर्णाऽऽ[३]त्मजौ [४]रणे । [N
N] आ-दिदेशाऽथ सं-क्रुद्धो रणायेन्द्र-जितं पुनः[५] ॥२॥ [२ उ
[६]जहि वीर महा-वीर्यौ रणे [७]राघव-लक्ष्मणौ ।
अ-दृश्यो दृश्यमानो वा सर्व-था त्वं बलाऽधिकः[९] । [३
N] वानरं चैव सु-ग्रीवं [८]तं वाऽनार्यं वि-भीषणम् ॥३॥ [N
तम् अ[१०]प्रतिम-कर्माणं जितवांस् त्वं शची-पति[१०]म् ।
N] [११]किं पुनर् मनु-जौ [११]वीरौ न हनिष्यसि सं-युगे ॥४॥ [४

N] [१२]तथोक्ते राक्षसेन्द्रेण प्रति-गृह्य पितुर् वचः ।
१९पू] यज्ञ-भूमौ स विधिवज् जुहावाऽग्निम् अथेन्द्र-जित् ॥५॥ [५
N] जुह्वतश् चाऽस्य तत्राऽग्निं रक्षसो भीम-कर्मणः ।
२१उ] आ-ययुस् तत्र सं-भ्रान्ता राक्षसा यत्र रावणिः ॥६॥ [६
[१३]शस्त्राणि शर-पत्राणि [१४]सम्-इधश् च वि-भीतकाः ।
२२] लोहितानि च वासांसि स्रुवा कार्ष्णाऽऽयसी तथा ॥७॥ [७

---

१. रा फ म-हतेषु तेषु रक्षस्सु रावणो राक्षसाधिपः । २. रा$_2$ फ म-नास्ति ॥ ३. प्र भ-०त्मजावुभौ । ४. भ-सुतं । ५. रा$_2$ फ म-अत आरभ्य ११-श्लोकान्तः पाठः ४१-श्लोकात्परं व्यत्यासेन पठितः ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-याहि । ७. भ-त्वं रामल० । ८. रा$_1$ल$_1$ल$_2$ ब ञ प्र-तथार्यं च । ९ भ-नास्ति ॥ १०. रा$_2$ फ म-इन्द्र जयसि संयुगे । ११. रा$_2$ फ म-किमुक्तो मानुषौ दृश्यौ । भ-०जौ वीर ॥ १२. ल$_2$ ब ञ प्र फ म भ-तयोक्तो ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र-सर्वाणि । रा$_2$ फ-दर्भाश्च । १४. म-नास्ति ॥

सर्व-तोऽग्निं समा-स्तीर्य शर-पत्रैः स-तोमरैः ।
२३] छागस्य कण्ठ-देशं तु छित्वा जग्राह शोणि[१]तम् ॥८॥ [८
२४पू] [२]जुहाव च स[३]म्-इद्धस्य ततो वह्नेर् महाऽर्चिषः ।
बभूवुस् तानि लिङ्गानि वि-जयं प्रति तस्य वै ॥९॥ [९
२५] प्रदक्षिणाऽऽवर्त-शिखस् तप्त-काञ्चन-सन्निभः ।
२६पू] हविस् तु प्रति-जग्राह पावकः स्वयम् उत्थि(द्-स्थि)तः॥१०[१०
हुत्वाऽग्निं तर्पयित्वा तु दैत्य-दानव-राक्षसान् ।
२९] आ-रुरोह रथं दी-[४]प्तम् अन्तर्धान-गतं शुभम् । [११
N] स वाजिभिश् चतुर्भिश् च बाणैश् च नि-[५]शितैर् युतम् ।११[१२पू

क्रोधेन महताऽऽविष्टो निर्-जगाम महा-बलः [६]।
राक्षसाश् चैव ये तत्र प्रधानाँ[७]ऽसुरसम्मताः ।
N] परि-वार्याऽऽशु निर्-जग्मुः सर्वे ते काम-रूपिणः॥१२॥ [N
ततो रावणिम् आ-यान्तं पताका-ध्वज-शोभितम् ।
N] [८]अभ्य्-अयाद् राक्षस-बलं वि-नदद् वै युयुत्सया ॥१३॥ [N
[९]नादास् तूर्य-प्रधानाश् च शंखानां च सहस्र-शः ।
N] जज्ञिरे सिंह-नादाश् च भेरीणां च महा-स्वनाः ॥१४॥ [N
तं ते सम्-ईक्ष्य निर्-यान्तं रावणिं राक्षसैर् वृतम् ।
N] आ-पेतुर् हरयः सर्वे गजाः पुष्करिणीम् इव ॥१५॥ [N
ततः प्र-वृत्तः सु-महान् रक्षसां वानरैः सह ।
५९,२] सं-ग्रामस् तुमुलस् तत्र जयम् अन्योऽन्यम् इच्छताम् १६ [N
३पू] ततस् ते राक्षसा वीरा वानराणां महौजसाम् ।

१. प्र रा$_2$ फ म भ-जीवितं ॥ २. फ-शरहोमस० । म-सहहोमस० ॥ ३. फ म भ-तत् ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ-श्रीमद् । ५. रा$_2$ फ म-अतः परं विंशति-सर्गस्थः १३-३८-श्लोकान्तः पाठोऽधिकपाठत्वेन पठितचरः द्र० ॥ ६. रा$_2$ फ म-अत आरभ्य २२-श्लोकान्तः पाठो नास्ति । ७. ब अ प्र-०नाः सु० ॥ ८, भ-अन्वयाद् ॥ ९. भ-नानातूर्यनिनादाश्च ॥

N] त्रासयन्ति[1] ह्य् अनीकानि धनूंष्य् उद्-यम्य वेगिताः॥१७॥[N
N] ते[2] शरैर् बहुभिश् चित्रैस्[3] तीक्ष्ण-वेगैर्[4] अलं-कृतैः ।
तोमरैर् अंकुशैश् चैव वानरान् जघ्नुर् आ-हवे ॥१८॥ [N
४] गदा-परिघ-निस्त्रिंश-शूल-पट्टिस-मुद्गरैः ।
३उ] शक्ति-खड्ग-भुसुण्डीभिर् ऋष्टि-पात-विकम्पनैः ॥१९॥ [N
गदा[6]-मुसुल-चक्रैश् च भिण्डिपाल-परश्वधैः ।
N] पांसुवाताऽग्निसलिलैर् भस्म-लोष्ट-तृण-द्रुमैः ॥२०॥ [N
सं-रुजा[7]ऽऽरुज भिन्धीऽति जहि वि-द्रावयेति च ।
५] तयोस् तद् अभवद् युद्धं सेनयोर् हरि-रक्षसाम् ॥२१॥ [N
एकः समेति चैकेन[8] द्वाभ्यां द्वौ चैव राक्षसौ ।
६] न्य्-अपातयन् रणे तस्मिंस् त्रयस् त्रीन् बहवो बहून्॥२२॥[9][N
रावणिस् तु ततः[10] क्रुद्धस्[10] तान् उवाच निशा-चरान् ।
७] हृष्टा भवन्तो युध्यन्तु वानराणां जिघांसया ॥२३॥ [N
ततस् ते राक्षसाः सर्वे नदन्तो[11] जय[11]-कांक्षिणः ।
८] अभ्य्-अवर्षंस् तदा घोरा वानरान् छर-वृष्टिभिः॥२४॥ [N
ते वध्यमानाः सम्-अरे वानराः पादपाऽऽयुधाः ।
९] अभ्य्-अद्रवन्त सहसा गर्विता[12]स् तान् निशा-चरान्[12] ॥२५॥[13][N

---

१. प्र भ-त्रासयन्तो ॥ २. ल$_1$ल$_2$ ब-तैः । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-बाणैस् । ४. ल$_1$ ल$_2$ ब-तीक्ष्णैर्वेगैर् ॥ ५. भ-यष्टिप्रासवि० ॥ ६. भ-महामुसल० ॥ ७. भ-प्ररु० ॥ ८. रा$_1$ल$_1$ल$_2$ब अ प्र-चैके द्वौ । ९. अतः परमधिकः पाठः—रा$_2$फ म-निहतं मकराक्षं तं दृष्ट्वा रामेण संयुगे । शक्रजित्सुमहातेजा विवेश रणसंकटम् ॥ ततो युद्धं समभवद् रक्षसां वानरैः सह । निघ्नतां तत्र चान्योन्यं निशाचरवनौकसाम् ॥ आक्रीड इव रुद्रस्य घ्नतः कालात्यये पशून् ॥ १०. रा$_2$ फ म-सुसंक्रुद्धस् ॥ ११. भ-नर्दन्तो युद्धकां० ॥ १२. रा$_2$ फ म-राक्षसा भीमविक्रमाः । भ-सहितांस्तान्निशाचरान् । १३. अतः परमधिकः पाठः—अ प्र फ म भ-केचिच्छिलाः समादाय मुष्टिमुद्यम्य चापरे । वानराः समरे तस्मिन् राक्षसांश्च निजघ्निरे ॥ जानुभ्यां पातिताः केचिद्वानरैस्ते निशाचराः । सुस्रुवुर्वसुधोपान्ते हन्यमाना निशाचराः ॥

निरस्त-नासा-कर्णाश्[1] च राक्षसा भिन्न-मस्तकाः ।
१३] सुस्रुवू रुधिरं[2] भूरि नगा[3] गैरिक-धातु-वत् ॥२६॥ [N
तैर् हतैर् हन्यमानैश् च भ्रमद्भिः पतितैर् अपि[4] ।
१४] क्रूरम्[5] आ-योधनं तेषां बभौ वानर-रक्षसाम् ॥२७॥ [N
राक्षसा बहवस्[6] तत्र वानरैर्[7] अर्दिता रणे ।
१५] व्य्-अधावन्त तदा[8] लंकां त्यक्त्वेन्द्र-जितम् आ-हवे ॥२८॥ [N
१६पू] तेषां प्र-द्रवतां लंका प्र-चकम्प[9] स-कानना ।
N] शाखामृगभया[10]ऽऽर्तानां राक्षसानां समन्त-तः[11] ॥२९॥ [N
१६उ] इन्द्र-जिच् च ततः क्रुद्धो महा-तेजा महा-बलः[12] ।
वानराणां शरीराणि व्य्-अधमन्[12] नि-शितैः शरैः[12] ॥३०॥ [N
१७] शरेणैकेन[13] स[14] तदा हरीणां पञ्च सप्त च[14] ।
बिभेद सम्-अरे क्रुद्धो राक्षसान् सम्प्र-हर्षयन् ॥३१॥ [N
१८] स बाणैः[15] सूर्य-संकाशैः शातकौम्भ-परिष्कृतैः[16] ।
वानरान् सम्-अरे भीमः[17] प्र-ममाथ सु-दुर्जयः ॥३२॥ [N
१९] ततोऽष्टा-दशभिर् बाणैः[18] स विद्ध्वा गन्ध-मादनम् ।
विव्याध नवभिश्[19] चैव नलं दूराद् अव-स्थितम् ॥३३॥ [N

---

१. भ-०स्तहनुक० । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ-स्रवद्रुधिरधाराश्च । ३. रा$_1$ ल$_2$ ब-नागा ॥ ४. रा$_2$ फ म-नास्ति । ५. फ-स्तनद्भिर्निपतद्भिश्च क्रूरमायोधनं बभौ । म-अधिकं निस्तनद्भिश्च क्रूरमायोधनं बभौ ॥ ६. रा$_2$-निहतास् । ७. रा$_2$- वानरा निहता । फ म-निहता वानरै । ८. रा$_2$ फ म-परे त्यक्त्वा लंकामेव निशाचराः ॥ ९. भ-०कम्पे । १०. रा$_2$-वानरैश्च भ० । ११. फ-नास्ति ॥ १२. रा$_2$ फ म-०मद्रावणात्मजः ॥ १३. रा$_2$-शरण्यैकेन । १४. रा$_2$ फ म भ-च हरीन् नव पञ्च च सप्त च ॥ १५. रा$_2$ फ म भ-शरैः । १६. रा$_2$-शातकुंभविभूषितैः । फ म-०भविभूषणैः । भ-शातकुंभप० । १७. भ-भीमान् ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ म-स विद्धा ग० । फ-अत आरभ्य ३७-श श्लोकस्य प्रथमपादं यावन्नास्ति । १९. रा$_2$-नवभिर्बाणैर् ॥

२०] सप्तभिश् च महा[1]-वीर्यं गवयं शीघ्र-गैः शरैः[2] ।
पञ्चभिर् वि-शिखैश् चैव गजं विव्याध सं-युगे ॥३४॥ [N
२१] अवरांश् च पृथग् बाणैर् वानरान् अरि-मर्दनः[3] ।
N] प्रति-विव्याध चैकैकं सप्तभिः सप्तभिः शरैः ॥३५॥ [N
ततस् ते वानराः सर्वे[4] भिन्न-देहा वि-चेतसः[5] ।
२२] व्यथिता वि-द्रवन्ति स्म रुधिरेण सम्-उक्षिताः ॥३६॥ [N
के-चिद् आर्त-स्वरं चक्रुर् वि-नेदुश्[7] च परे[8] रणे ।
२३] रणे वा नि-हताः के-चिन् नि-पेतुर् विगताऽसवः ॥३७॥ [N
ते हन्यमाना बाणौघैस् तेनाऽमित्रेण सं-युगे[9] ।
२४] शलभा इव सं-पेतुर् वानराः सर्व-तो दिशः ॥३८॥ [N
के-चिद् आ-रुरुहुर् [10]वृक्षान् के-चिद् आ-रुरुहुर् न-गान् ।
२५] के-चिद् आ-प्लुत्य सहसा [11]वानरास् तु गता [11]वनम् ॥३९॥[12] [N
६०-१पू] वि-द्राव्य वानरान् सर्वान् इन्द्र-जित् समितिं-जयः ।
N] रणात् प्रति-ययौ शीघ्रं स्वां पुरीं रावणाऽऽत्मजः ॥४०॥[13] [N

इत्यार्षे रामायणे युद्ध-काण्डे इन्द्रजिद्-युद्धं नामाऽष्टापञ्चाशः सर्गः ॥५८॥

— —

१. रा$_{2}$ म-०वीर्यो नीलं मर्मविदारणैः । २. रा$_{2}$-मार्गणैः ॥ ३. रा$_{2}$ फ म-स रणाजिरे । भ-अरिसूदनः ॥ ४. रा$_{1}$ ल$_{2}$ ब ञ प्र फ-शूरा । ५. रा$_{2}$-०तनाः ॥ ६. रा$_{2}$फ म-विभिन्ना वानरा । ७. रा$_{2}$ म फ भ-रक्षोबाणहताः । ८. रा$_{2}$फ म भ-०तुश्च ग० ॥ ९. अतः परमधिकः पाठः— फ- ते कूटयोधिनस्तस्य संग्रामे दृष्टविक्रमाः ॥ १०. रा$_{2}$ फ म-केचिच्च धरणीधरान् । ११. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब ञ प्र-वानरा ययुरम्बरम् । म-०रास्ते गता क्षयं । १२. रा$_{2}$ फ-केचिच्च तत्रा युध्यन्त युद्धव्रतमनुव्रताः ॥ १३. अतः परमधिकः पाठः—रा$_{1}$ ल$_{1}$ ल$_{2}$ ब ञ प्र-विद्राव्य सर्वान्सम्रमान्नगरं प्रविवेश ह । तं रावणः परिष्वज्य मुदा वचनमब्रवीत् ॥ लघुलब्धा महावीर्या येपि राक्षसपुंगवाः । ते वै सर्वे हताः पुत्र राघवेण दुरात्मना ॥

N] स वि-ज्ञाय मतं तस्य [१]रावणस्य महाऽऽत्मनः ।
१.उ] सन्नि-वृत्याऽऽहवात् तस्मात् प्र-विवेश [२]पुरीं [२]ततः ॥१॥ [१
सोऽनु-[३]चिन्त्य वधं तेषां राक्षसानां तरस्विनाम् ।
२] रोषताम्रे[४]क्षणो वीरो[४] निर्-[५]जगाम पुनर् [५]बली ॥२॥ [२
स च पश्चिम-द्वारेण निर्-ययौ राक्षसे[६]श्वरः ।
३] इन्द्र-जित् परमोद्विग्नः परे[७]षां जनयन् भयम् ॥३॥ [३
मेघ-नादस् ततो दृष्ट्वा भ्रातरौ राम-लक्ष्मणौ ।
N] रणायाऽभ्युत्थि[८](द्-स्थि)तौ वीरौ जु[९]हुवे पावकं तदा ॥४॥ [४
रथं ततो व्यव-स्थाप्य रावणी राक्षसैर् वृतः ।
N] [१०]सीतां माया-मयीं कृत्वा तस्या वधम् अरोचयत् ॥५॥ [५
N] सर्वेषां मोहनाऽर्थं तु कृत्वा बुद्धिं सु-दुर्मतिः ।

---

त्वया पुनर्भृशं तत्र राघवः सहलक्ष्मणः । घोरेण शरबंधेन संयतो रणमूर्धनि ॥ सांप्रतं तु हरीन्सर्वान्द्रावयित्वा मुहुर्मुहुः । आगतोसि रणाद्वीर कोन्योस्ति सदृशस्त्वया ॥ तद्गच्छ पुत्र भूयस्त्वमायोधनशिरः प्रति । जहि तौ पापकर्माणौ भ्रातरौ रामलक्ष्मणौ ॥ पुरा त्वयेन्द्रं निर्जित्य देवराजं सुराधिपम् । राक्षसा हर्षितास्तात यशः प्राप्तमनुत्तमम् ॥ अशक्यं च दीनाभ्यां च मनुष्याभ्यां रणाजिरे * ॥ १. प्र रा$_2$ फ म भ-राघवस्य । २. रा$_2$ फ म-पुनः पुरीं ॥ ३. रा$_2$ फ भ-०नुस्मृत्य । ४. रा$_1$ ल$_1$ ल$_2$ ब अ-०ग्रमुखो वेगान् । ५. भ-युद्धायैव मनो दधे ॥ ६. रा$_1$ ल$_1$ ल$_2$ब अ प्र-०साधिपः । म-०सैर्वृतः । ७. सर्वेषां ॥ ८. भ-इन्द्रजित्तु तथा । रा$_2$ फ म-०तदा । ९. रा$_1$-०तो वी० । रा$_2$ फ म भ-०भ्युद्यतौ । प्र-०तो वी रो जुहाव ॥ १०. भ-बलेन महतावृत्य ॥

---

* अतः परं 'यथोक्तं' इत्यादि 'स वाजिभिः' इत्यन्तं ५–११-श्लोकान्तं पाठं पुनः पठित्वा 'जज्वाल वपुषा चैव रावणिः पावको यथा । इत्यार्षे रामायणे युद्ध-काण्डे रावणवाक्यं नाम सर्गः, इति चाऽधिकः पठितः ॥

४उ] हन्तुं सीतां व्यव-सितः कपीनाम् अभि-तो ययौ[1] ॥६॥ [६
तं तु दृष्ट्वा विनिर्-यान्तं [2]नगर्याः काननौकसः ।
५] उत्-पेतुर् अभिसं-रब्धाः शिला-हस्ता युयुत्सवः ॥७॥ [७
हनू-मान् पुर-तस् [2]तेषां जगाम हरि-यूथपः ।
६] उद्-यम्य सु-महच् छृङ्गं पर्वतस्य दुरा-सदम् ॥८॥[3] [८
स ददर्श [4]निरा-लम्बां स्थिताम्[4] इन्द्र-जितो रथे ।
७] एक-वेणी-धरां सीतां [5]रक्षो-हरण-कर्षिताम् ॥९॥[6] [९
परिक्लिष्टैकवसनां मण्डनाऽर्हाम् अ-मण्डिताम्[7] ।
N] रण-रेणु-समादिग्धां[8] भीम-रूपां वराऽऽननाम् ॥१०॥ [N
रजो-मलाभ्यां सं-लिप्तैः[9] [10]सर्व-गात्रैर् अव-स्थिताम्[11] । [१०उ
ददर्श हनु-मांस् तत्र स-पंकाम्[12] इव पद्मिनीम्[13] । [N
N] स [14]मुहूर्तम् इव ध्यात्वा सीतेयम् इति वानरः ॥११॥ [११पू
तां दीनां मल-दिग्धाऽङ्गीं रथ-स्थां प्रेक्ष्य मैथिलीम् ।
८] बाष्प-पर्याकुल-मुखो हनू-मान् व्यथितोऽभवत् ॥१२॥[15] [१२
अब्रवीत् तां तु शोकाऽऽर्तां निर्-आनन्दां तपस्विनीम् ।
९] दृष्ट्वा सीतां रथे तस्य रावणस्य दुर्-आत्मनः ॥१३॥ [१३
किं चिकीर्षितम् अस्येति चिन्तयन् स महा-कपिः ।
१०] सह तैर् वानरैः सर्वैर् अभ्य्-अधावत् स रावणिम् ॥१४॥ [१४

---

१. भ-वानराभिमुखं ॥ २. भ-नास्ति ३. अ-नास्ति ॥ ४. भ-ततो दीनां सीतां । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ-उपवासकृशाननां ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ भ-दीनां विवर्णवदनां मूर्च्छया भृशदुःखितां । प्र-नास्ति । ७. प्र म-नास्ति ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-रक्तामिषाभ्यां । ९. फ भ-आलिप्तैः । १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-अर्धगात्रैर् । ११. रा$_2$ म-नास्ति । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-सायाह्न । १३. भ-मेदिनीं । १४. ल$_1$ ल$_2$ अ प्र रा$_2$-सुमु॰ ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-१२-श्लोकादारभ्य १७-श्लोकपूर्वार्धान्तः पाठो नास्ति ॥

तद् वानर-बलं दृष्ट्वा रावणिः क्रोध-मूर्च्छितः ।
११] कृत्वा वि-कोशं निस्त्रिंशं प्र-जहास महा-स्वनम् ॥१५॥ [१५
तां प्र-गृह्य स केशेषु रावणिर् जनकाऽऽत्मजाम् ।
१२] क्रोशन्तीं राम रामेति दृष्ट्वा[1] माया-मयीं तदा । [१६
खड्ग-रत्नं समा-गृह्य केश-पक्षे पराऽमृशत् ॥१६॥ [१९पू
१३] गृहीतां तां[2] तदा दृष्ट्वा हनु-मान् दैन्यम्[3] आ[3]-गतः । [१७पू
N] बभूव चिर-दृष्टा हि तेन सा जनकाऽऽत्मजा ॥१७॥ [११उ
N] तद्[4]-वधायोद्-यतं पापं हनू-मान्[4] पवनाऽऽत्मजः । [१७उ
अब्रवीत् परम-क्रुद्धो रावणिं[5] परि-भर्त्सयन्[6] ॥१८॥ [१८उ
१४] नृ-शंसाऽन्-आर्य दुर्-वृत्त क्षुद्र पाप-विनिश्चय[7] । [२०उ
N] ब्रह्मर्षीणां कुले जातो राक्षसीं योनिम् आ-स्थितः ॥१९॥ [१९उ
N] धिक् त्वां पाप-समाचारं यस्य ते मतिर् ईदृशी ।
अ-कार्यं[8] नाऽद्य ते कार्यम् ईदृशं[8] सु-विगर्हितम् ॥२०॥ [२०
१५] च्युतां गृहाच् च राज्याच्[9] च राम-हस्ताच् च मैथिलीम् । [२१पू
अन्-आगसां त्वं वि-वशाम् अ-पापां किं जिघांससि । [N
१६] किं तु चैवाऽपराध्नोषि यद् एनां[10] हन्तुम् इच्छसि ॥२१॥ [२१उ
सीतां च हत्वा न चिराज् जीवितं[11] मोक्ष्यसे प्रियम्[11] ।
१७] वधाऽर्हः कर्मणाऽनेन मम हस्त-गतो ह्य् असि ॥२२॥ [२२
ये च स्त्री-घातिनो लोके ये चैवाऽवध्य[12]-घातिनः ।
१८] इह जीवितम् उत्-सृज्य प्रेत्य तान्[13] उप-भोक्ष्यसे[13] ॥२३॥ [२३
एवं ब्रुवाणो हनु-मान् बहुभिर् वानरैर् वृतः ।

---

१. भ-लक्ष्मणेति च तां मुहुः ॥ २. भ-मूर्धजेषु । ३. भ-दुःखितोऽभवत् ॥ ४. रा$_2$ फ म भ-दुःखजं वारि नेत्राभ्यामुत्सृजन् । ५. अ म-रावणिः । ६. भ-राक्षसाधमं ॥ ७. भ-पापपराक्रम ॥ ८. भ-नृशंस लोकगर्हितं ॥ ९. रा$_1$ ल$_1$ ल$_2$ व अ प्र-भोगाच् । १०. रा$_2$ फ म-नास्ति ॥ ११. भ-जीविष्यसि कथंचन ॥ १२. फ- चैव शिशुघा० ॥ १३. रा$_1$-तामनुभोक्ष्यसि ॥

१९] अभ्यू-अधावत सं-क्रुद्धो राक्षसेन्द्र-सुतं प्रति ॥२४॥ [२४
आ-पतत् तु तदा भीमं तद् अनीकं वनौकसाम् ।
२०] राक्षसो भीम-कर्मा स सम्-अरे प्रत्यू-अवारयत् ॥२५॥ [२५
तां तु बाण-सहस्रेण वि-क्षोभ्य हरि-वाहिनीम् ।
२१] परि-वार्य हनू-मन्तं प्रत्यू-उवाचेन्द्र-जित् तदा ॥२६॥ [२६
सु-ग्रीवस् त्वं च रामश् च यन् निमित्तम् इहाऽऽगताः ।
२२] तां हनिष्यामि वैदेहीम् एषोऽद्य तव पश्यतः ॥२७॥ [२७
इमां हत्वा ततो रामं लक्ष्मणं त्वां च वानर ।
२३] सु-ग्रीवं च हनिष्यामि तं चाऽन्-आर्यं वि-भीषणम् ॥२८ [२८
२४पू] न हन्तव्याः स्त्रियश् चेति यद् ब्रवीषि प्लवं-गम । [२९पू
N] सर्व-कालं मनुष्येण व्यवसाय-वता सदा । [N
२४उ] पीडा-करम् अ-मित्राणां यत् स्यात् कर्तव्यम् एव तत् २९। [२९उ
तम् एवम् उक्त्वा रुदतीं सीतां माया-मयीं ततः ।
२५] शित-धारेण खड्गेन तां जघानेन्द्र-जित् स्वयम् ॥३०॥ [३१
यज्ञोपवीत-मार्गेण छिन्ना तेन तपस्विनी ।
२६] सा पृथिव्यां पृथु-श्रोणी पपात प्रिय-दर्शना ॥३१॥ [३२
तम् इन्द्र-जित् स्वयं हत्वा हनू-मन्तम् उवाच ह ।
२७] पश्य रामस्य पश्यैताम् एक-पत्नीं वि-नाशिताम् ॥३२॥ [३३
एवं खड्गेन रुदतीं हत्वा तां चारु-लोचनाम् ।
२८] आ-स्थितः स रथं हृष्टो वि-ननाद महा-स्वनम् ॥३३॥ [३४

---

१. रा२-सुक्रुद्धो ॥ २. रा२ म-० ततं तु तं॥ ३. भ-वीर्यवन्तं ॥ ४. भ-वधिष्यामि ॥ ५. रा१ल१ ल२ ब श्र प्र-आर्यं च ॥ ६. रा२ फ म भ-नास्ति ॥ ७. रा२-नास्ति । ८. भ-तदा ॥ ९. फ म-स्त्रियं। १०. रा२ फ म भ-मया। ११. प्र फ म भ-पश्येमां। १२. रा२-नास्ति॥ १३. भ-सीतां स वै हत्वा शक्रजिद्रावणात्मजः ॥

व्यादिताऽऽस्यस्य नदतस्[1] तम् उग्रं भीम-निस्वनम् ।
२९] वानराः शुश्रुवुः शब्दम्[2] अनु-रूपम् अवे-स्थिताः[3] ॥३४॥ [३५
तद्[4] अशनि-वद् उरु-वेगं-निःस्वनं
नि-नदम् अथेन्द्रजितो महा-स्वनम्[3] ।
रिपु-भय-जननं नि-शम्य ते च
N] लघु-हृदयाः कपयश् चकम्पिरे ॥३५[5]॥ [N
तं हृष्ट-रूपं समुद्-ईक्ष्य[6] वानरा
विषण्ण-रूपाः समभिप्र-दुद्रुवुः ।
वि-हाय संग्रामं-शिरो महौजसः
N] प्र-तस्थिरे[10] वायु-सुतं तरस्विनम्[11] ॥३६॥ [N
तथा तु सीतां विनि-हत्य दुर्-मतिः
प्रहृष्ट-चेताः स बभूव रावणिः ।
अचिन्तयच् चाऽपि तदा स राक्षसः
N] कथं वि-जेयौ युधि राघवाव् इति[12] ॥३७॥ [N
इत्यार्षे रामायणे युद्ध-काण्डे[13] मायासीता-वधो नामैकोनषष्टितमः सर्गः ॥५९॥

---

## [ वं-६१ ]= [ षाष्टितमः सर्गः ] =[दा-८२]

श्रुत्वा तं भीम-निर्ह्रादं शब्दं[14] शक्राऽशनि-स्वनम् ।
१] वीऽऽक्षमाणा[15] दिशः सर्वे दुद्रुवुर् वानरर्षभाः ॥१॥ [१

---

१. भ-समरे तस्योग्रं । २. रा$_1$ ल$_1$ ल$_2$ ब ञ भ-अदूरे प्रत्यव० । ३. प्र-नास्ति ॥ ४. प्र रा$_1$ ल$_1$ ल$_2$ ब ञ-तमशनिपटु मेघनि:० । ५. रा$_2$-नास्ति ॥ ६. फ म-च निरीक्ष्य । ७. रा$_2$-नास्ति । अतः परमधिकः पाठः—म-विवर्णचेता बलिनं बलीयसो बलाधिकं शक्रबल-प्रमर्दनम् । ८. रा$_2$-०मगतिं । ९. भ-हतौजसः । १०. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र भ-वनौकसः संप्रतिपेदिरे स्म ते । ११. फ-नास्ति ॥ १२. फ म-नास्ति ॥ १३. ब प्र रा$_2$ भ-लंकाकाण्डे । म-युद्धपर्वणि ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब ञ प्र भ-तत्र । १५. ल$_1$ ल$_2$ ब ञ प्र रा$_2$ फ म-वीक्ष्य० ॥

तान् उवाच हरीन् सर्वान् हनु-मान् पवनाऽऽत्मजः ।
२] विषण्ण-वदनान् दीनांस् त्रस्तान् वि-द्रवतः पृथक् ॥२॥ [२
किं विषण्ण-मुखा दीना वि-द्रवध्वं प्लवं-गमाः ।
३] त्यक्त्वा युद्धे समुत्-साहं शूर-त्वं वः क्व तद् गतम् ॥३॥ [३
पृष्ठ-तोऽनु-व्रजध्वं माम् अग्र-तो यान्तम् आ-हवे ।
४] शूरैर् अभिजनोत्पन्नैर् न युक्तं हि पलायितुम् ॥४॥ [४
इत्य् एवम् उक्त्वा हरयः सम्-अरे भीम-विक्रमाः ।
५] शैल-शृङ्गाणि गृह्णन्तो द्रुमांश् च वि-विधान् बहून् ॥५॥ [५
अभि-पेतुश् च नर्दन्तो राक्षसान् वानरर्षभाः ।
६] परि-वार्य हनू-मन्तम् अन्व्-अयुश् च महाऽऽहवे ॥६॥ [६
सर्वैर् वानर-मुख्यैः स हनू-मान् परि-वारितः ।
७] हुताऽशन इवाऽर्चिष्-मान् अदहच् छत्रु-वाहिनीम् ॥७॥ [७
स राक्षसानां कदनं चकार सु-महाबलः ।
८] वृतो वानर-सैन्येन कालाऽन्तकयमोपमः ॥८॥ [८
स तु शोक-समाविष्टः कोपेन च महा-कपिः ।
९] हनू-मान् रावणि-रथे शिलां गुर्वीम् अपातयत् ॥९॥ [९
ताम् आ-पतन्तीं दृष्ट्वा तु रथः सारथिना तदा ।
१०] विधेयाऽश्व-समायुक्तः सु-दूरम् अप-वाहितः ॥१०॥ [१०

---

१. रा$_2$ फ म-हनू० । भ-समेतान्मारुतात्मजः । २. भ-भीतांस् ॥ ३. रा$_2$ फ म-किमिदं विषण्णवदना । ४. प्र म भ-महोत्० । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-च कृतं कृतं । भ-तत्कुतो गतं ॥ ६. भ-०नोपेतैर् । ७. रा$_2$ फ म-विनिवर्तितुं ॥ ८. रा$_2$ फ-अपि । म-तथा । ९. भ-शैलाग्राणि द्रुमांश्चापि जगृहुर्हृष्टमानसाः ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ-नदन्तो ॥ ११. भ-स तैर् । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ भ-०ख्यैश्च । १३. म भ-सर्वतो वृतः । १४. भ-प्राद० ॥ १५. रा$_2$ फ-राक्षसानां च ॥ १६. रा$_2$ फ म-कोपेन चाविष्टो शोकेन । भ-०न चाविष्टो क्रोधेन । १७. भ-महाबलः । १८. प्र रा$_2$ फ-हनुमान्राक्षसरथे । १९. रा$_2$ फ-पातयामास वै शिलां । म-अपातयन्महतीं शिलां ॥ २०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-स शीघ्रं ॥

तम् इन्द्र-जितम् अ-प्राऽऽप्य स-सारथि-रथं तदा[1] ।
११] विवेश धरणीं भित्त्वा शिला[2] सा शत-धा तदा[2] ॥११॥ [११
राक्षसानाम् अभूद्[3] धर्षो[3] दृष्ट्वेन्द्र-जितम् आ-हवे ।
N] मुक्तं वायु-सुताद् वीरं सारथिं चाऽप्य्[4] अपूजयन्[4] ॥१२ [N
पतितायां शिलायां तु व्यथितां रक्षसां चमूम् ।
१२] ताम् अभ्य्-अधावन् छत-शो नदन्तः[5] काननौकसः॥१३॥ [१३
ते द्रुमांश् च महा-काया गिरीणां[6] शिखराणि च[6] ।
१३] चिक्षिपू[7] रक्षसां[7] मध्ये वानरा भीम-विक्रमाः ॥१४॥ [१४
शिला[8]-वर्षं तथाऽसह्यं वि-सृजन्तः प्लवं-गमाः ।
N] शत्रूणां कदनं चक्रुर् नेदुंश्[9] च वि-विधैः स्वनैः[9] ॥१५[10]॥ [१५
वानरैस् तैर्[11] महा-वीर्यैर् भीम-रूपा[11] निशा-चराः ।
१४] वि-दार्याऽभि-हता वृक्षैर् व्य्-अचेष्टन्त धरणी[12]-तले॥१६॥[१६
स सैन्यम् अभिवीऽऽक्ष्याऽथ वानराऽर्दितम् इन्द्र-जित् ।
१५] प्रगृहीताऽऽयुधः क्रुद्धः परान् अभि-मुखो ययौ ॥१७॥ [१७
शरौघान् व्य्-असृजत् सैन्ये[13] स्व-सैन्येनाऽभिसं-वृतः ।
१६] जघान कपि-शार्दूलान् कुपितो[14] रावणाऽऽत्मजः[14] ॥१८॥ [१८
स[15] शूलैः शक्तिभिः खड्गैः[15] पट्टिसैः[16] कूट[16]-मुद्गरैः ।
१७] ते चाऽप्य् अनु-चरास् तस्य वानरान् जघ्नुर् आ-हवे॥१९॥[१९
वानराश् चैव[17] सं-क्रुद्धाः शिलाभिः पर्वतैस् तथा ।[18]

---

१. भ-रथं साश्वसारथिं । २. फ म-शिला सा व्यथितां गता। प्र रा$_2$-०धा गता। भ-शिलाप्यथ समुद्गता॥ ३. भ-चमू हर्षाद् ।४. म भ-चाभ्यपूज० । ल$_1$ ल$_2$ब अ प्र रा$_2$-०यत्॥ ५. म-नर्दन्तः॥६. भ-गिरिशृंगाणि चैव हि। ७. रा$_2$फ-आक्षिपन् द्विषतां॥ ८. रा$_2$फ म-वृक्षशैलशिलावर्षं। ९. रा$_1$ल$_1$ल$_2$ब अ प्र-नदन्तो विकृतस्वनाः। १०. भ-नास्ति ॥११. भ-तु महाभीमैर्घोररूपा ।१२. रा$_1$ल$_1$ल$_2$ ब अ प्र-तदा रणे ॥ १३. रा$_2$ फ म-स शरौघानवसृजत् । भ-०घानसृजत्तत्र । १४. रा$_2$ फ म-सुबहून्पश्यतो द्रुमान् ॥ १५. रा$_2$ फ म भ-शूलैरशनिभिः । १६. रा$_2$ फ म भ-०शैः प्रासमु० ॥ १७. भ-चापि । १८. फ-नास्ति ।

१८] वृक्षैश् च सु-महा-कायान् राक्षसान् समुपाऽद्रवन्[1] ।।२०।। [N
राक्षसा वानरैः सार्धं वानराश् चाऽपि राक्षसैः ।
१९] अयुध्यन्त महा-वेगा[2] वि-बुधा दानवैर् इव ।।२१।। [N
स-स्कन्ध-विटपैर् वृक्षैः[3] शिलाभिश् च महा-बलैः[4] ।
२०] हनु-मान् कदनं चक्रे रक्षसां भीम-कर्मणाम् ।।२२।। [२०
तेन[5] भग्नाश् च चक्रन्दू राक्षसा रुधिरोक्षिताः ।
२१] वि-द्रुताः शत-शः सर्वे सम-अरे[6] जीवितैषिणः ।।२३।।[7] [N
N] हनु-मान् अथ सं-रब्धो[8] विमुखी-कृत्य राक्षसान् ।
स[9] नि-वार्य पराऽनीकम् अब्रवीत् कानन[10]ौकसः ।
२२] सत्त्व-वन्तो नि-वर्तध्वं मम शक्यम् इदं बलम् ।।२४।। [२१
त्यक्त्वा प्राणान् हि युध्यामो राम-प्रिय-चिकीर्षया ।
२३] यन्-निमित्तं वयं[11] सर्वे हता सा[11] जनकाऽऽत्मजा ।।२५।। [२२
इमम् अर्थं च[12] वि-ज्ञाप्य राम-सुग्रीवयोर्[13] द्वयोः[13] ।
२४] तौ यत् प्रति-करिष्येते[14] तत् करिष्यामहे वयम् ।।२६।। [२३
इत्य् उक्त्वा वानर-श्रेष्ठो वारयन् युधि[15] राक्षसान्[15] ।
२५] शनैः शनैर् अ-सम्भ्रान्तो ह्य्[16] अगच्छद् यत्र राघवौ[16] ।[17] [२४
२६उ] क्षत-विक्षत-गात्रास् ते हरयश् च व्युपाऽरमन्[18] ।।२७।। [२५पू
रावणिश् चाऽपि सं-हृष्टः प्र-याते मारुताऽऽत्मजे ।[19]
२७] नि-कुम्भिलाम् अधि-ष्ठाय[20] जुहावाऽग्निम् अथेन्द्र-जित्[21] ।२८। [२६

---

१. फ म-नास्ति ॥ २. ल$_1$ ल$_2$ ब-०वेगं ॥ ३. रा$_2$ फ म-शैलैः । ४. प्र-०बलाः ॥ ५. भ-ते तेन भग्नाश्चस्कन्दू । ६. भ-समराज् । ७. फ म-नास्ति ॥ ८. भ-संक्रुद्धो । ९. भ-सन्नि० । १०. भ-तान्वनौ० ॥ ११. रा$_2$-च युध्यामो सा हता । १२. भ-तु । १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ-रामं सुग्रीवमेव च । १४. रा$_2$ फ म-प्रतिविधास्येते ॥ १५. रा$_2$ फ म-राक्षसांस्तदा । १६. रा$_2$ फ म भ-सबलः सन्न्यवर्तत । १७. रा$_2$ फ म-ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवौ । १८. भ-चाप्युपागमन् ॥ १९. रा$_2$ फ म-नास्ति । २०. रा$_2$ फ-अथासाद्य । २१. म-नास्ति ॥

यज्ञ-भूमौ तु विधिमा पावकम् तेन रक्षसा ।
२८] हूयमानः प्र-जज्वाल जप-होम-पुरस्कृतः ॥२९॥ [२७
सोऽर्चिर्-विनद्धो ददृशे होम-शोणित-तर्पितः ।
२९] सन्ध्या-गत इवाऽऽदित्यस् तीक्ष्ण-रूपो हुताऽशनः ।३०॥ [२८
अथेन्द्र-जिद् राक्षस-भूतये तदा
जुहाव हव्यं विधिना विधि-ज्ञः ।
दृष्ट्वा व्यू-अतिष्ठन्त च राक्षसास् ते
N] महा-समूहेषु नयाऽनय-ज्ञाः ॥३१॥ [२९

इत्यार्षे रामायणे युद्ध-काण्डे वानराऽपसर्पणं
नाम षष्टितमः सर्गः ॥ ६० ॥

---

## [वं–६२]= [एकषष्टितमः सर्गः] =[दा–८३]

राघवश् चाऽपि तत्-कालं तद् राक्षस-वनौकसाम् ।
१] श्रुत्वा संग्राम-निर्घोषं जाम्ब-वन्तम् उवाच ह ॥१॥ [१
सौम्य नूनं हनु-मता सं-ग्रामः क्रियते महान् ।
२] श्रूयते हि यथा भीमः सु-महान् आयुध-स्वनः ॥२॥ [२
तद् गच्छ कुरु साहाय्यं क्षिप्रम् ऋक्ष-पते स्वयम् ।
३] स्व-बलेन समा-युक्तो युध्यमानस्य मारुतेः ॥३॥ [३
ऋक्ष-राजस् तथोक्तस् तु स्वेनाऽनीकेन सं-वृतः ।
४] आऽगच्छत् पश्चिम-द्वारं हनू-मान् यत्र वानरः ॥४॥ [४
अथाऽऽयान्तं हनू-मन्तं ददर्शर्क्ष-पतिः पथि ।

---

१. रा$_2$ फ म भ-०परिष्कृतः ॥ २. रा$_2$ फ म-परिवेषसमन्वितः । भ-तीव्ररूपो हु० ॥ ३. भ-०ससंघभूत्यै । ४. भ-हृष्टाः स्थिता राक्षसयोधमुख्या । ५. प्र-०हेतु ॥ ६. प्र ब भ-लंकाकांडे । म-युद्धपर्वणि ॥ ७. भ-अभाषत ॥ ८. ब म-०मतो नित्यं संग्राममूर्धनि ॥ ९. रा$_2$ फ म-स्वबलेनाभिसंवृतः । १०. रा$_2$ फ-क्षिप्रं ऋक्षपते तस्य सहायो भव युध्यतः । म-नास्ति ॥ ११. भ-नास्ति । १२. ल$_1$ ब-अग० । १३. भ रा$_2$-हनु० ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब-अथ यान्तं ।

५] वानरैर् दत्त-संग्रामैः[1] श्वसद्भिः परि-वारितम्[2] ॥५॥ [५
दृष्ट्वा पथि हनू-मांस्[3] तु तम् ऋक्ष[3]-पतिम् उद्-यतम्[5] ।
६] नील-मेघ-निभं[4] घोरं स सम्-एत्य न्य्-अवर्तत ॥६॥ [६
अथ जाम्ब-वता सार्धं[6] राघवाऽन्तिकम् एत्य सः ।[6]
७] शशंस[7] हनु-मान् वीरो यत् तद् इन्द्र-जिता कृतम् ॥७॥ [७
गर्जतां[8] युध्यमानानाम् असिनो पश्यतां[9] च नः ।[10]
८] जघान रुदतीं सीताम् इन्द्र-जित् पाप-निश्चयः[11] ॥८॥ [८
उद्भ्रान्त-चित्तस्[12] तां दृष्ट्वा वि-षण्णोऽहम् अरिं-दमं[13] ।
९] तमसा महता छन्नो वि-ज्ञापयितुम्[14] आ-गतः ॥९॥ [९
तस्य[15] तद् वचनं[15] श्रुत्वा रामो दुःखेन मूर्च्छितः ।
१०] नि-पपात तदा भूमौ कृत्त[16]-मूल इव द्रुमः ॥१०॥ [१०
तं भूमौ देव-संकाशं पतितं प्रेक्ष्य राघवम्[17] । [११पू
११] जग्राह लक्ष्मणः शीघ्रम् अभ्युपेत्य सु-दुःखितम् ॥११॥[19] [N
जाम्ब-वान् हनु-मान् मैन्दो नलो नीलश् च वानराः[18] ।
१२] अभि-पेतुः समुत्-पत्य सर्व-तो हरि-यूथपाः[20] ॥१२॥ [N
सिषिचुः सलिलैश् चैनं पद्मोत्पल-सुगन्धिभिः[21] ।
१३] दह्यमानं महा-दुःखैर् महा-कक्ष्यम् इवाऽग्निभिः ॥१३॥ [१२

---

१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ भ-कृतसं० । २. रा$_{2}$ फ म-अभिसंवृतं ॥ ३. रा$_{2}$ फ म-०मांश्च तदृक्षबलम् । ४. रा$_{2}$ फ म-०घचयप्रख्यं । ५. अ-नास्ति ॥ ६. अ-नास्ति । रा$_{2}$ फ म-स तेन सह सैन्येन सन्निकर्षं महात्मनः । ७. रा$_{2}$ फ-शीघ्रमागत्य रामाय व्यथितो वाक्यमब्रवीत् । म-नास्ति ॥ ८. रा$_{2}$-जनानां । फ-यत्तानां । ९. रा$_{2}$ फ-द्विषतां प्रेक्ष्यतां । १०. म-नास्ति । ११. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-रावणात्मजः ॥ १२. रा$_{2}$ फ म-०न्तचेतनो । १३. ल$_{1}$ ल$_{2}$ ब-०ण्णो ह्यरिमर्दन । १४. रा$_{1}$-विज्ञ० ॥ १५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र भ-स सीतां निहतां । १६. प्र-छिन्न० ॥ १७. फ म-नास्ति ॥ १८. ल$_{1}$ ब अ प्र रा$_{2}$-०रः । १९. अतः परमधिकः पाठः—रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$-लक्ष्मणश्च महाबाहुस्तं समाश्वासयन्प्रभुम् । फ म-नास्ति । २०. रा$_{2}$ फ म-कपियू० ॥ २१. प्र-नास्ति । रा$_{2}$ फ म-प्रदहन्तमसह्यं च समिद्धमिव पावकं ॥

बाहुभ्यां सम्परि-ष्वज्य सु-दुःखितम् उवाच ह ।[1]
१४] [2]लक्ष्मणो रामम् अ-स्वस्थं वाक्यं हेत्वर्थ-संयुतम् ॥१४॥ [१३
[3]शुभे वर्त्मनि तिष्ठन्तं त्वाम् [4]ऋजुं विजितेन्द्रियम् ।
१५] अन्-अर्थेभ्यो न शक्नोति त्रातुं धर्मो निर्-अर्थकः ॥१५॥ [१४
भूतानां स्थावराणां च जंगमानां च दर्शनम्[5] ।
१६] [6]यथाऽस्ति न तथा धर्मस् तेन [7]नास्तीऽति मे मतिः ॥१६॥ [१५
यथैव स्थावरं सर्वं जंगमं च तथा-विधम् ।
N] नाऽयं धर्मस्[8] तथा युक्तस् त्वद्-विधेन नि-षेवितुम्[9] ॥१७॥[10] [१६
यदि धर्मो भवेत् सत्यो रावणो नरकं व्रजेत्[11] ।
१७] भवांश् च[12] धर्म-संयुक्तो नेदं व्य्-असनम् आप्नुयात् ॥१८॥ [१७
तस्य चाऽव्यसनं दृष्ट्वा तव च व्य्-असनं तथा[13] । [१८पू
१८] धर्मेणोप-लंभे[14] धर्मम् अ-धर्मे वाऽप्य् अ-धर्मताम्[15] ॥१९॥ [१९पू
[18]ये [16]हि धर्मेण युज्येरंस् ते हि धर्म-व्रता नराः ।
१९] [17]अ-धार्मिका ह्य् अ-धर्मेण फलं स्यात् [19]समम् एतयोः ॥२०॥ [२०
यस्माद् [20]अर्थैर् वि-वर्धन्ते येष्व्[21] अ-धर्मः सु-दारुणः[22] ।
२०] अन्-अर्थो येषु धर्मश् च तस्माद् धर्मो निर्-अर्थकः ॥२१॥ [२१

---

१. रा$_{2}$ फ म-लक्ष्मणस्तं तु बाहुभ्यां परिष्वज्य सुदुःखितः । २. रा$_{2}$ फ म-उवाच ॥ ३. रा$_{2}$ फ म-शुचौ । ४. रा$_{2}$ फ म भ-आर्य ॥ ५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-सर्वशः । ६. रा$_{2}$-तथास्ते । ७. रा$_{2}$ फ म-सत्येन नास्ति सः ॥ ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$-अर्थस् । ९. ल$_{1}$-०तं । १०. फ म-नास्ति ॥ ११. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ-न भविष्यति । भ-न भवेत्पुनः । १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-चेद् ॥ १३. रा$_{2}$ फ म-तस्य च व्यसनाभावाद्व्यसनैश्चावृते त्वयि । १४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ-०भेऽधर्मं । १५. रा$_{2}$ फ म-अधर्मेणापि धर्मतां ॥ १६. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-यदि । १७. रा$_{2}$-तेष्वधर्मश्च तेष्वर्थः । फ-येष्वधर्मश्च तेष्वर्थः । १८. रा$_{2}$ फ भ-एवं १९. म-नास्ति ॥ २०. प्र-अर्था । २१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-यथाधर्मः । म-तेष्वकार्यः । २२. भ-प्रतिष्ठितः ॥

वध्यन्ते[1] पुण्य-कर्माणो यद्य् अ-धर्मेण राघव[2] ।
२१] अ-धर्मेण हतो धर्मः स हतः किं करिष्यति ।।२२।। [२२
अथवा वि-हिते(?तो)नाऽयं हन्यते हन्ति चाऽपरम्[3] ।
२२] वि-धाता[4] लिप्यते तेन तस्मात् पापेन[5] कर्मणा ।।२३।। [२३
अ-दृष्टः[6] प्रति-संस्कारो[7] यदि[8] पापस्य कर्मणः ।
२३] कथं[9] शक्यं परं प्राऽऽप्तुं धर्मेणं रिपु-सूदन[10] ।।२४।।[11] [२४
अथ वा[12] दुर्-बलं[13] त्यक्त्वा[13] बलं धर्मोऽनु-वर्तते ।
२५] दुर्-बलो[14] हत[15]-मर्यादो न सेव्य इति मे मतिः ।।२५।। [२६
बलस्य[16] यदि वा धर्मो[17] गुण-भूतः समा-हितः[18] ।
२६] धर्मम् उत्-सृज्य वर्तस्व यथा धर्मे[19] तथा बले[19] ।।२६।। [२७
[20] यदि वा सत्य-वचनं धर्मः किल परो मतः[21] ।
२७] अन्-ऋतस् त्यक्त-करुणः[22] किं न बद्धः पिता त्वया ।।२७।[23] [३१
अथैवैतन्[24] मतं दानं धर्मोऽयम् इति राघव ।

---

१. भ-बाध्यंते । २. फ-कर्महतो धर्मः स हतः किं हनिष्यति ॥ ३. रा$_2$ फ म भ-वाऽ१० । ४ रा$_2$ फ म-वधेन । ५. म-पापो न लिप्यते ॥ ६. रा$_1$ ल$_2$ ब अ-सदुष्टः । ७. रा$_2$ फ-०संहारं । ८. भ-मन्यंते तु सनातनं । ९. भ-अथ । १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०णारिनिसू० । रा$_2$ फ म-०णारिविनाशनं । ११. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र-यदि सत्स्यात्सतां मध्ये नासत्स्यात्तत्र किंचन । त्वयेदमीदृशं प्राप्तुं तस्मान्नैवोपपद्यते ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-ते । फ-चेद् । १३. रा$_1$ ल$_1$ ल$_2$ ब-दुर्लभः क्लीबो । अ प्र-दुर्बलः क्लीबो । १४. रा$_1$ ल$_1$ ल$_2$ ब-दुर्लभो । १५. भ-कृतम० ॥ १६. रा$_2$ फ म-बले स्याद् । १७. रा$_2$ फ म-हर्षो । १८. रा$_2$ फ म-स मानदः । १९. भ-धर्मस्तथा बलं ॥ २०. रा$_2$ फ म-अथ चेद् । २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-यतः । २२. भ-त्वय्यकरुणः किं न बुद्धः । २३. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र-यदि धर्मो भवेद्भूतिर्नाधर्मात्तु परंतप । तस्मात्त्वा निर्बलं वशी-कुर्यादित्य शतक्रतुः ॥ अधर्मसंश्रितो धर्मो विनाशयति राघव । सर्वमेतद्यथा-कामं काकुत्स्थ कुरुते नरः ॥ २४. भ-अथ चैतन्मतिर् ।

२८] धर्म-मूलं हि तच् छिन्नं राज्यम् उत्सृजता त्वया ॥२८॥ [३१
अर्थेभ्यो हि वि-वृद्धेभ्यः सम्-ऋद्धेभ्यस् ततस् ततः ।
२९] क्रियाः सर्वाः प्र-वर्तन्ते पर्वतेभ्य इवाऽऽप-गाः ॥२९॥ [३२
अर्थेन हि वि-हीनस्य पुरुषस्याऽल्प-मेधसः ।
३०] वि-च्छिद्यन्ते[1] क्रियाः सर्वा ग्रीष्मे[2] कु-सरितो[2] यथा ॥३०॥ [३३
पुरुषोऽर्थ-परित्यक्तः[3] सुख-कामः सु-दुःखितः ।
३१] पापम् आ-रभते कर्तुं[4] क्रिया-दोषो[4] हि जायते ॥३१[5]॥ [३४
यस्याऽर्थास्[6] तस्य मित्राणि यस्याऽर्थास् तस्य बान्धवाः ।[5]
३२] यस्याऽर्थाः स पुमांल् लोके यस्याऽर्थाः स[7] च पण्डितः[7] ॥३२॥ [३५
यस्याऽर्थाः स महा-भागो यस्याऽर्थाः स[8] गुणाऽन्वितः ।
३३] यस्याऽर्थाः स च वि-क्रान्तो यस्याऽर्थाः[8] स च सं-मतः[9] ॥३३[10]॥ [३६
३५पू] अ-धनेनाऽर्थ-कामेन नाऽर्थाः[11] शक्या उपाऽर्जितुम्[11] । [N
३८पू] येनाऽर्थेन[12] तु लोकोऽयं[12] चरते धर्म-कारणम्[13] ॥३४॥ [४०पू
३५उ] अर्थैर् अर्था नि-बध्यन्ते गजैर् इव[14] महा-गजाः[14] । [N
३८उ] ते नाऽर्थास् त्वयि दृश्यन्ते दुर्-दिनेषु ग्रहा इव ॥३५॥ [४०उ
धनम् अर्जय[15] काकुत्स्थ धन-मूलम् इदं जगत् ।
३९] वि-शेषं नाऽधि-गच्छामि निर्-धनस्य मृतस्य च ॥३६[16]॥ [N
चाण्डालश्[17] च दरिद्रश् च द्वाव् एतौ सदृशौ मम ।
४०] चाण्डालस्य न[18] गृह्णन्ति दरिद्रो न प्र-यच्छति ॥३७॥ [N
त्वयि प्र-व्रजिते वीर पितर्य् उप-रते तथा[19] ।
४१] रक्षसाऽप-हृता भार्या प्राणेभ्योऽपि[20] गरीयसी[20] ॥३८॥ [४१
अर्थस्यैते[21] परि-त्यागाद्[22] दोषाः प्रव्या-हृता मया ।

---

१. रा$_{2}$–व्युच्छि० । २. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–ग्रीष्मेषु स० ॥ ३. रा$_{2}$ फ–सोऽयमर्थैः प० । ४. भ–क्षयाद्दोषो । ५. म–नास्ति ॥ ६. ल$_{1}$ प्र ब–०र्थंस् । ७. ल$_{1}$ ल$_{2}$–सर्वप० ॥ ८. भ–नास्ति । ९. अ प्र रा$_{2}$ फ म–बुद्धिमान् । १०. अतः परमधिकः पाठः—अ प्र रा$_{2}$ फ म भ–यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् ॥ ११. रा$_{2}$ फ म–चर्तुं धर्मो न शक्यते । भ–०क्याः समीहितुं । १२. रा$_{2}$ फ म–येषामर्थे ह्ययं लोकश् । ल$_{1}$ ल$_{2}$–०न च लो० । भ–येषामर्थेन लो० । १३. रा$_{2}$ फ म–०र्मचारिणं ॥ १४. रा$_{2}$ फ म–वनगजा इव ॥ १५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब–आर्जय । १६. अ–नास्ति ॥ १७. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब प्र–चंडा० । १८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब प्र–च ॥ १९. ल$_{2}$ रा$_{2}$–यथा । २०. रा$_{2}$ फ म–प्राणैः प्रियतरा सती ॥ २१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब प्र भ–०स्य ते । २२. रा$_{2}$ फ म–०त्यागे ।

३६] राज्यम् उत्-सृजता[1] वीर[1] न[2] तद् बुद्धं तदा त्वया[2] ॥३९॥ [३७
धर्मः कामश् च दर्पश् च हर्षः क्रोधः श्रुतं[3] दमः[3] ।
३७] अर्थाद् एतानि सर्वाणि प्र-वर्तन्ते न संशयः ॥४०॥ [३९
तद् अ-सह्यम् इदं घोरं[4] दुःखम् इन्द्र-जिता[5] कृतम् ।
४२] कर्मणा व्यप-नेष्यामस्[6] तस्माद् उत्-तिष्ठ राघव ॥४१॥ [४२
उत्-तिष्ठ शतपत्राऽक्ष[7] दीर्घ-बाहो दृढ-व्रत ।
४३] किम् आत्मानं महाऽऽत्मानं श्रुताऽऽत्मन् नाऽव-बुध्यसे ॥[8]४२॥ [४३
अयम् अहम्[9] अद्य वि-भो तव[9] प्रियाऽर्थं
जनक-सुता-निधनं सम्-ईक्ष्य रोषात् ।
स—रथ—गज—हयां[10] स-राक्षसेन्द्रां[10]
४४] भृशम् इषुभिर् विनि-पातयामि लंकाम् ॥४३॥ [४४

इत्यार्षे रामायणे युद्ध-काण्डे[11] राम-समाश्वासनं[12] लक्ष्मण-वाक्यं
नामैकषष्टितमः सर्गः ॥ ६१ ॥

---

## [ वं—६२ ]= [ द्विषष्टितमः सर्गः ] =[ दा—८४ ]

रामम् आ-श्वासमाने तु लक्ष्मणे भ्रातृ-वत्सले ।
१] निर्-ईक्ष्य[13] गुल्मान् सकलांस् तत्राऽगच्छद्[14] वि-भीषणः ॥ १॥ [ १
नाना-प्रहरणैर् वीरैर्[15] राक्षसैर् अपरैर्[16] वृतः[16] ।
२] महामेघचयाऽऽकारैर्[17] मातंगैर् इव यूथ-पः ॥ २॥ [ २
अभि-गम्य[18] महा-वीर्यो[19] राघवस्य[20] समीप-तः[20] ।
३] स ददर्श हरीन् दीनान् सुग्रीवाऽऽदीन् स-लक्ष्मणान् ॥[21]३॥ [ ३

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०ज्यतां राजन् । २. रा$_2$ फ म—येन बुद्धिस्त्वया कृता ॥ ३. रा$_1$ ल ल$_1$ ब—श्रुतं मदः । प्र—शमं तपः । रा फ म—श्रुतं तपः ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—वीर । ५. रा$_1$—०जितः । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—चाप० ॥ ७. भ—पद्मप० । ८. रा$_2$ फ म—नास्ति । भ—कृतात्मानं कृतात्मा च महात्मन्नावबुध्यसे ॥ ९. रा$_2$ फ म—अयमद्य तवोदितः । १०. रा$_2$ फ म—सहयगजरथं सराक्षसेन्द्रं ॥ ११. ब प्र भ—लंकाकांडे । १२. ल$_1$ ल$_2$ ब भ—नास्ति । रा$_1$ अ प्र—रामाश्वासनं ॥ १३. रा$_2$ फ—अवेक्ष्य । १४. रा$_2$ फ—ततः प्राप्तो । म—तत्र प्राप्तो ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—घोरैः । १६. म—अभिसंवृतः । १७. रा फ म—०घनिकाशैश्च ॥ १८. रा$_2$ म—सोऽभिगम्य । फ—सोऽधिगम्य । १९. रा$_1$ ल$_1$ ल$_2$—०वीरो । २०. रा$_2$—नास्ति । २१. फ म—ददर्श वानरान् दीनान्सुग्रीवं सलक्ष्मणं ॥

तत इक्ष्वाकु-शार्दूलं पार्थिवं[1] सचिवैर् वृतम् ।[2]
४] ददर्श मोहम् आ-पन्नं लक्ष्मणस्यांऽकम् आ-श्रितम् ॥ ४॥ [ ४
क्लान्तं शोकाऽभिसन्तप्तं वीऽऽक्षमाणं वि-भीषणम् ।[3]
५] दुर्-मनास्[4] तत्र[4] दीनाऽऽत्मा किम् एतद् इति सोऽब्रवीत् ॥[5]५॥ [ ५
N] तं विषण्ण-मुखं दृष्ट्वा ध्यान-युक्तं वि-भीषणम् ।
६उ] उवाच लक्ष्मणो वाक्यम् इदम् अश्रु-परिप्लुतः ॥ ६[6]॥ [ ६
हताम् इन्द्र-जिता वीर[7] सीतां[7] श्रुत्वैव राघवः ।
७] हनूमद्-वचनाद् एष[8] ततो मोहम् उपाऽऽगतः ॥ ७॥ [ ७
कथयन्तं[9] तु सौमित्रिं सन्नि-वार्य वि-भीषणः ।
८] पुष्कलाऽर्थम् इदं वाक्यम् अ-स्वस्थं[10] रामम् अब्रवीत् ॥ ८॥ [ ८
मनुजेन्द्राऽऽर्त-रूपेण यद् उक्तस् त्वं हनू-मता ।
९] तद् अ-युक्तम् अहं[11] मन्ये सागरस्येव सं-क्षयम् ॥ ९॥ [ ९
अभि-प्रायं हि[12] जानामि रावणस्य दुर्-आत्मनः ।
१०] सीतां प्रति महा-बाहो न स तां घातयिष्यति ॥१०॥ [१०
याच्यमानः स हि मया वाक्यैर् धर्माऽर्थ-संहितैः ।[13]
११] वैदेहीम् उत्-सृजस्वेति[14] न च वाक्यं चकार सः[14] ॥११॥ [११
नैव साम्ना न दानेन न भेदेन गताऽऽयुषा[15] । [१२पू
१२] शक्या सा द्रष्टुम् अन्येन राक्षसेन नरर्षभ ॥[16]१२॥ [N
यदा तु स हि सं-ग्रामम् उप-यास्यति रावणिः । [N
१३] चैत्यं[17] नि-कुम्भिला, नाम तत्र गत्वा प्र-तिष्ठते[18] ॥१३॥ [१३उ

---

१. रा$_1$ ल$_1$ ल$_2$ ब–०वैः । २. रा$_2$ फ–राघवं च महावीर्यमिक्ष्वाकुकुल-वर्धनं ॥ ३. रा$_2$ फ म–व्रीडितः शोकसंतप्तः प्रेक्ष्य रामं विभीषणः । ४. रा$_2$ फ–अन्तर्मुखेन । ५. म–नास्ति ॥ ६. अतः परमधिकः पाठः—म–विभीषण न जानासि यदिदं कर्म दुष्करम् ॥ ७. रा$_2$ फ–सीतां सम्यक् । म–सीतामद्य । ८. रा$_1$ ब अ–एव । प्र–दोषात् । रा$_2$ फ म–वीर ॥ ९. रा$_2$ फ म–तथा यांतं । १०. रा फ म–ससंज्ञं । भ–विसंज्ञं ॥ ११. रा$_1$ ल$_1$ ल ब अ–इदं । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–तु । भ–च ॥ १३. रा$_2$ फ–याच्यमानो हितार्थं नु वाक्यं धर्माऽर्थसंचितं । म–याचमानं हितार्थं स वा० । १४. प्र–०ति न च वाक्यं चकार ह । रा फ–०ति न स तत्कृतवान्वचः । म–०जेत्येवं न चकार तथावचः ॥ १५. रा$_2$ म भ–कुतो युधि । फ–कुतो रुषा । १६. फ म–अनिरस्तेन वैदेही शक्या मोक्तुं हि संयुगे ॥ १७. भ–चैत्यो । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म–०ष्ठितं ॥

हुत्वाऽग्निम्[१] उप-यातो हि[१] देवैर् अपि स-वासवैः ।
१४] अ-दर्शनीयो[२] भवति सं-ग्रामे स हि राक्षसः ॥[३]१४॥[१४
१५उ] वि-घ्नम् अन्व्-इच्छता तात वानराणां पराऽऽक्रमे ।[४] [१५उ
N] तद्[५] अग्निं होष्यताऽनेन[५] नूनं माया प्र-दर्शिता ॥१५॥ [N
सु-ग्रीवस्य च सैन्यानां लक्ष्मणस्य च धी-मतः ।
N] जय-विघ्न-करी तेन माया सा सम्प्र-दर्शिता ॥१६[६]॥ [N
तवाऽप्य् उद्यत-सैन्यस्य[७] सीता-विजय-कांक्षिणः ।
N] नैराश्यम् उप-नेतुं सा तव माया प्र-दर्शिता ॥[८]१७[८]॥ [N
नि-कुम्भिलायां काकुत्स्थ स जुहोति न संशयः ।
१६] स-बलास् तत्र गच्छामो यावत् तन्[१०] न[१०] सम्-आप्यते ॥१८॥ [N
त्यजैनं[११] नर-शार्दूल मिथ्या-सन्तापम् आ-गतम् ।
१७] सीदत्य्[१२] एतद्[१२] बलं सर्वं[८] दृष्ट्वा त्वां शोकम् आ-गतम्[१३] ॥१९॥ [१६
इहाऽस्वस्थो[१४] महा-बाहो स्व-स्थो भवितुम् अर्हसि ।[१५]
१८] लक्ष्मणं प्रेषयाऽस्माभिः[१६] सह सैन्याऽनुकर्षिभिः ॥२०॥ [१७
एष तं[१७] नर-शार्दूलो रावणिं[१८] नि-शितैः शरैः ।
१९] त्याजयिष्यति तत् कर्म प्राणान्[१९] इष्टांश्[१९] च सं-युगे ॥२१॥ [१८
एतस्य[२०] नि-शितास् तीक्ष्णाः पत्रिणो[२१] रुक्म-भूषणाः[२१] ।
२०] पिपासिता इव ख-गाः पास्यन्ति युधि[२२] शोणितम् ॥[२३]२२॥ [१९
२१पू] तद् आ-दिश महा-बाहुं[२४] लक्ष्मणं शुभ-लक्षणम् ।

---

१. रा$_2$ म–स हुतो वै हुताशे तु । फ–स हुते वै हुताशे च । २. भ–अधर्षणीयो । ३. रा$_2$ फ म–अधृष्यः स तु संग्रामे बलवान्रावणात्मजः । अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–सीतां घातयता नूनमेषा माया प्रदर्शिता ॥ ४. रा$_2$ म–नास्ति । ५. रा$_2$ फ म–तेन हव्यनिमित्तार्थं ॥ ६. रा$_2$ म–नास्ति ॥ ७. फ–उच्छ्रित० । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–कर्मणस्तस्य सिद्ध्यर्थमुपायः संप्रदर्शितः । ९. म–नास्ति ॥ १०. रा$_1$ ल$_1$ ल$_2$ अ–तेन ॥ ११. रा$_2$ फ म भ–त्यजेमं । १२. रा$_2$ फ म–मुह्यते हि । १३. रा$_2$ फ म–शोककर्शितं । भ–शोकपीडितं ॥ १४. भ–इहस्थस्त्वं । १५. रा$_2$ फ म–इह त्वं स्वस्थहृदयस्तिष्ठस्वारिविनाशन । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०यामास ॥ १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ भ–ते । १८. रा$_1$–०णिर् । १९. रा$_2$ फ–प्राणनिष्टां ॥ २०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–तस्यैते । २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०णो रक्तभू० । रा$_2$ फ म–सुपत्राः कंकवाससः । २२. प्र भ–हृदि । २३. रा$_2$ फ म–पतत्रिण इवासौम्याः शराः पास्यन्ति शो० । २४. प्र रा$_2$ फ म–०बाहो ।

N] रक्षसस् तस्य नाशाय वज्रं वज्र-धरो यथा ॥२३[१]॥ [२०
मनुज-वर[२] न काल-विप्रकर्षो[२]
रिपु-निधनं परि-मार्गतां क्षमं ( ? मो ) नः ।
वद[३] वि-सृज[३] रिपोर् वधाय बाणान्[४]
२२] असुर-वरस्य[५] वधाय वै यथेन्द्रः[५] ॥२४॥ [२१
समाप्त-कर्मा स हि नैर्ऋतो भवेद्
असह्य-वीर्यः सम्-अरे सु-दुर्जयः ।
युयुत्सता तेन समाप्त-कर्मणा
२३] भवेत् सुराणाम् अपि सं-क्षयो महान् ॥२५॥ [२२

इत्यार्षे रामायणे युद्ध-काण्डे[६] विभीषण-वाक्यं[७] नाम
द्विषष्टितमः सर्गः ॥ ६२ ॥

---

## [ वं–६४ ]= [ त्रिषष्टितमः सर्गः ] =[ दा–८५ ]

तस्य तद् वचनं श्रुत्वा चिन्ता-शोक-परिप्लुतः ।
१] नाऽव-धारितवान् पूर्वं[८] यद्[९] उक्तं[९] तेन रक्षसा ॥ १॥ [१
N] ततो धैर्यम् अव-स्थाप्य रामः पर-पुरं-जयः ।
वि-भीषणम् उपाऽऽसीनम् उवाच वदतां-वरः ॥ २॥ [२
२] नैर्ऋताऽधिपते वाक्यं किं[९] त्वयोक्तं[९] वि-भीषण । [३पू
व्या-कुलत्वाद् धि चित्तस्य न श्रुतं ते वचो मया ।[१०] [N
३] भूयस् तच् छ्रोतुम् इच्छामि ब्रूहि यत् ते विवक्षितम् ॥ ३॥ [३उ
राघवस्य वचः[११] श्रुत्वा सुदीन-वद् उदा-हृतम्[११] ।
४] यत्नात्[१२] पुनर् इदं वाक्यं बभाषे स वि-भीषणः ॥ ४॥ [४
यथाऽऽज्ञप्तं[१३] महा-बाहो त्वया गुल्म-निवेशनम् ।

---

१. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र–वधाय रावणेस्तस्य सहास्माभिररिन्दम ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–न तु जयरणकाल० । रा$_2$ फ म–०वर कालविक्रमो न । ३. रा$_2$ फ म भ–तदतिसृज । ४. रा$_2$ फ–वाणी । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०स्य वधे यथा महेन्द्रः । रा$_2$ फ–असुरवरोन्मथनाय वै यथेन्द्रः ॥ ६. ब प्र भ–लंकाकांडे । ७. रा$_2$ फ–रामाश्वासनं । भ–इन्द्रजिद्वधोपायो ॥ ८. प्र–राघवस् । ९. भ–त्वयोक्तं यद् । १०. फ म भ–नास्ति ॥ ११. रा$_2$ फ म भ–तु तद्वाक्यं श्रुत्वा वाक्यविशारदः । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–यत्स । रा$_2$ फ–यत्तत् ॥ १३. ल$_1$–०ज्ञासं ।

५] तत् तथाऽनु-ष्ठितं वीर त्वद्-वाक्य-समनन्तरम्[1] ॥ ५॥ [५
स्वान्य् अनीकानि सर्वाणि वि-भक्तानि समन्त-तः ।
६] न्य्-अस्ताश् च यूथप-श्रेष्ठा[2] यथा-न्यायं विभाग-शः ॥ ६॥ [६
भूयस् तु मम वि-ज्ञाप्यं[3] श्रोतुम् अर्हसि राघव[3] ।
७] त्वत्-सन्ताप-निमित्तं हि सन्तप्त-हृदयो ह्य् अहम् ॥[4] ७॥ [७
त्यज्यतां तद् इदं दैन्यं[5] वृथा शोक-निबन्धनम्[5] । [८
८] मायया यत् कृतं तेन तत्[6] ते श्रोत्रम् उपाऽऽगतम्[6] ॥ ८॥ [N
तद् इयं त्यज्यतां चिन्ता शत्रु-पक्ष-प्रहर्षिणी[7] ।
९] उद्-यमः क्रियतां वीर हर्षः[8] समुप-सेव्यताम्[8] ॥ ९॥ [९
प्राऽऽप्तव्या यदि वैदेही[9] हन्तव्यो यदि रावणः[10] ।
१०] रोचतां तन्[11] महा-बाहो मद्-वाक्यम् इदम् ऊर्जितम् ॥१०॥ [१०
साध्व्[12] अयं यातु[12] सौमित्रिर् दुर्-मतेस्[13] तस्य रक्षसः[13] ।
११] नि-कुम्भिलायां प्राऽऽप्तस्य ग्रसनाय[14] दुर्-आत्मनः ॥[15] ११॥ [११
धनुर्-मुक्तैर्[16] व्य्-अवच्छिन्नैर्[16] आशीविषविषोपमैः ।
N] शरैर् हन्तुं महेष्वासो रावणिं समितिं-जयः ॥१२॥ [१२
तपसा तेन वीरेण[17] वर-दानात् स्वयं-भुवः ।
१२] अस्त्रं ब्रह्म-शिरः प्राऽऽप्तं काम-गश्[18] च रथोत्तमः[18] ॥१३॥ [१३
स एव वि-दधे तस्य[19] भग-वांल् लोक-कृद् वधम्[19] ।[20]
१३] तेजसा[21] सम्प्र-तप्तस्य[21] तपसोऽन्ते[22] हि तस्य[22] च ॥१४॥ [N
नि-कुम्भिलाम् अ-सम्प्राऽऽप्तम् अहुताऽग्निं च यो रिपुः ।
N] अभि-यास्यति युद्धे त्वाम् इन्द्र-शत्रो स ते वधः ॥१५॥ [१५

---

१. रा$_1$ ल$_1$ ब अ रा$_2$ फ–०वाक्यं स० ॥ २. म–०पाः सर्वे ॥ ३. रा$_2$ फ–०प्यं त्वमिदं श्रोतुमर्हसि । म–विज्ञातं तमेवं श्रोतुमर्हसि । ४. रा$_2$ फ म–त्वय्यकारणसंतप्ते संतप्तहृदया वयं ॥ ५. रा$_2$ फ म–शोकं मिथ्याश्रमसुपागतं । ६. रा$_2$ फ म–राक्षसेन दुरात्मना ॥ ७. रा$_2$ फ म–शत्रुहर्षप्रदायिनी । ८. रा$_2$ फ–समुपपद्यतां । म–०पलभ्यतां ॥ ९. रा$_2$ फ म–ते सीता । १०. रा$_2$ फ म–ते रिपुः ॥ ११. फ म भ–ते ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब अ फ–साधु संयातु । प्र–साध्वसौ यातु । १३. रा$_2$ फ म–सहास्माभिर्नरोत्तमः । १४. प्र भ–प्रगाशाय । भ–शासनाय । १५. रा$_2$ फ म–निकुभिलां महाबाहो निहंतुं रावणात्मजं ॥ १६. रा$_2$ फ म भ–सुविभक्तैरविच्छिन्नैर् । १७. अ–वीर्येण । १८. रा$_2$ फ म–०गाश्च हयोत्तमाः ॥ १९. रा$_2$ फ म–चास्य धीमतः पुण्यकर्मणः । २०. फ–अतः परं ६६–तमसर्गस्य १५–शश्लोकान्तः पाठस्त्रुटितः । २१. भ–०साभिप्र० । २२. भ–०सान्तर्हित० ॥

इत्य् एवं वि-हितस्[1] तस्य वधस् तेन महाऽऽत्मना[1] । [१६पू
१४] त्वरस्व[2] तद्-वधाय[2] त्वं वृत्रस्येव[3] पुरं-दरः ॥[4]१६॥ [N
वधस्येन्द्र-जितो राम हेतुर् भवितुम् अर्हसि ।
१५] हते तस्मिन् हतं मन्ये[5] रावणं राक्षसाऽधिपम्[6] ॥१७[4]॥[१६उ
विभीषण-वचः श्रुत्वा रामो लक्ष्मणम् अब्रवीत् ।
१६] जानामि तस्य रौद्रस्य मायां चैव[8] पराऽऽक्रमम्[7] ॥१८॥ [१७
स हि ब्रह्माऽस्त्र-विच्[8] छूरो[8] वि-हायसि गतो रणे ।
१७] करोत्य्[9] अ-संज्ञान् सं-ग्रामे देवान् अपि स-वासवान्[10] ॥१९॥ [१८
तस्याऽन्तरिक्षे चरतः स-रथस्य महाऽऽत्मनः[11] ।
१८] न गतिर् लक्षितुं[12] शक्या सूर्यस्येवाऽभ्र-संप्लवे[13] ॥[14]२०॥ [१९
तं माया-शत-सम्प्राऽऽप्तं[15] महा-वीर्य-पराऽऽक्रमम्[16] । [२०पू
१९] जहि बाणैर् इतो[17] गत्वा[18] कूट-योधिनम् आ-हवे[18] ॥२१॥ [२२
यद् ऋक्ष-राजस्य बलं तेन सर्वेण सं-वृतः ।
२०] राज्ञा जाम्ब-वता सार्धम् अंग-देन हनू-मता ॥२२॥ [२१
गच्छ त्वं राक्षसेन्द्रस्य तनू-जं जहि लक्ष्मण ।
२१] जेतारं वज्र-हस्तस्य सं-युगेषु दुरा-सदम् ॥२३॥ [N
अयं[19] च[19] सचिवैः सार्धं महाऽऽत्मा रावणाऽनुजः ।
२२] अभि-ज्ञस् तस्य देशस्य पृष्ठ-तोऽनु-गमिष्यति ॥२४॥ [२३
स रामस्य वचः श्रुत्वा लक्ष्मणः पर-वीर-हा ।
२३] जग्राह कार्मुकं श्रेष्ठम् अत्युद्धार-सहं[20] महत्[20] ॥२५॥ [२४
स सं-नद्धः शरी खड्गी कवची हेम-जाल-भृत्[21] ।

---

१. रा$_2$ म–तस्य विहितो वधोपायो दुरात्मनः । २. रा$_2$–त्वर तस्य व० । ३. प्र रा$_2$ भ–मयस्येव । ४. म–नास्ति ॥ ५. रा$_2$–विद्धि । ६. रा$_2$–ससुहृज्जनं ॥ ७. रा$_2$ म–एतां दुरात्मनः । भ–सत्यपराक्रमं ॥ ८. म–दिव्यास्त्रवित्तात । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–कुर्याद् । १०. रा$_2$ म–समागतान् ॥ ११. म–परतप । १२. प्र रा$_2$ भ–वेदितुं । १३. रा$_1$ ल$_1$ ल ब अ–०भ्रसंक्षये ॥ १४. म–अत आरभ्य २१–शश्लोकस्य तृतीयपादं यावन्नास्ति । १५. रा$_2$ भ–०यागमसं० । १६. रा$_2$ भ–०र्यमरिन्दमं । १७. रा$_2$–इदं । १८. रा$_1$ ल$_1$ ल$_2$ ब अ–०त्वा शूलयो० । रा$_2$ म–कर्म कुरु सत्यपराक्रम ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अपरैः । रा$_2$ म–अयं त्वा ॥ २०. रा$_1$ ल$_1$ ल$_2$ ब अ–अन्यद्धार० । रा$_2$ म–भीमं भीमपराक्रमः । भ–महद्धार० ॥ २१. रा$_1$–०लवृत् । अ प्र–०लधृत् । रा$_2$ म–०लवान् । भ–०लधृक् ।

२४] राम-पादाव्[1] उप-स्पृश्य[1] हृष्टः सौमित्रिर्[2] अब्रवीत् ॥२६॥ [२५
अद्य मत्कार्मुकोत्सृष्टाः शरा निर्-भिद्य[3] रावणिम् ।
२५] लंकाम्[4] अभि-पतिष्यन्ति हंसाः पुष्करिणीम्[5] इव ॥२७॥ [२६
अद्य धक्ष्यन्ति भित्त्वा ते मम बाणा धनुश्-च्युताः ।
२६] शरीरं तस्य रौद्रस्य तृण-राशिम्[6] इवाऽनलः ॥२८॥ [२७
इत्य् एवम् उक्त्वा वचनं लक्ष्मणो भ्रातुर् अग्र-तः ।
२७] जिघांसू रावणिं क्रुद्धः[7] प्र-णम्य त्वरितं ययौ[7] ॥२९॥ [२८
स[8] रामम् अभि-वाद्याऽथ[8] कृत्वा चाऽभि-प्रदक्षिणम् ।
N] नि-कुम्भिलाम्[9] अभि-ययौ[9] हन्तुं रावणिम् आ-हवे ॥३०॥ [२९
वि-भीषणेन सहितो राज-पुत्रः प्रताप-वान् ।
N] कृत-स्वस्त्ययनो भ्रात्रा सज्ज-कार्मुक-मार्गणः[10] ॥३१[11]॥ [३०
वानराणां सहस्रैस् तु बहुभिर् हनु-मान् वृतः[12] ।[11]
२८] वि-भीषणश् च साऽमात्यो राम-भ्रातरम् अन्व्-अयात् ॥३२[13]॥ [३१
महा-कपि-बलौघैश् च समं सर्वैः समन्त-तः ।[14]
N] ऋक्ष-राज-बलं तद्-वद्[15] अगच्छन् मेघ-निस्वनम्[15] ॥३३॥ [३२
स गत्वा दूरम् अध्वानं सौमित्रिर् मित्र-नन्दनः[16] ।
२९] राक्षसेन्द्र-बलं दूराद् अपश्यद् व्यूह-संस्थितम्[17] ॥३४॥ [३३
सम्प्राऽऽप्य स धनुष्-पाणिं[18] माया-शत-विशारदम्[19] ।
N] तस्थौ ब्रह्माऽस्त्र-विद् धी-मान् लक्ष्मणः शुभ-लक्ष्मणः ॥३५॥ [३४
विमल-विघन-भास्कर-प्रभावो[20]
ऽध्वज-गहनं गहनं महा-रथैश् च ।

---

१. रा$_1$ ल$_1$ ल ब अ प्र—०दाम्बुजं स्पृश्य । म—०दमुप० । भ—दौ च संस्पृश्य । २. रा$_2$ म—राघवं ॥ ३. म—संभिद्य । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—लोकान् । ५. रा$_1$ अ—०णीर् ॥ ६. रा$_2$ म—कक्षरा० । भ—तूलरा० ॥ ७. रा$_2$ म—युद्धे लक्ष्मणो निर्जगाम ह ॥ ८. रा$_2$ म—भ्रातरं सोभि० । ९. रा$_2$ म—०लायामागत्य ॥ १०. म—लक्ष्मणो निर्ययौ तदा । ११. रा$_2$—नास्ति ॥ १२. रा$_1$—धृतः । म—सह । १३. अतः परमधिकः पाठः—म भ—हनूमंतं समारुह्य गरुत्मन्तं यथा हरिः । प्रययौ लक्ष्मणःश्रीमान् वानरैः परिवारितः ॥ १४. रा$_2$ म—०लौघस्तु कम्पन्निव पर्वतान् । भ—महान् कपिबलौघस्तु समसर्पत सर्वतः । १५. प्र भ—चैव गच्छन्तं मे० । रा$_2$ म—चैव महाभ्रमिव नादयन् ॥ १६. भ—मित्रवर्धनः । १७. ल$_1$ ल$_2$ ब अ प्र भ—व्यूहमास्थितं ॥ १८. रा$_1$ भ—०णिर् । रा$_2$ म—महाबाहुर् । १९. प्र—०तमरिंदमं । रा$_2$ म—बलयोगं महाबलं । भ—तमायान्तमरिंदमं ॥ २०. म—०लविविधचारु भास्करं ।

प्रतिभय-करम् अ-प्रमेयवेगं
N] स्तिमितम् इव द्विषतां वलं विवेश ॥३६॥ [३५

इत्यार्षे रामायणे युद्ध-काण्डे[1] लक्ष्मण-प्रयाणं[2] नाम
त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## [ वं—६५ ]= [ चतुःषष्टितमः सर्गः ]= [ दा—८६ ]

अथ तत्र[3] महा-बाहुं[3] लक्ष्मणं रावणाऽनुजः ।
१] परेषाम् अ-हितं वाक्यम् अर्थ-साधनम्[4] अब्रवीत् ॥ १॥ [ १
अस्याऽनीकस्य महतो भेदं[5] त्वं[5] कुरु लक्ष्मण ।
२] राक्षसेन्द्र-सुतो ह्य् अस्मिन्[6] भिन्ने दृश्यो भविष्यति ॥ २॥ [ ३
तं[7] त्वम् इन्द्राऽशनि-प्रख्यैः[7] शत-शोऽव-किरञ् छरैः ।
३] अभि-द्रवाऽऽशु यावत् तु कर्म नाऽस्य सम्-आप्यते ॥[8] ३॥ [ ४
जहि पापं दुर्-आत्मानं माया-वन्तम्[9] अ-धार्मिकम् ।
N] रावणिं क्रूर-कर्माणं सर्व-लोक-भयाऽऽवहम् ॥ ४[10]॥ [ ५
विभीषण-वचः श्रुत्वा लक्ष्मणः[11] पर-वीर-हा[11] ।
४] राक्षसेषु महा-भीमं शर-वर्षम् अपातयत्[12] ॥ ५॥ [ ६
ऋक्षाः शाखा-मृगाश् चैव वृक्षशैलशिलाऽऽयुधाः[13] ।
५] अभ्य्-अधावन्त सं-हृष्टास् तद्-अनीकम् अव-स्थितम्[14] ॥६[15]॥ [ ७
परे चाऽपि[16] शितैः शूलैर् असिभिः पट्टिसैः[17] शरैः[17] ।
६] उद्-यतैस् त्वरिता जग्मुः कपीन् अभि-जिघांसवः[18] ॥ ७॥ [ ८
स सम्प्र-हारस् तुमुलो बभूव कपि-रक्षसाम् ।
७] शब्दैर्[19] आनादयंल्[19] लंकां जलद-प्रतिम-स्वनैः[20] ॥ ८॥ [ ९

---

१. प्र ब भ—लंकाकाण्डे । म—युद्धपर्वणि । २. भ—०णोपयानं ॥ ३. रा$_2$ म—तं समवस्थाप्य । ४. रा$_2$ म—स्वार्थं० ॥ ५. ल$_1$ ल$_2$ ब अ—भेदं तं । प्र—भेदनं । ६. रा$_2$ म—अत्र ॥ ७. रा$_2$—शीघ्रमद्याश० । म—शीघ्रमिन्द्रा० ८. रा$_2$ म—अतिक्रमामहे यज्ञं तस्य कर्माऽसमाहये ॥ ९. भ—०विनं । १०. म—नास्ति ॥ ११. रा$_2$ म—सम्प्रहृष्टः सलक्ष्मणः । १२. रा$_2$ म—ववर्ष सः ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०शैलतला० । १४. रा$_2$—बिभित्सवः । १५. म—अत आरभ्य ८-मश्लोकं यावन्नास्ति ॥ १६. रा$_2$—त्वपि । भ—वापि । १७. ब प्र भ—०शैस्तथा । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—एव जि० ॥ १९. रा$_2$—शब्देन ना० । २०. रा$_2$—०स्वनः ॥

अस्त्रैश् च विविधाऽऽकारैः शत-शाखैश्[1] च[1] पाद-पैः ।
८] पट्टिसैः[2] पर्वताऽग्रैश् च घोरम्[3] आ-काशम् आ-बभौ ॥ ९॥ [१०
राक्षसा वानरेन्द्रैस्[4] तु निकृत्ताऽऽननबाहवः[4] ।
९] नि-पातयन्तः शस्त्राणि चक्रुः[5] स्व-समम् आ-हवम्[5] ॥१०॥ [११
के-चिद् वृक्षैः[6] स-विटपैर्[6] बल-वन्तो वनौकसः ।
१०] अभि-जग्मुस्[7] ततो हृष्टाः[7] सम्-अरे राक्षसर्षभान् ॥११॥ [१२
ऋक्ष-वानर-मुख्यैश् च महा-कायैर् महा-बलैः ।
११] रक्षसां वध्यमानानां महद् भयम् अजायत ॥१२॥ [१३
स्वम् अनीकं वि-पन्नं[8] तु[8] दृष्ट्वा शत्रुभिर् अर्दितम् ।
१२] उत्-तस्थाव् इन्द्र-जिच् छीघ्रम् अ-समाप्यैव कर्म तत् ॥१३॥ [१४
ततः कर्मण्य् अ-निर्वृत्ते[9] मन्यु-शल्यम्[9] समुद्-वहन्[9] ।
१३] परि-त्रातुं बलं दीनम् अभि-चक्राम रावणिः ॥१४॥ [N
वृक्षाऽन्धकारान्[10] निष्-पत्य[11] पूर्व-सज्जं महा-बलः[12] ।
१४] आ-रुरोह रथं दिव्यं वाजिभिर् मेघ-सन्निभैः ॥१५॥ [१५
स भीम-कार्मुक-धरः[13] कालाऽञ्जनचयोपमः ।
१५] रक्ताऽऽस्यनयनः[14] क्रुद्धो बभौ मृत्युर् इवाऽपरः ॥१६॥ [१६
दृष्ट्वैव च रथ-स्थं तम् अभ्य्-अधावत तद् बलम् ।
१६] वानराणां सु-भीमानां युद्धाय रिपुम् आ-हवे ॥१७॥ [१७
N] प्र-दुद्रुवे सा ध्वजिनी यत्र धन्वी स लक्ष्मणः ।[15] [N
तस्मिन् क्षणे[16] तु हनु-मान् प्र-गृह्य[17] सु-दुरासदम्[17] ।
१७] धरणी-धर-संकाशं महा-वृक्षं[18] महा-बलः ॥१८॥ [१८
राक्षसानाम्[19] अनीकानि[19] कालाऽग्निर् इव निर्-दहन् । [१९पू

---

१. रा$_1$, ल$_1$, ल$_2$ ब अ प्र–०शश्चैव । २. भ–उद्यतैः । ३. म–'घोरं' इत्यादिः 'हृष्टाः' इत्यन्तः पाठो नास्ति ॥ ४. रा$_2$ भ–०रेन्द्रेषु विकृतान० । ५. प्र–चुक्रुशुः समतोरणान् । रा$_2$ भ–चक्रुः सुमहतो व्रणान् ॥ ६. रा$_2$ भ–वृक्षैश्च सकलैर् । ७. रा$_2$–०जग्मुश्च जग्घुश्च ॥ ८. रा$_2$ भ–विषण्णं च । म–विवर्णं तु ॥ ९. ल$_2$–सर्वं शल्यं स० । म–शत्रुं शल्यमिवोद्धरन् ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ–ऋक्षां० । ११. रा$_2$ म–निष्क्रम्य । १२. रा$_2$ म–स वीर्यवान् ॥ १३. रा –०करवः । १४. म–रक्तांजनचयः ॥ १५. रा$_2$ म भ–नास्ति । १६. रा$_2$ म भ–काले । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–आरुरोह द्रु० । १८. रा$_1$–पराक्रमं ॥ १९. रा$_2$ म–रक्षसां तान्यनी० ।

१८] चचार[1] बहु-धा[2] मार्गान् राक्षसेषु महा-बलः[3] ॥१९॥ [N
कुर्वाणं कदनं दृष्ट्वा हनू-मन्तं कपिं तदा ।[4]
१९] परि-वव्रुः सहस्राणि राक्षसानां समन्त-तः[5] ॥२०॥ [२०
२०पू] शित-शूल-धराः शूलैर्[6] असिभिश् चाऽसि-पाणयः[6] ।
N] शक्तिभिः शक्ति-हस्ताश् च पट्टिसैः[7] पट्टिसाऽऽयुधाः[7] ॥[8]२१॥ [२१
परि-घैश् च गदाभिश्[9] च चक्रैश् च शुभ-दर्शनैः[9] ।[10]
२१] शत-शश् च शत-घ्नीभिर् आयसैश् चाऽपि मुद्गरैः ॥२२॥ [२२
२०उ] घोरैः परशुभिस् तीक्ष्णैर् भिण्डि-पालैश् च राक्षसाः ।[11]
अभि-जघ्नुः[12] समा-साद्य सम्-अन्तात् पर्वतोत्तमम् ॥२३॥ [२३
२३] तेषाम् अपि च सं-क्रुद्धश् चकार कदनं कपिः । [२४
उद्-यम्य चैव वृक्षांश् च शिलाश्[13] चैव सु-दारुणाः[13] ॥[14]२४॥ [N
२४] जघान पञ्च सप्ताऽथ दश चाऽष्टौ तथैव च ।
विंशतिं चैकविंशं[15] च[15] दण्ड-हस्त इवाऽन्त-कः ॥२५[16]॥ [N
२५] तम् अपश्यत् कपि-श्रेष्ठम् अचलोपमम्[17] इन्द्र-जित् ।
सूदयन्तम् अमित्र-घ्नं सम्-अरे मारुताऽऽत्मजम् ॥२६॥ [२५
२६] स सारथिम् उवाचेदम् अभि-याहि[18] महा-कपिम् ।
क्षयम् एष हि नः कुर्याद् राक्षसानाम् उपेक्षितः ॥२७॥ [२६

---

१. रा$_1$ प्र—चचाल । म भ—चकार । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—वसुधा । रा$_2$ म—महतो । ३. रा$_2$ म—महाकपिः ॥ ४. रा$_2$ म—विध्वंसयंस्तुतरसा राक्षसान् मारुताऽऽत्मजः । ५. भ—ततस्ततः ॥ ६. अ—०भिश् चापि मुद्गरैः । रा$_2$ म—शस्त्रैः शक्तिभिश्चापि मुद्गरैः । ७. रा$_1$ फ म—०शैः पट्टिशा० । ८. अ—नास्ति ॥ ९. रा$_2$ म—भुशुंडीभिश्चक्रैश्चक्ररथैरपि । १०. अतः परमधिकः पाठः—म—परश्वधैर्धनुर्भिश्च गदाभिर्मार्गणैरपि ॥ ११. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ म—सालैरशनिकल्पैश्च तालैर्वज्रसमैस्तथा । नखैर्दन्तैश्च वीराणां संयुगे जयमिच्छताम् ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—०जग्मुः ॥ १३. प्र भ—शिलाखण्डांश्च दारुणान् । १४. रा$_2$ म—नास्ति ॥ १५. भ—त्रिशतं चैव । १६ रा$_2$ म—नास्ति । अतः परमधिकः पाठः—भ—वृक्षघाताभिघातैश्च घातयन् पवनात्मजः । रथान्बभंज तरसा गजेन्द्रांश्चाप्यपातयत् ॥ पदातिहयसाहस्रान् ममर्द प्रममाथ च । मुष्टिभिर्निहताः केचित्तलैश्चाभिहतास्तथा ॥ तरुवेगाभिपतिता राक्षसाश्च समन्ततः । तदनीकं महाव्यूहं गजाश्वरथसंकुलम् ॥ राक्षसेन्द्रात्मजबलमभेद्यं कर्मसिद्धये । तद्विदार्य महावेगो हनूमान् दृढविक्रमः । प्रविश्य होमभूमिं तु व्यध्वंसयत वीर्यवान् ॥ १७. रा$_2$ म—अनिलात्मजम् ॥ १८. भ—अनुयाहि ॥

२७] इत्य् उक्तः सारथिस्[1] तेन[1] प्र-ययौ[2] यत्र मारुतिः[2] ।
वहन् परम-दुर्धर्षं स्थितम् इन्द्र-जितं रथे[3] ॥२८॥ [२७
२८] सोऽभि-पत्य[4] कपिं खड्ग-शूल-प्राऽऽस-परश्वधान् ।
अपातयत् सु-दुर्धर्षो रावणिः कपि-मूर्धनि ॥२९॥ [२८
२९] तानि शस्त्राणि[5] घोराणि परि-गृह्य स मारुतिः ।
रोषेण महताऽऽविष्टो[6] वाक्यम् एतद् उवाच ह ॥३०[7]॥ [२९
३०] युध्यस्व यदि[8] शूरोऽसि रावणाऽऽत्मज दुर्-मते ।
वायु-पुत्रं समा-साद्य न जीवन् प्रति-यास्यसि ॥३१॥ [३०
३१] बाहुभ्यां प्रति-युध्यस्व[9] यदि मे द्वन्द्वम् आ-गतः ।
न[10] मां सहसि[10] दुर्-बुद्धे ततस् त्वं रक्षसां वर ॥३२॥[11] [३१
३२] हनू-मन्तं जिघांसन्तं समुद्यत-शराऽऽसनम् ।[12]
३३उ] रावणाऽऽत्मजम् आऽचष्ट लक्ष्मणाय वि-भीषणः ॥३३॥ [३२
यस्[13] तु[13] वासव-निर्जेता रावणस्याऽऽत्म-संभवः ।
३४] स एष रथम् आ-स्थाय हनू-मन्तं जिघांसति ॥३४॥ [३३
तम् अप्रतिम-संस्थानं शरैर् देह-विदारणैः ।
३५] जीविताऽन्त-करैर् घोरैः सौमित्रे जहि रावणिम् ॥३५[14]॥ [३४

इत्य् एवम् उक्तस् तु वि-भीषणेन[15]
रामाऽनुजः[16] शत्रु-विभीषणेन[16] ।
ददर्श तं पर्वत-सन्निकाशं
N] रथे स्थितं भीम-रवं[17] नदन्तम् ॥३६॥ [३५

इत्यार्षे रामायणे युद्ध-काण्डे[18] बलि-विध्वंसनं[19] नाम चतुःषष्टितमः सर्गः ॥६४॥

---

१. प्र—तेन वीरेण । २. रा$_2$ म—रथेनाभिययौ कपिं ॥ ३. भ—वर्जं—रणे ॥ ४. प्र रा$_2$ म भ—सोभ्युपेत्य ॥ ५. प्र भ—चास्त्राणि । ६. भ—परमाविष्टो । ७. रा$_2$ म—अत आरभ्य ३२-शश्लोकं यावन्नास्ति ॥ ८. अ—युधि ॥ ९ अ भ—सम्प्रयु० । १०. भ—वेगं सहस्व ॥ ११. अतः परमधिकः पाठः—भ—इत्युक्त्वा हनूमान्क्रुद्धो योधयामास वेगितः । अश्वकर्णैर्धवैः शालैरन्यैश्च विविधैर्द्रुमैः ॥ अप्राप्तानेव तान् वृक्षान् शरैः शतसहस्रशः । क्रोधादकृन्तत चैकैकं तं च विव्याध रावणिः ॥ १२. अतः परमधिकः पाठः—म भ—आक्षेपोद्धूतसर्वांगं भ्रुकुटीकुटिलाननम् ॥ १३. रा$_2$ म—योऽसौ । भ—यः स ॥ १४. रा$_2$ म—तमप्रतिमकर्माणं शितैः शत्रुविनाशनैः । सौमित्रे वारयन् शत्रुमभिवर्षं शरोत्तमैः ॥ १५. रा$_2$ म—तदा महात्मा । १६. प्र—०जः सोऽथ वि० । रा$_2$ म—विभीषणेनारिविभीषणेन । भ—०जः सोऽरिवि० । १७. ल$_1$ ल$_2$ ब प्र—भीमतरं । म भ—भीमबलं ॥ १८. ब प्र भ—लंकाकांडे । १९. रा$_2$—इन्द्रजिद्दर्शनं । भ—इन्द्रजिद्वधो ॥

एवम्[1] उक्त्वा तु[1] सौमित्रिं त्वरमाणो वि-भीषणः ।
१] उपाऽऽययौ धनुष्-पाणिर् लक्ष्मणं रावणाऽनुजः ॥[2] १॥ [ १
अ-विदूरं ततो गत्वा प्र-विश्य च महद् बलम् ।
२] दर्शयामास तत् कर्म लक्ष्मणाय वि-भीषणः ॥ २॥[2] [ २
नील-जीमूत-संकाशं न्यग्रोध-वरम्[3] आ-श्रितम् ।
३] तेजस्वी रावण-भ्राता लक्ष्मणाय न्य्-अवेदयत् ॥ ३॥ [ ३
इहोप-हारं भूतानां बल-वान्[4] रावणाऽऽत्मजः ।
४] उप-हृत्य ततः पश्चात् सं-ग्रामम् अभि-वर्तते ॥[5] ४॥ [ ४
अ-दृश्यः सर्व-भूतानां[6] काम-गेन[6] रथेन च[6] ।
५] नि-हन्ति सम्-अरे शत्रून्[7] बध्नाति च शरोत्तमैः[7] ॥ ५॥ [ ५
तम् अ-प्रविष्टन्यग्रोधम् इमं[8] त्वं[8] रावणाऽऽत्मजम् ।
६] वि-ध्वंसय शरैस् तीक्ष्णैः स-रथं साऽश्वसारथिम् ॥ ६॥[9] [ ६
तथेत्य् उक्त्वा महा-तेजाः सुमित्राऽऽनन्दवर्धनः ।
७] बभूवाऽव-स्थितस् तत्र चित्रं वि-स्फारयन् धनुः ॥ ७॥ [ ७
स[10] रथेनाऽग्नि-वर्णेन[10] बल-वान् रावणाऽऽत्मजः ।
८] इन्द्र-जित् कवची धन्वी[11] स-ध्वजः प्रत्य्-अदृश्यत ॥८[12]॥ [ ८
लक्ष्मणस् तम् उवाचेदं[13] रावणिं युद्ध-दुर्मदम्[14] ।
९] तिष्ठ[15] राक्षस दुर्-बुद्धे रणे[15] युद्धं प्र-यच्छ मे ॥ ९॥ [ ९
एवम् उक्तो महा-तेजा[16] मनस्वी[16] रावणाऽऽत्मजः ।

---

१. रा$_2$ म–स एवमुक्त्वा । २. ब म–नास्ति ॥ ३. अ प्र रा$_2$ म भ–०धद्वारम् ॥ ४. प्र–नास्ति । ५. म–नास्ति ॥ ६. रा$_2$–ततो भवति राक्षसः । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–शत्रुर्भाति च सुरोत्तमान् ॥ ८. म–अमित्रं । ९. प्र–नास्ति ॥ १०. रा$_2$ म–रथेनादित्यव० । ११. रा$_2$ म–खड्गी । १२. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–विभीषणवचः श्रुत्वा सौमित्रिपवनात्मजौ । भृशं जहर्षतुस्तत्र दृष्ट्वा तं रिपुमाहवे ॥ अत्रांतरे च हनुमान्वीरं लक्ष्मणमब्रवीत् । रथस्थोऽयं तवारातिः पदस्थस्त्वं च लक्ष्मण ॥ नैतद्युक्तं समं युद्धं मम पृष्ठं त्वमारुह । इति श्रुत्वा वचस्तस्य तथा चक्रे स लक्ष्मणः ॥ महापर्वतसंकाशमैरावण-समप्रभम् । समास्थाय महातेजा वटं कृत्वा तु पृष्ठतः ॥ १३. रा$_2$ म–उवाचाथ । १४. रा$_2$–रघुनंदनः । म–समितिंजयः । १५. रा$_2$ म–त्वामाह्वयेहं समरे सौम्य ॥ १६. रा$_2$ म–महाराजः समरे ।

१०] अब्रवीत् परुषं वाक्यं तत्र दृष्ट्वा वि-भीषणम् ॥१०॥[1] [१०
इह त्वं जातः (? ता) सं-वृद्धः साक्षाद् भ्राता पितुर् मम ।
११] कथं द्रुह्यसि[2] पुत्राय[2] पितृव्यो मम राक्षस ॥११॥ [११
न ज्ञाति-त्वं न सायुज्यं न जातिस् तव दुर्-मते ।
१२] प्र-माणं न च सोदर्यं[3] न धर्मो धर्म-दूषक ॥१२॥ [१२
शोच्यस् त्वम् असि दुर्-बुद्धे निन्दनीयोऽसि[4] साधुभिः ।
१३] यस् त्वं जातिं समुत्-सृज्य पर-भृत्यत्वम् आ-स्थितः[5] ॥१३॥ [१३
नैतच् छिथिलया बुद्ध्या त्वं वेत्सि महद् अन्तरम् ।
१४] क्व[6] च[6] स्व-जन-संवासः क्व च नीच (? चः) पराऽऽश्रयः[7] ॥१४॥ [१४
गुण-वान् वा पर-जनः स्व-जनो[8] वाऽपि[8] निर्-गुणः ।
१५] निर्-गुणः स्व-जनः श्रेयान् यः परः पर एव सः ॥१५॥ [१५
निरनुक्रोश-ता चेयं यादृशी ते निशा-चर ।
१६] स्व-जने न त्वया शक्यं (? क्या) प्रति-ष्ठा न[9] सुखानि च ॥[10]१६॥ [१९
नूनं निर्-वासितो लंकां दिदृक्षसि वि-शीर्य ताम् ।
N] कामयेत्[11] पुरुषः कान्तां शूरस्यांऽक-गताम् इव ॥१७॥[12] [N
यदि त्वं परुषाण्य्[13] उक्तः[13] पित्रा मम निशा-चर ।[14]
१७] गौरवात् प्र-श्रयाद् वाऽपि तथैव परि-सान्त्वितः ॥१८॥ [N
यथैव प्र-णयाद् वाऽपि गुरुर् वदति वि-प्रियम् ।
१८] तथैव च पुनस् तं[15] स[15] लालयत्य्[16] अ-विचारयन् ॥१९॥ [N
क्रुद्धेनेन्द्र-जिता वाक्यं परुषं[17] रावणाऽनुजः[17] । [N
२१] उक्तः पितृव्यः पुत्रेण प्रत्य्-उवाच वि-भीषणः ॥२०॥ [२०
अ-जानन्न् इव मच्-छीलं किं त्वम् एवं ब्रवीषि माम् ।

---

१. अतः परमधिकः पाठः—रा$_2$—छलाद्वापि बलाद्वापि यत्कुर्याद्रघुनन्दनः । तत्सर्वमुपपद्येत न्याय्यमस्मासु दुर्मते ॥ आबाल्याच्च मया पित्रा राक्षसैर्वापि विप्रियम् । किं कृतं शठ यच्छिद्रे प्रहरस्यात्मजे मयि ॥ न जातिधर्मो न कुलं न भ्रातृत्वं न बन्धुता । रक्षितं नैव शूरत्वं क्लीबत्वं प्रकटीकृतम् ॥ २. रा$_2$ म—द्रक्ष्यसि पुत्रस्य ॥ ३. रा$_2$ म—सौहार्दं ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ म—०नीयश्च । ५. ल$_1$ ल$_2$ ब रा$_2$ म—आगतः । भ—आश्रितः ॥ ६. म—क्वचित् । ७. प्र—समाश्रयः ॥ ८. भ—०नोऽपि च ॥ ९. प्र—वा । १०. म—नास्ति ॥ ११. भ—कामीव । १२. रा$_2$ म—नास्ति ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—तु रुषा त्यक्तः । १४. म—नास्ति ॥ १५. प्र—बालं । रा$_2$ म—मूढ । भ—मूर्खं । १६. रा$_2$ म—लाडयति ॥ १७. रा$_2$—अत आरभ्य २१—शश्लोकस्य तृतीयपादं यावन्नास्ति ॥

२२] राक्षसाऽधिपतेः पुत्र परुषं त्यक्त-गौरवम् ॥२१[1]॥ [२१
अ-युक्तरूपं[2] वचनं[2] पौलस्त्य-कुल-पांसन[3] ।[1]
२३] अ-धर्मेण हत-ज्ञानो[4] न वेत्सि त्वं गुणाऽगुणान् ॥२२॥ [N
कुले यद्य्-अपि जातोऽहं रक्षसां[5] क्रूर-कर्मणाम् ।
२४] गुणो यः प्रथमो नृणां तन् मे शीलम् अ-राक्षसम् ॥२३॥ [२२
सं-त्यक्तो[6] दारुणेनाऽहं[6] राज्ञा[7] वै[7] क्रूर-कर्मणा[8] ।
२५] भ्रात्रा विषय-शीलेन कथं रंस्ये[9] दुर्-आत्मना[9] ॥२४॥[10] [२३
हरणं च पर-स्वानां परदाराऽभिमर्षणम्[11] ।
२६] सु-हृदाम्[12] अभि-शंका च त्रयो दोषाः[12] क्षयाऽऽवहाः ॥२५॥ [२६
महर्षीणां भयं[13] घोरं[13] सर्व-देवैश् च वि-ग्रहः ।
२७] अभि-मानश्[14] च रूपं च ह्य् ऐश्वर्यं[14] प्रति-कूलता ॥२६॥ [२७
एते दोषास् तव पितुर् जीवितैश्वर्यनाशकाः ।[15]
२८] गुणान् प्राऽच्छादयंस् तस्य पर्वतान् इव तोय-दाः ॥[16]२७॥[२८
एतैर्[17] दोषैः परि-त्यक्तो मया भ्राता पिता तव ।
२९] न[18] च मे स्व-पुरी[18] लंका न च त्वं न च ते पिता ॥२८॥ [२९
अभि-मानी च दृप्तश् च दुर्-विनीतश् च राक्षसः (?स) ।
३०] त्वं[19] काल-पाश-बद्धश् च[19] ब्रूहि मा[20] यद् यद् इच्छसि[20] ॥२९॥ [३०
N] अन्-इष्टं व्य्-असनं प्राऽऽप्तः[21] किम्-इव[21] त्वं न वक्ष्यसि ।[22]

---

१. म—नास्ति ॥ २. भ—०क्तं परुषं वाक्यं । ३. ल$_1$—०ने । ४. रा$_2$ म—हृत० ॥ ५. रा$_2$—नास्ति ॥ ६ म भ—न रमे । ७. प्र भ—राज्येन । रा$_2$ म—न राज्ये । ८. रा$_2$ म—पापक० । ९. रा$_2$—भ्राता विवास्यते । म—भ्राता हि हन्यते । १०. अतः परमधिकः पाठः—रा$_2$ म—परोऽपि हितकृद्बन्धुर्बन्धुरप्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ ११. रा$_2$—०मर्दनं । १२. रा$_1$ ल$_1$ ल$_2$ ब अ—सुहृन्निवासनं चैव श्रियो देव्याः ॥ १३. रा$_1$ ल$_2$ ब अ प्र—महाघोरः । रा$_2$ म—वधो घोरः । १४. रा$_2$ म भ—क्रोधश्चैवाभिमानश्च वैरत्वं । भ—०मानश्च कोपश्च वैरत्वं ॥ १५ रा$_2$ म—एतैर्दोषैर्मम भ्रातुर्जीवितैश्वर्यनाशनैः । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—नास्ति । म—गुणाः प्रच्छादिताः सर्वे पर्वतास्तोयदैरिव । १७. भ—एभिर् । १८. रा$_2$—नेयमास्ते पुरी । म—नैवमस्ति पुरी । भ—नेयमस्ति पुरी ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—बद्धस्त्वं कालपाशेन । म—०पाशैर्बद्ध० । २०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—त्वं यदि जीवसि । भ—पुत्र यदिच्छसि ॥ २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—प्राप्तं किमेवं । २२. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र—गृह्यतामुद्यमो वाक्यैर्न च शक्तोऽभिधास्यति ।

प्र-वेष्टुं न त्वया शक्यो[1] न्यग्रोधो[1] राक्षसाऽधम ॥३०॥ [३१
३१] धर्षयित्वा च काकुत्स्थं न शक्यं जीवितुं त्वया ।
युध्यस्व नर-वीरेण[2] लक्ष्मणेन रणे सह ॥३१॥ [३२पू
३२] न त्वं प्र-वेक्ष्यसे लंकां कुतो न्यग्रोधम् एव च । [N
N] हतस् त्वं काल-पाशेन[3] गमिष्यसि यम-क्षयम् ॥[4]३२॥[३२उ
नि-दर्शयस्वाऽऽत्म-बलं समुद्-यतः[5]
कुरुष्व सर्वाऽऽयुधसायक-क्षयम्[6] ।
न लक्ष्मणस्याऽति-शितैः[7] शरैः क्षतस्[8]
३३] त्वम् अद्य जीवन् स-गणो[8] गमिष्यसि ॥३३॥ [३३

इत्यार्षे रामायणे युद्ध-काण्डे[9] इन्द्रजिद्-विभीषण-वाक्यं नाम पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

## [ वं—६७ ]= [ षट्षष्टितमः सर्गः ] =[ दा—८८ ]

विभीषण-वचः श्रुत्वा रावणिः क्रोध-मूर्च्छितः ।
१] अब्रवीत् परुषं वाक्यं वेगेनाऽभि-ससार च ॥ १[10]॥[ १
उद्यताऽऽयुधनिस्त्रिंशे रथे वै सम्-अलंकृते ।
२] कालाऽश्व-युक्ते महति स्थितः कालाऽन्तकोपमः ॥ २॥ [ २
महा-प्रमाणम्[11] उद्-यम्य[11] विपुलं वेग-वद् दृढम् ।
३] धनुर् भीम-बलो भीमं शरांश् चाऽऽशीविषोपमान् ॥ ३॥ [ ३
स सम्प्रेक्ष्य महा-बाहुर्[12] नीलाऽञ्जनचयोपमः । [N
N] रथ-स्थोऽलं-कृतः श्री-मान् रावणस्याऽऽत्म-जो बली ॥ ४[13]॥[ ४उ
उवाच चेदं सं-रब्धः सौमित्रिं स-विभीषणम् ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—०क्यं न्यग्रोधं ॥ २. म भ—नरदेवेन ॥ ३. अ प्र—कालधर्मेण । ४. म भ—नास्ति ॥ ५. अ—०द्य तत् । म भ—०द्यतं । ६. रा$_2$ म—०धसाधनव्ययं । ७. रा$_2$ म भ—०गस्यैत्य हि बाणगोचरं । ८. रा$_2$ म भ—सबलो ॥ ९. प्र ब भ—लंका० ॥ १०. अतः परमधिकः पाठः—रा$_2$—प्रागेव विश्वविजयी न निषिद्धः पिता मम । यदा यदा च रत्नानि भुवनेभ्योऽखिलान्यपि ॥ तदा त्वमपि रत्नानां भागभागभवः स्वयम् । निहतं वालिनं दृष्ट्वा सुग्रीवमभिषेचितम् ॥ त्वया तद्राज्यलुब्धेन दुरात्मन् समनुष्ठितम् । इत्युक्त्वा परुषं वाक्यं स्मयन्हेत्वर्थसंयुतम् ॥ ११ रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०प्रासं समुद्यम्य ॥ १२. ल$_1$ ल$_2$ ब—महाधन्वी । १३. रा$_2$ म—नास्ति ॥

तांश्[1] च[1] वानर-शार्दूलान्[2] पश्यध्वं[3] मम वि-क्रमम्[3] ॥५ ॥ [५
५] अद्य मत्कार्मुकोत्सृष्टं शर-वर्षं[4] दुर्-आसदम्[4] ।
६पू] मुक्तं वर्षम् इवाऽऽकाशे धारयिष्यथ सं-गरे[5] ॥६ ॥ [६
७उ] अद्य[6] वो[6] मामका बाणा मत्-कार्मुक-विनिःसृताः ।
गात्राणि वि-धमिष्यन्ति तूल-राशिम् इवाऽनलः ॥७ ॥ [७
८] तीक्ष्ण-सायक-निर्भिन्नान् भिण्डिपालाऽसिपट्टिसैः[7] ।
९पू] अद्यैव[8] वो नयिष्यामि[8] सर्वान् एव यम-क्षयम् ॥८ ॥ [८
६उ] क्षिपतः[9] शर-जालानि तीक्ष्ण-हस्तस्य[9] सं-युगे ।
७पू] जीमूतस्येव नदतः कः स्थास्यति ममाऽग्र-तः ॥९ ॥ [९
९उ] तच् छ्रुत्वा रावणेर्[10] वाक्यं गर्वितं[10] लक्ष्मणस् तदा ।
अभीत-वद् इदं[11] वाक्य क्रुद्धं राक्षसम् अब्रवीत्[11] ॥१०॥ [१२
१०] न वाचा सु-गमः[12] पारः[12] कार्याणां राक्षसाऽधम ।
कार्याणां कर्मणा पारं यो गच्छति स बुद्धि-मान् ॥११॥ [१३
११] स त्वम् अर्थस्य हीनाऽर्थं दुरवाऽऽपस्य[13] कस्य-चित्[14] ।
वाचा व्या-हृत्य जानीषे कृताऽर्थोऽस्मीऽति दुर्-मते ॥१२॥ [१४
१२] अन्तर्धान-गतेनाऽहं[15] यत् त्वयाऽभि-हि (? ह) तो[16] रणे[16] ।
भास्कराऽन्तरितो[17] मार्गो नैव[18] शूर-निषेवितः[18] ॥१३॥ [१५
१३] तद् आहव-पथे त्व् अद्य स्थितोऽहं तव राक्षस ।[19]
१४पू] दर्शयस्वाऽद्य[20] यत् तेजो[20] वाचा किं बहु[21] कत्थसे[21] ॥१४॥ [१६
१६उ] एवम् उक्तो धनुर् भीमं परि-गृह्य[22] महा-बलः ।
वि-ससर्ज शितान् बाणान् इन्द्र-जित् समितिं-जयः ॥१५॥ [१७

---

१. रा$_1$ ल$_1$ ल$_2$ ब—हंहो । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०लाः । ३. रा$_2$ म भ—वीक्षध्वं मे पराक्रमं ॥ ४. रा$_2$—सुदुःसहं । म—सुदारुणम् । ५. रा$_2$ म भ—संयुगे ॥ ६. म—क्रुद्धा हि । भ—अद्यैव ॥ ७. भ—शितशूला० । ८. रा$_2$ भ—अद्य वो गमयि० । म—अद्य वेगान्नयि० ॥ ९. म—निक्षिप्य शर० । भ—सृजतः शरवर्षाणि क्षिप्रह० ॥ १०. भ—राक्षसेन्द्रस्य गर्जितं । ११. रा$_2$—सुसंक्रुद्धो राक्षसं वाक्यमब्रवीत् । म—सुसंक्रुद्धो राक्षसं तमथाब्रवीत् । भ—सुसंक्रुद्धो रावणिं वाक्यमब्रवीत् ॥ १२. प्र रा$_2$ म— ०मं पारं ॥ १३. म—दुरावा० । १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ भ—केनचित् ॥ १५. रा$_2$ म भ—०नावां । १६. रा$_2$—०भिहतौ रणे । म—०निहितौ रणे । भ—त्वया छलितौ तदा । १७. रा$_2$ म भ—तस्कराचरितो । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$—न शूरस्य नि० ॥ १९. रा$_2$ भ—यदि बाणपथं प्राप्य युध्यसे राक्षसोत्तम । २०. भ—द्रक्ष्यामः समरे वीर्यं । २१. भ—त्वं विक० ॥ २२. रा$_2$ म भ—परामृश्य ॥

१७] तेनोत्-सृष्टा[1] बल-वता शराः[2] सर्पविषोपमाः[2] ।
सम्प्राऽऽप्य लक्ष्मणं पेतुः श्वसन्त इव पन्न-गाः ॥१६॥ [१८
१८] शरैर् अति-महा-वेगैर्[3] वेग-वान् राक्षसोत्तमः ।
सौमित्रिम् इन्द्र-जिद् युद्धे विव्याध शुभ-लक्षणम्[4] ॥१७॥ [१९
१९] स[5] शरैर् अपविद्धाऽङ्गो[5] रुधिरेण सम्-उक्षितः[6] ।
शुशुभे लक्ष्मणः श्री-मान् वि-धूम इव पावकः ॥१८॥ [२०
२०] इन्द्र-जिच्[7] चाऽऽत्मनः[7] कर्म प्र-शशंसाऽर्थ[8] राक्षसः[8] ।
वि-नद्य च महा-नादम् इदं वचनम् अब्रवीत् ॥१९॥ [२१
२१] अद्य मत्कार्मुकोत्सृष्टाः शरास् तीक्ष्णाः सु-पत्रिणः[9] ।[10]
आ-दास्यन्ति शरीरात् ते जीवितं जीवित-च्छिदः ॥२०॥ [२२
२२] अद्य गोमायु-संघाश् च श्येन-संघाश् च लक्ष्मण ।
गृध्राश् चाऽपि पतन्तु त्वां गताऽसुं पतितं[11] भुवि[11] ॥२१॥ [२३
२३] क्षत्र-बन्धुः सु-दुष्टाऽऽत्मा[12] रामः परम-दुर्मतिः ।
भक्तं भ्रातरम् अद्य त्वां द्रक्ष्यतीऽह[13] मया हतम् ॥२२॥ [२५
२४] स-सायक-करो[14] भूमौ स-तूणः[15] स-शराऽऽसनः[15] ।
कृत्तोत्तमाऽङ्गः पतितः[16] स्वप्स्यसे त्वं मया हतः ॥२३॥ [२६
२५] इति ब्रुवाणं परुषं राक्षसं[17] रावणाऽऽत्मजम् ।
साऽर्थं[18] च हेतु-मद् वाक्यं[18] लक्ष्मणः प्रत्य्-उवाच ह ॥२४॥ [२७
२६] अ-कृत्वा कत्थसे कर्म किम्-अर्थम् इह राक्षस ।
कुरु तत् कर्म येनाऽहं श्रद्-दध्यां तव[19] जल्पितम्[19] ॥२५॥ [२९
२७] अ-ब्रुवाणस्[20] तु कर्माणि[20] यः[21] करोति स पण्डितः[21] ।

---

१. रा$_2$ फ–तदोत्० । २. रा$_2$ फ–०रास्तीक्ष्णा वि० ॥ ३. भ–०महाकायैर् । ४. म–०लक्ष्मणं ॥ ५. म–स शरौघैश्च वि० । भ–शरौघेण स वि० । ६. रा$_2$ फ–च भूषितः ॥ ७. रा$_2$ फ म भ–०जित्त्वात्मनः । ८. भ–सुसमीक्ष्याभियुज्य च ॥ ९. प्र–सुयंत्रिताः । १०. भ–पत्रिणः शितधारास्ते शरा मत्कार्मुकच्युताः ॥ ११. रा$_2$ फ म भ–निहतं मया ॥ १२. रा$_2$ म भ–स दु० । १३. भ–न द्रक्ष्यति ॥ १४. रा$_2$ फ म–अपास्तकवचो । भ–विशस्त्रकवचो । १५. रा$_2$ फ म भ–व्यपविद्धश० । १६. रा$_2$ फ म भ–व्यथितः ॥ १७. भ–अमर्षाद् । १८. रा$_2$ फ–हेतुमद्वाक्यमन्वर्थं । म–हेतुमद्वाक्यमत्यर्थं । भ–हेतुमद्वाहकं वाक्यं ॥ १९. रा$_2$ फ म–तव कत्थितम् । भ–कथितं त्वया ॥ २०. रा$_2$ फ–अब्रुवन्परुषं वाक्यं । म–०णस्तु परुषं । भ–अनुक्त्वा परुषं वाक्यं । २१. रा$_2$ फ म भ–किंचिदप्यनधिक्षिपन् ।

अ-विकत्थ्य[1] हनिष्यामि[2] त्वाम्[3] अद्य पुरुषाऽऽदकम्[3] ॥२६[4]॥[३०
२८] इत्य् उक्त्वाऽमर-बाणानाम् एकम् आ-कृष्य वै धनुः ।[5]
चिक्षेप[6] नि-शितं वेगाल्[6] लक्ष्मणो राक्षसोरसि[7] ॥२७[8]॥[३१
२९] स शरेण[9] हतस्[9] तेन राक्षसो[10] रावणाऽऽत्मजः ।
सु-प्रमुक्तैस्[11] त्रिभिर् बाणैः प्रति-विव्याध लक्ष्मणम् ॥२८॥ [३२
३०] स बभूव[12] महा-भीमो[12] नर-राक्षस-सिंहयोः[13] ।
वि-मर्दस् तुमुलो घोरः[14] परस्परवधैषिणोः[15] ॥२९॥ [३४
३१] उभौ तौ बल-सम्पन्नाव् उभौ विक्रम-शालिनौ ।
N] उभाव् अपि च वि-क्रान्ताव्[16] उभौ शस्त्राऽस्त्र-वेदिनौ[16] ॥३०[17]॥[३५
३२पू] उभौ परम-दुर्धर्षाव् उभौ परम-तेजसौ ।
N] युयुधाते महा-वीर्यौ ग्रहाव् इव नभो-गतौ ॥३१॥ [३६
N] बलि-शक्राव्[18] इवाऽऽयस्तौ[18] युधि दुष्प्रति-धर्षणौ ।
३२उ] युयुधाते महाऽऽत्मानौ व्याघ्र-केसरिणाव् इव ॥३२॥ [३७
शितान्[19] अव-सृजन्तौ हि मार्गणौघान् अव-स्थितौ ।
३३] नर-राक्षस-सिंहौ तौ सम्प्र-हृष्टाव् अयुध्यताम् ॥३३॥ [३८
सु-सम्प्रहृष्टौ नर-राक्षसौ तदा[20] [३९पू[1]
शराऽभिचण्डौ शित-शस्त्र-धारिणौ[21] । [४०पू[2]

---

१. रा$_1$ ल$_1$ ल$_2$ ब–शीघ्रमद्य । अ–शीघ्रमेव । २. रा फ म- वधिष्यामि । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०द्य क्षणदाचर । रा फ म भ–त्वं पश्य पुरुषान्तक । ४. अतः परमधिकः पाठः—रा$_2$ फ म भ–अब्रुवाणो दहत्यग्निस्तथा तपति भास्करः। वायुश्चोन्मथते वृक्षान् न च किंचिद्विकत्थते ॥ ५. प्र–०बाणानामाकर्णात्पूरितं धनुः । रा$_2$ फ म–इत्युक्त्वा पंचपर्वाणमाकर्णात्पूरितं शरं । भ–इत्युक्त्वा पंच नाराचान्कर्णपूरिताञ्छितान् । ६. रा$_2$ फ–निचखान महावेगं । म–निचखान महावेगो । भ–निचखान महावेगाल् । ७. रा$_2$ फ म–रावणात्मजे । ८. अतः परमधिकः पाठः—म भ–सुपत्रराजिता बाणा ज्वलिता इव पन्नगाः । नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा ॥ ९. रा$_2$ फ म–०रेणाह० । भ–शरैराह० । १०. रा$_2$ फ म भ–सरोषो । ११. भ–सुपर्वभिस् ॥ १२. रा$_2$ फ म–बभौ सुम० । १३. रा$_1$ ल$_1$ ल$_2$ ब अ–हरिरा० । म–०सयोस्तयोः । १४. म–भीमः । १५. ल$_2$ म भ–०रजयैषिणोः ॥ १६. प्र–०न्तौ सर्वशास्त्रार्थकोविदौ । रा$_2$ फ–०न्तौ सर्वशस्त्रास्त्रकोविदौ । म–०न्तौ सर्वशास्त्रविशारदौ । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अतः परं ६७-तमसर्गस्याष्टमश्लोकस्य पूर्वार्धं यावन्नास्ति ॥ १८. फ भ–शक्रवृत्राविवापन्नौ ॥ १९. फ भ–बहून् ॥ २०. रा$_2$ म–तौ । २१. रा$_2$ म–०स्त्रपाणी ।

अभीऽऽक्ष्णम् अन्योऽन्यम् उभाव्[1] अवर्षताम्[1] [४०उ[2]
N] शरौघ-वर्षेण[2] बलाहकौ यथा ॥३४॥ [३९उ[2]

इत्यार्षे रामायणे युद्ध-काण्डे[3] आक्षेप-युद्धं[4] नाम
षट्षष्टितमः सर्गः ॥ ६६ ॥

---

## [ वं–६८ ]= [ सप्तषष्टितमः सर्गः ] =[ दा–८९ ]

ततः शरं दाशरथिः सं-धायाऽमित्र-कर्षणः ।
१] ससर्ज राक्षसेन्द्राय[5] क्रुद्धः सर्प इव श्वसन्[5] ॥ १॥ [ १
तस्य ज्या-तल-निर्घोषम् अ-सहन् रावणाऽऽत्मजः ।[6]
२] विवर्ण-वदनो भूत्वा समुद्-ऐक्षत लक्ष्मणम् ॥ २॥ [ २
तं विषण्ण-मुखं दृष्ट्वा राक्षसं रावणाऽऽत्मजम् ।
३] सौमित्रिं युद्ध-संसक्तम् इत्य् उवाच वि-भीषणः ॥ ३[7]॥ [ ३
इङ्गितान्य् अनु-पश्यामि यान्य् अस्मिन् रावणाऽऽत्मजे ।
४] त्वरस्व नर-शार्दूल भग्न एष[8] निशा-चरः ॥ ४॥ [ ४
ततः सं-धाय सौमित्रिः शरान् आशीविषोपमान्[9] ।
५] मुमोच नि-शितांस् तस्मै सर्पान् इव महा-विषान् ॥ ५॥ [ ५
शक्राऽशनि-सम-स्पर्शैर्[10] लक्ष्मणेनाऽऽहतः शरैः ।
६] मुहूर्तम् अभवन् मूढः शक्र-जित्[11] क्षुभितेन्द्रियः[11] ॥ ६॥ [ ६
उप-लभ्य मुहूर्तेन सं-ज्ञां प्रत्यागतेन्द्रियः ।
७] ददर्शाऽव-स्थितं वीरम् आजौ[12] दशरथाऽऽत्मजम् ॥ ७॥ [ ७
सोऽभि-चक्राम सौमित्रिं रोष-रक्ताऽन्त-लोचनः[13] ।
८] अब्रवीच् चैनम् आ-साद्य पुनः स परुषं वचः ॥ ८॥ [ ८
९पू] किं न स्मरसि तद् युद्धे प्रथमे[14] मत् पराऽऽक्रमम् ।[15] [ ९पू
युवां खलु मया युद्धे[15] वज्राऽशनि-समैः शरैः ॥ ९॥

---

१. रा$_2$ म–अभिप्रपेततुः । २. रा$_2$ म–०घवेगेन ॥ ३. फ भ–लंकाकांडे । ४. फ–अवक्षेपयुद्धं ॥ ५. रा$_2$ फ म–०से घोरे क्रुद्धानाशीविषोपमान् ॥ ६. रा$_2$ फ म–नास्ति ॥ ७. रा$_2$ फ म–नास्ति ॥ ८. रा$_2$ फ म–सैष ॥ ९. रा$_2$ फ म–अग्निशिखोपमान् ॥ १०. रा$_2$ फ म–स इन्द्राशनिसंस्पर्शैर् । ११. रा$_2$ फ म–तदा संक्षुभि० ॥ १२. रा$_2$ फ म–अग्रे ॥ १३. रा$_2$ फ म–क्रोधसं० ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति । १५. अतः परमधिकः पाठः—भ–निरस्तस्त्वं सह भ्रात्रा यदा पांशुष्वचेष्टथाः ॥

१०] शायितौ स्थो[1] मया[1] भूमौ वि-संज्ञौ स-पुरः-शरौ[2] ।
स्मृतिर् वा[3] नाऽस्ति ते[4] मन्ये सु-व्यक्तं यम-सादनम्[4] । [१०
११] गन्तुम् इच्छसि येन त्वं मां योधयितुम् इच्छसि ॥[5]१०[6]॥[११
यदि ते प्रथमे युद्धे न दृष्टो मत्-पराऽऽक्रमः ।
१२] अद्य ते[7] दर्शयिष्यामि तिष्ठेदानीं स्थिरो[8] भव[8] ॥११॥ [१२
इत्य्[9] उक्त्वा सप्तभिर्[9] बाणैर् अभि-विव्याध[10] लक्ष्मणम् ।
१३] दशभिश् च हनू-मन्तं तीक्ष्ण-धारैः शरोत्तमैः ॥१२॥ [१३
ततः शर-शतेनैव[11] वि-प्रमुक्तेन वीर्य-वान्[11] ।
१४] क्रोधाद्[12] द्विगुण-संरम्भो[12] निर्-बिभेद वि-भीषणम् ॥१३॥ [१४
स[13] दृष्ट्वा राक्षसेन्द्रस्य कर्म[13] रामाऽनुजस् तदा ।
१५] चिन्तयित्वा[14] प्र-हसन् वै[15] न[15] किं-चिद् इति स ब्रुवन्[15] ॥१४॥
अब्रवीद् वचनं घोरम् उद्-यम्य नर-पुंगवः ।[16] [१५
१६] अ-भीतवद् अ-संरब्धो रावणिं लक्ष्मणो युधि ॥१५॥
नैवं शूरा रणे गत्वा प्र-हरन्ति निशा-चर ।[17] [१६
१७] लघवः स्वल्प-वीर्याश् च शरा हेम-मुखास् तव ॥[18]१६॥
नैवं शूरा वि-युध्यन्ते युद्धे विजय-कांक्षिणः ।
१८] इत्य्[19] एवम् उक्त्वा वचनं[19] शरैर् एनम्[20] अवाऽकिरत्[20] ॥१७॥[१७
तस्य बाणैर् अप-ध्वस्तं कवचं काञ्चनं महत् ।
१९] व्य्-अशीर्यत[21] च निर्-मेघे[21] तारा-जालम् इवाऽम्बरे ॥१८॥ [१८
विध्वस्त-वर्मा[22] नाराचैर् बभूव स कृत-व्रणः ।

---

१. रा$_2$ फ म–प्रथमं । रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तौ मया । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–सपुरस्सरौ । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–ते । ४. रा$_1$ ल$_1$ ल$_2$ ब अ–तेनाद्य गमिष्यसि यमक्षयं । प्र–तद् व्यक्तं गमिष्यसि यमक्षयं । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति । ६. रा$_2$–नास्ति ॥ ७. भ–त्वां । ८. भ–ममाग्रतः ॥ ९. म–महाकायं त्रिभिर् । १०. म–त्रिव्याध स हि ॥ ११. रा$_2$ फ–०नैव सुप्रयुक्तेन वी० । भ–शरसहस्रेण क्षिप्रहस्तो निशाचरः । म–०नैव सुप्रयुक्तेन राक्षसः । १२. ल$_1$ ल$_2$ ब–०संरब्धो । भ–०णरक्ताक्षो । म–संरब्धो बाणजालेन ॥ १३. भ–तद्दृष्ट्वेन्द्रजिता कर्म कृतं । १४. भ–अचिन्तयित्वा व्यहसन् । रा$_2$ फ म–अचिन्तयित्वा प्रहसन् । १५. रा$_2$ फ भ–नैतत्किंचिदिति । म–निर्बिभेद शितैः शरैः ॥ १६. भ–अब्रवीत्तु शरान्घोरानुद्धृत्य रघुपुंगवः ॥ १७. म–नास्ति । १८. म भ–लघवश्चाल्पवीर्याश्च शरा हीमे यथा तव ॥ १९. भ–एवमुक्त्वा ततो वीरः । म–एवमुक्त्वा रघुसिंहः । २०. भ–भृशमताडयत् ॥ २१. भ–व्यकीर्यत रथोपस्थे ॥ २२. रा$_2$–निकृत्तवर्मा । म–लक्ष्मणस्य तु । भ–विधूतव० ।

२०] इन्द्र-जित् सम्-अरे शूरः[1] प्र-रूढ इव सानु-मान्[1] ॥१९॥ [१९
अभीऽऽक्ष्णं नि-श्वसन्तौ हि[2] युध्यमानौ महा-रणे[2] ।
२१] शर-संवृत-सर्वाऽङ्गौ सर्व-तो रुधिरोक्षितौ ॥२०[3]॥ [२२
बभूव रूपं सृजतोर् मार्गणान् भीम-कर्मणोः ।
२२] प्र-वृष्टयोर्[4] यथाऽऽकाशे[5] नीलयोः काल-मेघयोः ॥२१॥ [२५
२३पू] अस्त्राण्य् अस्त्र-विदां श्रेष्ठौ दर्शयन्तौ[6] पुनः[7] पुनः[7] ।[8]
२५उ] शरैर्[9] उच्चाऽवचाऽऽकारैर्[9] अन्तरिक्षे[10] प्र-जघ्नतुः[11] ॥२२॥ [२७
व्यपेत-दोषम् अन्योऽन्यं लघु चित्रं च सुष्ठु च ।
२६] दर्शयन्तौ बलं[12] भीमं[12] सं-ग्रामे नर-राक्षसौ ॥२३[13]॥ [२८
२७पू] तयोः पृथक् पृथग् भीमः शुश्रुवे तल-निस्वनः[14] ।[15] [२९पू
२८उ] सु-घोरयोः शब्द-वतोर्[16] यथा वै काल-मेघयोः[16] ॥२४॥ [३०उ
N] सुवर्ण-पुंखैर् नाराचैर् बल-वन्तौ कृत-व्रणौ ।
२५पू] प्र-सुस्रुवाते रुधिरं जलं प्र-स्रवणाव् इव ॥२५[17]॥ [३१
तयोस्[18] तु मुक्ता गात्रेषु[18] रुक्म-पुंखाः शरा[19] युधि[19] ।[20]
२९] असृग्-दिग्धा विनिर्-भिद्य[21] विविशुर् वसुधा-तलम्[22] ॥२६॥ [३२
अन्योऽन्यं नि-शिता बाणा आ-काशेऽप्य् अव-घट्टिताः ।[23]

---

१. भ—वीरः प्रफुल्ल इव किंशुकः ॥ २. म—नास्ति । भ—तौ प्रायुध्येतां महाबलौ । ३. अतः परमधिकः पाठः—भ—ततः शरौघान् विविधान्मुंचंतौ भीमविक्रमौ ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—प्रवृद्धयोर् । म—प्रावृट्काले । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ—०काले ॥ ६. भ—विसृजन्तौ । ७. भ—परस्परं । ८. अतः परमधिकः पाठः—म भ—सुदीर्घकालं तौ वीरौ युध्यमानौ विरेजतुः । बभूवतुश्चात्मजये यत्तौ भीमपराक्रमौ ॥ तौ शरौघैस्तदा कीर्णौ निकृत्तकवचध्वजौ । ९. भ—शरानुच्चावचाकारान् । १०. भ—०रिक्षे । ११. म—च रुन्धतां । भ—निजघ्नतुः । ( टि० भ—भिन्नेषु "प्रजघ्नतुः>मयंधनुः" ) इत्येवं विकारः ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म—महाभीमे । १३. रा$_2$—नास्ति ॥ १४. फ—तत्र नि० । १५. रा$_2$—नास्ति । अतः परमधिकः पाठः—म भ—प्रकम्पजननो भीमो निर्घात इव दारुणः । बभ्राजे स तयोः शब्दस्तदा समरमत्तयोः । १६. रा$_1$ ल$_1$ ल$_2$ ब अ—०था वै कामपर्वयोः । भ—निस्तनतोर्गगने मेघयोरिव ॥ १७. भ—नास्ति ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब प्र—प्रमुक्ताः शक्रजिद्गात्रे । भ—तयोर्महात्मनोः संख्ये । १९. म—शिताः शराः । २०. अ—नास्ति । २१. भ—विनिष्पेतुर् । २२. रा$_2$ फ म भ—धरणीतलं ॥ २३. रा$_2$ फ म—अन्ये तु विशिखा बाणा ह्याकाशे ज्यावघट्टिताः । भ—अन्योन्यं निशितैः शस्त्रैराकाशं संजिघट्टिरे ।

३०] बभञ्जुश्[१] चिच्छिदुश् चैव[१] तयोर् बाणाः सहस्र-शः ॥२७॥ [३३
सं-बभूवुः[२] सम्-अन्ताच्[२] च[३] तयोर् बाण-समाश्रयाः[४] ।
N] अग्निभ्याम् इव दीप्ताभ्यां यज्ञे[५] कुश-मयाश् चयाः[५] ॥२८॥ [३४
तयोः कृत-व्रणौ देहौ शुशुभाते महाऽऽत्मनोः ।
३१] स-पुष्पाव् इव निष्-पत्रौ[६] वने[७] शाल्मलि-किंशुकौ[७] ॥२९[८]॥[३५
तयोर् गात्रेषु सं-लग्ना भान्ति[९] नाराच-पंक्तयः ।
३२] नक्षत्र-पंक्तयो व्योम्नि वि-मले वै यथोदिताः ॥[१०]३०॥[N
उभौ तौ परमेष्वासाव्[११] उभौ[११] शस्त्र-विशारदौ ।     [N
३३] तयोर्[१२] बभूव तुमुलः सन्नि-पातो[१२] मुहुर्-मुहुः ॥३१॥ [३६पू
लक्ष्मणो रावणिं युद्धे[१३] रावणिश्[१४] चाऽपि[१४] लक्ष्मणम् ।
३४] अन्योऽन्यं तौ[१५] विनि-घ्नन्तौ न ग्लानिं चाऽधि-गच्छतः[१५] ॥३२॥[३७
बाण-जालैः शरीर-स्थैर् अव-गाढैस् तरस्विनौ ।
३५] शुशुभाते रण-गतौ[१६] प्र-रूढाव् इव पर्वतौ[१७] ॥३३॥ [३८
तयोः शोणित-दिग्धानि[१८] सं-वृतानि[१९] शरैर् भृशम्[१९] ।
३६] वि-रेजुः[२०] सर्व-गात्राणि[२०] ज्वलितानीऽव पावकाः[२१] (?कैः)॥३४॥[३९
तयोस्[२२] तु सु-महान्[२२] कालो व्य्-अतीतो युध्यतो[२३] रणे[२३] ।
३७] न च तौ युद्ध-वैमुख्यं[२४] श्रमं चाऽप्य्[२५] अभि-जग्मतुः[२५] ॥३५[२६]॥[४०

---

१. रा$_1$–तमवर्तत दुःखेन । ल$_1$ ल$_2$ ब अ–समवर्तत दुःखेन । प्र–सममर्जत दुःखेन । भ–०दुश्चान्ये ॥ २. भ–समीयुस्ते मुहूर्तं । ३. रा$_2$ फ–तु । ४. म–बाणमया दिशः । भ–बाणाः परस्परं । ५. भ–यथा काष्ठमहाचयाः ॥ ६. ल$_1$ रा$_2$ फ–०पत्रौ । भ–निष्पर्णौ । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–यथा शल्म० । ८. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–अस्त्राण्यस्त्रविदां श्रेष्ठौ दर्शयन्तौ पुनः पुनः ॥ ९. भ–बभुर । १०. भ–नास्ति ॥ ११. प्र–०सौ चोभौ । १२. भ–चक्रतुस्तुमुलं घोरं संनिपातं ॥ १३. म–क्रुद्धो । १४. भ–०णिर्युधि । १५. रा$_2$ फ म–०निमभिजग्मतुः ॥ भ–तावतिघ्नंतौ न श्रमं ययतुस्तदा ॥ १६. भ–महावीर्यौ । १७. भ–किंशुकौ ॥ १८. म–०तसिक्तानि । भ–रुधिरसिक्तानि । १९. ल$_1$–संस्मृतानिश० । ल$_2$ ब प्र–संभृतानिश० । म–गात्राणि निशितैः शरैः । २०. म–शुशुभाते रणगतौ । २१. भ–वह्निना ॥ २२. भ–तयोरेवं म० । २३. रा$_1$–अत आरभ्य ३६-शश्लोकस्य तृतीयपादं यावत्त्रुटितः । ब भ–युध्यमानयोः । २४. ब अ प्र–युधि वै० । २५. भ–वाप्युपज० । २६. अतः परमधिकः पाठः—म भ–इंगितज्ञस्तदा तस्य लक्ष्मणस्य महात्मनः । विभीषणो धनुष्पाणिस्त्वरयामास तद्बलम् ॥

अथ समर-परिश्रमं वि-हन्तुं
समर-मुखे[1] व्रणितस्य[1] लक्ष्मणस्य ।
प्रिय-हितम् उप-पादयन् महौजाः[2]
N] सम्-अरम् उपेत्य[3] वि-भीषणोऽव-तस्थे ॥३६॥ [४१

इत्यार्षे रामायणे युद्ध-काण्डे[4] रा णि-लक्ष्मणयोः[5] संसक्त-युद्धं[5]
नाम सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## [ वं–६६ ]= [ अष्टाषष्टितमः सर्गः ] =[ दा–६० ]

१पू ] युध्यमानौ तु तौ दृष्ट्वा सं-सक्तौ नर-राक्षसौ ।[6] [१पू
२उ ] शूरः स रावण-भ्राता तस्थौ संग्राम-मूर्धनि ॥१ ॥ [२उ
ततो[7] वि-स्फारयामास महद् धनुर् अव-स्थितः ।
३] वि-ससर्ज[8] शरांस्[9] तत्र तीक्ष्णान् कर्मार-मार्जितान्[9] ॥२ ॥ [३
ते शराः शिखि-संस्पर्शा[10] नि-पतन्तः समा-हिताः ।[11]
४] राक्षसान् दारयामासुर्[12] वृक्षान्[12] अशनयो यथा ॥३ ॥ [४
वि-भीषणस्याऽनु-चरास्[13] तेऽपि शूलाऽसिपट्टिसैः[13] ।
५] चिच्छिदुः सम्-अरे वीरा राक्षसान् सु-महाबलाः[14] ॥४ ॥ [५
राक्षसैस् तैः परि-वृतः स तदाऽभूद्[15] वि-भीषणः ।
६] यथैव[16] मध्ये यूथस्य[17] कलभानां महा-द्विपः[17] ॥५ ॥ [६
स सं-चोदयमानस् तु हर्य्-ऋक्षान् रण-गर्वितान्[18] ।[19]
७] उवाच वचनं तत्र[20] काल-ज्ञो रक्षसां वरः ॥६ ॥ [७

---

१. रा$_2$ फ म भ–०स्वजितस्य । २. भ–महात्मा । ३. ब–अवाप्य ॥ ४. ब प्र भ–लंकाकांडे । ५ अ प्र म–इन्द्रजिद्युद्धं । भ–संसक्तयुद्धं ॥ ६. अतः परमधिकः पाठः—भ–प्रभिन्नाविव मातंगौ परस्परवधैषिणौ । तौ द्रष्टुकामः संग्रामे घोरचापधरौ बली ॥ ७. भ–तथा । ८. रा$_2$ फ म भ–उत्स० । ९. रा$_2$–नास्ति । फ म–च तांस्तीक्ष्णाञ्छरान्बर्हिणवाससः । भ–च तीक्ष्णाग्रान्राक्षसेषु महाशरान् ॥ १०. फ म–०संकाशा । ११. रा$_2$–नास्ति । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–ताडया० ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०णशरांस्तेपि प्रासशू० । १४. प्र रा फ म भ–राक्षसोत्तमाः ॥ १५. म–ननाद । भ–तदा तु । १६. प्र–बभूव । रा$_2$ फ म भ–बभौ । १७. प्र रा$_2$ फ म भ–च यूथानां कलभानामिव द्विपः ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–वानरान् रणे । १९. भ–संचोदयन्नसावृक्षान्वानरान् र० । २०. रा$_2$ फ म भ–काले ॥

एकोऽयं[1] राक्षसेन्द्रस्य पराऽयणम् अव-स्थितः[2] ।
८] एतच्[3] छेषं[3] बलं तस्य तिष्ठध्वं[4] किं प्लवं-गमाः[4] ॥ ७॥ [ ८
अस्मिन् विनि-हते पापे राक्षसे रण-मूर्धनि ।
९] रावणो वै नि-हन्तव्यः शेषम् अस्य[5] हतं बलम्[5] ॥ ८॥ [ ९
प्र-हस्तो नि-हतो वीरो नि-कुम्भश् च महा-बलः ।
१०] कुम्भ-कर्णश् च धूम्राऽक्षः कुम्भश् चैव निशा-चरः ॥ ९॥ [१०
अकम्पन-सुपार्श्वौ[6] च चक्र-मौलिश्[7] च राक्षसः ।
१४] मकराऽक्षो[8] महेष्वासो[8] देवाऽन्तक-नराऽन्तकौ ।[8] [१४
१५पू] अति-कायो महा-वीर्यस् त्रि-शिराश् चाऽति-कोपनः ॥[10] १०॥ [N
महोदरश् च रक्ताऽक्षो लम्ब-कर्णो महा-हनुः ।
N] मकराऽक्षोऽति-कायश् च त्रि-शिराश् चाऽपि वीर्य-वान् ॥ ११[11]॥ [N
प्र-घसो जम्बु-माली च महा-पार्श्वश् च वीर्य-वान् ।
११] यज्ञ-कोपो विरूपाऽक्षो वज्र-मुष्टिश् च वीर्य-वान् ॥ १२[12]॥ [११
१३उ] सु-प्लव(?प्तघ्न)श् चाऽग्नि-केतुश् च रश्मिकेत्व्-आदयस् तथा ।[13] [१३उ
१५उ] एतान् नि-हत्य सं-ग्रामे बहून् राक्षस-पुङ्गवान्[14] ॥ १३[15]॥
बाहुभ्यां सागरं तीर्त्वा लङ्घतां[16] गोष्-पदं यथा[17] । [१५
१६] इदम्[18] एवाऽव-शिष्टं[18] वो[19] हन्तव्यम् इति वानराः ॥ १४॥
N] ध्नत सर्वे समा-गम्य राक्षसं बल-दर्पितम् । [१६
अ-युक्तं नि-धनं कामं मया[20] पुत्रस्य वानराः[20] ॥ १५॥ [१७पू
१७] न[21] तु मे[21] राम-तुष्ट्य्-अर्थम् अ-कार्यम्[22] भुवि विद्यते[22] ।

---

१. म—०हं । २. रा$_1$, ल$_1$, ल$_2$ ब अ प्र—इति स्थितिः । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—एकस्यैव । म—वृतस्तेषां । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०ध्वं वै प्ल० । भ—किं तिष्ठत वनौकसः ॥ ५. रा ल$_1$ ल$_2$ ब अ—चाप्यबलं महत् ॥ ६. भ—०नः सुपार्श्वश् । ७. रा$_1$ ब अ—चक्रसैनिश् । ल$_1$ ल$_2$ प्र रा$_2$ फ—वक्रमौलिश् । ८. रा$_2$ फ म—कम्पनः सत्त्वसम्पन्नो । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—नास्ति । अतः परमधिकः पाठः—रा$_2$ फ म—प्रजंघः प्रघसश्चैव शोणिताक्षश्च राक्षसः । १०. भ—वर्जं—नास्ति ॥ ११. भ—नास्ति ॥ १२. भ—जम्बुमाली महावीर्यस्तीक्ष्णवेगोऽशनिप्रभः । सुप्तघ्नो यज्ञकोपश्च वज्रदं ^ श्च राक्षसः ॥ अतःपरमधिकश्च पाठः—भ—संह्रादी विकटश्चैव तपनः काल एव च । प्रघसः प्रहसश्चैव प्रजंघो वज्र एव च ॥ १३. भ—अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान् । अतः परमधिकश्च पाठः—भ—विद्युज्जिह्वो द्विजिह्वश्च सूर्यचक्षुश्च राक्षसः । १४. फ म भ—०ससत्तमान् । १५. रा$_2$—नास्ति ॥ १६. रा$_2$ फ—लंघ्यतां । १७. रा$_2$ फ भ—लघु । १८. रा$_2$ फ म भ—एतावदेव शेषं । १९. म—च ॥ २०. भ—पुत्रस्य यतितुं मया ॥ २१. भ—अथवा । २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—यत्कार्यं भु० । भ—किन्न कुर्यां विगर्हितं ।

वधोपायो वधश् चेति[1] समम् आहुर् मनीषिणः[1] ॥१६॥ [N
१८] तत् पातकम् उपाऽऽतिष्ठे[2] राम-सिद्धि-प्रयोजनम्[2] । [N
घृणाम् अपाऽस्य[3] रामाऽर्थे हनिष्ये[4] भ्रातुर् आत्म-जम् ॥१७॥ [१७उ
१९] प्रहर्तु-कामस्य तु मे वैक्लव्यं[5] जायते महत्[5] ।
तद्[6] एनं वै[6] महा-बाहुर् लक्ष्मणः शमयिष्यति ॥१८॥
२०] वानरा घ्नत सं-भूय भृत्यान् अस्य समीप-गान् । [१८
इति तेनाऽथ तरसा राक्षसेनाऽभि-चोदिताः ॥१९॥ [१९पू
२१] वानरेन्द्रा जहृषिरे मेघान्[7] दृष्ट्वेव बर्हिणः[7] ।
ते[8] लब्ध-लक्ष्याः कपयः[8] प्रेक्ष्य युद्धे वि-भीषणम् ।[9] [२०
२२] भूयो जहृषिरे कामं लांगूलानि च चिक्षिपुः ॥२०॥ [१९उ
जाम्ब-वान् अपि तैः सर्वैर्[10] यूथ-पैर्[10] अभि-संवृतः ।
२३] असूदयत्[11] पर्वताऽग्रैर्[11] नखैर् दन्तैश् च राक्षसान्[12] ॥२१॥ [२१
नि-घ्नन्तम् ऋक्षाऽधिपतिं राक्षसाः सचिवैः सह ।
२४] परि-वव्रुर् भयं त्यक्त्वा तम् एकं विविधाऽऽयुधाः[13] ॥२२॥ [२२
घोरैः परशुभिस् तीक्ष्णैर् भिण्डि-पालैश् च राक्षसाः ।
२५] आ-जघ्नुर्[14] ऋक्षाऽधिपतिं[14] नि-घ्नन्तं राक्षसीं चमूम् ॥२३॥ [२३
स सम्प्र-हारस् तुमुलः सं-जज्ञे कपि-रक्षसाम् ।
२६] देवाऽसुराणां क्रुद्धानां यथा भीमः पुराऽभवत् ॥२४॥ [२४
हनू-मान् अपि सं-क्रुद्धः शालम्[15] उत्-पाट्य पर्वतात्[15] ।
२७] रक्षसां कदनं चक्रे दण्ड-पाणिर्[16] इवाऽन्त-कः[16] ॥२५[17]॥ [२५

---

१. रा$_2$ फ म—चेति समदोषमिदं द्वयं । भ—चैव तुल्यदोषमिदं द्वयं ॥ २. अ रा$_2$—उपतिष्ठे राम० । भ—०ष्ठेयं पुत्रस्य निधनं प्रति । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—त्यक्त्वा च । ४. भ—निहन्मि ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—वक्तव्यं जा० । भ—चक्षुर्बाष्पेण रुध्यते । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—तमिमं वा ॥ ७. भ—समारोपित-विक्रमाः । ८. भ—ततस्ते कपिशार्दूलाः ॥ ९. भ—बभूवुर्हृष्टमनसो मेघं दृष्ट्वैव बर्हिणः । १०. रा$_2$ फ—सार्धं यू० । भ—सर्वैः स्वयूथैर् । ११. भ—अश्मभिस्ताडयामास । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—नास्ति ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—विबुधारयः ॥ १४. भ—जाम्बवन्तं रणे जघ्नुर् ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म—सालमुत० । रा$_2$ फ म—०मुद्यम्य वीर्यवान् । भ—तानुद्यम्य स वीर्यवान् । १६. रा$_2$ फ म—दण्डहस्त इवा० । भ—संग्रामे लोमहर्षणं । १७. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र म—गिरेरुत्पाट्य शिखरं प्रचिक्षेप स वीर्यवान् । तेनाहतातिवेगेन नररक्षसां विंशतिस्तदा ॥

वि-भीषणश् च सं-क्रुद्धो धनुष्-पाणिर् महा-बलः ।
२८] साऽमात्यस् तत्र सं-ग्रामे जघ्ने रक्षो-गणांस् तदा ॥२६॥ [N
दत्त्वा[1] तु[1] तुमुलं युद्धं पितृव्यस्येन्द्र-जित् तदा[2] ।
२९] लक्ष्मणं पर-वीर-घ्नं पुनर् एवाऽभ्य्-अधावत[3] ॥२७॥ [२६
युयुधाते[4] तदा वीरौ रणे[4] लक्ष्मण-राक्षसौ ।
३०] शर-वर्षेण[5] वर्षन्तौ[5] जघ्नतुस्[6] तौ[6] परस्-परम् ॥२८॥ [२७
अन्योऽन्यम्[7] अन्तर्-दधतुः शर-जालैर् महा-बलौ ।
३१] चन्द्राऽऽदित्याव् इवोष्माऽन्ते घन-मेघैस्[8] तरस्विनौ[8] ॥२९॥ [२८
शरौघान् वि-सृजन्तौ तु[9] शुशुभाते शुभाऽऽननौ ।
N] प्र-वर्षन्तौ हि सलिलं मेघाव् इव महा-बलौ ॥३०[10]॥[N
नाऽऽदाने न[11] च[11] सं-धाने धनुषो[12] न परि-ग्रहे ।
३२] न विप्र-मोक्षे बाणानां न वि-कर्षे न वि-ग्रहे ॥३१॥ [२९
न मुष्टि-प्रतिसन्धाने[13] न च[13] लक्ष्य-प्रभेदने[13] ।
३३] अदृश्यत तयोः शैघ्याद्[14] युध्यतोः पाणि-लाघवम् ॥३२॥ [३०
चाप-वेग-प्रमुक्तैश्[15] च बाण-जालैः समन्त-तः ।
३४] अन्तरिक्षे प्रति-च्छन्ने न रूपाणि चकाशिरे ॥३३॥ [३१
तमसाऽपि-हितं सर्वम् आसीद् भीम-तरं नभः[16] । [३५पू
३५] न[17] तदा प्र-ववौ[17] वायुर् न च जज्वाल पावकः ॥३४॥
स्वस्त्य् अस्तु लोकेभ्य[18] इति जेपुस् तत्र महर्षयः[18] ।
३६] सं-पेतुश् चाऽपि गन्धर्वाः सं-त्रस्ताः सह चारणैः ॥[19]३५॥[३७

---

१. रा$_1$, ल$_1$, ल$_2$ ब अ–कृत्वाथ । भ–स दत्त्वा । २. म–तथा । ३. रा$_1$ ल$_1$ ल$_2$ ब–एव ह्यधा० । भ–०भ्यभाषत ॥ ४. रा$_2$ फ म–तौ प्रयुक्तौ पुनर्वी० । भ–तौ प्रयुद्धौ पुनर्वीरौ मृधे । ५. भ–शरौघानभिव० । ६. भ–विनिघ्नन्तौ ॥ ७. प्र रा$_2$ फ म भ–अभीक्ष्णं । ८. रा$_2$ फ म–यथा मेघैस्० । भ–महामेघैः समावृतौ ॥ ९. अ–तौ । रा$_2$ फ–हि । १०. भ–नास्ति ॥ ११. रा फ–नैव । १२. फ म–नास्ति ॥ १३. रा$_2$ फ म–लक्ष्यप्रतिपादने । १४. ल$_1$ ल$_2$ ब अ प्र–शैघ्ये ॥ १५. रा$_2$ फ म–०प्रयुक्तैश् ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म– भृशं । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तदानीं न ववौ ॥ १८. भ–लक्ष्मणायेति जजल्पुः परमर्षयः । १९. भ–संपेतुश्चैव संत्रस्ता गन्धर्वाश्चारणैः सह । अतः परमधिकश्च पाठः—भ–लक्ष्मणो रावणिं प्राप्य रावणिश्चापि लक्ष्मणम् । अव्यवस्थाऽभवच्चोग्रा ताभ्यामन्योऽन्यविग्रहे ॥ तत्र युद्धमभूद् घोरं ताभ्यामन्योन्यमाहवे । उभाभ्यामेव तरसा विसृष्टैर्विशिखैः शितैः ॥

अथ राक्षस-सिंहस्य[1] कालान्[1] काञ्चन-भूषणान्[2] ।
३८] शरैश् चतुर्भिः सौमित्रिर् विव्याध चतुरो हयान् ॥३६॥ [३८
ततः प्र-हस्य सौमित्रिर् नि-शितं[3] बाणम् उद्-यतः[3] । [३९पू
३९] शत्रु-वीर्य-प्रमथनं क्रुद्धं सर्पम् इवाऽऽददे[4] ॥३७॥ [N
४०पू] स यत्न-वान् महा-तेजा जघ्निवान् रावणाऽऽत्मजम् ।[5] [४०पू
४१उ] जहौ[6] च[6] स[7] समुत्-कर्षं[7] वि-मनाश्[8] च बभूव ह ॥३८॥ [४४उ
विषण्ण-वदनं दृष्ट्वा रावणिं हरि-यूथपाः ।
४२] प्र-हर्षम् अ-तुलं गत्वा रथं तस्य व्यू-अपोथयन्[9] ॥३९॥ [४५
ततः प्र-माथी ऋथनः[10] शर-भो मेघ-निस्वनः[11] ।
४३] अ-मृष्यमाणाश् चत्वारश् चक्रुर् वेगं प्लवं-गमाः[12] ॥४०॥ [४६
ते[13] तस्य हय-मुख्येषु[13] तूर्णम् उत्-पत्य वानराः ।
४४] चतुर्षु सु-महावीर्या नि-पेतुः सहिता बलात् ॥[14]४१॥ [४७
तेषाम् अधि-ष्ठितानां तैर्[15] वानरैः पर्वतोपमैः ।
४५] मुखेभ्यः[16] शोणितं शीघ्रं[16] हयानां सम्-अवर्तत[17] ॥४२॥ [४८
ते नि-हत्य हयांस् तस्य निर्-मथ्यैषां रथस्य च ।
४६] पुनर् आ-वृत्य[18] वेगेन सौमित्रेस्[19] तस्थुर् अग्र-तः[19] ॥४३॥ [४९
स हताऽश्वाद् अव-प्लुत्य रथात् पतित-सारथेः ।[20]
४७] वानरैः सार्धम् अ-व्यग्रो बाणैः सौमित्रिम् अर्दयत् ॥[21]४४॥ [५०

---

१. भ–०सपुत्रस्य कृष्णान् । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–कनकभू० ॥ ३. रा$_2$ फ म भ–नाराचमभिलक्षितं । ४. रा$_1$ ल$_1$ ल$_2$ ब अ–०दधे ॥ ५. रा$_2$ फ म–स तेन बाणाशनिना तलशब्दानुनादिना । भ–स तेन बाणाशनिना लब्धलक्ष्यानुनादिना । अतः परमधिकश्च पाठः—रा$_2$ फ म भ–धनुर्मेघप्रयुक्तेन यन्तुर्जीवितमाददे । स यन्तरि महातेजा निहते रावणात्मजे ॥ ६. रा$_2$ फ म भ–प्रजहौ । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–सुमहद्धर्षं । भ–समरोत्कर्षं । ८. रा$_2$ फ म–विवर्णश् । भ–विषण्णश् ॥ ९. भ–हर्षं परममापन्नास्ततः स्यन्दनमार्दयन् ॥ १०. अ–पृतनः । रा$_2$–क्रकचः । ११. भ–गन्धमादनः । १२. रा$_2$ फ म–हरीश्वराः । भ–अनुत्तमं ॥ १३. म–ततस्ते हरिमु० । १४. भ–चतुर्ष्वपि महावीर्याश्चत्वारः पेतुराहवे ॥ १५. ल$_1$ ल$_2$ ब रा$_2$ फ–वै । भ–तु । १६. रा$_2$ फ म–०णितं तीव्रं । भ–०भ्यो रुधिरं तूर्णं । १७. रा$_2$ फ–सम्प्रवर्तते ॥ १८. भ–उत्पत्य । १९. भ–तस्थुर्लक्ष्मणपार्श्वतः ॥ २०. म–नास्ति । २१. म–तमभिबाणैः सौमित्रिमर्दयद्रावणात्मजः । भ–शरवर्षेण सौमित्रिमभ्यवर्षत रावणिः ॥

ततः स सौमित्रिर्[1] अथाऽप्रमत्तः[2]
N] स्थितः (? तं) पदातिं निहतैस् तुरं-गैः ।[3] [N
सृजन्तम् आजौ नि-शितान् पृषत्कान्
४८उ] भृशाऽऽतुरं[4] बाण-गणैश्[5] चकार[6] ॥४५॥ [५१उ

इत्यार्षे रामायणे युद्ध-काण्डे[7] रावणि-रथ-विमर्दो[8] नाम
अष्टाषष्टितमः सर्गः ॥ ६८ ॥

---

## [ वं–७० ]= [ एकोनसप्ततितमः सर्गः ] =[ दा–६१ ]

स हताऽश्वो महा-तेजा[9] भूमौ तिष्ठन् निशा-चरः[9] ।[10]
१] इन्द्र-जित् परम-क्रुद्धः सम्प्र-जज्वाल तेजसा ॥१[11]॥ [१
तौ धन्विनौ जिघांसन्ताव् अन्योऽन्यम् अभि-तः[12] स्थितौ ।
२] वि-जयायाऽभिनिष्[13]-क्रान्तौ[13] वने सिंह-गजाव्[14] इव ॥२ ॥ [२
वि-गर्हयन्ताव्[15] अन्योऽन्यं[15] तौ राक्षस-नरोत्तमौ[16] ।
३] तदा[17] न जहतुर्[17] युद्धम्[18] आ-पतन्तौ[18] ततस् ततः ॥३[19]॥ [३

---

१. रा$_1$ ल$_2$ ब अ प्र रा$_2$–०त्रिं । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०प्रवृत्तः । ३. भ–ततो महेन्द्रप्रतिमः स लक्ष्मणः पदातिनं तं युधि सूदिताऽऽश्वं । ४. भ–भृशं तदा । ५. रा$_2$ फ म–बाणशतैश् । ६. भ–न्यवारयत् ॥ ७. ब प्र रा$_2$ भ–लंकाकांडे । ८. अ–युद्धपर्वणि रथ० । रा$_2$ फ–इन्द्रजिद्विमर्दनं । म भ–रथावमर्दनं ॥ ९. भ–हतरथो हतसारथिरेव च । १०. अतः परमधिकः पाठः—भ–ध्यानशोकपरीतात्मा भुवमाश्रित्य विष्ठितः । ११. अतः परमधिकः पाठः—भ–लक्ष्मणश्च महातेजाः समरे सत्यविक्रमः । विस्फार्य चापं सहसा ससर्जाजौ शिलीमुखान् ॥ १२. भ–इषुभिः । १३. भ–शुशुभाते मदोन्मत्तौ । १४. रा$_2$ फ म भ–गजवृषाव् ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–विगर्हन्तावथान्योन्यं । १६. रा$_2$ फ भ–०सवनौकसां । म–०सनरर्षभौ । १७. रा$_2$ फ म–भर्तारौ जघ्नतुर् । भ–भर्तारौ न जहुर् । १८. रा$_2$ फ म–युद्धे संप० ॥ १९. अतः परमधिकः पाठः—भ–तत्र तान्राक्षसान्सर्वान्हर्षयन्राक्षसात्मजः । संस्तुवन्हर्षयंश्चैव इदं वचनमब्रवीत् ॥ तमसा बहुलेनेमाः संसक्ताः सर्वतो दिशः । नेह विज्ञायते ह्यासः परो वा राक्षसोत्तमः ॥ दृष्ट्वा भवंतो युध्यंतु शत्रूणां मोहनाय वै । अहं तु रथमास्थाय शीघ्रमायामि संयुगे ॥ भवद्भिस्तु तथा कार्यं यथैते काननौकसः । न जयेयुर्दुरात्मानः प्रविष्टे नगरीमपि ॥ इत्युक्त्वा रावणसुतो वंचयित्वा वनौकसः । विकम्प्येन्द्रजितं यु ( ? क्रु ) द्धे वदने रुक्मकुंडले ॥

स क्रोधाच् च पितृव्यस्य क्रुद्धस्याऽपि हतैर् हयैः ।[1]
४] प्र-गृह्याऽभ्य-अद्रवच्[2] चापं शरैर् लक्ष्मणम् इन्द्र-जित् ॥४ ॥ [N
मुक्तम् इन्द्र-जिता तत् तु शर-जालम्[3] अमित्र-जित्[3] ।[4]
५] अवारयद् अ-सम्भ्रान्तो महत् परम-दुःसहम् ॥५ ॥ [२३
लक्ष्मणेन्द्रजितौ वीरौ बलाऽऽकृष्ट-शराऽऽसनौ[5] ।
६] अन्योऽन्यं नि-शितैर् बाणैर् जघ्नतुर् भीम-विक्रमौ ॥६ ॥ [३५
परस्पर-वधे[6] वीरौ निवि-ष्टौ तौ महा-बलौ ।
७] चक्रतुर् घोरम् अन्योऽन्यं शरजालाऽऽवृतं[7] रणे[8] ॥७ ॥ [N
ललाटे लक्ष्मणं बाणैः सु-घोरैस् त्रिभिर् इन्द्र-जित् ।[9]
८] अ-भेद्यं कवचं भित्त्वा विव्याध लघुहस्त-वत् ॥८ ॥ [३२
स तैस् त्रिभिर् अ-दीनाऽऽत्मा[9] ललाट-स्थैः शरोत्तमैः ।
N] लक्ष्मणः शुशुभे वीरस् त्रि-शृङ्ग इव पर्वतः ॥९ ॥ [३३
अर्दितस् त्व् अथ बाणौघैस् तेनाऽमित्रेण लक्ष्मणः । [३४पू
९] उद्-ववर्ह[10] शरांस् तीक्ष्णान् रावणाऽऽत्मज-वारणान् ॥१०॥ [N
१०पू] तम् आशु प्रति-विव्याध लक्ष्मणः[11] पञ्चभिः[11] शरैः । [३४उ
N] किं-चिद् रोष-परीतात्मा रावणिश्[12] (?णिं) च महा-रथः[12] (?थम्) ११[13] [N
तौ परस्परम् अभ्य्-एत्य सर्व-गात्रेषु धन्विनौ ।
१२] घोरैर् विव्यधतुर् बाणैः कृत-भावाव्[14] उभौ जये[15] ॥१२॥ [३७
ततः परम-रोषेण[16] स वि-रुद्धो वि-भीषणः[16] ।[17]
१५] वज्र-स्पर्श-समानांस्[18] त्रीन् ससर्ज नि-शिताञ् छरान्[18] ॥१३॥ [४३

---

१. भ—अत आरभ्य ११—शश्लोकं यावन्नास्ति । २. ल$_2$—०ह्याभिद्र० ॥ ३. म—०लानि शक्रजित् । ४. प्र—नास्ति ॥ ५. प्र—महोद्यतश० । रा$_2$ फ म—महाबलश० ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०रमथो । ७. प्र रा$_2$ म—०लाकुलं । ८. फ म—रणं ॥ ९. रा$_2$—नास्ति ॥ १०. म—०ववाह ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०णं च त्रिभिः । १२. रा$_2$ फ म—०णिं वदने शुभे । १३. अतः परमधिकः पाठः—रा$_2$ फ म भ—ततः शोणितदिग्धांगौ लक्ष्मणेन्द्रजितावुभौ । रणे विरेजतुर्वीरौ पुष्पिताविव किंशुकौ ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—निकृतौ तावू । १५. रा$_1$ ल$_1$ ल$_2$ ब अ—रणे ॥ १६. रा$_2$ फ म—०मकोपेन कुपितो रावणाऽऽत्मजः । भ—०मकोपेन संक्रुद्धो रावणात्मजः । १७. अतः परमधिकः पाठः—रा$_2$ फ म भ—विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे । अयोमुखैस्त्रिभिर्बाणैर्लक्ष्मणं शुभलक्षणम् ॥ एकैकेनाभिविव्याध सर्वांस्तान्हरियूथपान् । तस्मै दृढधनुः क्रुद्धो हताश्वाय विभीषणः ॥ १८. भ—०नान् पंच ससर्जोरसि सायकान् ॥

ते तस्य कायं निर्-भिद्य रुक्म-पुङ्खा विनिः-सृताः[1] ।
१६] बभूवुर्[2] लोहिताऽऽदिग्धा रक्ता इव महोरगाः ॥१४॥ [४४
स पितृव्याय[3] सं-क्रुद्धः शक्र-जित्[4] परमाऽऽहवे[4] ।
१७] वि-ससर्ज शरं घोरं यम-दण्डम् इवाऽपरम् ॥[5]१५॥ [४५
तं सम्-ईक्ष्य महा-तेजा हेम-पुङ्खेन[6] सं-युतम्[6] ।
२१] लक्ष्मणोऽप्य्[7] आ-ददे[7] बाणम् अन्यं भीम-पराऽऽक्रमः[8] ॥१६॥ [४६
कु-बेरेण स्वयं दत्तं[9] स्वप्ने बाणं महाऽऽत्मना[9] ।
२२] दुर्-जयं चाऽविषह्यं[10] च सेन्द्रैर्[10] अपि सुराऽसुरैः ॥१७॥ [४७
ताभ्यां च धनुषोस् तत्र सं-धितौ सायकोत्तमौ ।[11]
२३] वि-कृष्यमाणौ[12] च बल-वत्[12] प्र-जज्वलतुस्[13] तदा[13] ॥१८॥ [४९
महा-शरौ[14] ताव्[14] अन्योऽन्यं धनुर्-ज्यातल-विच्युतौ ।
२४] मुखेन मुखम् आ-हत्य सन्नि-पेततुर् आ-हवे[15] ॥[16]१९॥ [५०
तौ महा-ग्रह-संकाशाव् अन्योऽन्यम् अभि-हत्य च । [५२पू
२५] नि-पेततुर् महा-बाणाव्[17] अन्योऽन्यं शत-धा कृतौ ॥२०[16]॥ [N
शरौ प्रति-हतौ दृष्ट्वा ताव् उभौ रण-मूर्धनि ।
२६] नि-हतौ[18] जात-रोषौ च[19] लक्ष्मणेन्द्रजिताव् उभौ[19] ॥२१॥ [५३
सौमित्रिर् अथ सं-क्रुद्धः सं-दधेऽस्त्रं सु-दारुणम् । [५४

---

१. भ–शिलीमुखाः । २. भ–निपेतुर् ॥ ३. भ–०व्यस्य । ४. रा$_2$ फ म–०जिच्छरमाददे । भ–पावकास्त्रं तु संदधे । ५. रा$_2$ फ म–परमं रक्षसां मध्ये यमदत्तं महाबलः । भ–रौद्रं विभीषणश्चापि व्यसृजत्समनंतरं । अतः परमधिकश्च पाठः—भ–तौ समेत्य शरौ घोरौ वियत्यादित्यसन्निभौ । परस्परं समाहत्य महोल्केव पेततुः ॥ अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्च्छितः । दिव्यं शक्राशनिप्रख्यं ज्वलंतमिव पावकम् ॥ उत्तमं राक्षस-श्रेष्ठो मयदत्तं महारणे । उद्बबर्ह महातेजा परकायविदारणम् ॥ ६. म–महेन्द्रसमविक्रमः । भ–राक्षसेन्द्रेण संधितम् । ७. भ–आददे लक्ष्मणो । ८. प्र रा$_2$ म–०क्रमं । भ–भीमतरं विभुः ॥ ९. भ–स्वप्ने यद्दत्तममितात्मना । १०. प्र रा$_2$ फ म–दुर्विषह्यं च से० । भ–दुःसहं चैव सर्वैर् ॥ ११. भ–उभाभ्यां धनुषोःश्रेष्ठे पीडिते समरे तदा । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–विलप्यमानौ च ब० । रा$_2$–परिकृष्यमाणौ च तदा । फ म–०णौ तौ तदा । भ–निष्कृष्यमाणौ सहसा । १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०ज्वाल नभस्तदा । भ–क्रौंचाविव विनेदतुः । म–बलाच्चलितौ युधि ॥ १४. रा$_2$ फ म–तौ भासयन्ताव् । १५. भ–ओजसा । १६. रा$_2$–नास्ति ॥ १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–महेष्वासाद् । फ म–महेषूनां ॥ १८. भ–बलिनौ । १९. भ–तु जातौ लक्ष्मणरावणी ॥

२७] रौद्रं स चेन्द्र-जित् क्रुद्धो व्य्-असृजत् तद् अनन्तरम् ॥[1]२२॥ [५५पू
तयोः सु-तुमुले युद्धे[2] प्र-वृत्ते[2] रोम-हर्षणे[3] ।[4]
२८] गगन-स्थानि भूतानि लक्ष्मणं पर्य्-अवारयन्[5] ॥२३॥ [६१
भैरवाऽभिरुते[6] युद्धे भीमे वानर-रक्षसाम् ।
२९] भूतैर् बहुभिर् आ-काशे[7] वि-स्मितैर् आ-वृताव्[8] उभौ[8] ॥२४॥ [६२
ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः ।
३०] शत-क्रतुं पुरस्-कृत्य ररक्षुर् लक्ष्मणं रणे ॥२५[9]॥ [६३
अथाऽन्यं मार्गण-श्रेष्ठं सं-दधे राघवाऽनुजः ।
३१] हुताऽशन-सम-स्पर्शं रावणाऽऽत्मज-वारणम्[10] ॥[11]२६॥ [६४
३२उ] आशीविष-सम-स्पर्शं वेगेनाऽत्यन्त-दर्पितम्[12] । [६६उ
N] सुवर्ण-विकृतं वीरः शरीराऽन्तकरं शरम् ॥२७॥ [६५उ
३२पू] दुरा-धर्षं[13] दुर्वि-षहं[13] राक्षसानां वि-दारणम् । [६६पू
N] दृढाऽन्तम् ऋजुवृत्ताऽङ्गं सु-पर्वाणं सु-संस्थितम् ॥[14]२८॥ [६५पू
येन शक्रः प्र-वृद्धोऽभूद् दानवाऽन्तकरः प्र-भुः ।
३३] पुरा देवाऽसुरे युद्धे वीर्य-वान् हरि-वाहनः ॥२९॥ [६७
तम् इन्द्र-दत्तं[15] सौमित्रिः सम्-अरेष्व्[16] अ-पराजितः ।
३४] शर-श्रेष्ठं धनुः-श्रेष्ठे नर-श्रेष्ठोऽभिसं-दधे[17] ॥३०॥ [६८
सं-धायाऽमित्र-मथनो[18] वि-पन्नं स्व-शराऽऽसनात्[18] ।

---

१. भ—असुरास्त्रमसौ युद्धे रावणिर्व्यसृजत्तदा । अतः परमधिकश्च पाठः—भ—तस्माच्चापाद्विनिष्पेतुरासुराः कूटमुद्गराः । शूलान्यथ भुसुंड्यश्च गदाः खड्गाः परश्वधाः ॥ तं दृष्ट्वा लक्ष्मणः संख्ये घोरमस्त्रमथासुरम् । माहेश्वरेण द्युतिमांस्तदस्त्रं पर्यवारयत् ॥ २. भ—तत्र संग्रामे । ३. प्र रा$_2$ फ म भ—लोम० । ४. अतः परमधिकः पाठः—भ—अस्त्रैरस्त्राणि संयोज्य वारयंतौ रणाजिरे । ५. भ—समवा० ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०भिनये । ७. रा$_2$ फ म भ—०शं । ८. रा$_2$ फ म भ—अमृतं बभौ ॥ ९. अतः परमधिकः पाठः—भ—पूज्यमानस्ततो देवैर्हृष्टैः शक्रपुरोगमैः ॥ १०. रा$_1$ ल$_2$ प्र रा$_2$—०जरावणं । भ—०जनाशनं । ११. फ—नास्ति ॥ १२. फ म—वेगसम्पन्नमर्चितं । भ—दिव्यं देवगणार्चितं ॥ १३. म—दुराधारं दुराधर्षं । भ—दुराराधं दु० । १४. भ—सुदृढं तं सुपर्वाणं वज्रवृत्ताग्रसंस्थित ॥ १५. रा$_1$ अ म—इन्द्रजितं । ल$_1$ ल$_2$ ब प्र रा$_2$—इन्द्रजिति । १६. भ—संयुगेष्व् । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$—रथश्रेष्ठोभि० ॥ १८. म—०त्रनिधनं विपन्नं स्व० । भ—०त्रदमनं विचकर्ष श० ।

३५] सं-धीयमानं[1] दुर्-धर्षं[1] कालं[2] लोक-क्षये[3] यथा ॥३१॥ [६९
सं-धाय च धनुः-श्रेष्ठे वि-कर्षन्न् इदम् अब्रवीत् ।
३६] लक्ष्मी-वांल् लक्ष्मणो वाक्यम् अर्थ-साधनम् आत्मनः ॥३२॥ [७०
धर्माऽऽत्मा सत्य-सन्धश् च रामो दाशरथिर् यथा ।
३७] पौरुषे चाऽप्रतिद्वन्द्वस् तथेमं जहि राक्षसम् ॥३३[4]॥[७१
इत्य् उक्त्वा बाणम् आ-कर्णम् आ-कृष्य तम् अ-जिह्मगम् ।
३९] लक्ष्मणः सम्-अरे वीरः ससर्जेन्द्र-जितं प्रति ॥३४॥ [७२पू
सं-धाय चाऽप्रमेयेन[5] रक्षसां[6] शातनेन[6] च ।[7] [N
N] रौद्रेणाऽस्त्रेण सं-योज्य लक्ष्मणः पर-वीर-हा ।[8]३५॥ [७२उ
स शरः स-शिरस्त्राणं श्री-मज् ज्वलित-कुण्डलम् ।
४०] प्र-मथ्येन्द्र-जितः कायात् पातयामास भू-तले ॥३६॥ [७३
तद् रावण-तनूजस्य छिन्न-स्कन्धं[9] शिरो महत्[9] ।
४१] तपनीय-निभं भूमौ ददृशे रुधिरोक्षितम् ॥३७॥ [७४
ततः स नि-पपाताऽऽशु धरण्यां रावणाऽऽत्मजः ।
४२] कवची स-शरः[10] खड्गी वि-ध्वस्तः स-शराऽऽसनः ॥[11]३८॥ [७५
चुक्रुशुस् ते ततः सर्वे वानराः स-विभीषणाः ।
४३] प्र-हृष्टा[12] नि-हते तस्मिन् देवा वृत्र-वधे यथा ॥३९॥ [७६
अथाऽन्तरिक्षे देवानाम्[13] ऋषीणां च महाऽऽत्मनाम् ।
४४] बभूव[14] तत्र सं-नादो[14] गन्धर्वाऽप्सरसाम् अपि ॥४०॥ [७७
पतितं[15] रावणिं[15] मत्वा[16] सा[17] राक्षस-महाचमूः[17] ।
४५] वध्यमाना प्र-दुद्राव[18] हरिभिर्[18] जित-काशिभिः ॥४१॥ [७८
ते वध्यमाना हरिभिः शस्त्राण्य् उत्-सृज्य राक्षसाः ।

---

१. रा$_1$, ल$_1$, ल$_2$ ब अ प्र रा$_2$ म—संधायमानं दु० । भ—संजिहीर्षुः सुदुर्धर्षः । २. म भ—कालो । ३. फ—०क्षयं ॥ ४. अतः परमधिकः पाठः—भ—पितृभक्तो देवपरो वीरव्यूहरणे रतः । भक्तानुकम्पी भूतानां तथेमं जहि राक्षसम् ॥ ५. रा$_1$, ल$_1$, ल$_2$—०येण । ६. रा$_1$, ल$_1$, ल$_2$ ब अ प्र रा$_2$—राक्षसानां शतेन । ७. भ—नास्ति । ८. अतः परमधिकः पाठः—भ—क्षुरप्रं रावणेरर्थे सर्वेषां चैव रक्षसाम् । स तु बाणाग्निदीप्तार्चिः प्रज्वलन्निव तेजसा ॥ ९. भ—शिरो ज्वलितकुंडलं ॥ १०. फ—स रथी । ११. भ—व्यपविद्धशिरस्त्राणः सशरः सशरासनः ॥ १२. फ म भ—प्रहर्षान् ॥ १३. फ म भ—भूतानां । १४. भ—संजज्ञे तलसंपातो ॥ १५. भ—निहतं तमथ । १६. फ भ—ज्ञात्वा । म—दृष्ट्वा । १७. भ—राक्षसानां महा० । १८. भ—दिशो भेजे वानरैर् ॥

४६] लङ्काम् अभि-मुखा जग्मुर् नदन्तो नष्ट-चेतसः ॥४२॥ [७९
दुद्रुवुर् वसु-धां वीरा राक्षसाः सहसा दिशः ।
N] त्यक्त्वा प्र-हरणान्य् आशु पट्टिसाऽसिपरश्वधान्[1] ॥४३॥ [८०
के-चिल् लङ्काम् अभि-मुखाः[2] प्र-विष्टा वानराऽर्दिताः ।
४७] सम्-उद्रे पतिताः के-चित् के-चिच् छैलान् समा-श्रिताः ॥४४॥ [८१
हतम् इन्द्र-जितं दृष्ट्वा शयानं धरणी-तले[3] ।
४८] राक्षसानां सहस्रेषु न कश्-चिद् अव-तिष्ठते[4] ॥४५॥ [८२
ततो वि-नेदुः सं-हृष्टाः सम्-अरे हरि-यूथपाः ।[5]
N] चुक्रुशुर्[6] दुधुवुश्[6] चैव लांगूलानि प्र-हर्षिताः ॥[7]४६॥ [N
यथाऽस्तं-गत आदित्ये नाऽव-तिष्ठन्ति रश्मयः ।
४९] तथा तस्मिन् नि-पतिते नाऽव-तिष्ठन्ति[8] राक्षसाः[8] ॥४७॥ [८३
शान्त-रश्मिर् इवाऽऽदित्यो निर्वाण इव पावकः ।
५०] बभूव स महा-बाहुः सम्-अरे गत-जीवितः ॥४८॥ [८४
प्र-शान्तः प्र-ववौ वायुर् नष्टाऽनिष्टः प्र-हर्षयन् ।
५१] बभूव लोकः पतिते राक्षसेन्द्र-सुते तदा ॥४९॥ [८५
जहर्ष शक्रो भग-वान् सह सर्वैः सुरर्षिभिः[9] ।
५२] लक्ष्मणेन[10] हते[10] तस्मिन् राक्षसे पाप-कर्मणि ॥५०॥ [८६
शुद्धाश् चाऽऽपो नभश् चैव जहर्षुर् देव-दानवाः । [८८उ
५३] आ-जग्मुः पतिते तस्मिन् सर्व-लोक-भयाऽऽवहे ॥५१॥
ऊषुश्[11] च निहताऽरिष्टा[11] देव-गन्धर्व-दानवाः ।[12]
५४] वि-ज्वराश् च सुरा जाता नि-हते पाप-राक्षसे ॥[13]५२॥ [८९
ततोऽभ्य्-अनन्दन् सौमित्रिं सम्-अरे हरि-यूथपाः ।
५५] तम् अ-प्रतिबलं दृष्ट्वा हतं नैर्ऋत-पुंगवम् ॥५३॥ [९०
वि-भीषणोऽथ हनु-माञ् जाम्ब-वान्[14] हरि-यूथपाः[14] ।

---

१. भ—पट्टिशासि० ॥ २. भ—परित्रस्ताः ॥ ३. भ—समरे क्षितौ । ४. भ—०ष्ठति ॥ ५. भ—नास्ति । ६. भ—चिक्षेपुर्दुद्रुवुश् । ७. म—नास्ति ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$—अत आरभ्य ४९—शश्लोकपूर्वार्धं यावन्नास्ति । भ—जग्मुस्ते राक्षसाः दिशः ॥ ९. म—सुरर्षभैः । १०. प्र फ म—जगाम निहते । भ—तदा विनिहते ॥ ११. फ म भ—ऊचुश्च सहितास्तुष्टा । १२. अतः परमधिकः पाठः—भ—शतक्रतु-मुखाः सर्वे परं हर्षमुपागताः । १३. भ—विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति ॥ १४. ब रा$_2$—०थपः । प्र भ—०वानृक्षयूथपः । फ—०वांश्चर्क्षयूथपः ।

५६] वि-जयेनाऽभि-नन्दन्तः प्र-शशंसुश्[1] च[1] लक्ष्मणम् ॥५४॥ [९१
क्ष्वेडन्तश्[2] च[2] प्र-हृष्टाश्[3] च गर्जन्तश् च प्लवं-गमाः ।
५७] लक्ष्मणं[4] तं[4] रघु-सुतं परि-वार्याऽव-तस्थिरे ॥५५॥ [९२
लाङ्गूलानि प्र-विध्यन्तः स्फोटयन्तः[5] प्लवं-गमाः[5] ।
५८] लक्ष्मणो जयतीऽत्य् एवं वाचं व्य्-अश्रावयंस् तदा[6] ॥५६॥ [९३
अन्योऽन्यं च समा-श्लिष्य कपयो हृष्ट-मानसाः ।
५९] चक्रुर् उच्चाऽवच-गुणा[7] राघवाऽऽश्रय-जाः कथाः ॥५७॥ [९४
तद् अ-सुकरम् अथाऽप्य्[8] अ-दृष्टपूर्वं[8]
युधि[9] परम् अस्य च[9] लक्ष्मणस्य कर्म ।
परमम् उप-गता मनः-प्रहर्षं
N] विनि-हतम् इन्द्र-रिपुं नि-शम्य देवाः ॥५८॥ [९५

इत्यार्षे रामायणे युद्ध-काण्डे[10] इन्द्रजिद्-वधो नाम
एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

## [ वं-७१ ]= [ सप्ततितमः सर्गः ] =[ दा-६२ ]

१पू] रुधिर-क्लिन्न-गात्रस् तु लक्ष्मणः[11] शुभ-लक्षणः[11] ।
N] बभूव हृष्टस्[12] तं[12] हत्वा शक्र-जेतारम् आ-हवे ॥[13]१ ॥ [१
N] महाऽनुभावः कवची शुभ-लक्षण-संयुतः[14] ।
१उ] बभूव विक्षत-तनुः सम्-अरे तेन रक्षसा ॥२ ॥ [N
ततः[15] स[15] शरभं[16] वीरं जाम्ब-वन्तं[16] च वीर्य-वान् ।
२] सन्नि-वर्त्य महा-वेगांस् तांश् च सर्वान् वनौकसः ॥[17]३॥ [२

---

१. भ-संहृष्टाश्चैव ॥ २. भ-क्ष्वेडयन्तो । ३. म भ-नदन्तश् । ४. फ म भ-लब्धलक्षं ॥ ५. रा$_2$ फ म भ-०यन्तश्च वानराः । ६. रा$_2$ फ म भ-ततः ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-उच्चा बहुगुणा ॥ ८. रा$_2$ फ म-अवाप्य सम्प्रहृष्टाः । भ-अथाभिवीक्ष्य हृष्टाः । ९. रा$_2$ फ म भ-प्रियसुहृदो युधि ॥ १०. प्र भ-लंकाकांडे ॥ ११. भ-राघवस्यानुजो बली । १२. रा$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-राक्षसं । १३. ल$_1$-नास्ति ॥ १४. फ-राजलक्ष्मणसम्मितः । म-लक्ष्मणो रामसंमतः । भ-लक्ष्मणः शुभलक्षणः ॥ १५. भ-लक्ष्मणो । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-रभसं वीरं जा० । म भ-जाम्बवंतं च हनूमंतं । १७. भ-पूजयित्वा महातेजाः सह सर्वैः प्लवंगमैः ॥

आ-जगाम प्रहृष्टाऽऽत्मा[1] यत्र सुग्रीव-राघवौ ।
३] वि-भीषणम् अव-ष्टभ्य हनू-मन्तं च वानरम्[2] ॥४ ॥ [३
ततो[3] रामम् अभि-क्रम्य[3] सौमित्रिर् अभि-वाद्य च ।
४] तस्थाव् अदूर-तो भ्रातुः सोमस्येव[4] बृहस्-पतिः ॥५[5] ॥ [४
आ-चचक्षे[6] स धर्माऽऽत्मा[6] राघवाय वि-भीषणः । [५उ
६] छिन्नम् इन्द्र-जितः शीर्षं लक्ष्मणेन महाऽऽत्मना ।
नि-वेदयित्वा रामाय तस्थौ हृष्टो वि-भीषणः ॥६[7] ॥ [६
७] विभीषण-वचः श्रुत्वा हर्ष-व्याकुल-लोचनः ।[8] [७पू
वि-भीषणं पुरस्-कृत्य हनू-मन्तं च वानरम्[9] ।[10] [३उ
N] जाम्ब-वन्तं च सु-ग्रीवं सं-पूज्य[11] च वनौकसः ॥७ ॥
शीघ्रम्[12] इक्ष्वाकु-शार्दूलं समाऽश्वासयताऽनु-जम् ।
N] रामस् त्व् इन्द्र-समो भ्राता लक्ष्मणं शुभ-लक्षणम् ॥८[13] ॥ [N
११उ] उप-वेश्य तम् उत्-सङ्गे परि-ष्वज्य च पीडितम्[14] । [१०पू
९उ] पीडितं सायकैर् दृष्ट्वा दुःखितो राघवोऽब्रवीत्[15] ॥९ ॥
१०पू] दुःख-हर्ष-युतो[16] रामः[16] स मूर्च्छित इवाऽऽबभौ । [N
उप-लभ्य ततः सं-ज्ञां लक्ष्मणं समुद्-ऐक्षत ॥[17]१०॥ [१०उ
१२] मूर्ध्नि चैनम् उपाऽऽघ्राय रामः[18] शूरम् उवाच ह ।[19] [१२पू

---

१. भ–ततः शीघ्रं । २. भ–वीर्यवान् ॥ ३. भ–ततः स राममभ्येत्य । ४. भ–इन्द्रस्येव । ५. अतः परमधिकः पाठः—भ–पप्रच्छ भ्रातरं रामः किं वृत्तमिति लक्ष्मणः ( ? म् ) । अनिष्टमिव वागम्य राघवाय महात्मने ॥ ६. फ म–अथाचचक्षे ध० । ७. म–नास्ति । भ–नाचचक्षे यदा वीरः स्वयमिन्द्रजितो वधम् । रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना । इत्येवं कथयामास तदा हृष्टो विभीषणः ॥ ८. भ–श्रुत्वैतन्महावीर्यो वीरेणेन्द्रजितं हतम् । अतः परमधिकश्च पाठः—भ–प्रहर्षमतुलं लेभे वाक्यमेतदुवाच ह । ९. रा$_2$ फ म–राघवः । १०. भ–नास्ति ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–संभाव्य । १२. रा$_2$ फ म–शूरम् । १३. भ–नास्ति ॥ १४. भ–राघवः ॥ १५. रा$_2$ फ–राघवस्तदा । १६. भ–०युतस्तत्र ॥ १७. भ–भ्रातरं लक्ष्मणं स्निग्धं पुनः पुनरुदैक्षत । १८. रा$_2$ फ–रामः शूरमुपागतं । भ–भूयः संस्पृश्य चातुरं । १९. अतः परमधिकः पाठः—भ–स तं शिरसि चाघ्राय लक्ष्मणं शुभलक्षणम् । लज्जमानं बलात्स्नेहादंकमध्ये न्यवेशयत् ॥ शल्यसंपीडितांगं तु निश्वसन्तं च लक्ष्मणम् । रामस्तु दुःखमापन्नस्तेन निश्वसता तदा ॥ साधु लक्ष्मण तुष्टोऽस्मि कर्म ते सुकृतं कृतम् । रावणोऽस्य विनाशेन हत इत्यवधारय ॥

भ्रातरं परमेष्वासम् आ-श्वास्य[1] पुरुषर्षभः ॥[2]११॥[१२
१३] कृतं परम-कल्याणं[3] कर्मेदं[4] दुष्-करं त्वया[4] ।[5] [१३पू
N] दुराऽवाऽऽपं[6] प्र-कृत्याऽद्य[7] वधेनेन्द्र-जितो[8] रणे ॥[9]१२॥[N
निर्-अमित्रः[10] कृतोऽस्म्य् अद्य[10] निर्-यास्यति[11] हि[11] रावणः ।
१६] बल-व्यूहेन महता श्रुत्वा पुत्रं नि-पातितम् ॥१३॥[१६
तं पुत्र-वध-सन्तप्तं निर्-यान्तं राक्षसेश्वरम्[12] ।
१७] बलेनाऽहं समा-साद्य हनिष्यामि रिपुं रणे ॥[13]१४॥[१७
त्वया लक्ष्मण-नाथेन सीता च पृथिवी च मे ।
१८] न दुष्प्राऽऽपे हतो ह्य्[14] अद्य शक्र-जित्[14] सु-महा-बलः ॥१५॥[१८
स तु भ्रातरम् आ-श्वास्य परि-ष्वज्य पुनः[15] पुनः[15] ।
१९] रामः सु-षेणं मुदितः[16] समवेक्ष्येदम् अब्रवीत्[16] ॥१६॥[१९
शल्य-विद्धो[17] महा-प्राज्ञ सौमित्रिर् मित्र-नन्दनः ।
२०] यथा भवति[18] निः-शल्यस्[18] तथा त्वं कर्तुम् अर्हसि ॥१७[19]॥[२०
२३उ] विशल्य-करणीं[20] नाम ततो[21] हैम-वतीं[22] शुभाम्[23] ।
लक्ष्मणाय ददौ नस्यं[24] सु-षेणः परमौषधीम्[25] ॥१८॥[२३उ

---

१. रा$_2$–लक्ष्मणं । २. भ–उवाच लक्ष्मणं वाक्यं राघवः पुरुषर्षभम् ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$–सुकृतक० । म–सुकृतं क० । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–कर्म दुःखकृतं त्वया । भ–कर्म दुष्करकारिणा । ५. अतः परमधिकः पाठः—भ–अद्य मन्ये हतं पापं रावणं राक्षसाधिपम् । अद्याहं विजयी शत्रौ हते तस्मिन् दुरात्मनि ॥ रावणस्य नृशंसस्य दिष्ट्या वीर त्वया रणे । छिन्नोऽस्य दक्षिणो बाहुः स हि तस्य व्यपाश्रयः ॥ विभीषणहनूमद्भ्यां कृतं कर्म सुदुष्करम् । अहोरात्रै-स्त्रिभिर्वीरैः कथं युधि निपातितः ॥ ६. रा$_1$ ल$_1$ ब अ प्र–दुरवापं । म–०वाप्यं । ७. रा$_2$ फ म–प्रसह्याद्य । ८. म–वधमिन्द्र० । ९. भ–नास्ति ॥ १०. ल$_1$ फ म–निरमित्रं कृ० । भ–हतमित्रः कृतो ह्यद्य । ११. भ–स निर्यास्यति ॥ १२. भ–राक्षसाधिपं । १३. भ–बलेन महतावृत्य हनिष्ये रावणं रणे ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब प्र–यत्र इंद्रजित् । भ–यस्माच्छ० ॥ १५. रा$_2$ फ म–च वीर्यवान् । भ–च पीडितं । १६. भ–पार्श्वस्थं संभाष्येदमथाब्र० ॥ १७. प्र रा$_2$ फ म भ–सशल्योयं । १८. भ–वै भवति स्वस्थम् ॥ १९. अतः परमधिकः पाठः—भ–विशल्यः क्रियतां क्षिप्रं सौमित्रिः सविभीषणः । ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनाम् ॥ ये चान्ये व्रणितास्तत्र संग्रामे वानरर्षभाः । तेऽपि सर्वे प्रयत्नेन क्रियतां सुखिनस्त्वया ॥ एवमुक्तस्तु रामेण सुषेणो वानराधिपः ॥ २०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म–०णी । २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–वने । २२. रा$_1$ ल$_1$ ल$_2$ ब–०वते । प्र–०वतः । २३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–शुभे । २४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–नस्ये । म–नस्तः । २५. रा$_1$ ल$_1$ ल$_2$ ब अ म–०धी । प्र फ–०धं ॥

२४] स तस्या[1] गन्धम् आ-घ्राय[2] वि-शल्यः सम्-अपद्यत ।
तथा[3] निर्-वेदनश् चैव संरूढ-व्रण एव च ॥१९॥ [२४
२५] विभीषण-मुखानां च सु-हृदां[4] राघवाऽऽज्ञया[4] ।
२६पू] ताम् ओषधीं महा-बाहुः सु-षेणः प्र-ददौ तदा ॥[5]२०॥ [२५
ऋक्ष-वानर-योधानां पर्वत-द्रुम-योधिनाम् ।[6] [२१उ
N] सम्-अरे प्रति-योधानां हरीणां च महा-बलः ॥[7]२१॥ [N
२६उ] ततः प्र-कृतिम् आ-पेदुर्[8] हृत-शल्या गत-क्लमाः[8] ।[9]
२७पु] सौमित्रि-प्रमुखाः सर्वे वानरा विगत-ज्वराः ।[10] [२६
२८पू] बभूवुर् मुदितास् तत्र प्राऽश्याऽमृतम्[11] इवाऽमराः ॥२२॥ [N
N] लक्ष्मणस् तु तदा हृष्टस् तथा[12] वानर-यूथपाः ।[13]
२८उ] उत्-साहं द्वि-गुणं प्राऽऽपुस्[14] तथा वीर्य-पराऽऽक्रमौ[15] ।
N] तुष्टुवुर् वानराः सर्वे सद्-वाग्भी राम-लक्ष्मणौ ॥[16]२३॥ [N
ततस्[17] तु[17] रामः प्लवगाऽधिपस् तथा
वि-भीषणश् चर्क्ष-पतिश् च जाम्ब-वान् ।
अवेक्ष्य सौमित्रिम् अ-रोगम् उत्थि(?दु-स्थि)तम्
N] तदा[18] स-सैन्याः सु-चिरं जहर्षिरे ॥२४॥ [२७
अपूजयत्[19] कर्म च[20] लक्ष्मणस्य
सु-दुष्करं दाशरथिर् महा-मतिः ।
बभूव हृष्टश् च रणे[21] दुरा-सदम्[21]
N] नि-शम्य तं शक्र-जितं तु[22] पातितम्[22] ॥२५॥ [२८

इत्यार्षे रामायणे युद्ध-काण्डे[23] युद्ध-विजयाऽऽख्यानं[24] नाम सप्ततितमः सर्गः ॥७०॥

---

१. प्र-तस्य । २. रा$_1$ ल$_1$ ल$_2$ ब अ-आदाय । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$-तया ॥ ४. म-राघवस्तु तदाज्ञया । ५. भ-नास्ति ॥ ६. भ-ऋक्षवानरमुख्यानां चिकित्सामकरोत्तदा । ७. भ-नास्ति ॥ ८. भ-आपन्नो हृतशल्यो गतक्लमः । ९. अतः परमधिकः पाठः—भ-गतज्वरः क्षणे तस्मिन् सौमित्रिर्मित्रनंदनः । १०. रा$_2$ फ-नास्ति । भ-ते च शाखामृगाः सर्वे लक्ष्मणे विगतज्वरे । ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-प्राप्यामृ० ॥ १२. रा$_2$ फ म-ते च । १३. भ-नास्ति । १४. म भ-प्राप्तास् । १५. भ-०क्रमाः । १६. म भ-नास्ति ॥ १७. भ-ततः स । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-मुदा ॥ १९. रा$_2$ फ म-०यन् । २०. भ-स । २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-दुरासदस्तथा । रा$_2$ फ म-दुरासदस्तदा । २२. रा$_2$ फ म भ-निपा० ॥ २३. ब प्र भ-लंकाकांडे । म-युद्धपर्वणि । २४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-लक्ष्मणाश्वासनं । म-०जयाख्यापनो ॥

N] ततः पौलस्त्य-सचिवा वि-ज्ञायेन्द्र-जितं हतम् ।
२उ] वि-ज्ञापयामासुर् अथो रावणं सहितास् तदा ॥[1] १[2] ॥ [१
N] न्य्-अवेदयन्त दुःखाऽऽर्ता वधम् इन्द्र-जितस् तु तम् ।[3] [N
३उ] विभीषण-सहायेन लक्ष्मणेन[4] दुर्-आत्मना[4] ॥२ ॥ [२उ
N] जयम् आ-कांक्षता राजन् हतो युद्धे सुतस् तव ।[5]
इत्य् एवं वचनं श्रुत्वा राक्षसेन्द्रो मुमूर्च्छ ह ॥[6] ३ ॥ [N
७] स[7] सम्प्राऽऽप्य[7] चिरात् सं-ज्ञां राजा परम-दुःखितः[8] ।
पुत्र-शोकाऽर्दितो[9] दीनो वि-ललापाऽथ[10] रावणः[10] ॥४ ॥ [५
८] हा राक्षस-चमू-मुख्य[11] मम वत्स महा-रथ[12] ।
इन्द्र-जित् कथम् अद्य त्वं लक्ष्मणस्य वशं-गतः ॥५ ॥ [६
९] यस् त्वं कालम् अपि क्रुद्धो भिन्द्या मुष्टिभिर् आ-हवे ।[13]
मन्दरस्याऽपि शिखरं किं पुनर् लक्ष्मणं रणे[14] ॥६ ॥ [७
१०] अद्य वैवस्वतो राजा[15] भूयो बहु-मतो मम[16] ।
११पू] यो[17] हि योजितवांश् च त्वां[17] महता[18] काल-धर्मणा ॥७ ॥ [८
N] अ-वध्योऽसि हतः[19] सं-ख्ये देवाऽसुर-गणैर् अपि ।[20] [N

---

१. प्र–नास्ति । २. भ–ते प्रविश्य पुरीं लंकां हतशेषा निशाचराः । निकृत्त-कवचा दीनाः प्रहारजनितश्रमाः ॥ ते तु सर्वे विमनसः सचिवा रावणिं तदा । लक्ष्मणेन हतं संख्ये रावणायाचचक्षिरे ॥ ३. प्र–नास्ति । भ–युद्धे हतो महाराज लक्ष्मणेन सुतस्तव । अतः परमधिकः पाठः—म–यथा हतो महाराज लक्ष्मणेन तवात्मजः । ४. भ–मिषतां नो महाद्युते ॥ ५. भ–लक्ष्मणेन हतः शूरः पुत्रस्ते विबुधेंद्रजित् । अतः परमधिकः पाठः—रा$_2$ फ म भ–शूरः संगम्य शूरेण संयुगे विनिपातितः । रा$_2$ फ म–विषण्णवदनास्ते तु रावणायाचचक्षिरे । रा$_2$ फ म भ–स्वर्गमिन्द्रजिद्यातः शरैः संतर्प्य लक्ष्मणं । स तं वधं प्रतिभयं श्रुत्वा पुत्रस्य रावणः ॥ घोरमिन्द्रजितः संख्ये कश्मलं महदाविशत् । स पुत्रवध-संतप्तः क्रूरः क्रोधवशं गतः ॥ ६. रा$_2$ फ भ–विसंज्ञश्च महाबाहुर्मुमोह च मुमूर्च्छे च ॥ ७. भ–उपलभ्य । ८. भ–राक्षसपुंगवः । ९. भ–०शोकाकुलो । १०. भ–०पाकुलेंद्रियः ॥ ११. भ–पुत्र राक्षसनाथ । १२. भ–महाबल ॥ १३. भ–ननु त्वमिषुभिः क्रुद्धो भिन्द्याः कालान्तकोपमः । १४. भ–युधि ॥ १५. भ–देवो । १६. फ–मया । १७. रा$_2$ फ म–येन त्वं योजितस्तात । भ–येनाद्य त्वं महाबाहो । १८. भ–संयुक्तः ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तदा । २०. भ–एषः पंथा सुयोधानां सर्वामरगणेष्वपि ।

यः[1] कृत्ये हन्यते[1] भर्तुः स पुमान्[2] स्वर्गम् अश्नुते ॥८ ॥ [९उ
१२] अद्य देव-गणाः सर्वे लोक-पालाः सहर्षिभिः[3] ।
हतम्[4] इन्द्र-जितं श्रुत्वा[4] सुखं स्वप्स्यन्ति निर्-भयाः ॥९ ॥ [१०
१३] अद्य लोक-त्रये[5] कृत्स्ना[5] पृथिवी च स-सागरा[6] ।
एकेनेन्द्र-जिता हीना शून्येव प्रति-भाति मे ॥१०॥ [११
१४] अद्य नैर्ऋत-कन्यानां श्रोष्याम्य्[7] अन्तः-पुरे रवम् ।
करेणु-संघस्य[8] यथा[8] नि-नादं[9] गिरि-गह्वरे ॥११॥ [१२
१५] यौवराज्यं बलं लङ्कां राक्षसांश्[10] च परं-तप[10] ।
मातरं मां च भार्यां च क्व नु[11] सं-त्यज्य गच्छसि[11] ॥१२॥ [१३
१६] ननु[12] त्वयेन्द्र-जिन् मह्यं गताय[12] यम-सादनम् ।
प्रेत-कार्याणि कार्याणि विपरीऽतम्[13] इदं गतम्[13] ॥१३॥ [१४
१७] स[14] त्वं[14] जीवति सु-ग्रीवे तथा[15] रामे स-लक्ष्मणे[15] ।
मम शल्यम् अन्-उद्धृत्य क्व नु[16] यास्यसि पुत्रक[16] ॥१४॥ [१५
१८] इति जल्पन्[17] स्मरंस् तस्य वृत्तानि[18] तनयस्य सः[19] ।
N] न शोकस्य गुणानां च[20] पारं गच्छति रावणः ॥१५[21]॥ [N
तं मध्य-गतम्[22] आसीनं रक्षसां[23] राक्षसाऽधिपम् ।
१६] आ-विवेश महान्[24] कोपः[24] पुत्र-व्यसन-सम्भवः ॥१६॥ [१६
घोरं प्र-कृत्या रूपं तु[25] तस्य कोपाऽभिमूर्च्छतः[25] ।
२०] बभूव रूपं[26] रुद्रस्य क्रुद्धस्येव[26] दुरा-सदम् ॥[27]१७॥ [२२

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ–त्रुटितः पाठः । प्र–कृत्वा कर्म मृतो । रा$_2$ भ–यत्कृते ह० । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–पुनः ॥ ३. भ–स्वथर्षयः । ४. भ–निहतं त्वां रणे दृष्ट्वा ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–लोकास्त्रयः कृत्स्नाः । ६. रा$_2$ फ भ–सकानना ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–श्रोष्यन्त्य् । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–यथा करीन्द्रः सिंहस्य । ९. रा$_1$ अ प्र फ म–निनदं । भ–नर्दतां ॥ १०. भ–राक्षसैश्वर्यमेव च । ११. भ–गतोऽसि विहाय नः ॥ १२. भ–मम नाम त्वया वीर गतस्य । १३. रा$_2$ फ–०रीतं स्म वर्तते । म–०रीतानि वर्तसे । भ–०तं हि वर्तते ॥ १४. रा$_2$ फ–शत्रौ । १५. भ–लक्ष्मणे च सराघवे । १६. रा$_2$ फ म–कस्माद्व्रजसि पु० । भ–कस्मात्त्यक्ष्यसि जीवितं ॥ १७. रा$_2$–राजा । फ–बाल्ये । भ–बाल्यात् । १८. भ–वृत्तान्तं । १९. प्र रा$_2$ फ–च । २०. भ–वा । २१. म–नास्ति ॥ २२. भ–मोहगतं । २३. भ–रावणं । २४. रा$_1$ ल$_1$ ल$_2$ ब अ–महाकायः ॥ २५. म–च तस्य को० । भ–तु तत्र क्रोधाग्निरुत्थितः । २६. रा$_1$ ल$_1$ ल$_2$ ब–क्रुद्धरूपस्य रुद्रस्य च । २७. भ–नास्ति ॥

तस्य निर्-दशतो दन्ताञ् छुश्रुवे दन्त-निस्वनः ।
२४] यंत्रस्याऽऽवेष्ट्यमानस्य[1] महतो दानवैर् इव ॥१८॥ [२४
तस्य प्र-कृत्या रक्ताऽन्ते नेत्रे[2] क्रोधाऽग्निना तदा[3] ।
२१] रावणस्य महा-घोरे[4] रक्ते नेत्रे बभूवतुः ॥१९[5]॥[२१
तस्य क्रुद्धस्य चक्षुर्भ्यां[6] प्राऽपतन्न् अश्रु-विंदवः[7] ।
२२] दीप्ताभ्याम्[8] इव दीपाभ्यां[8] साऽर्चिषः[9] स्नेह-विन्दवः[9] ॥२०[10]॥[२३
राजा[11] काल इव क्रद्धो[11] यां यां दिशम् अवैक्षत[12] ।
२५] तस्यां तस्यां भय-त्रस्ता राक्षसाः संनि-लिल्यिरे ॥२१॥ [२५
तम् अन्तकम् इव[13] क्रुद्धं चराऽचर-विषादिनम्[14] ।
N] वीऽऽक्षमाणं[15] दिशः सर्वा राक्षसा नोप-चक्रमुः ॥२२॥ [२६
प्रेक्ष्याऽपाऽङ्गेन[16] तेजस्वी[16] सं-रब्धो[17] राक्षसाऽधिपः[17] ।[18]
२६] अब्रवीन्[19] नैर्ऋतान्[19] सर्वान् संस्तम्भयिषुर्[20] (?)आ-हवे ॥[21]२३॥[२७
मया वर्ष-सहस्राणि चरता[22] दुश्-चरं तपः ।
२७] तेषु तेष्व् अव-काशेषु स्वयं-भूश्[23] च प्र-सादितः[23] ॥२४॥ [२८
तस्यैव तपसो व्य्-उष्ट्या[24] प्र-सादाच् च स्वयं-भुवः ।[21]
२८] नाऽसुरेभ्यो[25] न देवेभ्यो[25] भयं मम कदा-चन ॥२५॥ [२९
कवचं ब्रह्म-दत्तं[26] मे[27] यन् नवाऽम्बुद-सन्निभम्[27] ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ–यत्तस्य वे० । प्र–यत्तस्य नदतो युद्धे ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–भूयः । ३. भ–पुनः । ४. रा$_1$ ल$_1$ ल$_2$ ब–महाक्रोधे । ५. अतः परमधिकः पाठः—भ–प्रदीप्तो दीपयामास खमिवादित्यरश्मयः ॥ ६. म–नेत्राभ्यां । भ–नेत्रेभ्यः । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अस्रुबिं० । ८. रा$_1$ ल$_1$ ल$_2$ ब भ–दीप्तेभ्य इव दीपेभ्यः । ९. भ–०षस्तैलबिं० । १०. अतः परमधिकः पाठः—भ–ललाटे भ्रुकुटीभिश्च संगताभिर्व्यरोचयत् । युगांते सह नक्राभिर्महोदधिरिवोर्मिभिः ॥ शोकाद्विजृम्भमाणस्य कोपाद् व्यक्तमिव ज्वलन् । निष्पपात सधूमोऽग्निर्वृत्रस्य वदनादिव ॥ ११. भ–स काल इव संक्रुद्धो । १२. भ–उदैक्षत ॥ १३. म–इति । १४. रा$_1$ ल$_1$ ल$_2$ ब–चचार रवि० । भ–दुर्निरीक्ष्य वि० । भ–०रभयावहं । १५. ल$_1$ ल$_2$ प्र रा$_2$–वीक्ष्यमाणं । भ–वीक्ष्यमाणाः ॥ १६. भ–ततः परमसंक्रुद्धो । १७. रा$_2$ फ–संरब्धांस्तांस्तदार्त्तवत् । भ–रावणो रा० । १८. म–नास्ति । १९. भ–०वीद् राक्षसान् ॥ २०. भ–०यितुम् । २१. रा$_1$–नास्ति ॥ २२. भ–चरितं । २३. भ–०भूः परितोषितः ॥ २४. भ–वृद्धया । २५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–न सुरेभ्यो न भूतेभ्यो ॥ २६. रा$_2$ फ म भ–च प्रदत्तं । २७. म–च युद्धे मेंबु० ।

२९] देवाऽसुर-विमर्देषु न भिन्नं वज्र-मुष्टिभिः[1] ॥[2]२६॥ [३०
तेन माम् अद्य सं-नद्धं[3] रथ-स्थम् इह सं-युगे[3] ।
३०] कः (? न) प्रतीऽयान्[4] मृधे जातु[4] साक्षाद् अपि पुरं-दरः ॥२७॥ [३१
यत् तदाऽति-प्रसादेन[5] स-शरं कार्मुकं महत् ।[5]
३१] देवाऽसुर-विमर्देषु मम दत्तं स्वयं-भुवा ॥२८॥ [३२
अद्य तूण-शतैर् मुख्यैर् धनुर् उत्था(द्-स्था)पयं(?ये)तु तत् ।[6]
३२] राम-लक्ष्मणयोर् एव वधाय परमाऽऽहवे ॥२९॥ [३३
स पुत्र-वध-सन्तप्तः शूरः क्रोध-वशं[7] गतः ।
३३] सम्-ईक्ष्य रावणो बुद्ध्या वैदेह्यां[8] रोचयद् वधम्[8] ॥३०॥ [३४
प्रत्यवैक्षत तान् सर्वान् राक्षसान् घोर-दर्शनान् ।[9]
३४] दीनो[10] दीन-मुखान्[10] सर्वांस्[11] तान् उवाच निशा-चरान्[12] ॥३१॥ [३५
मायया मम वत्सेन त्रासनाऽर्थं[13] वनौकसाम् ।
३५] किं-चिद्[14] एव हि हत्वा यत्[14] सीतेयम् इति दर्शितम्[15] ॥३२॥ [३६
तद् इदं सत्यम् एवाऽहं[16] करिष्ये प्रियम् आत्मनः ।
३६] वैदेहीं सूदयिष्यामि क्षत्र-बन्धुम्[17] अनु-व्रताम् ॥३३॥ [३७
इत्य्-एवम् उक्त्वा सचिवान् खड्गम्[18] आशु पराऽऽक्रमात्[18] । [३८
३७] उद्-धृत्य[19] गुण-सम्पन्नं विमलाऽम्बर-दर्शनम्[20] ।
निष्-पपात[21] सु-वेगेन[21] समस्तैः[22] सचिवैः[22] सह ॥३४॥ [३९
३८] रावणः पुत्र-शोकेन भृशम् आकुल-चेतनः[23] ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ–वज्रघातनैः । २. प्र–नास्ति ॥ ३. भ–संयुक्तम-भेद्येन सुरासुरैः । ४. रा$_1$ ल$_1$ ल$_2$ ब अ–०यान्मृषेयाद्वा । भ–०यात् समासाद्य ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ रा$_2$ फ म–०प्रसादान्मे ॥ ६. रा$_1$ ल$_1$ अ प्र रा$_2$ म–अद्य तूर्यशतैर्मुख्यैर्धनुरुत्थापयंतु मे । भ–अद्य तूर्यप्रणादेन बलं संस्थाप्यतां महत् ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–शत्रुवशं । ८. भ–सीतां हंतुमवस्थितः ॥ ९. भ–प्रत्यवेक्ष्य च ताम्राक्षः सुघोरः पापदर्शनः । १०. रा$_2$ फ भ–दीनान् दीनमनाः । ११. रा$_2$ फ–त्रस्तांस् । १२. रा$_2$ फ म–०चरः ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ–तन्नाशार्थं । भ–वंचनार्थं । १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–किंचिदेव हि हत्वान्यत् । भ–प्रतिमां सदृशीं कृत्वा । १५. म भ–०ता ॥ १६. भ–एवाऽद्य । १७. फ–०धर्मम् ॥ १८. रा$_1$ ल$_2$ ब अ प्र–बाढमस्वप० । भ–खड्गं राक्षसपुंगवः । १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–उत्सृज्य । २०. रा$_1$ ल$_1$ ल ब अ–०लं वर० । २१. म–०पाताथ वे० । भ–०पाताशु वे० । २२. प्र–सर्वार्थस० । रा$_2$ फ–सचापः स० । म–सर्वैश्च स० ॥ २३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–व्याकुललोचनः । भ–०लमानसः ।

खड्ग[1] क्रुद्धः समुद्-यम्य[1] स[2] गतो यत्र[2] मैथिली ।।[3]३५।। [४०

३९] व्रजन्तं राक्षसाः[4] प्रेक्ष्य सिंह-नादं प्र-चुक्रुशुः ।[5]

ऊचुश् चाऽन्योऽन्यम् आ-लिंग्य[6] सं-क्रुद्धं[6] प्रेक्ष्य रावणम्[7] ।।३६।। [४१

४०] अद्याऽयं[8] ताव्[8] उभौ दिष्ट्या नि-हनिष्यति राघवौ ।[9]

लोक-पाला हि चत्वारः क्रुद्धेनाऽनेन[10] निर्-जिताः । [४२

४१] बहवः शत्रवश् चाऽन्ये क्रुद्धेन[11] विनि-पातिताः[11] ।।३७[12]।। [४३पू

तेषां सं-जल्पमानानाम्[13] अशोकवनिका-गताम्[14] ।

४२] अभि-दुद्राव वैदेहीं रावणः[15] क्रोध-मूर्च्छितः[15] ।।३८।। [४४

वार्यमाणो बहु-विधं[16] सु-हृद्भिर् हित-बुद्धिभिः[17] ।[15]

४३] अभ्य्-अद्रवत[18] वैदेहीं[18] ग्रहः[19] खे[19] रोहिणीम् इव ।।३९।। [४५

कम्पयन् वसु-धां कोपात्[20] पाद-न्यासैर् द्रुतं[21] व्रजन् ।

४४] पुत्र-शोक-समाक्रान्तः स्त्री-वधे कृत-मानसः[22] ।।४०।। [N

४५पू] मैथिली रक्ष्यमाणा तु राक्षसीभिर् अ-निन्दिता ।[23] [४६पू

N] तं तथा क्रोध-रक्ताऽक्षम्[24] आ-यान्तं जनकाऽऽत्मजा ।।[25]४१।। [N

४५उ] ददर्श रावणं[26] क्रुद्धं निस्त्रिंश-वर-धारिणम् । [४६उ

तम् अवेक्ष्य[27] स-निस्त्रिंशं व्यथिता जनकाऽऽत्मजा ।।४२[28]।।

४६] नि-वार्यमाणं[29] सचिवैर्[29] मनसैवं व्य्-अचिन्तयत् । [४७पू

---

१. रा$_1$–खड्गी क्रुद्धः स० । भ–तं क्रुद्धं खड्गहस्तं तु । २. भ–व्रजंतं यत्र । रा$_2$ फ–सहसा येन । ३. म–नास्ति ॥ ४. रा$_2$ फ–राक्षसं । ५. म–नास्ति । भ–सहसा राक्षसाः प्रेक्ष्य सिंहनादमथानदन् । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–आश्लिष्य व्रजंतं । ७. रा$_2$ फ म भ–राक्षसाः ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अद्य पापाव्० । प्र रा$_2$ फ म–दृष्ट्वा । ९. भ–अद्य तौ राघवौ राजा संयुगे प्रमथिष्यति । १०. भ–क्रुद्धेनैतेन । ११. भ–संयुगेषु नि० । १२. अतः परमधिकः पाठः–भ–बहूनि चैव रत्नानि भुंक्ते चाहत्य रावणः । विक्रमे च बले चैव नास्त्यस्य सदृशो भुवि ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–जल्पायमा० । भ–०ल्पतामेव । १४. रा$_2$ फ म–०कां गतः । १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति ॥ १६. भ–सुसंक्रुद्धः । १७ भ–साधुबु० । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति । भ–अभ्यधावत संक्रुद्धः । १९. रा$_1$ ल$_1$–ग्रहौ वै । ल$_2$ ब अ प्र–ग्रहो वै ॥ २०. रा$_2$ फ म भ–क्रोधात् । २१. भ–दृढं । २२. भ–कृतनिश्चयः ॥ २३. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा फ–चिंतयंती रणगतं सानुजं राघवं सती । २४. प्र म–क्रोधदीप्ताक्षं । रा$_2$ फ–क्रोधताम्राक्षं । २५. भ–नास्ति ॥ २६. भ–राक्षसं । २७. भ–निशम्य । २८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–नास्ति ॥ २९. भ–०माणे तस्मिंश्च ।

यथाऽयं समभि-क्रुद्धः[1] समभि-द्रवति[2] स्वयम् ।।४३।।
४७] हन्तुम्[3] इच्छति पापाऽऽत्मा[3] रावणो[4] माम् अनाथ-वत् । [४८
बहु-शश्[5] चोदयानोऽपि[5] भर्तारं माम्[6] अनु-व्रताम्[6] ।।४४।।
४८] भार्या मम भवाऽद्येति[7] स निर्-अस्तस् ततो मया ।[8] [४९
सोऽयं मद्-अनवस्थानाद्[9] व्य्-अक्तं नैराश्यम्[10] आ-गतः[10] ।।४५।।
४९] काम-क्रोध-समाविष्टो[11] मां हन्तुम् उप-सर्पति । [५०
अथवा तौ नर-व्याघ्रौ भ्रातरौ राम-लक्ष्मणौ ।
५०] मन्-निमित्तम् अन्-आर्येण सम्-अरे विनि-पातितौ ।।४६।। [५१
सम्प्रत्य्[12] एव हि लङ्कायां रक्षसां तुमुलः स्वनः ।
५१] बहूनां[13] सम्प्र-हृष्टानां[13] मया प्र-क्रोशतां[14] श्रुतः ।।४७।। [५२पू
अथवेन्द्र-जितं श्रुत्वा लक्ष्मणेन रणे हतम् ।
५२] सं-तप्तः[15] पुत्र-शोकेन मां हन्तुम्[16] उप-सर्पति ।।४८।। [N
अथवा राज-पुत्रौ तौ[17] वि-नाश्य क्रूर-निश्चयः ।
N] तथैवाऽमर्ष-सम्पूर्णो मां[18] हनिष्यति[18] रावणः ।।४९।। [५३
अहो धिङ् मन्-निमित्तोऽयं[19] वि-नाशो राज-पुत्रयोः । [५२उ
५३] हनू-मतो हि तद् वाक्यं न कृतं क्षुद्रया मया ।।५०।। [५४
यद्य् अहं तस्य पृष्ठेन[20] तदा यास्ये[21] नि-मन्त्रिता ।
५४] अद्य तावन् न रोदिष्ये ज्ञात्वाऽन्-इष्टां गतिं गतौ ।।[22]५१।। [५५
मन्येऽद्य[23] तस्या हृदयं[23] श्वश्र्वा मे प्र-स्फुटिष्यति ।
५५] एक-पुत्रा यदा[24] पुत्रं वि-नष्टं[25] श्रोष्यते युधि[26] ।।५२।। [५६

---

१. भ–मामतिक्रुद्धः । २. रा$_1$ ल$_1$ ल$_2$ ब अ–मामेवाभिमुखः ॥ ३. भ–हिंसयिष्यति दुष्टात्मा । ४. रा$_2$ फ म भ–सनाथां । ५. भ–०शः प्रेरयन्मां हि । ६. भ–समनु० ॥ ७. रा$_2$–भवस्वेति । ८. भ–भव त्वं मम भार्येति निरस्तं तद्वचो मया । ९. भ–ममानुपस्था० । १०. रा$_2$ म–०श्यतां गतः ॥ ११. भ–क्रोध-शोकस० ॥ १२. भ–इदानीम् । १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–वसूनामिव हृ० । रा$_2$ फ म–बहूनामिव हृ० । १४. भ–विक्रो० ॥ १५. भ–पीडितः । १६. भ–नास्ति ॥ १७ रा$_1$–तु । १८. प्र रा$_2$ फ म भ–वधिष्यति ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब–०त्तं यो ॥ २०. रा$_1$ ल$_1$ ब–पृष्ठे तु । २१. भ–यायां । २२. रा$_2$ फ म–नाद्य तावत्तु शोचिष्ये भ्रष्टानिष्टां ग० । भ–नाद्याहमनुशोचेयं भर्तुरंकगता सती । अतः परमधिकश्च पाठः—भ–आर्यौ तावन्न शोचामि भ्रातरौ रामलक्ष्मणौ ॥ २३. भ–मन्ये तु हृदयं तस्या । २४. रा$_1$ ल$_1$ ल$_2$ ब अ–स्वकं । २५. रा$_1$ ल$_1$ ल$_2$ ब अ–नष्टं वै । २६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–यदि ॥

सा हि जन्म च बाल्यं च यौवनं बलम्[1] एव च[1] ।
५६] धर्म-कार्याणि रूपं च रुदती चिन्तयिष्यति ॥५३॥ [५७
निशाचर-हते[2] पुत्रे दत्त्वा[3] श्राद्धम्[3] अ-चेतना ।
५७] अग्निम् आ-रोक्ष्यते नूनं प्रायं वोप-गमिष्यति[4] ॥५४॥ [५८
धिग् अस्तु कुब्जाम् अ-सतीं मन्थरां पाप-निश्चयाम्[5] ।
५८] यन्-निमित्तं महा-दुःखं[6] कौसल्या प्रति-पत्स्यते ॥५५॥ [५९
इत्य् एवं मैथिलीं प्रेक्ष्य[7] वि-लपन्तीं[7] तपस्विनीम् ।
५९] रोहिणीम् इव चन्द्रेण वि-ग्रहेण[8] न सं-गताम्[8] ॥५६॥ [६०
६०उ] सु-पार्श्वो[10] नाम मेधावी राक्षसो[11] राक्षसेश्वरम् ।
नि-वार्यमाणं सचिवैर् इदं वचनम्[12] अब्रवीत्[12] ॥५७॥ [६१
६१] कथं[13] नाम दश-ग्रीव साक्षाद् वि-श्रवसः सुतः ।
हन्तुम् इच्छसि वैदेहीं कं[14] वा धर्मम्[14] अनु-स्मरन् ॥५८॥ [६२
६२] विद्या-वेद-व्रत-स्नातः स्व-धर्म-निरतः सदा ।[15]
स्त्रियः कस्माद् वधं राजन् मन्यसे राक्षसाऽधिप ॥[16]५९॥ [६३
६३] इष्ट-यज्ञस्य भवतः कुले जातस्य चोत्-तमे ।
स्त्री-वधो नाऽनु-रूपो[17] वै[17] वि-शेषेण मनस्विनः ॥६०॥ [N
६४] मैथिलीं रूप-सम्पन्नाम्[18] अपाऽस्य[19] प्रिय-दर्शनाम्[19] ।[20]
तस्मिन्न् एव परे[21] दीप्ते[21] राघवे[22] क्रोधम् उत्-सृज[22] ॥६१॥ [६४
६५] अभ्युत्था (?द्-स्था) नं[23] तु युद्धाऽर्थे[23] कृष्ण-पक्षे चतुर्-दशीम् ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–च महात्मनः ॥ २. भ–निराशा निहते । ३. रा$_2$ फ–श्रुत्वा श्वश्रूर् । ४. रा$_2$ म भ–चोप० ॥ ५. रा$_2$ फ भ–पापदर्शनां । ६. भ–इदं दुःखं ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–पश्यन् वि० । भ–प्रेक्ष्य चिंतयंतीं । ८. रा$_2$ फ म–बिना ग्रहवशं गतां । ९. अतः परमधिकः पाठः—भ–एतस्मिन्नन्तरे तत्र अमात्यो बुद्धिमान्शुचिः ॥ १०. भ–अविंध्यो । ११. भ–रावणं । १२. भ–वाक्यमुवाच ह ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब–कामं । १४. रा$_2$ फ म–कोपाद्धर्मम् । भ–क्रोधाद्धर्म्यम् ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–०वेदरतस्तात त्वं ध० । भ–०तः स्नातः स्वधर्मे नियतेन्द्रियः । १६. भ–कस्मात्त्वं स्त्रीवधं घोरं कर्तुमर्हसि रावण ॥ १७. रा$_1$ ल$_1$ ल$_2$ ब अ–०पोऽयं । प्र–०पो हि ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ–रूपमाप० । १९. रा$_2$ फ म–०स्य च सुद० । भ–प्रत्यवेक्ष्य सुद० । २०. अतः परमधिकः पाठः—म–फाल्गुनश्चैव मासोऽयं राक्षसानां भयावहः । त्वं च लब्धवरः शूर हनिष्यसि च राघवम् ॥ २१. रा$_2$ फ म–रणे दीप्ते । भ–समासाद्य । २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–राघवः क्रोधमूर्च्छितः ॥ २३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०स्थास्यति क्रुद्धस्य । रा$_2$ फ–०नं हि यु० । म–०नं च यु० ।

कृत्वा[1] निर्याह्य् अमावस्यां वि-जयाय बलैर् वृतः ॥६२॥ [६५
६६] निः-संशयं शरी खड्गी[2] रणे रथ-वरे स्थितः[2] ।
हत्वा दाशरथिं रामं राजन्[3] प्राऽऽप्स्यसि मैथिलीम् ॥६३॥ [६६
६७] एवम् उक्त्वा तु तद् राज्ञो[4] बलात् सं-गृह्य वीर्य-वान् ।
अपाऽकर्षत वैदेह्याः सकाशाद् राक्षसेश्वरम् ॥६४॥ [N
६८] समवेक्ष्य[5] च वैदेह्या रूपं सर्वगुणाऽन्वितम्[6] ।
६९पू] ननाशैक-पदे रोषो रावणस्य दुर्-आत्मनः ॥६५॥ [N
स[7] निन्दिताऽऽत्मा[7] सु-हृदा नि-वेदितं
वचः स्व-धर्म्यं[8] प्रति-गृह्य[8] रावणः ।
गृहं जगामाऽथ ततः[9] स वीर्य-वान्[9]
N] पुनः सभां चाऽभि-ययौ[10] सुहृद्-वृतः[10] ॥६६॥ [६७

इत्यार्षे रामायणे युद्ध-काण्डे[11] सुपार्श्व-वाक्यं[12]
नामैकसप्ततितमः सर्गः[12] ॥ ७१ ॥

---

## [ वं–७३ ]= [ द्विसप्ततितमः सर्गः ] =[ दा–६४ ]

स प्र-विश्य सभां राजा दीनः परम-दुःखितः ।
१] नि-पपाताऽऽसने[13] मुख्ये[14] सिंहः क्रुद्ध इव श्वसन् ॥१ ॥ [१
उवाच स तदा सर्वान् बल-मुख्यान् महा-बलः ।[15]
२] रावणः प्राऽञ्जलीन्[16] वाक्यं पुत्र-व्यसन-कर्षितः[17] ॥२ ॥ [२
सर्वे[18] भवन्तः सर्वेण[18] हस्त्य्-अश्वेन समा-वृताः[19] ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म–स त्वं ॥ २. भ–धन्वी रणे स्यन्दनमास्थितः। ३. भ–पुनः ॥ ४. रा$_2$ फ म–रक्षो ॥ ५. रा$_1$ ल ल ब अ प्र भ–०वेल्य । ६. रा$_1$ अ प्र–सत्यगु० । ल$_1$ ल$_2$ ब–सत्वगु० ॥ ७. रा$_2$ फ म भ–एतद् दुरात्मा । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–सधर्मं परिगृह्य । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–ततः स शोचन् । भ–निशाचरेश्वरः । १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०ययौ सुहृद्भिः । रा$_2$ फ–०ययौ सुहृद्धृतः । भ–प्राप सुहृद्गणैर्वृतः ॥ ११. प्र भ–लंकाकांडे । म–युद्धपर्वणि । १२. म–रावणकोपो ना० । भ–सीतावधनिवारणं ॥ १३. रा$_2$ फ म भ–निषषादासने । १४. भ–दिव्ये ॥ १५. भ–अब्रवीच्च तदा सर्वान् बलाध्यक्षानुपस्थितान् । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–०लिर् । १७. भ–इन्द्रजिद्वधशंकितान् ॥ १८. रा$_1$–समेऽमात्याश्च पूर्वेण । ल$_1$ ल$_2$ ब अ प्र–सर्वेऽमात्याश्च पूर्वेण । १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–सुदंसिताः । रा$_2$ फ–सुदंशिताः । म–च संवृताः ।

३] निर्-यान्तु रथ-सङ्घैश्[१] च पदातैश् चोप-शोभिताः[१] ॥३ [२]॥[३
N] एवं[३] रामं समा-क्षिप्य[३] सम्-अरे हन्तुम् अर्हथ ।[४]
४उ] प्र-वृद्धाः शर-वर्षेण प्रावृषीऽव बलाहकाः[५] ॥४ ॥[४
अथवाऽहं शरैस् तीक्ष्णैर् भिन्न-मर्माणम् आ-हवे ।
५] सर्वैः सह भवद्भिस् तं रामं धक्ष्यामि[६] सं-युगे ॥५ [७]॥[५
इत्य् एवं[८] वाक्यम् आ-दाय[८] राक्षसेन्द्रस्य राक्षसाः ।
६] निर्-ययुस् ते[९] रथैः शीघ्रं[१०] नागाऽनीकैश् च सं-वृताः[११] ॥६ [१२]॥[६
स सं-ग्रामोऽभि-तो[१३] भीमः[१३] सूर्यस्योद्-अयनं प्रति ।
८] रक्षसां वानराणां च तुमुलः[१४] सम्-अपद्यत[१४] ॥७ [१५]॥[९
९पू] ते[१६] गदाभिर्[१६] वि-चित्राभिः प्राऽऽसैः[१७] खड्गैः परश्वधैः ।[१८]
N] अन्योऽन्यं सम्-अरे जघ्नुस् तदा वानर-राक्षसाः ॥[१९]८ ॥ [१०
हतानां युधि वीराणां तत्र[१९] वानर-रक्षसाम् ।
११] सं-ख्या न शक्यते कर्तुं बहु-त्वाच् च ततस् तदा ॥९[२०] ॥ [११
मातंग-रथ-कूर्माश्[२१] च शर-मत्स्या[२१] ध्वज-द्रुमाः ।
१२] शरीर-संघात-वहाः सुस्रुवुः[२२] शोणिताऽऽपगाः[२३] ॥१०॥ [१२

---

१. रा$_1$–संघेन पदातैश्चैव शोभिनः । ल$_1$ ल$_2$ ब अ प्र–०संघेन पादातैश्चैव शोभिनः । रा$_2$ फ–०संघैश्च पदातैश्चाभिशो० । २. अतः परमधिकः पाठः— भ–नानाच्छत्रध्वजाकीर्णा भूषणोत्तमभूषिताः ॥ ३. प्र–एकं रामं स० । रा$_2$ फ म भ–एकं रामं परिक्षिप्य । ४. अतः परमधिकः पाठः— भ–सर्वतः सर्वयत्नेन रणकर्मणि पंडिताः । ५. भ–बाणवर्षाणि मुंचंतः प्रवृद्धा इव तोयदाः ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–वध्यामि । ७. भ–पश्चादहं शितैस्तीक्ष्णैर्भिन्नगात्रं महारणे । पत्रिभिर्पोथयिष्यामि रामं लोकस्य पश्यतः ॥ ८. भ–एतद्वाक्यमाज्ञाय । ९. प्र फ–तै । १०. भ–शीघ्रैर् । ११. रा$_2$ फ म–भूषिताः । भ–संहताः । १२. अ–नास्ति । अतः परमधिकः पाठः— भ–शूराः शूलगदाहस्तास्तोमरासिपरश्वधैः । निर्ययू राक्षसव्याघ्राः सिंहा इव मदोत्कटाः ॥ १३ रा$_2$ फ म–०मोऽभवद्भीभः । भ–०मोऽभवद्घोरः । १४. भ–०लो लोमहर्षणः । १५. अ–नास्ति ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ–गदाभिश्च । १७. म–पाशैः । १८. अतः परमधिकः पाठः— भ–वानरान् समरे जघ्नुर्विनदंतो महारथाः । वानरा राक्षसान् वृक्षैर्मुष्टिभिर्दशनैस्तथा ॥ गिरिशृङ्गैः शिलाभिश्च प्रापयन् यमसादनम् ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तदा । २०. भ–नास्ति ॥ २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–०रथशार्दूला रथमत्स्या । २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–सुस्रुवे । भ–प्रसस्रुः । २३. म अ प्र–०पगा ॥

ध्वज-वर्म-रथान्[1] नागान्[2] नाना-प्रहरणानि च ।
१३] आ-प्लुत्याऽऽप्लुत्य सम्-अरे[3] वानरेन्द्रा बभञ्जिरे ॥११॥ [१३
केश-कर्ण-ललाटांश्[4] च नासिकाश्[5] च प्लवं-गमाः ।
१४] रक्षसां दशनैस् तीक्ष्णैर् नखैश् च[5] वि-चकर्त्तिरे[5] ॥१२॥ [१४
एकैकं राक्षसं सं-ख्ये शतं वानर-पुङ्गवाः[6] ।
१५] अभ्य्-अधावन्त बलिनो वृक्षं शकुनयो यथा ॥१३॥ [१५
ते गदाभिः खड्गैश् च परि-घैः पट्टिशैस् तथा ।[7]
१६] नि-जघ्नुर् वानरान् घोरान् राक्षसाः पर्वतोत्तमान्[8] ॥१४[9]॥ [१६
राक्षसैर् वध्यमानानां वानराणां महा-चमूः ।
N] शरण्यं शरणं याता रामं दशरथाऽऽत्मजम् ॥१५[10]॥ [१७
ततो रामो महा-तेजा धनुर् आ-दाय वीर्य-वान् ।
१७] प्र-विश्य राक्षसं सैन्यं शर-वर्षं ववर्ष सः ॥१६[10]॥ [१८
प्र-विष्टं राक्षसं सैन्यं घनैः[11] सूर्यम् इवाऽऽवृतम्[11] ।
१८] नाऽभि-जज्ञे[12] तदा रामं निर्-दहन्तं शराऽर्चिषा[13] ॥१७॥ [१९
नि-कृत्ता[14] युधि रामेण घोरास् ते[14] रजनी-चराः[15] ।
१९] रणे रामस्य[16] ददृशुः कर्माण्य् अ-सुकराणि ते ॥१८॥ [२०
चालयन्तम्[17] अनीकानि क्षपयन्तं[17] महा-रथान् ।
२०] न ते ददृशिरे रामं वातं[18] घन-गतं[18] यथा ॥१९॥ [२१
छिन्नं भिन्नं[19] विपर्य्-अस्तं प्र-भग्नं[19] शस्त्र-पातितम्[20] ।
२१] बलं रामेण[21] ददृशुर् न[22] रामं शीघ्र-कारिणम्[22] ॥२०॥ [२२
प्र-हरन्तं शरीरेषु न ते[23] पश्यन्ति[23] राघवम् ।
२२] इन्द्रियाऽर्थेषु वर्तन्तं[24] भूताऽऽत्मानम् इव प्र-जाः ॥२१॥ [२३

---

१. रा$_2$ फ म–ध्वजचर्म० । २. भ–अश्वान् । ३. भ–वेगेन ॥ ४. भ–०टं च नासिका । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–चैव च० ॥ ६. भ–०रयूथपाः ॥ ७. भ–०ते गदाभिश्च गुर्वीभिः पट्टिशैः परिघैरपि । ८. भ–०तोपमाः । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–नास्ति ॥ ११. भ–मेघं सूर्यमिवाम्बरे। १२. रा$_2$ फ म–०जग्मुस् । १३. प्र–शराग्निना ॥ १४. रा$_2$–विकृता यु० । भ–कृत्तान्येव घोराणि रामेण । १५. म–युधि राक्षसाः । १६. भ–चित्राणि ॥ १७. भ–दलयंतं महानीकं विधमंतं । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–सिंहं वनगतं । भ–वायुं व्योमगतं ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–छिन्नं छिन्नमपर्यस्तं प्रभिन्नं । म–छिन्नं छिन्नं शरैर्दग्धं प्र० । भ–०न्नं शरैर्दग्धं प्र० । २०. भ–शरताडितं । २१. म–रामस्य । २२. ल$_1$–तिष्ठंतं विघ्नका० ॥ २३. रा$_2$–तं प० । भ–पश्यन्ति स्म । २४. ल$_1$ ब–तिष्ठंतं ॥

एष हन्ति गजाऽनीकम् एष हन्ति महा-रथान् ।
२३] एष हन्ति शरैस् तीक्ष्णैः पदातीन् वाजिभिः[1] सह ॥२२[2]॥[२४
अथ रामो महा-तेजा युध्यताम् एव रक्षसाम् ।
२४] प्र-ज्ञाम् अपाऽहरत् तेषां[3] मोहनाऽस्त्र-बलेन च[3] ॥२३॥ [N
ते वि-मूढा[4] वि-संज्ञाश् च राम-भूतम् इदं जगत् ।
२५] ददृशू राक्षसास् तत्र[5] ततो जघ्नुः परस्परम् ॥२४॥ [N
२६पू] अन्योऽन्यं स-हिता[6] जघ्नुः शक्ति-शूल-परश्वधैः । [२५उ
मोहिताः परमाऽस्त्रेण गान्धर्वेण[7] महाऽऽत्मना ।[8]
२७] न ते ददृशिरे रामं नि-घ्नन्तम् अरि-वाहिनीम् ॥[9]२५॥ [२६
ततो[10] राम-सहस्राणि रणे[11] पश्यन्ति राक्षसाः[11] ।
२८] पुनः पश्यन्ति काकुत्स्थम् एकम् एव महा-रणे[12] ॥२६[13]॥[२७
भ्रमन्तीं काञ्चनीं कोटीं कार्मुकस्य महाऽऽत्मनः ।
२९] अलात-चक्र-प्रतिमां ददृशुस् ते निशा-चराः[14] ॥२७॥ [२८
सूर्य-मण्डल-सम्भूतं[15] रश्मि-जालम् इवाऽम्बरे ।
३०] शर-जालं ददृशिरे राघवस्य धनुश्-च्युतम् ॥२८॥ [N
शररश्मिसहस्रौघं[16] मध्याऽह्नाऽऽदित्य-सन्निभम् ।
३१] चरन्तं दिक्षु सर्वासु न शेकुस् तम् उद्-ईक्षितुम् ॥२९[17]॥ [N
शरीर-नाभि-सत्त्वाऽर्चिश्[18] चापनेमिरथोदितम् ।[19]
३२] ज्या-घोष-तल-निर्घोषं तेजो-बुद्धि-गुण-प्रभम् ॥३०॥ [२९

---

१. म–वानरैः । २. अतः परमधिकः पाठः—भ–एवमेव हि तान् सर्वान् राक्षसान् निशितैः शरैः । सूदयत्यथ काकुत्स्थः कुंजरान्वाजिनस्तथा ॥ इति ते राक्षसाः सर्वे वाक्यमूचुस्तदा युधि ॥ ३. भ–तत्र मोहनास्त्रेण संयुगे ॥ ४. रा$_1$–विरूढा । ५. म–सर्वे ॥ ६. भ–कुपिता । ७. रा$_1$ ल$_1$ ल$_2$ ब भ–गंध० । ८. अतः परमधिकः पाठः—भ–राक्षसाः समरे शूराः सदृशा राघवस्य ते । ९. भ–न पश्यंति स्म तं रामं निघ्नंतो हरिवाहिनीम् ॥ १०. भ–ते तु । ११. भ–रणेऽपश्यन्निशाचराः । १२. रा$_2$ फ म भ–महाहवे । १३. अतः परमधिकः पाठः—भ–निसूदयंतं रक्षांसि कालाग्निमिव दुःसहम् ॥ १४. भ–न राघवं ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०लसंकाशं ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–०हस्राढ्यं । १७. अतः परमधिकः पाठः—भ–राघवस्य रणे शत्रून्निघ्नतः शीघ्रकारिणः ॥ १८. रा$_2$ फ–०सत्यार्चिश् । म–०संख्यार्चिश् । १९. भ–शरार्चिषं दिव्यनाभिं शतारं दिव्यकार्मुकम ॥

दिव्याऽस्त्र-ग्राम-सम्पन्नं[1] बभौ[2] शरशताऽऽकुलम्[2] ।
३३] राम-चक्रं[3] वर्तमानं काल-चक्रम् इवाऽपरम्[4] ॥३१॥ [३०
ददृशुः सर्व-भूतानि नि-घ्नन्तं[5] सर्व-रक्षसाम्[5] ।
N] अनीकं शत-साहस्रं रथानां वात-रंहसाम् ॥[6]३२॥ [N
३४उ] अष्टादश-सहस्राणि[7] कुञ्जराणां तरस्विनाम् । [३१उ
N] चतुर्दश-सहस्राणि[8] साऽऽरोहाणां च वाजिनाम् ।
३५पू] पूर्णे[9] शत-सहस्रे द्वे[9] पदातीनां च रक्षसाम् ॥३३[6]॥ [३२
३४पू] निमेषाऽन्तर-मात्रेण[10] शरैर् अग्निशिखोपमैः । [३१पू
हतान्य् एकेन रामेण लीलया विदिताऽऽत्मना ॥३४॥ [३३उ
३६] ते हताऽश्वा हत-रथाः श्रान्ता[11] विगलित-ध्वजाः ।
अभि-पेतुः पुरीं लंकां हत-शेषा निशा-चराः ॥३५॥ [३४
३७] नि-हतैर्[12] अथ(?श्व-)पादातैस् तद् बभूव[12] रणाऽजिरम् ।
आ-क्रीडम् इव रुद्रस्य क्रुद्धस्येव[13] महाऽऽत्मनः[13] ॥३६॥ [३५
३८] ततो देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।
साधु साध्व् इति रामस्य तत् कर्म सम्-अपूजयन्[14] ॥३७॥ [३६
३९] अब्रवीच्[15] च[15] तदा रामः सु-ग्रीवं तद्-अनन्तरम्[16] । [३७पू
४०पू] एतद्[17] अस्त्र-बलं सौम्य मम वा त्र्यम्बकस्य वा ॥३८[18]॥ [३८उ

नि-हत्य[19] तां राक्षस-वाहिनीं स[20]
रामस् तदा शक्र-सम-प्रभावः[21] ।
अस्त्रेण दिव्येन गत-क्लमोऽभूत्[22]
N] सं-स्तूयते[23] देव-गणैः प्र-हृष्टैः[23] ॥३९॥ [३९

इत्यार्षे रामायणे युद्ध-काण्डे[24] रामाऽस्त्रयुद्धं[25] नाम द्विसप्ततितमः सर्गः[25] ॥७२॥

---

१. प्र रा$_2$ फ–०स्त्रगुणसं० । भ–०स्त्रगुणसंछन्नं । २. रा$_1$ ल$_1$ ल$_2$ ब–बभौ शरतलाकु० । भ–निघ्नंतं युधि राक्षसान् । ३. रा$_1$ ल$_1$ ल$_2$ ब अ रा$_2$–रामं चक्रं । ४. भ–इव प्रजाः ॥ ५. रा$_2$ फ म भ–दहन्तं सर्वराक्षसान् । ६. रा$_1$ ल$_1$ ल$_2$ ब म–नास्ति ॥ ७. भ–अष्टाशीतिस० । ८. भ–चतुःषष्टिस० । ९. भ–त्रिंशच्छतसहस्राणां ॥ १०. भ–विक्षेपांत० ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ–सर्वे । १२. भ–हतैरथ पादातैश्च संब० । १३. भ–०स्याभिघ्नतः पशून् ॥ १४. म–त्वभिपू० ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०वीत्तु । १६. भ–सविभीषणं । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–यत्तद् । १८. अतः परमधिकः पाठः— भ–तृतीयस्य कपिश्रेष्ठ लोकेनाऽन्यस्य कस्यचित् ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–निष्पिष्य । २०. रा$_2$ फ–च । भ–तु । २१. रा$_2$ फ–०समो महात्मा । भ–ब्रह्मसमो महात्मा । २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–जितक्ल० । रा$_2$ फ म–जितक्लमः सः । भ–जितक्लमश्च । २३. भ–देवैस्तदास्तूयत संप्रहृष्टैः ॥ २४. प्र भ–लंकाकांडे । म–युद्धपर्वणि । २५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–राक्षसवधो ना० । भ–गन्धर्वास्त्रयुद्धं ॥

तानि नाग-सहस्राणि साऽऽरोहाणां[१] च वाजिनाम् ।
१] रथानाम्[२] अग्नि-वर्णानां[२] स-ध्वजानां वरूथिनाम् ॥१ ॥ [१
पदातीनां[३] सहस्राणि[१] गदा-परिघ-योधिनाम्[४] ।
२] अतीव भीम-रूपाणां काञ्चन-ध्वज-वर्मिणाम्[५] ॥[६]२ ॥ [२
नि-हतानि शरैस् तीक्ष्णैस्[७] तप्त-काञ्चन-भूषणैः ।
३] रावणेन[८] प्र-युक्तानि[८] रामेणाऽक्लिष्ट-कर्मणा ॥३ [९]॥ [३
दृष्ट्वा[१०] श्रुत्वा च सं-भ्रान्ता[१०] हत-शेषा निशा-चराः ।
६] राक्षसीश्[११] च समा-गम्य[११] दीनाश् चित्राऽर्पिता[१२] इव[१२] ॥४ ॥ [४
वि-धवा हत-पुत्राश् च क्रोशन्त्यो हत-बान्धवाः ।
७] राक्षसैः सह दुःखाऽऽर्त्ताः सं-गताः पर्य्-अदेवयन् ॥५ ॥ [५
कथं शूर्प-णखा[१३] वृद्धा कराला निर्णतोदरी[१४] ।
८] आ-ससाद[१५] वने[१५] रामं कं-दर्पम्[१६] इव रूपिणम्[१६] ॥६ ॥
सु-कुमारं महा-सत्त्वं सर्व-भूत-हिते-रतम् । [६
९] तं दृष्ट्वा लोकपालाऽऽभं[१७] कथं[१८] रामम् अकामयत्[१८] ॥७ ॥
कथं सर्व-गुणैर् हीना गुण-वन्तं महौजसम् ।
१०] सु-मुखं दुर्-मुखो रामं[१९] कामयामास राक्षसी ॥८ ॥ [७
जनस्याऽस्याऽल्प-भाग्यत्वान् मलिना श्वेत-मूर्धजा ।

---

१. म–नास्ति । २. भ–०नां चाग्नि० ॥ ३. रा$_{7}$ फ भ–राक्षसानां । ४. म–०घयोधिभिः । ५. रा$_{2}$–०जचर्मणां । ६. भ–कांचनध्वजवर्माणां शूराणां कामरूपिणाम् ॥ ७. रा$_{2}$ फ म भ–दीप्तैस् । ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–राघवेणास्तमस्त्राणि । ९. अतः परमधिकः पाठः—भ–द्विजिह्वो निहतो वीरः संह्रादी च निशाचरः । विमर्दनः कुंभहनुः खरकेतुश्च राक्षसः ॥ विडालाक्षो हयग्रीवः शंकुकर्णः प्रमर्दनः । हस्तिकर्णौ महावीरो दशैते नायका हताः ॥ १०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–दृष्ट्वा श्रुत्वा च संत्रस्ता । भ–ते दृष्ट्वा तांश्च सं० । ११. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–राक्षसा बहवस्तत्र । १२. प्र–चित्रपरायणाः । फ म भ–०चिंतापरायणाः । रा$_{2}$–चिन्तार्पिता इव ॥ १३. रा$_{1}$ ल ल$_{2}$ ब अ प्र फ म–०नखा । १४. ल$_{2}$ ब अ फ म–निम्नतोदरी । १५. म–असंपदं रणे । १६. रा$_{2}$ फ म–०र्पसमरू० । भ–०र्पशरपीडिता ॥ १७. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र म–लोकत्रंध्या ( घं ) सा । १८. भ–हीनरूपा प्रकामिता ॥ १९. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ–वीरं ॥

११] अ-कार्यम्[1] एव हास्यं[1] च सर्व-लोक-विगर्हितम् ॥९ ॥ [८
राक्षसानां वि-नाशाय दूषणस्य खरस्य च ।
१२] चकाराऽप्रतिरूपस्य[2] राघवस्य[3] प्र-धर्षणम्[4] ॥१०॥
तन्-निमित्तं कृतं[5] वैरं दश-ग्रीवेण रक्षसा[5] । [९
१३] वधाय[6] च[6] हृता सीता रावणेन दुर्-आत्मना ॥११॥ [१०पू
मारीचो दण्डकाऽरण्ये शूरो राक्षस-पुंगवः ।
N] हतो वि-क्रम्य रामेण पर्य्-आप्तं तन् नि-दर्शनम् ॥१२॥ [N
चतुर्दश-सहस्राणि[7] रक्षसां भीम-कर्मणाम् ।
१६] नि-हतानि जन-स्थाने शरैर् अग्नि-शिखोपमैः ॥१३॥ [१२
खरश् च नि-हतः सं-ख्ये दूषणस् त्रि-शिरास् तथा ।
१७] शरैर्[8] आशीविषाऽऽकारैः[8] पर्य्-आप्तं तन् नि-दर्शनम् ॥[9]१४॥[१३
न च सीतां दश-ग्रीवः प्राऽऽप्स्यते जनकाऽऽत्मजाम् ।[10]
१४] बद्धं बल-वता वैरम्[11] अ-क्षयं राघवेण च ॥१५॥[१०उ
वैदेहीं प्राऽर्थमानं तु वि-राधं प्रेक्ष्य राक्षसम् ।[12]
१५] हतम् एकेन[13] रामेण पर्य्-आप्तं तन् नि-दर्शनम् ॥१६॥ [११
हतो योजन-बाहुश् च कबन्धो रुधिराऽशनः ।
१८] क्रौञ्चाऽचले[14] राघवाभ्यां पर्य्-आप्तं तन् नि-दर्शनम् ॥१७[15]॥[१४
१९पू] वानरं[16] वालिनं[16] हत्वा सहस्रनयनाऽऽत्मजम् ।
N] बलिनं मेघ-संकाशं राघवेण महाऽऽत्मना ॥[17]१८॥ [१५
ऋष्यमूके वसन्[18] शैले[18] दीनो भग्न-मनोरथः ।
२०] सु-ग्रीवः[19] प्राऽऽपितो[19] राज्यं पर्य्-आप्तं तन् नि-दर्शनम् ॥१९॥[१६
धर्माऽर्थ-सहितं वाक्यं सर्वेषां रक्षसां हितम् ।

---

१. भ–अकाममवहास्यं ॥ २. ल$_1$ रा$_2$ फ–०रूपाय । म भ–०रूपा सा । ३. रा$_2$ फ–०वाय । ४. रा$_2$–प्रहर्ष० ॥ ५. भ–इदं वैरं रावणस्य क्षयावहं ॥ ६. ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–०य सा । म–छद्मना च ॥ ७. रा$_1$ प्र–१३-शश्लोकादारभ्य १६-शश्लोकं यावन्नास्ति ॥ ८. भ–रामेण लोकरामेण । ९. ल$_1$–नास्ति ॥ १०. भ–न च सीता दशग्रीवं मनसापि हि कामयेत् । ११. भ–चैवम् ॥ १२. भ–वैदेहीं तु प्रार्थयंतं विराधं वीक्ष्य सूदितं । १३. भ–क्रुद्धेन ॥ १४. रा$_1$ ल$_1$ ल$_2$ अ प्र– क्रौंचावटे । रा$_2$ फ–क्रौंचवधो । १५. ब–नास्ति ॥ १६. भ–वालिनं बलिनं । १७. भ–राजानं हरिमुख्यानां महावीर्यं महौजसम् ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–च शैलेन्द्रे । १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–०वस्यार्पितं ॥

२१] युक्तं वि-भीषणेनोक्तं मोहात्[1] तस्य न रोचते[1] ॥२०॥ [१६
विभीषण-वचः कुर्याद् यदि[2] स्म[2] धनदाऽनुजः ।[3]
२२] श्मशान-भूता दुःखाऽऽर्ता[4] नेयं लंका पुरी भवेत् ॥२१॥ [२०
कुम्भ-कर्णं हतं श्रुत्वा राघवेण महाऽऽत्मना ।
२३] प्रियं चेन्द्र-जितं पुत्रं रावणो[5] नाऽनु-शोचते[5] ॥[6]२२॥ [२१
मम पुत्रो मम भ्राता मम भर्ता हतो रणे ।
२५] इत्य् एवं श्रूयते[7] शब्दो राक्षसीनां[8] गृहे गृहे ॥२३॥ [२३
रथा[9] नागास् तथाऽश्वाश्[9] च हताः शत-सहस्र-शः ।
२६] रणे रामेण शूरेण राक्षसाश् च पदातयः ॥२४॥ [२४
रुद्रो वा यदि वा विष्णुर् महेन्द्रो वा शत-क्रतुः ।
२७] हन्ति नो राम-रूपेण यदि[10] वा स्वयम् अन्त-कः[10] ॥२५॥ [२५
हत-प्रवीरा बहवो निर्-आशा जीविते वयम् ।
२८] व्यसनाऽन्तम्[11] अ-पश्यन्तो ह्य् अ-नाथा[11] वि-लपामहे ॥२६॥ [२६
राघवात्[12] स[12] दश-ग्रीवः शूरो लब्ध-पराऽऽक्रमः[13] ।
२९] इमं[14] क्षयं महा-घोरं[14] समुत्-पन्नं न बुध्यते ॥२७॥ [२७
तत्र देवा न गन्धर्वा न[15] पिशाचा न राक्षसाः[15] ।
३०] उप-सृष्टं[16] परि-त्रातुं शक्ता रामेण सं-युगे[17] ॥२८॥ [२८
निमित्तानि[18] च दृश्यन्ते रावणस्य[19] महा-रणे ।
३१] तानि रामे फलिष्यन्ति[19] रावणे नि-हते रिपौ ॥[20]२९॥ [२९

---

१. भ–नास्य मोहादरोचत ॥ २. भ–यद्येष । ३. अतः परमधिकः पाठः—भ–रावणो रक्षसां भीमस्ततो नो न क्षयो भवेत् । एकेन वानरेणेयं पुरी लंका प्रधर्षिता ॥ अक्षः कुमारो निहतः सप्त सेनानुगास्तथा । अमात्य-पुत्रा निहताः किंकराश्च निशाचराः ॥ दग्धा च नगरी लंका पर्याप्तं तन्निदर्शनम् । सुहृदां वचनं कुर्याद्यदि वा मंत्रिणस्तथा ॥ ४. रा$_1$ प्र–दुःखांता ॥ ५. भ–शोचते नाद्य रावणः । ६. अतः परमधिकः पाठः—भ–ततः संरक्तनयनाः संतताऽश्रुनिपातनाः । अभूतपूर्वव्यसना राक्षस्यः पर्यदेवयन् ॥ ७. भ–शुश्रुवे । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–०सानां ॥ ९. भ–रथाश्वोष्ट्राश्च नागाश् ॥ १०. भ–कालो वा सुदुरासदः ॥ ११. प्र–०श्यन्त्यो ह्य० । भ–अपश्यंतो भयस्यांतमनाथा ॥ १२. भ–ब्रह्मणो हि । १३. भ–लब्धमहावरः । १४. रा$_2$ फ म–इदं महाभयं घोरं । भ–इत्थं महद्भयं घोरं ॥ १५. भ–नासुरोरगरा० । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–उपसृष्टं । १७. भ–रावणं ॥ १८. रा$_2$ भ–०त्तानीह । १९. ल$_2$–नास्ति । २०. रा$_1$–०मे फलिष्यन्ते रा० । भ–फलिष्यंति रणे तानि रावणस्य निबर्हणात् ॥

देव-दानव-यक्षेभ्यो ददौ ब्रह्मा[1] पिता-महः[1] ।
३२] रावणस्याऽभयं[2] युद्धे मानुषेभ्यो न याचितः ॥३०॥ [३०
तद् इदं मानुषात् सर्वं[3] नैराश्यं समुपाऽऽगतम्[3] ।
३३] जीविताऽन्त-करं घोरं[4] रक्षसां रावणस्य च ॥३१॥ [३१
पीड्यमानास् तु[5] बलिना[5] वर-दत्तेन[6] रक्षसा ।
३४] दीप्तैस् तपोभिर् वि-बुधाः[7] पिता-महम् अतोषयन्[8] ॥[9]३२॥[३२
देवानां[10] स[10] हिताऽर्थं[9] तु[11] महा-तेजाः पिता-महः[12] ।
३५] उवाच देवताः[13] सर्वाः परि-तुष्टो महद् वचः[13] ॥३३[9]॥[३३
३६उ] अद्य-प्रभृति लोकेषु[14] ये भूता भय-वर्जिताः[14] ।
भयाऽऽर्तास् ते पुनर् इह भविष्यन्तीऽव[15] राक्षसाः ॥[16]३४[17]॥[३४
३७] अथ[18] देवैः समा-गम्य सर्वैर्[19] इन्द्र-पुरो-गमैः[19] ।
वृष-केतुस्[20] त्रि-पुर-हा महा-देवः प्र-सादितः ॥३५॥ [३५
३८] प्र-सन्नस् तु महा-तेजा[21] रुद्रो[21] देवान् उवाच ह ।
उत्-पत्स्यतेऽभयाऽर्थं वो नारी[22] रक्षः-क्षयाऽऽवहा[23] ॥३६॥ [३६
३९] सैषा देव-प्रयुक्ता तु दानवानां यथा क्षुधा ।[24]
भक्षयिष्यति नः सर्वान्[25] राक्षसान् सह-रावणान्[25] ॥३७॥ [३७
४०] रावणस्याऽप-नीतेन दुर्-विनीतस्य दुर्-मतेः ।
अयम् इष्ट-क्षय-करः[26] शोको नः समुपाऽऽगतः ॥३८॥ [३८
न तं पश्यामहे लोके यो नः शरण-दो भवेत् ।
४१] राघवेणोप-सृष्टानां कालेनेव युग-क्षये ॥३९॥ [३९

---

१. भ–ब्रह्मोरगादपि । २. भ–०णेनाभयं ॥ ३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$ फ–शंके नैराश्यं स० । भ–एवं भयं घोरमुपस्थितं । ४. भ–युद्धे ॥ ५. रा$_{2}$–सुबलिनः । भ–सुबलिना । ६. प्र रा$_{2}$ फ म भ–वरदत्तेन । ७. रा$_{1}$ ल$_{1}$ ल ब प्र रा$_{2}$ फ म–नियमैः । ८. ल$_{2}$ ब म–०यत् । ९. अ–नास्ति ॥ १०. रा$_{2}$ फ म–देवतानां । ११. भ–च । १२. भ–महाबलः । १३. भ–वचनं तत्र ब्रह्मा लोक-पितामहः ॥ १४. भ–लोकांस्त्रीन्सर्वदानवराक्षसाः । १५. रा$_{2}$ फ–०न्तीति । १६. भ–भयेन प्रावृता नित्यं विचरिष्यन्ति शाश्वतम् । १७. ल$_{1}$ अ–नास्ति ॥ १८. भ–ततो । १९. प्र रा$_{2}$ फ म–सर्वैः सेन्द्र० । भ–तदा शक्रपु० । २०. भ–वृषध्वजस् ॥ २१. प्र–महादेवो० । भ–महादेवस्तुष्टो । २२. रा$_{1}$ ल ल$_{2}$ ब अ प्र फ–नरो । २३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ फ म–०हः । प्र–रक्षोभयावहः ॥ २४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–सैष देवप्रयुक्तस्तु दानवानां यथा क्षुधा । भ–देवैः प्रसृष्टा सैषा तु क्षुधिता जनकात्मजा । २५. भ–सीता रावणं राक्षसैः सह ॥ २६. रा$_{2}$ फ म भ–निष्ठानको घोरः ॥

इतीऽव सर्वा[1] रजनीचर-स्त्रियः[1]
परस्परं वै परि-रभ्य बाहुभिः ।
भृशं वि-नेदुर् भय-शोक-कर्षिता
४२] जजल्पुर्[2] उच्चैश् च वचः सु-दारुणम्[2] ॥४२॥[४२

इत्यार्षे रामायणे युद्ध-काण्डे[3] राक्षसी-विलापो[4] नाम
त्रिसप्ततितमः सर्गः ॥ ७३ ॥

## [ वं–७५ ]= [ चतुःसप्ततितमः सर्गः ] =[ दा–९६ ]

आर्तानां राक्षसीनां[5] तु व्यथितानां गृहे गृहे[5] ।
१] रावणः करुणं सर्वं[6] शुश्राव परि-देवितम् ॥१ ॥ [१
स्व-बलं क्षयितं दृष्ट्वा सम्-अग्रं स-सुतं रणे ।
२] सुतान्[6] भ्रातॄन्[6] विनि-हतान् शक्र-तुल्य-पराऽऽक्रमान्[7] ॥२ ॥ [N
स[8] दीर्घम्[8] अथ निः-श्वस्य[8] मुहूर्तं[8] ध्यानम् आ-स्थितः ।
३] बभूव परम-क्रुद्धो राक्षसो[9] भीम-दर्शनः ॥३ ॥ [२
सं-दश्य दशनैर् ओष्ठं क्रोध-संरक्त-लोचनः ।
४] राक्षसेन्द्रः[10] सु-दुर्धर्षः[10] कालाऽग्निर् इव मूर्च्छितः ॥[11]४॥ [३
उवाच च समीप-स्थान् राक्षसान् राक्षसेश्वरः ।[11]
५] भयाऽऽक्रान्तान्[12] इदं तत्र निर्-दहन्न् इव चक्षुषा ॥५ ॥ [४
महोदरं[13] महा-पार्श्वं विरूपाऽक्षं[13] च राक्षसम् ।
६] शीघ्रं वदत रक्षांसि[14] निर्-यातेति ममाऽऽज्ञया ॥६ ॥ [५
तस्य तद् वचनं श्रुत्वा राक्षसास्[15] ते भयाऽऽतुराः[15] ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–शोकाद्रुदती वर० । रा$_2$ फ म–सर्वे रजनीचरास्तदा । २. भ–विनेदुरुच्चैर्वदनैर्विचेतसो । महास्वनाः क्रांतसुदारुणं वचः ॥ ३. रा$_2$ फ म भ–लंकाकांडे । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–परिदेवनं । म–राक्षसपरिदेवनं । भ–राक्षसस्त्रीविलापः ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–रक्षसां तेषां व्य० । भ–०तु रुदंतीनां तु वेश्मसु ॥ ६. रा$_2$ फ–तथा वीराम् । म–सर्वान्भ्रातॄन् । ७. रा$_2$ फ–राक्षसानंतकोपमान् ॥ ८. रा$_1$ फ–सुदी० । भ–दीर्घमुष्णं विनि० । ९. भ–रावणो ॥ १०. भ–०सैरपि दुष्प्रेक्ष्यः । ११. अ–नास्ति ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–भयासक्तान् ॥ भ–भयत्रस्तान् ॥ १३. भ–अकंपनं पिशाचं च विडालाक्षं । १४. भ–सैन्यानि ॥ १५. ल$_2$ ब म–अत आरभ्य ८–मश्लोकस्य प्रथमपादं यावन्नास्ति । भ–०सास्ते भयार्दिताः ।

७] नोदयामासुर्[1] अ-व्यग्रा राक्षसांस् ते[2] तद्-आज्ञया[2] ॥७ ॥[६
ते[3] तु[3] सर्वे तथेत्य् उक्त्वा राक्षसा घोर-दर्शनाः ।
८] कृत-स्वस्त्ययना हृष्टा[4] रावणाऽभिमुखा[5] ययुः ॥८ ॥[७
अभि-पूज्य[6] यथा-न्यायं[7] रावणं तु[8] महा-रथाः ।
९] तस्थुः[8] प्राऽञ्जलयः सर्वे[9] भर्तुर् विजय-कांक्षिणः ॥९ ॥[८
अथोवाच महा-तेजा रावणः क्रोध-मूर्च्छितः ।
१०] महोदरं[10] महा-पार्श्वं[10] विरूपाऽक्षं च राक्षसम्[11] ॥१०॥[९
शीघ्रं निशा-चराः[12] सर्वे[12] निर्-गच्छत ममाऽऽज्ञया ।
११] राम-लक्ष्मण-सुग्रीवान् हत्वा प्रति-निवर्तत[13] ॥११॥ [N
अद्य[14] बाणैर् धनुर्-मुक्तैर् युगाऽन्ताऽऽदित्य-सन्निभैः ।
१२] राघवं लक्ष्मणं चोभौ[15] नयिष्ये[16] यम-सादनम्[16] ॥१२॥ [१०
खरस्य कुम्भ-कर्णस्य प्रहस्तेन्द्रजितोस् तथा ।
१३] उत्-तरिष्ये[17] क्षय-करम्[17] अद्य शत्रु-वधाद् अहम् ॥१३॥ [११
नैवाऽन्तरिक्षं न दिशो न च द्यौर् नाऽपि सागराः[18] ।
१४] प्र-काशतां[19] गमिष्यन्ति[19] बाण-जालैर्[20] मयाऽऽवृताः[20] ॥१४॥ [१२
अद्य वानर-मुख्यानां[21] तानि यूथानि[21] भाग-शः । [१३पू
१५] धनुः-समुद्राद् उद्-भूतैर् वि-धमिष्ये[22] शरोर्मिभिः[22] ॥१५॥ [१४उ
व्याकोश-पद्म-वक्त्राणां[23] पद्म-किञ्जल्क-वर्चसाम्[24] ।
१६] अद्य यूथ-तडाकानि[25] वि-गाहिष्ये गजेन्द्र-वत् ॥१६॥ [१५

---

१. भ–चोद० । २. रा$_2$ फ भ–तान्नृपाज्ञया ॥ ३. रा$_2$ फ–तेऽपि । भ–ते हि । ४. रा$_2$ फ म भ–सर्वे । ५. फ–नास्ति ॥ ६. भ–प्रतिगृह्य । ७. ब भ–वर्जं—न्याय्यं । ८. रा$_2$ म भ–ते । ९. भ–तुष्टाः ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०रं महाकायं । रा$_2$ फ–०रमहापार्श्वौ । भ–मत्तोन्मत्तौ महावीर्यौ । ११. रा$_2$–०सां ॥ १२. प्र–वाक्यं तु ते सर्वे । रा$_2$ फ म–वाद्यंतु वाद्यानि । भ–आपूर्य वाद्यानि । १३. भ–०र्त्तथ ॥ १४. भ–अथ । १५. भ–चैव । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अत आरभ्य १३-शश्लोकस्य प्रथमपादं यावन्नास्ति । भ–नयामि य० ॥ १७. भ–करिष्यामि प्रतीकारं ॥ १८. ल$_1$ अ प्र फ–०रः । १९. भ–०शा हि भविष्यंति । २०. भ–मम बाणगणैर्वृताः । रा$_2$ फ म–बाणज्वालावृता मया ॥ २१. भ–०रयूथानां तानि वृंदानि । २२. रा$_1$ ल$_1$ ल$_2$ ब अ–०ष्ये महोर्मिभिः । भ–मथिष्यामि श० ॥ २३. रा$_1$ ल$_1$ ल$_2$ ब अ–आकाशे प० । प्र–आकाशे पद्ममुख्यानां । २४. म–अत आरभ्य ३०-शश्लोकस्य प्रथमपादपर्यंतं नास्ति । भ–पद्मकेशरव० । २५. रा$_2$ फ म–०डागानि । भ–व्यूहतडागानि ॥

अद्य युद्ध-प्रचण्डानां[1] हरीणां द्रुम-योधिनाम् ।
१७] मुक्तेनैकेषुणा सं-ख्ये[2] नि-योत्स्यामि शतं शतम्[2] ॥१७॥ [१७
हतो भर्ता हतो भ्राता यासां च तनयो[3] हतः[3] ।
१८] वधेनाऽद्य रिपोस् तासां करिष्येऽस्रु-प्रमार्जनम् ॥१८॥ [१८
अद्य मद्-बाण-निर्भिन्नैर् वि-कीर्णैर्[4] गत-जीवितैः[5] ।
१९] करिष्ये[6] वानरैर् युद्धे प्रच्छन्नैकतलां[7] महीम्[7] ॥१९॥ [१९
अद्य गोमायवो गृध्रा[8] ये[8] चाऽन्ये पिशिताऽशनाः[9] ।
२०] सर्वांस् तांस् तर्पयिष्यामि शत्रु-मांसैः[10] शराऽऽचितैः[10] ॥२०॥ [२०
कल्प्यतां मे रथः शीघ्रं क्षिप्रम्[11] आ-नीयतां धनुः[11] ।
२१] आ-यान्तु[12] ते च मे युद्धे[12] येऽव-शिष्टा निशा-चराः ॥२१॥ [२१
तस्य तद् वचनं श्रुत्वा महा-पार्श्वोऽब्रवीद् इदम्[13] ।
२२] बलाऽध्यक्षं स्थितं तत्र बलं सं-नह्यताम्[14] इति ॥२२॥ [२२
बलाऽध्यक्षस्[15] तु सं-ग्रामे[15] राक्षसांस् तान् गृहे गृहे ।
२३] चोदयन्[16] वै परि-ययौ[16] लङ्कां[17] लघु-पराऽऽक्रमः[17] ॥२३॥ [२३
ततो मुहूर्तान् निष्-पेतू[18] राक्षसा भीम-विक्रमाः[19] ।
२४] सम्प्र-हृष्टा[20] वि-नर्दन्तो[20] नाना-प्रहरणैर्[21] भुजैः[21] ॥२४॥ [२४
प्राऽऽसाऽसि-पट्टिसैः[22] शूलैर् गदाभिर् मुसुलैर् अपि ।
२५] शक्तिभिस् तीक्ष्ण-धाराभिर् महद्भिः कूट-मुद्गरैः ॥२५॥ [२५
N] ऋष्टिभिर् वि-विधैश् चक्रैर् नि-शितैश् च परश्व-धैः ।[23]
भिण्डि-पालैः[24] शत-घ्नीभिर् अन्यैर् अपि तथाऽऽयुधैः[25] ॥२६॥ [२६

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ–यूथप्र० । २. रा$_2$ फ–सैन्यं निर्बिभेत्स्यामि संयुगे । भ–युद्धे निर्भेत्स्यामि श० ॥ ३. ल$_2$ ब रा$_2$ फ भ–०या हताः ॥ ४. भ–प्रकी० । ५. प्र रा$_2$फ–गतचेतनैः । भ–गाढवेदनैः । ६. भ–करोमि । ७. भ–संच्छन्नां च वसुंधरां ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–ये च । ९. भ–०ये च मांसाशिनोऽपरे । १०. रा$_2$ फ–नास्ति । भ–०सैः शरार्दितैः ॥ ११. भ–योधाः सज्जीभवंतु नः । १२. रा$_2$ फ–अनुयांतु च मां युद्धे । भ–०न्तु तुरगाः शीघ्रं ॥ १३. रा$_2$ फ–वचः । १४. रा$_2$ फ–आनीयतां । भ–संत्वर्यतां ॥ १५. रा$_2$ फ–०क्षः स त्वरितो । भ–त्वरितस्तु बलाध्यक्षो । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०न् संप० । भ–संचोदयन्नुप० । १७. भ–लंकायां लघुविक्रमः ॥ १८. रा$_1$ प्र भ–निष्पेत्य । १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–मन्दविक्रमाः । भ–भीमदर्शनाः । २०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–संप्रविष्टा विनिर्वृत्ता । भ–नर्दंतो विनदंतश्च । २१. भ–०रणायुधाः ॥ २२. भ–असिभिः प० ॥ २३. भ–नास्ति । २४. भ–भिंदिपालैः । २५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तथाविधैः ॥

२६] आऽनयच् च बलाऽध्यक्षस् तं[1] रथं[1] रावणाऽऽज्ञया । [२७पू
२७पू] द्रुतं सूत-समायुक्तं युक्ताऽष्टसुतुरङ्गमम् ॥[2]२७॥[३२उ
आ-रुरोह रथं दीप्तं दीप्यमानः स्व-तेजसा । [३३
२९] रावणः सत्त्व-गाम्भीर्यात् कम्पयन्न्[3] इव मेदिनीम् ॥२८॥ [३४उ
नादान् घोरान् वि-मुञ्चन्तौ महापार्श्व-महोदरौ[4] ।[5]
३०] विरूपाऽक्षश् च दुर्-धर्षो रथान् आ-रुरुहुस् तदा ॥२९॥ [३९
ते तु हृष्टा वि-नर्दन्तो भिन्दन्त इव मेदिनीम् ।[6]
३१] नादान् घोरान् वि-मुञ्चन्तो[7] निर्-ययुर् युद्ध-कांक्षिणः[7] ॥[8]३०॥[४०
ततो युद्धाय तेजस्वी रक्षो-गण-समावृतः[9] ।
३२] निर्-ययाव् उद्यत-धनुः कालाऽन्तकयमोपमः ॥[10]३१॥ [४१
ततः प्र-जविताऽश्वेन रथेन स महा-रथः ।[11]
३३] द्वारेण निर्-ययौ तेन यत्र तौ राम-लक्ष्मणौ ॥३२॥ [४२
ततो नष्ट-प्रभः सूर्यो दिशश् च तिमिराऽऽवृताः ।[11]
३४] वि-नद्युर्[12] द्यां तदा मेघाः[12] सं-चचाल च मेदिनी ॥[13]३३॥ [४३
ववर्ष रुधिरं देवः प्राऽस्खलन्[14] रथ-वाजिनः[14] ।
३५] पक्षिणो[15] मण्डलं चक्रुर्[15] वि-नेदुश् चाऽशिवं शिवाः ॥३४॥ [४४
नयनं चाऽस्फुरत् सव्यं[16] सव्यो बाहुर् अकम्पत ।
३६] विवर्ण-वदनश् चाऽऽसीत् किं-चिद् भग्न-मनोरथः ॥३५॥ [४५

---

१. रा$_2$ फ भ–चतुरो । २. भ–द्रुतं सूतः समाज्ञप्तो युक्ताष्टतुरगं रथं । अतः परमधिकश्च पाठः—भ–सुवर्णवेदिकायुक्तं रत्नैश्च समलंकृतम् । युक्तं वैदूर्यजालैश्च पताकाभिश्च शोभितम् ॥ केतुना नरशीर्षेण कांचनेन विराजितम् । पांडरेणातपत्रेण ध्रियमाणेन मूर्धनि । व्यराजद्राक्षसश्रेष्ठो धनेश इव पुष्पकम् ॥ ३. रा$_2$ फ–नादयन्न् । भ–नामयन्न् ॥ ४. अ प्र फ–नास्ति । ५. भ–रावणेनाभ्यनुज्ञातौ मत्तोन्मत्तौ निशाचरौ ॥ ६. अतः परमधिकः पाठः— भ–निर्ययुः सहिता राज्ञा सर्वे संत्यक्तजीविताः । स राक्षसमहाराजः कोटिभिरभिसंवृतः ॥ दशभिर्हतशेषाभिर्निर्ययौ कंपयन्महीम् । ७. रा$_2$ म–जयकां० । ८. भ नास्ति ॥ ९. ल$_1$ ल$_2$ ब भ–०समन्वितः । १०. रा$_1$ ल$_1$ ल$_2$ ब अ–नास्ति । प्र–निर्ययौ रावणस्तत्र विरावै रावयन्महीं ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति । १२. रा$_2$ फ म भ–दीनं विनेदुर्मेघाश्च ॥ १३. प्र–नास्ति ॥ १४. भ–०लंस्तुरगाः पथि । १५. प्र–दीप्तास्याश्च मृगाश्चेरुः । रा$_2$–ध्वजेऽस्य न्यपतद्गृध्रो । फ–ध्वजेऽस्मिन्न्यपतद्गृध्रो । म भ–ध्वजे च न्यपतद्गृध्रो ॥ १६. भ–वामं ॥

तस्य[1] निष्-क्रमतो युद्धे[1] दश-ग्रीवस्य रक्षसः ।
३७] रणे निधन-शंसीनि रूपाण्य् एतानि जज्ञिरे ॥३६॥ [४६
अन्तरिक्षात् पपातोल्का निर्घात-सम-निःस्वनाः[2] ।
३८] चीची-वाचो[3] वि-नेदुश् च[3] वायसा[4] बल-मिश्रिताः[4] ॥३७[5]॥ [४७
शक्राऽशनिः[6] पपातोच्चैः प्र-जज्वाल ननाद च ।
N] वेपथुः सहसा चाऽस्य सर्व-गात्रेष्व्[7] अजायत ॥३८॥ [N
एतान् अ-चिन्तयन् घोरान् उत्-पातान् समुप-स्थितान्[8] ।
४०] निर्-ययौ रावणो मोहाद् आ-हवं[9] काल-चोदितः[9] ॥३९॥ [४८
तेषां तु रथ-शब्देन राक्षसानां[10] महाऽऽत्मनाम्[10] ।
४१] वानराणाम् अपि चमूर् युद्धायैवाऽभ्य्-अवर्तत[11] ॥४०॥ [४९
तेषां सु-तुमुलं[12] युद्धं[12] बभूव कपि-रक्षसाम् ।
४२] अन्योऽन्यम् आ-ह्वयानानां क्रुद्धानां जय-कांक्षिणाम्[13] ॥[14]४१॥ [५०
ततस् ते वानरा घोरा राक्षसांस् तान् रणाऽजिरे ।[14]
४३] जघ्नुः शैलैर् द्रुमैश् चैव रावणस्यैव पश्यतः ॥४२॥ [N
रावणस् तु ततः क्रुद्धस् तान् आह[15] स्म[15] निशा-चरान् ।
४४] हृष्टा भवन्तो युध्यन्तु[16] वानराणां जिघांसया ॥४३॥ [N
ततस् ते राक्षसाः सर्वे नदन्तो जय-कांक्षिणः[17] ।
४५] अभ्य्-अवर्षन्त तान् घोरान्[18] वानरान् छर-वृष्टिभिः ॥४४॥ [N
मुद्गरैः शक्तिभिः शूलैर् गदा-मुसल-तोमरैः ।
४६] परि-घैर् अङ्कुशैर् बाणैर्[19] वानरान् जघ्नुर् आ-हवे ॥४५॥ [N
रावणश् चाऽपि नाराचैर् वत्स-दन्तैर् अयो-मुखैः ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तस्य निष्क्रमतोऽतीव । भ–तदा निष्पततो युद्धे ॥ २. भ–निर्घाताः पेतुरम्बरात् । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०चो नेदुः खाद् । भ–विनेदुश्चक्रवाकाश्च । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–वायसैरनुसंश्रिताः । ५. अतः परमधिकः पाठः—भ–गृध्रचक्रं च बभ्राम तस्योपरि महाऽऽत्मनः । अश्रूणि चास्य मुमुचुर्वाजिनो रथसंसदि ॥ ६. रा$_2$ फ भ–शुष्का० । ७. भ–स्वेदो गा० ॥ ८. रा$_2$ फ भ–अतिदारुणान् । ९. रा$_2$ फ भ–वधार्थं कालनोदितः । भ–वधार्थं दैवनोदितः ॥ १०. रा$_2$ फ भ–रक्षसां युद्धकांक्षिणां । भ–०नां दुरात्मनां । ११. भ–०य चाभिवर्तते ॥ १२. भ–०लः शब्दो । १३. भ–जयमिच्छतां । १४. भ–नास्ति ॥ १५. भ–अशासत् । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–युध्यध्वं ॥ १७. भ–युद्धकां० । १८. भ–सर्वान् ॥ १९. रा$_1$ ल$_2$ ब अ प्र–घोरैः । ल$_1$–घोरं ॥

४७] कर्णिभिश् चाऽऽयसैश् चैव वानरान् अभ्य्-अवर्षत ।।[1]४६।। [N
ते वध्यमानाः सम्-अरे वानराः पादपाऽऽयुधाः ।[2]
४८] अभ्य्-अद्रवन् वै सहिता[3] रावणं घोर-दर्शनम्[4] ।।४७।। [N
रावणस् तु ततः क्रुद्धो महा-बल-पराऽऽक्रमः ।[5]
४९] वानराणां शरीराणि[6] व्य्-अधमच् छर-वृष्टिभिः ।।४८।। [N
शरेणैकेन च[7] हरीन् नव सप्त च पञ्च च ।
५०] बिभेद सम्-अरे वीरो राक्षसान् सम्प्र-हर्षयन् ।।४९।। [N
स[8] शरैर् अग्नि-संकाशैः शातकौम्भ-विभूषणैः[9] ।
५१] वानरान् सम्-अरे वीरः प्र-ममाथ सु-दुर्जयः[10] ।।५०।। [N
ते भिन्न-गात्राः सम्-अरे वानराः शर-पीडिताः ।
५२] पेतुर् मथित-सर्वाऽङ्गाः[11] सुरैर्[12] इव महाऽसुराः[13] ।।५१।। [N
शत-पत्रैर् यथाऽऽदित्यो घोरैर् बाण-गभस्तिभिः ।
५३] अभ्य्-अधावत् सु-संक्रुद्धः सं-युगे[14] वानरर्षभान् ।।५२।। [N
ततस् ते[15] वानराः सर्वे भिन्न-देहा वि-चेतसः ।
५४] व्यथिताः प्र-द्रवन्ति[16] स्म रुधिरेण सम्-उक्षिताः ।।५३।। [N
रामस्याऽर्थे पराऽऽक्रान्ता[17] वानरास् त्यक्त-जीविताः ।
५५] नदन्तश् चाऽनिवृत्तास् ते सम्-अरे च शिलाऽऽयुधाः ।।५४।। [N
ते द्रुमैः पर्वताऽग्रैश् च मुष्टिभिश्[18] च प्लवं-गमाः[19] ।
५६] अभ्य्-अवर्षन्त[19] सम्-अरे रावणं पर्यव-स्थितम् ।।[20]५५।। [N
ततः[21] पावक-संकाशैः[18] शरैर् आशीविषोपमैः ।
५८] वानराणाम् अनीकानि बिभेद सम्-अरे प्र-भुः ।।५६[21]।। [N
अष्टभिर् दशभिश् चैव स[22] विद्ध्वा गन्ध-मादनम् ।
५९] विव्याध दशभिश् चैव[22] नीलं[23] दूराद् अव-स्थितम् ।।[24]५७।। [N

१. भ–विकर्णिभिः क्षुरप्रैश्च वानरान्पर्यवर्षत । रा$_{2}$–नास्ति ॥ २. रा$_{2}$–नास्ति । ३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–सहसा । भ–०द्रवंत स० । ४. भ–घोरविक्रमं ॥ ५. रा$_{2}$–नास्ति । ६. म–अनीकानि ॥ ७. म–तु । भ–स ॥ ८. प्र रा$_{2}$ फ म–तैः । ९. रा$_{2}$ फ–०षितैः । १०. रा$_{1}$ ल$_{1}$ प्र–स दु० । म–स वीर्यवान् ॥ ११. म–व्यथि० । १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ–देवैर् । १३ रा$_{1}$–०रैः ॥ १४. भ–समरे ॥ १५. भ–तु । १६. भ–विद्र० ॥ १७. फ–परिक्रांता ॥ १८. प्र–नास्ति । १९. भ–अभ्यद्रवंत । २०. अतः परमधिकः पाठः—भ–तं द्रुमानां शिलानां च वर्षं प्राणहरं महत् । व्यपोहत महातेजा रावणः पर्यव.स्थितः ॥ २१. फ–अत आरभ्य ५८–श्श्लोक-पूर्वार्धं यावन्नास्ति ॥ २२. प्र–नास्ति । २३. भ–नवत्या च नलं । २४. म–नास्ति ॥

सप्तभिश्[1] च महा-कायं[1] मैन्दं विद्ध्वा[2] सु-दारुणैः[2] ।
६०] पञ्चभिर् वि-शिखैश् चैव गजं विव्याध सं-युगे[3] ॥[4]५८॥ [N
विंशत्या[5] च हनू-मन्तं नलं[6] च दशभिः शरैः[6] ।
६१] गवाऽक्षं पञ्च-विंशत्या शक्र-जातं तु[7] सप्तभिः[7] ॥[8]५९॥ [N
द्वि-विदं षड्भिर् आ-हत्य पनसं दशभिः शरैः ।
६२] कु-मुदं पञ्च-दशभिर् जाम्ब-वन्तं च पञ्चभिः ॥६०[9]॥ [N
६४पू] तारं चैव त्रिभिर् बाणैर् वि-नतं[10] चाऽष्टभिस् तथा[11] ।[12]
अशीत्या वालिनः पुत्रम् अङ्ग-दं बिभिदे[13] शरैः ॥६१[14]॥ [N
६३] शर-भं च महा-तेजाः शरेणोरस्य् अताडयत् ।
६४उ] ऋष-भं[15] च त्रिभिर् बाणैर्[16] ललाटे प्रत्य्-अविध्यत ॥६२॥ [N
स पुनः सूर्य-संकाशैर्[17] इषुभिर् मर्म-भेदिभिः ।
६५] वानराणाम् अनीकानि ममन्थ[18] परमाऽऽहवे ॥६३॥ [५१
विभिन्न-शिरसः के-चिद् अपतन्त[19] मही-तले[19] ।
६६] निर्-उच्छ्वासाः कृताः के-चित् पेतुश्[20] चक्षुर्-विवर्जिताः[20] ।[21] [५३
६७उ] भिन्न-गात्राः शरैः के-चिद् रावणेन बलीयसा[22] ॥६४॥ [५२पू
आ-कुलां वानरीं सेनां शर-जालेन[23] मोहिताम्[23] ।
६८] रावणः परम-प्रीत्या ददर्श रुधिरोक्षिताम्[24] ॥६५॥ [N
ततस् तु वि-द्रुताः सर्वे वानरा रावणाऽर्दिताः ।[25]
N] राघवं शरणं जग्मुः[26] प्रजा-पतिम् इवाऽमराः[27] ॥[28]६६॥ [N

---

१. भ–सप्तत्या तु महाघोरैर् । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ म–भित्त्वा सु० । भ–विध्वाथ दा० । ३. म–दारुणं । ४. भ–पश्चाच्छतेन विव्याध गयं समरमूर्धनि ॥ ५. भ–त्रिंशता । ६. म–अंगदं त्रिंशता शरैः । भ–नीलं चैव शतेन च ॥ ७. भ–शतेन च । ८. अ म–नास्ति ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–नास्ति ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब प्र–सुतारं । ११. रा$_2$–शरैः । १२. फ–नास्ति । १३. भ–चाहनच् । १४. अ म–नास्ति ॥ १५. रा$_2$ फ म भ–क्रथनं । १६. रा$_2$ फ म भ–भल्लैर् ॥ १७. भ–सर्पसं० । १८. भ–ममर्द ॥ १९. भ–नष्टसंज्ञा महींगताः । २०. रा$_2$ फ भ–केचित्पार्श्वेषु दारिताः । म–नास्ति । २१. अतः परमधिकः पाठः—भ–केचिद्विभिन्नहृदयाः केचिच्चक्षुषि दारिताः । २२. रा$_2$ फ म–बलीमुखाः । भ–विदारिताः ॥ २३. म–०लविमो० । २४. भ–क्षतजोक्षि० ॥ २५. भ–ततस्ते वानराः सर्वे विद्रुता राक्षसार्दिताः । २६. भ–प्राप्ताः । २७. भ–इव प्रजाः । २८. म–नास्ति । अतः परमधिकः पाठः—भ–ततस्तु तं कालमिवापतंतं विक्षोभयंतं हरिवाहिनीं ताम् । त्रेसुस्तदा ते हरयो निशम्य मृगाधिपं क्षुद्रमृगा इवार्ताः ॥

वि-द्राव्य वानरान् सर्वान्[1] हत्वा चैव सहस्र-शः ।[2]
N] कपि-शोणित-निस्यन्दैश् चक्रे भूमिं स-कर्दमाम् ॥६७[3]॥[N

इत्यार्षे रामायणे युद्ध-काण्डे[4] वानर-त्रासनं[5] नाम
चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

## [ वं-७३ ]= [ पञ्चसप्ततितमः सर्गः ] =[ दा-६७ ]

तथा विक्षत-गात्रैस्[6] तु दश-ग्रीवेण सं-युगे[7] ।
१] वसु-धा सकला[8] तत्र प्र-कीर्णैर् हरिभिर् वृता[9] ॥१ ॥[१
स[10] ममन्थ[10] महा-कायो वानरान् राक्षसेश्वरः[11] ।
२] युगाऽन्त-वातः सहसा प्र-वृद्धः क्षिति-जान्[12] इव[12] ॥२ ॥[१०
रावणाऽस्त्रम्[13] अ-सह्यं तं[13] शर-सम्पातम् आ-गतम् ।
३] दीप्तं[14] न शेकुः सं-सोढुं[14] पतंगा इव पावकम् ॥३ ॥[२
तेऽर्दिता[15] वि-शिखैर्[15] बाणैः क्रोशन्तो विप्र-दुद्रुवुः ।
४] पावकाऽर्चि-समाविष्टा[16] दह्यमाना[17] यथा ख-गाः[17] ॥४ ॥[३
प्लव-गानाम् अनीकानि महाऽभ्राणीऽव[18] मारुतः ।
५] उवाह[19] सम्-अरे तस्मिन् वि-धमन् नि-शितैः[20] शरैः ॥५ ॥[४
कदनं[21] सहसा[22] चक्रे[23] राक्षसेन्द्रो वनौकसाम् ।
६] आ-सिसादयिषू[24] रामं त्वरितो[25] रावणो[25] ययौ ॥६ ॥[५
सु-ग्रीवस् तान् हरीन्[26] दृष्ट्वा भग्नान्[27] वि-द्रवतो रणे ।[28]

---

१. अ रा$_2$ फ-मुख्यान् । २. म-नास्ति ॥ ३. भ-नास्ति । ४. प्र रा$_2$ भ-लंकाकांडे । म-युद्धपर्वणि । ५. भ-रावणनिर्याणं ॥ ६ भ-तैः क्षत० । ७. भ-मार्गणैः । ८. प्र रा$_2$ फ-संवृता । म-शुशुभे । भ-ववृधे । ९. भ-हतैः ॥ १०. रा$_2$ फ म भ-ममंथ च । ११. भ-०साधिपः । १२. म-क्षणदाचरः । भ-पर्वतानिव ॥ १३. भ-०णस्याप्रसह्यं तं । म-०ह्यं तु । १४. भ-सोढुं न शेकुः कपयः ॥ १५. रा$_2$ फ-ते हता विविधैर् । भ-निर्भिन्ना निशितैर् । १६. भ-०र्चिषमा० । १७. रा$_2$ फ म-०ना वने यथा । भ-यथा नागा महाहवे ॥ १८. म-सहस्राणि च । १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-उवास । म-उवाच । भ-स ययौ । २०. भ-रावणः ॥ २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-गहनं । २२. रा$_1$ ल$_1$ ल$_2$ ब-समरे । भ-तरसा । २३. अ-सर्वे । भ-कृत्वा । २४. रा$_1$-०सादियिषू । ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म-आससादयिषू । २५. भ-त्वरमाणस्तदा ॥ २६. रा$_2$ म-कपीन् । २७. म-त्रस्तान् । २८. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा फ-त्रस्तां स्वसेनामालोक्य चिकीर्षुः कर्म दुष्करम् ।

७] गुल्मे सु-षेणं नि-क्षिप्य युद्धे[1] चक्रे ततो मनः[1] ॥७ ॥ [६
आत्मनः सदृशं वीरः स तं नि-क्षिप्य वानरम् ।[2]
८] सु-ग्रीवोऽभि-मुखं[3] शत्रोः[3] प्र-तस्थे पादपाऽऽयुधः ॥८ ॥ [७
पार्श्व-तः पृष्ठ-तश्[4] चाऽस्य सर्वे यूथाऽधिपा भवन्[5] ।[6]
९] सम्प्र-गृह्य महा-शैलान् प्र-वृद्धांश् च मही-रुहान्[7] ॥[8]९ ॥ [८
वि-नदन्[9] युधि सु-ग्रीवः स्वरेण महता महान् ।
१०] पातयन् वि-धमंश्[10] चाऽन्याञ् जघानोत्तम-राक्षसान् ॥१०[11]॥[९
क्रोध-संरक्त-नयनः कालाऽन्तकयमोपमः[12] ।
११] प्र-ममाथ[13] महा-कायो[13] राक्षसान् वानरेश्वरः ॥[14]११॥[N
राक्षसानाम् अनीकेषु[15] शिला-वर्षं[15] ववर्ष सः[16] ।
१२] अश्म-वर्षं यथा[17] मेघः[17] पक्षि-संघेषु कानने ॥१२॥ [११
कपिराज-प्रमुक्तैस् तैः शिला-वर्षैस्[18] तु राक्षसाः ।
१३] विभिन्न-शिरसः पेतुर् वि-कीर्णा[19] इव पर्वताः[19] ॥१३॥ [१२
तेषु[20] सं-क्षीयमाणेषु[20] राक्षसेषु समन्त-तः ।
१४] सु-ग्रीवेण प्र-भग्नेषु पतत्सु[21] वि-नदत्सु च[21] ॥१४॥ [१३
विरूपाऽक्षः स्वकं नाम धन्वी वि-श्राव्य राक्षसः[22] ।
१५] रथेनाऽऽसाद्य सु-ग्रीवं ववर्ष[23] शर-वृष्टिभिः ॥१५॥ [१४
तस्य तान् अशनि-प्रख्याञ् छरान् दृढ-धनुश्-च्युतान् ।
१६] अ-चिन्तयित्वा सु-ग्रीवः[23] ससाराऽभि-मुखो[24] नदन् ॥१६॥ [N

---

१. प्र–योद्धुं च० । भ–युद्ध चक्रे महत्तदा ॥ २. रा$_1$, ल$_1$, ल$_2$ ब म–नास्ति । ३. रा$_1$, ल$_1$, ल$_2$–०खो यांतं । ब अ प्र–०खो यत्तं । रा$_2$–०खः शत्रुं ॥ ४. रा$_1$, ल$_1$, ल$_2$ ब अ प्र–कपयश् । ५. टि. अडभाव आर्षः । भ–यूथपयूथपाः । ६. अतः परमधिकः पाठः—भ–अनुजग्मुर्महात्मानं शालतालशिलायुधाः । ७. रा$_1$, ल$_1$, ल$_2$ ब अ प्र म–महाद्रुमान् । ८. भ–नास्ति ॥ ९. भ–सोऽनदद् । १०. रा$_1$, ल$_1$, ल$_2$ ब अ प्र–विषमान् । ११. म–नास्ति ॥ १२. ल$_2$–०क इवोपमः । १३. म–०थ महाकायान् । भ–ममंथ चरणैरन्यान् । १४. अतः परमधिकः पाठः—भ–युगांताग्निरिवोत्सृष्टः प्रवृद्धानगमानिव ॥ १५. रा$_1$, ल$_1$, ल$_2$ ब अ प्र–०कानि शिलावर्षैर् । १६. म–च । भ–ह । १७. रा$_1$, ल$_1$, ल$_2$ ब–यथा मेघाः । प्र–महामेघः ॥ १८. भ–शैलैर्वृक्षैस् । १९. म–विशीर्णं इव पावकः । भ–प्रकीर्णा इव पादपाः । रा$_1$, ल$_1$, ल$_2$ ब अ प्र–अत आरभ्य १४-शश्लोकस्य तृतीयपादं यावन्नास्ति । २०. भ–अथ प्रक्षी० । २१. रा$_1$, ल$_1$, ल$_2$ ब अ–पतंतो नेदुरेव च ॥ २२. भ–संयुगे । २३. रा$_1$, ल$_1$, ल$_2$ ब अ प्र–नास्ति ॥ २४. रा$_1$, ल$_1$, ल$_2$ ब अ प्र–संयातोऽभि० । भ–सरोषोभि० ॥

सोऽव-प्लुत्य[1] महा-वेगो हरिर् इन्द्र-पराऽऽक्रमः[2] ।
१७] आऽक्रामत्[3] स्यन्दनं तस्य धुरि पादेन पश्यतः ॥[4]१७॥[N
वानरेन्द्रपदाऽऽक्रान्ताद् रथात् पेतुर् भयाद्[5] भुवि ।
१८] विनिष्पतित-नेत्रास् ते भग्न-ग्रीवास् तुरं-गमाः ॥१८[5]॥[N
आ-क्रम्य स्यन्दनं[6] भीमो[6] वृक्ष-षण्डेन[7] वानरः[7] ।
१९] सारथिं नि-जघानाऽऽशु[8] विरूपाऽक्षस्[8] त्व् अपाऽक्रमत्[9] ॥१९[10]॥[N
अप-क्रान्ते[11] विरूपाऽक्षे[11] सुग्रीव-सचिवा रथम् ।
२०] बभञ्जुस्[12] तरसा वीरा हरयो[13] वात-रंहसः[13] ॥२०॥ [N
विरूपाऽक्षो हत-रथो धन्वी तूण-तनुत्र-वान् ।
२१] बहु-शस्[14] ताडयामास[14] नाराचैः प्लवगर्षभम्[15] ॥२१॥ [N
रावणेन प्र-युक्तं तु विरूपाऽक्षो महा-गजम् ।
२२] शीघ्रम्[16] आ-रुरुहे वीरो[16] बहुशस्त्रोपकल्पितम् ॥२२[17]॥[N
स तं द्वि-रदम् आ-स्थाय विरूपाऽक्षो महा-बलः ।
२३] व्य्-अनदद्[18] भीम-निर्ह्रादो वानरांश्[19] चाऽभ्य्-अधावत[19] ॥२३[20]॥[१५
सु-ग्रीवेऽथ[21] शरान् घोरान् वि-ससर्ज महा-बलः[22] ।
२४] स्थापयामास चोद्-विग्नान् राक्षसान् सम्प्र-हर्षयन् ॥[23]२४॥[१६
सु-ग्रीवं तं विरूपाऽक्षः शरैर् आशीविषोपमैः ।
२५] बहु-शस् ताडयामास सर्वाऽङ्गेष्व् अरि-मर्दनः ॥[24]२५॥ [N
सोऽति-विद्धः शरैस्[25] तीक्ष्णैः[25] कपीऽन्द्रस् तेन रक्षसा ।
२६] चुक्रोध च महा-तेजा वधे चाऽस्य मनो दधे ॥२६॥ [१७

---

१ भ–सोऽभिसृत्य । २. अ–०मं । ३. फ म–आक्रमत् । म–आक्रम्य । ४. ल$_1$ अ–नास्ति ॥ ५. रा$_1$ ल$_2$ ब अ प्र रा$_2$ फ–हया ॥ ६. रा$_2$ फ म भ–स रथं वीरो । ७. रा$_2$–वृक्षदंडेन वा । भ–विरूपाक्षस्य वै तदा । ८. भ–०नास्य । ९. रा$_1$ ल$_1$ ल$_2$ ब प्र म–०क्षमुपा० । १०. अ–नास्ति ॥ ११. रा$_1$ ल$_1$ ब अ–अभिक्रांते वि० । फ–अपाक्रान्ते वि० । म–ते विरूपाक्षसुग्रीवं । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ–ममंथुस् । १३. रा$_2$–नास्ति ॥ १४. रा$_2$–नास्ति । भ–चतुर्भिस्ता० । १५. रा$_2$ फ म भ–प्लवगेश्वरं ॥ १६. रा$_2$–आरुरोह महावीर्यो । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म–नास्ति ॥ १८. ल$_1$ रा$_2$ फ म–विनदन् । १९. भ–०रानभ्य० । २०. म–अत आरभ्य २५–शश्लोकांतं यावन्नास्ति ॥ २१. प्र–०वे वै । रा$_2$–०वे च । भ–०वाय । २२. भ–निशाचरः । २३. भ–छादयामास सर्वांस्तान्राक्षसांश्च प्रहर्षयन् ॥ २४. भ–बहुभिस्ताडयामास संग्रामेष्वरिमर्दनम् ॥ २५. रा$_2$–शरैर्घोरैः । भ–शितैर्बाणैः ॥

ततः पाद-पम् उत्-पाट्य शत्रु-संक्रन्दनो[1] बली[1] ।[2]
२७] अभि-पत्य जघानाऽऽशु[3] प्र-मुखे तं[4] महा-गजम् ॥२७॥ [१८
स[5] सम्प्रहाराऽभिहतः सु-ग्रीवेण[5] महा-गजः ।[6]
२८] अप-सृत्य धनुर्-मात्रं नि-पपात[7] ननाद च[8] ॥२८॥ [१९
२९पू] राजा तु पतितस् तूर्णम् अपाऽक्रामत् सु-वीर्यवान् ।
N] राक्षसोऽभि-मुखं क्रुद्धः प्रत्य्-अगच्छच् च तं कपिम् ॥२९॥ [२०
२९उ] आर्षभं[9] चर्म खड्गं च प्र-गृह्य[10] लघु-विक्रमः[10] ।[11]
N] भर्त्सयन्न् इव सु-ग्रीवं सम्-ईयायाऽऽततायिनम्[12] ॥[13]३०॥ [२१
सोऽपि[14] तस्याऽथ सं-क्रुद्धः[14] प्र-गृह्य महतीं[15] शिलाम् ।
३४] विरूपाऽक्षाय चिक्षेप सु-ग्रीवो जलदोपमाम् ॥३१॥ [२२
स[16] तां शिलाम् आ-पतन्तीं[16] दृष्ट्वा राक्षस-पुङ्गवः ।
३५] अप-क्रम्य[17] तु[17] वि-क्रान्तः खड्गेन प्राऽहरत् तदा ॥३२॥ [२३
तेन मोक्षेण[18] शस्त्राणां[18] सु-ग्रीवं[19] च[19] चमू-मुखे ।
३६] वि-ह्वलं पातयामास पदा[20] चैनम् अताडयत् ॥[21]३३॥ [२६उ

---

१. रा$_2$–शूरः संक्रंदनो हरिः । फ–शूरश्चाक्रंदनो हरिः । म–शूरः संक्रोधनो हरिः । २. भ–ततः स मुष्टिमुद्यम्य वज्रनिष्पेषगौरवम् । ३. भ–०नास्य । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–च ॥ ५. भ–मुष्टिप्रहाराभिहतो हरीन्द्रेण । ६. अतः परमधिकः पाठः—भ–सुस्राव रुधिरं नस्तो जलं प्रस्रवणादिव । ७. रा. ल$_1$ ल$_2$ ब अ प्र–०त विदारयन् । रा$_2$–०त विताडयन् । भ–निषसाद न० ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म–नास्ति । भ–महाप्रहाराभिहतो गजेन्द्रः स पपात च । गजात्प्रपतत-स्तूर्णमाप्लुतः स महाभुजः ॥ ९. भ–अभेद्यं । १०. रा$_1$ ल$_1$ ल$_2$ ब अ–०ह्य-लघुविक्रमैः । भ–प्रागृह्णाद्रजनीचरः । ११. म–नास्ति । अतः परमधिकः पाठः—भ-तथैव च महाखड्गं चर्म चापतितं भुवि । जगृहे हरिशार्दूलः सुग्रीवो वानराऽधिपः ॥ ततस्तौ रोषसंतप्तौ नदंतावभ्यधावताम् । उद्यतासिधरौ वीरौ युधि युद्धविशारदौ ॥ दक्षिणं मंडलं चोभौ त्वरया संपरीयतुः । अन्योऽन्यमभिसंरब्धौ परस्परजयैषिणौ ॥ निजघ्नतुस्तदान्योन्यं पेततुश्च महीतले । उत्पेततुस्ततस्तूर्णं जघ्नतुश्च परस्परम् ॥ भुजैश्चिक्षिपतुर्वीरावन्यो-ऽन्यमपराजितौ । १२. रा$_2$ फ म–आससादाततायिनं । १३. भ–नास्ति ॥ १४. भ–ततः परमसं० । १५. रा$_2$ फ म–विपुलां ॥ १६. भ–तामापतंतीं वेगेन । १७. रा$_2$ फ म–०क्रम्याशु । भ–अपाक्रमत्तु ॥ १८. भ–खड्गेन संक्रुद्धः । १९. भ–०वस्तु । २०. रा$_1$ ल$_1$ ल$_2$ ब अ–पादे । २१. भ–कवचं पाटयामास तं चैवापातयद्भुवि ॥

स समुत्था (दु-स्था) य पतितः कपिस्[1] तस्य व्य्-असर्जयत् ।
३७] तल-प्रहारम् अशनी-सदृशं[2] भीम-निःस्वनम्[2] ॥[3]३४॥[२७
तल-प्रहारं तं रक्षः सु-ग्रीवेण समुद्-यतम्[4] ।
३९] नैपुण्यान्[5] मोक्षयित्वाऽथ[5] मुष्टिनोरस्य् अताडयत् ॥३५॥ [२८
ततः सु-संरब्धतरः सु-ग्रीवोऽभवद्[6] आ-हवे[6] ।
४०] आत्मानं[7] मोक्षितं[7] दृष्ट्वा प्राऽहरत्[8] तस्य रक्षसः[8] ॥३६॥ [२९पू
राक्षसश् चाऽपि तं दृष्ट्वा[9] प्र-हारं घोरम् उद्-यतम् ।
N] असिनाऽभ्य्-अवधीत् क्रुद्धो वानरान् पार्श्व-तः स्थितान् ॥३७[10]॥[N
स तु[11] दृष्ट्वाऽन्तरं[11] तस्य विरूपाऽक्षस्य वानरः ।[12] [२९उ
४१] तलं[13] न्य्-अपातयत्[13] क्रोधाच् छंख-देशे महा-बलः[14] ॥३८॥ [३०
महेन्द्राऽशनि-कल्पेन[15] तलेन नि-हतः क्षितौ ।
४२] पपात रुधिरं[16] वेगात्[16] प्रसृ[17](?स्रु)ताऽङ्गः(?गं)स निर्-वमन्[17] ॥[18]३९॥[३१
विवृत्त-नयनं मोहाद् वानरा[19] रुधिराऽऽप्लुतम्[19] ।
४३] ददृशुस् ते विरूपाऽक्षं विरूपाऽक्ष-वधात् कृतम्[20] ॥[21]४०॥[३२

तथा तु तौ सं-यति सम्प्र-युक्तौ[22]
तरस्विनौ वानर-राक्षसानाम् ।
बलाऽर्णवौ सस्वनतुः सु-भीमं
N] यथाऽर्णवौ[23] द्वाव् इव भिन्न-वेलौ ॥[23]४१॥[३४

---

१. भ–कपेस् । २. रा$_1$ ल$_1$ ल$_2$ ब अ–०नीसमं वै भी० । रा$_2$–०नेः समं वै भी० । भ–०नेः सदृशं घोरदर्शनं । ३. अतः परमधिकः पाठः—भ–समवाप्य प्रहारं तु राक्षसं स हरीश्वरः । तलेनैव महावेगो विरूपाक्षमुपाद्रवत् ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ–समुद्धतं । ५. प्र–नैपुण्यं घातयि० ॥ ६. भ–वानरेश्वरः । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नं मूर्च्छितं । भ–शिक्षया मो० । ८. अ–प्रहारात्तस्य वानरः । प्र रा$_2$ फ म–प्रहारात्तेन रक्षसा । भ–प्रहारं तेन रक्षसा ॥ ९. प्र रा$_2$ फ–ईक्ष्य । १०. अ भ–नास्ति ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ फ म–तं दृष्ट्वा ततस् । भ–ददर्शांतरं । १२. अ–नास्ति । १३. भ–ततोऽस्य पातयामास । १४. भ–महत्तलम् ॥ १५. भ–०नितुल्येन । १६. भ–निहतं रक्षः । १७. रा$_2$ फ म–स्रोतोभिः स विनिर्व० । १८. भ–पपात निहतं रक्षः शोणितं चासृजन्मुखात् ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–सफेनरु० । भ–०रुधिरप्लु० । २०. भ–०क्षतरं । २१. अतः परमधिकः पाठः—रा$_2$ फ भ–स्फुरंतं परिवर्तंतं पार्श्वेषु रुधिरोक्षितम् । करुणं निःश्वसंतं च ददृशुर्हरयो रिपुम् ॥ २२. अ–सम्प्रहारौ । भ–सम्प्रसक्तौ । २३. म–नास्ति ॥

नि-पातितं प्रेक्ष्य विरूप-नेत्रं
तम्[१] आ-पतन्तं[२] हरि-पुङ्गवेन[२] ।[३]
बलं सम्-अग्रं[४] कपि-राक्षसानाम्[५]
N] उन्मत्त-गङ्ग-प्रतिमं बभूव ॥४२॥ [३५

इत्यार्षे रामायणे युद्ध-काण्डे[६] विरूपाऽक्ष-वधो नाम
पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

## [ वं-७७ ]= [ षट्सप्ततितमः सर्गः ] =[ दा-६८ ]

शात्यमाने[७] बले तूर्णम् अन्योऽन्येन पृथक् पृथक् ।
१] सरसीऽव महा-घर्मे क्षीण-तोये बभूवतुः ॥१ ॥ [१
स्व-बलस्य[८] वि-घातेन[८] विरूपाऽक्ष-वधेन च ।
२] बभूव द्वि-गुणं[९] क्रुद्धो[९] रावणो राक्षसाऽधिपः ॥२ ॥ [२
प्र-क्षीणं[१०] स्व-बलं[१०] दृष्ट्वा वध्यमानं बली-मुखैः[११] ।
३] बभूव[१२] व्यथयाऽऽविष्टः[१२] प्रेक्ष्य[१३] दैव-विपर्ययम्[१४] ॥३ ॥
उवाच च[१५] समीप-स्थं महोदरम्[१६] अव-स्थितम्[१६] । [३
४] अस्मिन् काले महा-बाहो जयाऽऽशा मे त्वयि स्थिता ॥४ ॥
जहि शत्रु-चमूं वीर दर्शय[१७] स्वं च वि-क्रमम्[१७] ।
५] भर्तृ-पिण्डस्य कालोऽयं निर्-दिष्टः[१८] साधु[१९] बुद्धि-मन्[१९] ॥५ ॥ [४
तथेत्य्[२०] उक्त्वा सु-तेजस्वी[२०] राक्षसेन्द्रं महोदरः[२१] ।

---

१. रा$_2$ फ–समा० । भ–महाबलं तं । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–हरियूथपेन । ३. म–नास्ति । ४. रा$_2$ फ भ–समस्तं । म–च तद् । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–कपियूथपानां । म–राक्षसयूथपानां ॥ ६. प्र रा$_2$ भ–लंकाकांडे ॥ ७. म भ–हन्यमाने ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ फ–स ब० । प्र म–०स्य निघा० । रा$_2$ फ–०लस्याऽथ घा० । भ–०स्य च घा० । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०णक्रोधो ॥ १०. भ–क्षीयमानं बलं । ११. भ–च वानरैः । १२. म–बभूवाऽथ व्यथाविष्टो । भ–बभूवाऽस्य व्यथा युद्धे । १३. रा$_2$ फ–वीक्ष्य । १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–चैवं वि० ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ–स । १६. भ–स तु मत्तमनन्तरम् ॥ १७. भ–दर्शयाद्य पराक्रमम् । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ–निर्वेष्टुं । १९. रा$_1$ अ म–०धु बुद्धिमान् । भ–०धुबुद्धिभिः ॥ २०. रा$_1$ ल$_1$ ब अ–०क्त्वा स ते० । म–तस्मिन्काले स ते० । भ–सामंतस्तु तथेत्युक्त्वा । २१. भ–महाद्युतिं ।

६] प्र-विवेश रिपोः सेनां[1] मकरः सागरं यथा[1] ॥६ ॥ [५
ततः स कदनं चक्रे वानराणां महा-बलः ।
७] भर्तृ-वाक्येन[2] तेजस्वी[2] तेजसा[3] च[3] प्र-चोदितः[4] ॥७ ॥ [६
प्र-भग्नां सम्-अरे दृष्ट्वा वानराणां महा-चमूम् ।
८] अभि-दुद्राव सु-ग्रीवो[5] महोदरम्[6] अन्-अन्तरम् ॥८ ॥ [१०
प्र-गृह्य वि-पुलां घोरां महीधर-निभां[7] शिलाम् ।
९] चिक्षेप स[8] महा-तेजास् तद्-वधाय महा-कपिः ॥९ ॥ [११
ताम् आ-पतन्तीं सहसा शिलां दृष्ट्वा[9] महोदरः[9] ।
१०] अ-सम्प्राऽऽप्तां ततो[10] बाणैर् निर्-बिभेद दुरा-सदाम्[10] ॥१०॥ [१२
रक्षसा तेन बाणौघैर् नि-कृत्ता तु[11] सहस्र-धा[12] ।
११] नि-पतन्ती[13] तदा भूमौ[14] गृध्र-चक्र-समाकुला[15] ॥[16]११॥ [१३
तां[17] च दृष्ट्वा शिलां[17] मोघां[18] सु-ग्रीवः क्रोध-मूर्च्छितः ।[19]
१२] सालम् उत्-पाट्य चिक्षेप चिच्छेदाऽनेक-धा[20] स तम्[20] ॥१२[16]॥ [१४
तं चैवाऽथ स सु-ग्रीवं दारयामास पत्रिभिः ।[21] [१५
१३] ततो[22] ददर्श सु-ग्रीवः[22] परि-घं पतितं भुवि ॥१३॥
तं[23] प्र-गृह्य[23] ततः शीघ्रं व्य्-अधमत्[24] तस्य मार्गणान्[24] ।
१४] जघान चोग्र-वेगेन ततोऽस्य रथ-वाजिनः ॥[25]१४॥ [१६
तस्माद् धत-हयाच् छीघ्रं[26] समा-प्लुत्य महा-रथात् ।
१५] गदां जग्राह सं-क्रुद्धो राक्षसोऽथ महोदरः[27] ॥[28]१५॥ [१७

---

१. भ–सैन्यं पतंग इव पावकम् ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०वाक्यैः सुते० । म भ–०क्यैश्च ते० । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तेनासौ हि । ४. म–प्रनोदितः ॥ ५. म–तेजस्वी । ६. भ–तदा मत्तम् ॥ ७. म भ–महोदरनिभां । भ–०रसमां । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ–सुम० । म–च म० ॥ ९. भ–राक्षसपुंगवः । १०. भ–शितैर्बाणैर्बिभेद सुदु० ॥ ११. भ–सा । १२. भ–०स्रशः । १३. रा$_1$ ल$_1$ ल$_2$ ब अ–निपपात । १४. भ–शिला । १५. रा$_2$ फ–०क्रमिवाबभौ । भ–गृध्रसंघ इवाम्बरात् । १६. म–नास्ति ॥ १७. भ–स तु भिन्नां । १८. ल$_1$ ल$_2$ ब–घोरां । भ–दृष्ट्वा । १९. अतः परमधिकः पाठः—भ–प्रगृह्य विपुलं घोरं महीधरसमुच्छ्रितम् । २०. रा$_2$ फ भ–स तं चिच्छेद नैकधा ॥ २१. भ–शरैश्च विददारैनं राक्षसः प्लवगाधिपम् । २२. भ–स ददर्श ततः क्रुद्धः ॥ २३. भ–आविध्य तु । २४. म–०मत्तस्य सायकान् । भ–मत्तस्य वधमादिशन् । २५. भ–परिघेणोग्रवेगेन जघान च हयोत्तमान् ॥ २६. रा$_2$ फ म भ–वीरः । २७. भ–महाबलः । २८. म–नास्ति ॥

गदा-परिघ-हस्तौ तौ युधि[१] वीरौ सम्-ईयतुः[१] ।[२]
१६] नदन्तौ[३] गो-वृष-प्रख्यौ[४] साऽशनी[५] इव तोय-दौ ॥[६]१६॥[१८
आ-जघान गदां तस्य परि-घेण हरीऽऽश्वरः ।    [२०
१८] पपात[७] गदया भिन्नः परि-घस्[८] तस्य भू-तले[८] ॥१७॥[२१
ततो जग्राह दुर्-धर्षं कपीऽन्द्रो वसुधा-तलात् ।
१९] आयसं मुसलं घोरं सर्व-तः स्वर्ण-भूषितम् ॥१८[९]॥[२२
स तद् उत्-क्षिप्य चिक्षेप राक्षसोऽप्य् अपरां गदाम् ।
२०] भिन्नेऽन्योऽन्यम् आ-साद्य पेततुस् ते मही-तले ॥१९॥[२३
ततो भग्न-प्रहरणौ मुष्टिभ्यां तु सम्-ईयतुः ।[१०]
२१] तेजो-बल-समाविष्टौ दीप्ताव् इव हुताऽशनौ ॥[१०]२०॥[२४
जघ्नतुस् तौ तदाऽन्योऽन्यं नेदतुश् च पुनः पुनः ।[११]
२२] तलेनाऽन्योऽन्यम्[१२] आ-हत्य पेततुर्[१३] धरणी-तले[१३] ॥२१[१४]॥[२५
उत्-पेततुस् ततस् तूर्णं जघ्नतुश् च परस्परम् ।[१४]
२३] भुजौ[१५] चिक्षिपतुर्[१५] वीराव् अन्योऽन्य-वध-कांक्षिणौ[१६] ॥२२॥[२६
जग्राह च ततः खड्गम् अदूर-परिवर्तिनम् ।
२४] राक्षसश् चर्मणा सार्धं महा-वेगो[१७] महोदरः[१७] ॥२३॥[२७
२५पू] तथैव सु-महाखड्गं[१८] पतितं चर्मणा सह ।[१९]
N] जग्राह वानर-श्रेष्ठः सु-ग्रीवो वि-ननाद च ॥[२०]२४॥[२८
२५उ] तौ तु रोष-परीऽऽताऽङ्गौ नर्दन्ताव्[२१] अभ्य्-अधावताम्[२१] ।

---

१. भ-शुशुभाते महारणे । २. अतः परमधिकः पाठः—भ-क्रोधेन महताविष्टौ दीप्ताविव हुताशनौ । ३. रा$_{2}$ फ भ-नर्दंतौ । ४. म-तौ वृष० । भ-वृषभप्रख्यौ । ५. भ-सवज्राव् । ६. अतः परमधिकः पाठः—भ-ततः क्रुद्धो गदां तस्य चिक्षेप रजनीचरः । ज्वलंतीं भास्कराकारां सुग्रीवस्य महारणे ॥ स गदां तां महाघोरामापतंतीं महाबलः । सुग्रीवो रोषताम्राक्षः समुद्यम्य महाहवे ॥ ७. भ-अथास्य । ८. भ-०घः पतितो भुवि ॥ ९. भ-वर्ज-नास्ति ॥ १०. ल$_{1}$ फ म-नास्ति ॥ ११. फ-नास्ति । १२. भ-तलैश्चान्यो० । १३. भ-०तुस्तौ महीतले । १४. म-नास्ति ॥ १५. ल$_{1}$ ब रा$_{2}$ फ-भुजौ विक्षि० । भ-भुजैश्चि० । १६. रा$_{2}$-०न्यं नेदतुश्च पुनः पुनः ॥ १७. भ-०बाहुर्महाद्युतिः ॥ १८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-स महा० । म-०च महा० । १९. भ-सोप्यसिं चर्मणा सार्धं जग्राह पतितं भुवि । २०. भ-नास्ति ॥ २१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-निशाचरकपीश्वरौ ।

उद्यताऽसी[1] रणे हृष्टौ[1] युधि[2] (?द्ध-) शस्त्र-विशारदौ[2] ॥२५॥ [२९
२६] दक्षिणं मण्डलं चोभौ सु-तूर्णं[3] समतीऽऽयतुः[3] ।
२७पू] अन्योऽन्य-प्रतिसंरब्धौ जय-प्रणिहिताव् उभौ ॥[4]२६॥[३०
स तु शूरो महा-वेगो वीर्य-श्लाघ्यो[5] महोदरः[5] ।
२८] महा-चर्मणि तं खड्गं पातयामास दुर्-मतिः ॥२७॥ [३१
लग्नं[6] तु कर्षतः[6] खड्गं खड्गेन कपि-कुञ्जरः ।
२९] जहार स[7] शिरस् तस्य[7] कुण्डलोपचितं गुरु[8] ॥२८॥ [३२
निकृत्त-शिरसस् तस्य पतितस्य मही-तले ।
३०] तद् बलं राक्षसेन्द्रस्य भयान्[9] नैव व्य्-अतिष्ठत[9] ॥२९॥ [३३
तं हत्वा वानरैः[10] सार्धं[10] ननाद मुदितो हरिः ।
३१] चुक्रोध च दश-ग्रीवो बभौ[11] हृष्टश् च वानरः[11] ॥[12]३०॥[३४

इत्यार्षे रामायणे युद्ध-काण्डे[13] महोदर-वधो[14] नाम
षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

## [ वं-७८ ]= [ सप्तसप्ततितमः सर्गः ] =[ दा-६६ ]

महोदरे तु नि-हते महा-पार्श्वः प्रताप-वान् ![15]
१] अङ्ग-दस्य चमूं भीमां[16] क्षोभयामास मार्गणैः[17] ॥१ ॥ [१
स वानराणां मुख्यानाम् उत्तमाऽङ्गानि राक्षसः ।

---

१. भ—०तासिधरौ वीरौ । २. रा$_1$ ल$_2$ ब—सर्वशास्त्र० । ल$_1$ अ—सर्वशस्त्र० । म—युधि तन्त्रवि० । भ—युधि युद्धवि० ॥ ३. रा$_1$ म—स तूर्णं स० । ल$_2$—सुतीर्णं स० । भ—तूर्णं च संपरीयतुः । ४. अतः परमधिकः पाठः—भ—उभौ विक्रमसम्पन्नौ परस्परजिघांसिनौ ॥ ५. भ—०श्लाघी महाबलः ॥ ६. प्र रा$_2$ फ म भ—भग्नमुक्त० । ७. भ—सशिरस्त्राणं । ८. रा$_2$ फ म—शुभं । भ—शिरः ॥ ९. भ—प्रदुद्राव दिशो दश ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—राक्षसैः । ११. भ—रामो हृष्टो बभूव ह । १२. अतः परमधिकः पाठः—भ—ततः स मत्तं विनिहत्य भूमौ महागिरेर्दीर्णमिवैकदेशम् । सूर्यात्मजस्तत्र रराज लक्ष्म्या सूर्यः स्वतेजोभिरिवाप्रधृष्यः ॥ १३. प्र भ—लंकाकांडे । १४. भ—मत्तवधः ॥ १५. भ—तस्मिन्विनिहते मत्ते उन्मत्तो रजनीचरः । १६. म—घोरां । १७. भ—सायकैः ॥

२] पातयामास कायेभ्यः फलानीऽव सदा-गतिः ॥[1]२ ॥ [२
४उ] केषां-चित् सायकैर् बाहूंश् चिक्षेपाऽथ स राक्षसः ।[2]
वानराणां सु-संरब्धः पार्श्वान्[3] केषां-चिद् आऽक्षिपत्[3] ॥३ ॥ [३
५] तेऽर्दिता बाण-वर्षेण[4] महा-पार्श्वेन[5] वानराः ।
वि-षादाद्[6] वि-मुखाः[6] सर्वे बभूवुर् गत-चेतसः ॥४ ॥ [४
६] नि-शम्य बलम् उद्-विग्नम् अङ्ग-दो राक्षसाऽर्दितम् ।
वेगं चक्रे महा-वेगः सम्-उद्र इव पर्वणि ॥५ ॥ [५
७] प्र-गृह्याऽश्म-मयं[7] वीरः सूर्य-रश्मि-सम-प्रभम् ।
परि-घं वानर-श्रेष्ठो[8] महा-पार्श्वे[8] न्य्-अपातयत् ॥६ ॥ [६
८] स तु तेन प्र-हारेण[9] महा-पार्श्वोऽल्प-चेतनः[10] ।
स-सूतः स्यन्दनात् तस्माद् वि-संज्ञो न्य्-अपतद् भुवि ॥७ ॥ [७
९] तस्यर्क्ष-राजो[11] बल-वान्[12] नीलाऽञ्जन-चयोपमः ।
विनिष्-पत्य[13] महा-तेजा जाम्ब-वान्[14] दृढ-विक्रमः[14] ॥[15]८॥ [८
१०] प्र-गृह्य गिरि-संकाशां[16] क्रुद्धः स[16] विपुलां शिलाम् ।
अश्वाञ् जघान सहसा स्यन्दनं च बभञ्ज वै[17] ॥९ ॥ [९
११] मुहूर्ताल् लब्ध-संज्ञस् तु महा-पार्श्वो[18] महा-बलः[18] ।
अङ्ग-दं दशभिर्[19] बाणैर् भुजयोः प्रत्य्-अविध्यत[20] ॥१०॥ [१०
१२] जाम्ब-वन्तं त्रिभिर् बाणैर् आ-जघान[21] स्तनाऽन्तरे[21] ।

---

१. रा$_1$,ल$_1$,ल$_2$ ब अ प्र म–नास्ति । २. रा$_2$ फ–वर्जं–नास्ति । भ–बाहून्बाणैः स केषाञ्चित् स्कंधांश्चापि निशाचरः । अतः परमधिकश्च पाठः—भ–उवाच वचनं चाऽपि राक्षसांश्च प्रहर्षयन् । मयि तिष्ठति शत्रुघ्ने नेमे वानरपुंगवाः ॥ प्रभग्ना वर्तयिष्यन्ति सैन्ये मम सुदुःसहे ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ–पार्श्वं के० । प्र फ म–पार्श्वं के० । भ–पार्श्वानि च बिभेद ह ॥ ४. रा$_2$–०वर्षैश्च । ५. भ–उन्मत्तेन तु । ६. रा$_1$ ल$_1$ ल$_2$ ब अ–विध्यंतोऽभिमुखाः । भ–विषण्णा वि० ॥ ७. भ–गृहीत्वा चायसं । ८. भ–०श्रेष्ठ उन्मत्ते स ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ–प्रमाणेन । १०. भ–उन्मत्तो नष्टचेतनः ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–ऋक्षराजस्तु । १२. भ–तेजस्वी । १३. रा$_2$–विनिहत्य । १४. रा$_2$ फ म–स्वयूथान्वानरर्षभः । भ–स्वयूथान्मेघसन्निभात् । १५. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ब अ प्र रा$_2$–विनिष्पत्य महावेगः स्वान् रिपून्मेघनिःस्वनः । १६. भ–गिरिशृंगाभः संगृह्य । १७. रा$_2$ म–तं । भ–ह ॥ १८. भ–उन्मत्तो राक्षसर्षभः । १९. भ–पंचभिर् । २०. म–समविध्यत । २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–राघवं च स्त० । म–दुर्जयः समविध्यत ।

ऋक्ष-राजं गवाऽक्षं च विभेद[1] दशभिः[1] शरैः ॥११॥ [११
१३] गवयं पञ्च-विंशत्या[2] दृष्ट्वा[3] शर-निपीडितम्[3] ।
जग्राह परि-घं घोरम् अङ्ग-दः क्रोध-मूर्च्छितः ॥१२॥ [१२
१४] तस्याऽङ्ग-दः सु-रुषितो[4] युगाऽन्ताऽग्निर् इवोत्थि (दू-स्थि[5]) तः ।
दूर-स्थितस्य परि-घं वज्र-संकाशम् आयसम्[5] ॥१३॥ [१३
१५] द्वाभ्यां भुजाभ्यां सं-गृह्य[6] भ्रामयित्वा च वेग-वान् ।
N] महा-पार्श्वस्य[7] चिक्षेप वधाऽर्थं[8] वालिनः सुतः[8] ॥१४॥ [१४
स तु क्षिप्तो बल-वता परि-घस् तस्य रक्षसः ।
१६] शिरस्-त्राणं धनुश् चाऽपि पातयामास वेगितः ॥[9]१५॥ [१५
तं[10] समा-रुह्य[10] वेगेन वालि-पुत्रः प्रताप-वान् ।[11]
१७] तलेनाऽभ्य्-अहनत्[12] क्रुद्धः[12] कर्ण-मूले स-कुण्डले ॥१६॥ [१६
स[13] तु क्रुद्धो महा-पार्श्वो[13] महा-वेगो महोद्यमः[14] ।
१८] करेणैकेन जग्राह सु-महान्तं परश्व-धम् ॥१७॥ [१७
तं तैल-धौतं[15] वि-मलं शैल-सारमयं[16] दृढम्[17] ।
१९] शस्त्रं[18] परम-संक्रुद्धो वालि-पुत्रे न्य्-अपातयत् ॥१८॥ [१८
तस्य[19] वामेंऽस-फलके[19] भृशं क्रोधान्[20] नि-पातितः[20] ।
२०] अङ्ग-दं मोहयामास प्र-हितः[21] स[21] परश्व-धः ॥१९॥ [१९
स वीरो वज्र-संकाशम् अङ्ग-दो[22] मुष्टिम् आत्मनः[22] ।
२१] न्य्-अपातयत्[23] सुसं-क्रुद्धः[23] पितुस् तुल्य-पराऽऽक्रमः ॥[22]२०॥ [२०
रक्षसस्[24] तस्य सं-ग्रामे[24] मर्म-ज्ञो[25] हृदयं प्रति ।

---

१. भ–विव्याध बहुभिः ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–जांबवंतं च । भ–ऋक्षराजं तु । ३. भ–स दृष्ट्वा शरपीडितौ ॥ ४. भ–प्रकुपितो विससर्ज तमायसं । ५. रा$_1$–आयतं ॥ ६. भ–तं वीरो । ७. भ–निशाचराय । ८. भ–वधाय बालिनंदनः ॥ ९. रा$_2$–नास्ति । भ–धनुश्च सशरं हत्वा शिरस्त्राणमपातयत् ॥ १०. फ म भ–स तमासाद्य । ११. रा$_2$–नास्ति । अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र–जघान कर्णमूले तु तलेनामितविक्रमः । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०नाभिहतः क्रुद्धः । भ–०भिजघानाशु ॥ १३. भ–ततः क्रुद्धः स उन्मत्तो । १४. भ–महाभुजः ॥ १५. भ–शैल० । १६. भ–तीक्ष्णसा० । १७. रा$_2$ फ म भ–महत् । १८. भ–रक्षः ॥ १९. भ–तेन वा० । २०. म–कोपाभिपा० । २१. भ–स मुहूर्तं ॥ २२. फ–नास्ति ॥ २३. भ–आवर्त्तयत संरब्धः । २४. भ–राक्षसस्य स्तनाभ्यासे । २५. रा$_1$–असंज्ञो ।

२२] इन्द्राऽशनि-सम-स्पर्शं तदा[१] मुष्टिम् अपातयत् ॥२१॥ [२१
तस्य[२] मुष्टि-निपातेन राक्षसस्य महा-मृधे[३] ।
२३] पफाल हृदयं भिन्नं[४] स पपात ततो[५] भुवि ॥२२॥ [२२
तस्मिन् नि-पतिते[६] भूमौ तत् सैन्यं विप्र-दुद्रुवे[७] ।
२४] आ-विवेश महा-क्रोधः सम्-अरे चाऽपि रावणम् ॥[८]२३॥ [२३

इत्यार्षे रामायणे युद्ध-कांडे[९] महापार्श्व-वधो[१०] नाम
सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

## [ वं-७६ ]= [ अष्टासप्ततितमः सर्गः ] =[ दा-१०० ]

महा-पार्श्वे विनि-हते राक्षसे च महोदरे ।[११]
N] निशा-चरे महाऽमात्ये विरूपाऽक्षे नि-पातिते[१२] ॥१ ॥ [१
विप्र-द्रुतेषु योधेषु कां-दिशीकेषु[१३] सर्व-तः[१३] ।
N] रावणः शोक-सन्तप्तः[१४] कार्य-शेषम् अचिन्तयत् ॥२ ॥ [N
N] चिन्तयित्वा नाऽति-चिरं[१५] स्व-सैन्यं[१६] विनि-वर्त्य[१७] च ।[११] [N
३उ] सूतं[१८] सं-चोदयामास[१८] वाक्यं चेदम्[१९] उवाच ह ॥३ ॥ [२
नि-हतानाम् अमात्यानां रुद्धस्य[२०] नगरस्य च ।[२१]
४] अन्तम्[२२] अद्य गमिष्यामि हत्वा तौ राम-लक्ष्मणौ ॥४ ॥ [३

---

१. भ-तस्य ॥ २. भ-तेन । ३. भ-महात्मनः । ४. भ-भग्नं । ५. रा$_2$ म-हतो ॥ ६. म-विनिहते । ७. भ-संप्रचुक्षुभे । ८. अतः परमधिकः पाठः—भ-स तु जलधरवद्विनद्य नादं समरगतः कुपितो निशाचरेन्द्रः । अदहदथ शरैर्हरींस्तदानीं तृणशलभानिव कानने दवाग्निः ॥ ९. प्र भ-लंकाकांडे । १०. भ-उन्मत्तवधः ॥ ११. भ-स्वबलं निहतं दृष्ट्वा तस्मिन्संग्राममूर्धनि । भ्रातॄन्विनिहतांश्चैव शक्रतुल्यपराक्रमान् ॥ निशम्य मन्त्रिप्रवरौ सूदितौ युधि वानरैः । मत्तोन्मत्तौ च सम्प्रेक्ष्य निहतौ परमद्युती ॥ विरूपाक्षं च दुर्धर्षं ससैन्यं वानरैर्युधि । चुकोपाथ महातेजा देवदानवदर्पहा । स भास्करसहस्रस्य तेजो बिभ्रन्महाद्युतिः ॥ १२. म-महासुरे ॥ १३. म-काल्यमानेषु सर्वशः । १४. म-क्रोधसं० ॥ १५. रा$_3$ ल$_3$ ल$_2$ ब-नातिस्वैरं । १६. रा$_1$ ल$_1$ ल ब अ प्र रा$_2$ फ-०न्याद् । १७. म-०वार्य । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-स्वं रथं चो० । म-सूतं स नोद० । १९. म-एतद् ॥ २०. भ-दग्धस्य । २१. अतः परमधिकः पाठः—भ-प्रहस्तस्यातिकायस्य इन्द्रजित्कुम्भकर्णयोः । २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-अहम् । भ-गतिम् ॥

कर्मणोऽस्य हि तौ मूलं भ्रातरौ राम-लक्ष्मणौ[1]।[2] [N
५] प्र-शाखा यस्य सु-ग्रीवो बहवोऽन्ये[3] च यूथ-पाः[3] ॥[4]५ ॥ [४उ
N] फल-पुष्पे[5] जनक-जा[5] द्रष्टा सेक्ता च मारुतिः।[4]
६पू] मूले हते हतं सर्वं[6] तौ हनिष्यामि सं-युगे ॥६ [6]॥ [N
७उ] स दिशो दश[7] घोषेण रथेन सहसा[7] भृशम्।
नादयन् राक्षस-श्रेष्ठो[8] राघवाव्[8] अभ्य्-अवर्तत[8] ॥७ ॥ [६
८] पूरिता तेन शब्देन स-नदी-गिरि-कानना[10]।
सं-चचाल मही सर्वा त्रेसुश्[11] चैव मृग-द्विजाः[11] ॥८ ॥ [७
९] स[12] वि-स्फार्य महा-चापं किरीटी मृष्ट-कुण्डलः।
नाम वि-श्रावयामास[13] जगर्ज च ननाद च ॥९ ॥ [N
१०] तेन सिंह-प्रणादेन नाम-संकीर्तनेन[14] च।
स्यन्दनस्य च नादेन पूरयामास रोदसी ॥१०॥ [N
११] त्रि-विक्रमे यथा विष्णोः सर्वे[15] दैत्य-जनाः[15] पुरा।
N] भयाऽऽर्ता वानराः सर्वे विविशुस् ते परस्परम् ॥११॥ [N
ते राक्षसेन्द्रं तं दृष्ट्वा वानरास् त्रस्त-चेतसः।
१२] शरण्यं शरणं जग्मुर् मनसा पुरुषोत्तमम् ॥१२॥ [N
ततस् तं राघवो[16] दृष्ट्वा रथ-स्थं[17] पर्वतोपमम्।
१३] वि-धुन्वानं धनुर् घोरं व्यादिताऽऽस्यम् इवाऽन्त-कम् ॥१३॥ [N
१४पू] विरूपाऽक्षं[18] महा-घोरं[19] गर्जन्तं कालमेघ-वत्।
N] वानरान् सान्त्वयित्वा च[20] वि-भीषणम् उवाच ह ॥१४॥ [N

---

१. प्र रा$_2$ फ–राघवावुभौ। २. टि० ५–६ श्लोकौ क्रमवैपरीत्ये तु. गपू. स० ५२. श्लो० ५–७.। ल$_1$ ल$_2$ ब–नास्ति ॥ ३. भ–पत्राणि हरियू०। ४. म–नास्ति ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–फलमूले च जानक्या। ६. अतः परमधिकः पाठः—भ–रावणस्य वचः श्रुत्वा सूतो हर्षसमन्वितः। स वाहयामास रथं कपीनां भयमादधत् ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–रथघोषेण जातेन महता। भ–०ण रथस्थोऽतिरथो। ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–प्रदिशो भूमिं। भ–प्रययौ तूर्णं। ९. भ–राघवं प्रति रावणः ॥ १०. भ–मही सगिरि० ११. रा$_1$ ल$_1$ ल$_2$ ब–भ्रेमुश्चैव मृ०। प्र रा$_2$ फ म– त्रस्ताश्चैव मृ०। भ–त्रस्तसिंहमृगद्विजाः ॥ १२. अत आरभ्य भ–३८–श्लोकं यावन्नास्ति। १३. रा$_2$ फ–संश्राव० ॥ १४. म–नामविश्रावणेन ॥ १५. ल$_2$ अ–सर्वदैत्य०। रा$_2$ फ–सर्वदैत्यवधे। प्र म–सर्वे दैत्यवराः। १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म–रावणं। १७. रा$_1$ ल$_1$ ल$_2$ ब–राक्षसं ॥ १८ रा$_1$ ल$_1$ ल$_2$ ब अ प्र–स तं दृष्ट्वा १९. प्र–महारौद्रं। म–महावेगं। २०. भ–तु ॥

कोऽयं पर्वत-सङ्काशो धनुष्-मान् कवची शरी ।
N] दिव्यं रथं समा-स्थाय वानरान् सं-जिघांसति[1] ॥१५॥ [N
आ-चक्ष्व मे महा-बाहो कोऽयं राक्षस-पुङ्गवः ।
N] यं दृष्ट्वा वानराः सर्वे भयाऽऽर्ता विप्र-दुद्रुवुः ॥१६॥ [N
स पृष्टो राज-पुत्रेण रामेणाऽमित-तेजसा ।
N] आ-चचक्षे महा-तेजा राघवाय वि-भीषणः ॥१७॥ [N
दश-ग्रीवो महा-तेजा राजा वैश्रवणाऽनुजः ।
N] भीम-कर्मा महोत्साहो रावणो राक्षसाऽधिपः ॥१८॥ [N
पुत्रो वि-श्रवसः साक्षात् क्रूर-कर्मा सु-दारुणः ।
N] दारुणो दारुणाऽऽचारो देव-दानव-दर्प-हा ॥१९[2]॥ [N
एतस्मिन् क्रियतां यत्नो महान्[3] पुरुष-पुङ्गव ।[4]
N] पुरा वानर-सैन्यानि क्षयं नयति सायकैः ॥२०॥ [N
N] विभीषण-वचः श्रुत्वा रामो राजीव-लोचनः ।
१४उ] जग्राह कार्मुक-श्रेष्ठं वाक्यं चेदम् उवाच ह ॥२१॥ [N
दिष्ट्या मे दर्शनं प्राऽऽप्तो नैर्ऋतेन्द्रः सु-दुर्मतिः ।[5]
१५] वधेनाऽस्य नृ-शंसस्य तुष्टिम् एष्यामि सं-युगे ॥२२॥ [N
इत्य् उक्त्वा बाणम् आ-कर्णं पूरयित्वा ससर्ज ह ।
१६] तं राक्षसेन्द्रश् चिच्छेद त्रिभिर् बाणैर्[6] अ-मर्षणः ॥२३॥ [N
नि-कृत्तं सायकं दृष्ट्वा सौमित्रिः कुपितो भृशम् ।
१७] त्रासयामास रक्षांसि ज्या-घोषेण महा-बलः ॥२४॥ [N
N] पूरयन् स महीं[7] शैलान् अर्णवांश् च दिशस्[7] तथा ।
सौमित्रेर् धनुषो घोषं श्रुत्वा प्रति-भयं तदा ॥२५॥ [N
१८] वि-सिष्मिये महा-तेजा राक्षसेन्द्रो भृशं बली ।
स रावणः प्र-कुपितो दृष्ट्वा लक्ष्मणम् अग्र-तः ॥२६[8]॥ [N
१९] आ-दाय नि-शितं बाणम् इदं[9] वचनम् अब्रवीत्[9] ।

---

१. रा₂ फ-प्रजि० ॥ २. म-नास्ति ॥ ३. रा₂ म-क्षुद्रे । ४. फ-नास्ति ॥ ५. म-नास्ति ॥ ६. रा₂ फ म-भल्लैर् ॥ ७. रा₂ फ-महाशैलानर्णवं च दिशस् । म-महीं सर्वां साकाशां दिशास् ॥ ८. म-नास्ति ॥ ९. रा₂ फ म-अरिदर्पनिसूदनं ।

तिष्ठ प्राणान् परि-त्यज्य गमिष्यसि यम-क्षयम् ।।[१]२७।।[N
२०] पश्य मे नि-शितान् बाणान् अरि-दर्प-निषूदनान् ।[१]
सितपीताऽमलांस् तीक्ष्णान् मुक्ता-रजत-भूषणान् ।।[२]२८।।[N
२१] एष[३] ते[३] सूर्य-सङ्काशो बाणः पास्यति शोणितम् ।[४]
मृग-राड् इव सं-क्रुद्धो नाग-राजस्य शोणितम् ।[५]
२२] त्यज सर्वाऽऽत्मना बाणं ततस् त्यक्ष्यसि जीवितम् ।।२९।। [N
ततः स रक्षो-वचनं नि-शम्य
सु-गर्वितं[६] सं-यति राज-पुत्रः ।
न[७] चैव चुक्रोध बलस्थिराऽऽत्मा[७]
२३] प्रोवाच चैनं[८] वचनं महाऽऽत्मा ।।३०।। [N
कर्मणा दर्शयाऽऽत्मानं न वि-कत्थितुम् अर्हसि ।
२४] पौरुषेण हि[९] युक्तेन[९] सं[१०](?त्वं) वि-कत्थितुम् अर्हसि ।।३१।। [N
सर्वाऽऽयुध-समायुक्तो धन्वी रथ-वरे स्थितः ।
२५] स[११] शरैर्[११] यदि वा शस्त्रैर् दर्शयस्व पराऽऽक्रमम् ।।३२।। [N
ततः शिरांसि ते[१२] बाणैः[१२] पातयिष्याम्य्[१३] अहं रणे[१३] ।
२६] मारुतः काल-पक्कानि फलानीऽव वनस्-पतेः ।।३३।। [N
अद्य ते मामका बाणास् तप्त-काञ्चन-भूषणाः ।
२७] पास्यन्ति रुधिरं देहात् सुराऽमृतम्[१४] इवोत्थि(द्-स्थि)तम् ।।३४।।[N
लक्ष्मणस्य वचः श्रुत्वा हेतु-मद्[१५] वीर्य-संयुतम्[१५] ।
२८] रावणः परम-क्रुद्धो बाणम् उत्-तमम् आ-ददे[१६] ।।[१७]३५।।[N
तम् आ-पतन्तं सौमित्रिस् त्रि-धा चिच्छेद लाघवात् ।[१७]
२९] रावणः परमाऽमर्षी शर-वर्षेण सोऽभ्य्-अयात् ।।३६।। [N
ततः शर-सहस्रेण सं-च्छाद्य रघु-नन्दनम् ।

---

१. रा$_2$–भिन्नेषु नास्ति ॥ २. अ–नास्ति । अतः परमधिकः पाठः— रा$_1$–उवाच तं महातेजा लक्ष्मणं शुभलक्षणम् ॥ ३. रा$_1$ ल$_1$ ल$_2$ व प्र–वर्षान्ते । ४. अ–नास्ति । ५. अ प्र म–नास्ति ॥ ६. म–निशम्य वै । ७. रा$_2$ फ–०बले स्थितात्मा । म–तथैव मुक्ते वचने महात्मा । ८. रा$_2$ फ म–चेदं ॥ ९. रा$_2$ फ–तु संयुक्तो । म–च यो युक्तो । १०. फ म–न वि० ॥ ११. प्र–सर्वैर् ॥ १२. म–बाणौघैः । १३. प्र–०ष्यामि भूतले ॥ १४. टि. सन्धिरार्षः । १५. रा$_2$ फ म–उत्साहसमन्वितं । १६. रा$_1$ ल$_2$–आदधे । १७. म–नास्ति ॥

३०] वि-भीषणं च[1] सु-ग्रीवं वानरांश् चाऽभि-दुद्रुवे ॥३७॥ [N
सं-त्रास्य वानराऽनीकं शर-वर्षैर् महा-भुजः ।
३१] रामम् एवाऽभि-दुद्राव शरैर् अग्निशिखोपमैः ॥[2]३८॥[N
तम् आ-पतन्तं सहसा प्रत्य्-अगृह्णान् महा-भुजः ।[2]
३२] रामोऽपि राक्षस-श्रेष्ठं शरैर् अर्काऽग्नि-सन्निभैः ॥[3]३९॥[N
N] सं-क्रुद्धयोस् तयोर्[4] आसीत् सं-युगं[5] लोम-हर्षणम्[5] ।[6]
ततः प्र-ववृते युद्धं राम-रावणयोर् महत्[7] ।
३३] जीविताऽन्तकरं घोरं परस्पर-वधैषिणोः[8] ॥४०॥ [N
लाघवं[9] शर-मोक्षं च शर-व्याघातम् एव च ।
३४] आत्मनः प्रति-घातं च दृष्ट्वा रक्षो न[10] विव्यथे[10] ॥४१॥ [N
ततः शर-शतैस्[11] तीक्ष्णै[11] रावणं[12] स प्र-वेगितैः[12] ।
३५] राघवः परमाऽमर्षी[13] प्र-विव्याध महा-बलः[14] ॥४२॥ [N
चचाल पृथिवी सर्वा स-सागर-वन-द्रुमा ।[15] [७उ
३६] तामसं सु-महाघोरं मुमोचाऽस्त्रं सु-दारुणम् ॥४३॥
३७पू] निर्-ददाह[16] कपींस् तेन ते[17] प्र-पेतुर् मही-तले[17] ।[18] [८
३८उ] तान्य् अनीकान्य्[19] अनेकानि[19] रावणस्य शरोत्करैः ॥४४॥
प्रेक्ष्य भग्नानि शत-शो राघवः[20] समुप-स्थितः[21] । [१०
३९] ददर्श स ततो रामं तिष्ठन्तम्[22] अ-पराजितम्[22] ॥४५॥[११उ
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा ।
४०] उल्-लिखन्तम् इवाऽऽकाशम् अव-ष्टभ्य स्व-कं[23] धनुः ।

---

१. ल$_1$ ल$_2$ प्र–तु ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म–नास्ति ॥ ३. अतः परमधिकः पाठः—भ–ततोऽभवद्युद्धमनुत्तमं तयोर्महत्तदा रामनिशाचरेन्द्रयोः । जिगीषतोर्वन्यमृगेन्द्रयोर्वने प्रभिन्नयोर्यूथपयोर्यथा भवेत् ॥ ४. रा$_1$–ततो । ५. रा$_2$–संगरो रोमहर्षणः । फ–०गो लोमहर्षणः । ६. भ–नास्ति । ७. भ–तदा । ८. प्र म भ–०रजयैषिणोः ॥ ९. भ–रामस्य । १०. म–स दुद्रुवे । भ–प्रचुक्षुभे ॥ ११. भ–शरसहस्रेण । १२. ल$_1$ ल$_2$ ब अ प्र फ रा$_2$–व्यवच्छेदं प्र० । म–वज्रवेगप्र० । भ–प्रचिच्छेद परेरितं । १३. भ–समरामर्षी । १४. रा$_2$ फ म भ–विव्याध सुमहा० ॥ १५. भ–०ल दशग्रीवः क्रुद्धश्चैव महाबलः ॥ १६. भ–स द० । १७. भ–प्रयुक्तेन समंततः । १८. अतः परमधिकः पाठः—भ–उत्पात रजो भौमं भग्नैस्तत्र प्रधावितैः । सोढुं नैव हि तच्छेकुर्ब्रह्मणा निर्मितं स्वयम् ॥ १९. भ–०कानि सर्वाणि ॥ २०. रा$_1$ ल$_1$ ल$_2$ ब–रावणः । २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–पर्यवर्तत । २२. रा$_2$ फ–रावणः पर्यवस्थितं ॥ २३. रा$_1$ अ प्र–महद् । फ–स्वयं ।

N] पद्मपत्रनिभाऽक्षं[1] तं दीर्घ-बाहुम् अरिं-दमम् ॥[2]४६॥[१२
वानरांश् च रणे भग्नान् आ-पतन्तं च रावणम्[3] ।
४२] सम्-ईक्ष्य राघवो हृष्टो[4] मध्ये[4] जग्राह तद्[5] धनुः[5] ॥४७[2]॥[१३
वि-स्फारयितुम्[6] आ-रेभे[6] ततः स पुनर्[7] आऽह्वयत् ।
४३] महा-वेगं[8] महा-कायं[9] भिन्दन्तम्[10] इव रोदसी[11] ॥४८॥ [१४
लक्ष्मणस्य च बाणेन राम-विस्फारितेन च ।
४४] शब्देन राक्षसास् त्रेसुः[12] पेतुश चैव[12] सहस्र-शः ॥४९॥ [१५
तयोर्[13] इषु-पथं[13] प्राऽऽप्य राम-लक्ष्मणयोर्[14] मृधे[14] ।
४५] बभूव स यथा राहुः समीपे शशि-सूर्ययोः[15] ॥५०॥ [१६
तम् ऐच्छत् प्रथमं योद्धुं लक्ष्मणो नि-शितैः शरैः ।
४६] मुमोच धनुर् आ-दाय[16] शरान् अग्नि-शिखोपमान् ॥५१॥ [१७
तान् मुक्त-मात्रान् आ-काशे लक्ष्मणेन धनुष्-मता ।
४७] बाणैर्[17] बाणान्[17] महा-तेजा रावणः प्रत्य्-अवारयत् ॥५२[18]॥[१८
एकम् एकेन बाणेन त्रिभिस् त्रीन् दशभिर् दश ।
४८] लक्ष्मणस्य प्रचिच्छेद[19] दर्शयन् हस्त-लाघवम् ॥५३॥ [१९
अभ्यति-क्रम्य[20] सौमित्रिं रावणः समिति-जयः ।
४९] आ-ससाद रणे[21] रामं स्थितं शैलम्[22] इवाऽचलम् ॥५४॥ [२०
स सं-ख्ये रामम् आ-साद्य क्रोध-संरक्त-लोचनः[23] ।
५०] व्य्-असृजच्[24] छर-वर्षाणि राघवे राक्षसेश्वरः ॥५५॥ [२१
शर-धारास् ततो रामो रावणाऽम्बुद-निःसृताः[25] ।

---

१. भ–०त्रविशालाक्षं । म–०त्रमिवाकाशं । फ–०त्रनिकाशाख्यं । २. प्र–नास्ति । अतः परमधिकः पाठः—भ–स तु सम्प्रेक्ष्य काकुत्स्थं राघवं रावणो युधि । रथेनाभ्यद्रवत्तूर्णं जघान च कपीन् बहून् ॥ ३. म भ–राक्षसं । ४. भ–क्रुद्धो मृधे । ५. म भ–कार्मुकं ॥ ६. रा$_2$–०यित्वा समारेभे । भ–विस्फार्य च महच्चापं । ७. भ–रिपुम् । ८ म–०वेगो । ९. म–०यो । भ–महानादं । १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–०दन् । ११. भ–मेदिनीं ॥ १२. भ–तेन न्यपतंत ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–ततो रिपुपथं । भ–तयोः शरपथं । १४. भ–रावणो राजपुत्रयोः । १५. भ–चन्द्रसू० ॥ १६. भ–आनम्य ॥ १७. भ–बाणजालैर् । १८. भ–नास्ति ॥ १९. म–च चि० । भ–स चि० ॥ २०. भ–अथाति० । २१. भ–ततो । २२. म–मेरुम् ॥ २३. रा$_2$–कोपसं० २४. भ–असृ० ॥ २५. भ–शरव्रातांस्तु तान्रामो रावणेष्वासनिसृतान् ।

५१] दृष्ट्वाऽऽपतिताः[1] शीघ्रं[2] भल्लाञ्[3] जग्राह राघवः[3] ॥५६॥ [२२
ताञ् छरौघांस् ततो भल्लैस् तीक्ष्णैश् चिच्छेद सं-युगे[4] ।
५२] दीप्यमानान् महा-घोरान्[5] क्रुद्धान् आशीविषान् इव[5] ॥५७॥ [२३
राघवो रावणं सं-ख्ये[6] रावणश् चाऽपि राघवम्[6] ।
५३] अन्योऽन्यं वि-शिखैस्[7] तीक्ष्णैः[7] शरैर् अभि-ववर्षतुः ॥५८॥ [२४
चेरतुश् च[8] ततश् चित्रैर्[8] मण्डलैः[9] सव्य-दक्षिणैः[10] ।
५४] बाण-जालैर्[11] जिघांसन्ताव्[11] अन्योऽन्यम् अ-पराजितौ ॥५९[12]॥ [२५
तयोर् भूतानि सं-त्रेसुर्[13] युग-पत् सम्प्र-वृत्तयोः ।
५५] रौद्रयोः[14] सायक-मुचोर्[14] यमाऽन्तक-निकाशयोः ॥६०॥ [२६
सं-ततं[15] वि-विधैर्[15] व्योम[16] बभूव नि-शितैः[17] शरैः[17] ।
५६] घनैर् इवाऽऽतपाऽपाये विद्युज्-ज्वाला-समाकुलम्[18] ॥६१॥ [२७
समुत्-क्षिप्तम्[19] इवाऽऽकाशं बभूव शर-वृष्टिभिः ।
N] महाऽऽभोगैः[20] सुतीक्ष्णाऽग्रैर् वज्राऽग्निसदृशाऽऽननैः[21] ॥६२॥ [२८
शराऽन्धकारं तौ भीमं[22] चक्रतुः सम्-अरे तदा ।
५७] गतेऽस्तं तपने देवे गर्जन्[23] मेघाव्[24] इवोत्थि(द्-स्थि)तौ[24] ॥६३॥ [२९
तयोर् युद्धं महा-भीमं[25] परस्पर-वधैषिणोः[25] ।
५८] बभूवोग्रम्[26] अ-चिन्त्यं च वृत्र-वासवयोर् इव ॥६४॥ [३०
उभौ च[27] परमेष्वासाव उभौ शस्त्र-विशारदौ[28] ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–ददौ चापं ततः । २. भ–तूर्णं । ३. रा$_1$–बलाज्जग्राह रावणः ॥ ४. भ–राघवः । ५. प्र म–०घोरान्क्रुद्धानाशीविषोपमान् । भ–महेष्वासः क्रोधेनाशीविषोपमान् ॥ ६. भ–बाणै रावणो राघवं तथा । ७. भ–समरे वीरौ ॥ ८. प्र रा$_2$ फ भ–चरितं चित्रं । ९. रा$_2$–०ले । भ–०लं । १०. रा$_2$–०णे । भ–णं । ११. भ–बाणवर्षं समीक्षेताम् । १२. म–नास्ति ॥ १३. ल$_1$ ल$_2$ ब–विभ्रेमुर् । प्र रा$_2$ फ म भ–वित्रेसुर् । १४. रा$_1$ ल$_1$ ल$_2$ ब–०योः साकमुत्पत्य । भ–रामरावणयोर्युद्धे ॥ १५. भ–छन्नं तैर्निशितैर् । १६. प्र रा$_2$ फ म भ–बाणैर् । १७. रा$_2$ फ म–गगनं शितैः भ–गहनं नभः । १८. रा$_1$ अ–ज्वालामालास० ॥ १९. रा$_1$ ल$_1$ ल$_2$ अ प्र म–तदुत्क्षि० । भ–गवाक्षितम् । २०. भ–महावेगैः । २१. रा$_2$ फ–०ग्निविकृताननैः । म–०ग्निविसृताननैः । भ–वज्राग्निसदृशाननैः ॥ २२. भ–भीमौ । २३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–जगत् । २४. रा$_2$ फ–मेघैरिवावृतं ॥ भ–मेघाविवोदितौ । २५. म–महाघोरमभवद्वधकांक्षिणोः । भ–०भीममन्योन्यवधकांक्षिणोः । २६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा फ म–अनासाद्यम् ॥ २७. भ–तौ । २८. ल$_1$ प्र–शास्त्र० । भ–युद्धवि० ।

५९] उभौ चाऽस्त्र-विदां[1] श्रेष्ठाव् उभौ युद्धे[2] न चेलतुः[2] ॥६५॥ [३१
उभौ च[3] येन व्रजतो ययुस्[4] तेन[4] शरोर्मयः ।
६०] ऊर्मयः श्वसनाऽऽविद्धा भीमाः सागरयोर् इव ॥६६॥ [३२
ततः[5] संत्रस्त-चक्रस्[6] तु रावणो लोक-रावणः ।
६१] नाराच-मालां रामस्य ललाटे प्रत्य्-अमुञ्चत ॥६७॥ [३३
रौद्र-चाप-प्रमुक्तां तां नीलोत्पल-मयीम्[7] इव[7] ।
६२] शिरसा धारयन् रामो न व्यथाम् अभ्य्-अगच्छत[8] ॥६८॥ [३४
अथ मन्त्रान् अभि-जपन् रौद्रम् अस्त्रम् उद्-ईरयन् ।
६३] रामोऽपि जगृहे बाणान् स तदा क्रोध-मूर्च्छितः ॥६९[9]॥ [३५पू
N] सं-धायाऽग्नि-शिखा-प्रख्यांश्[10] चक्री-कृत्य महद् धनुः ।[11] [N
मुमोच च महा-तेजाश् चापम् उद्-यम्य[12] वीर्य-वान्[13] ॥७०॥ [३५उ
६४] ते शरा राक्षसेन्द्रस्य व्यव-च्छिन्नेन[14] वेगिताः । [३६पू
N] नि-पेतू रावणस्याऽग्रे वज्राऽशनि-सम-प्रभाः ॥७१[15]॥ [N
ते महामेघ-सङ्काशे कवचे[16] पतिताः शराः[16] ।
६५] अ-भेद्ये राक्षसेन्द्रस्य[14] न[17] व्यथां चक्रिरे[18] तदा[18] ॥७२॥ [३६उ
पुनर् एवाऽथ तं रामं रथ-स्थो राक्षसेश्वरः ।[19]
६६] विव्याध परमाऽस्त्रेण सर्वाऽस्त्र-कुशलो[20] रणे ॥[21]७३॥ [३७
ते ह(?कृ)त्वा शर[22](?रा)वर्षाणि पञ्च-शीर्षाणा[23](?णो)वोरगाः[23] ।
६७] श्वसन्तो विविशुर् भूमिं रावणेन[24] प्र-चोदिताः[24] ॥७४[25]॥ [३८
नि-हत्य राघवस्याऽस्त्रं रावणः क्रोध-मूर्च्छितः ।[25]

---

१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–शास्त्र० । रा$_{1}$–शस्त्रभुजां । फ–शस्त्रभृतां । २. म–युद्धबले स्थितौ ॥ ३. भ–हि । ४. म–चक्रतुस्ते । भ–तेन तेन ॥ ५. भ–अथ । ६. रा$_{1}$–०स्तवक्त्रस् । भ–संसक्तहस्तस् ॥ ७. भ–०लसमप्रभां । ८. भ–प्रत्यपद्यत ॥ ९ भ–ततस्त्वभिजपन्मन्त्रं रौद्रास्त्रं समुदीरयन् । शरांश्चैव समाधत्त रामः क्रोधसमन्वितः ॥ १०. प्र रा$_{2}$ फ–०याशीविषप्र० । ११. म भ–नास्ति । १२. भ–आकृष्य । १३. ल$_{2}$–वेगवान् ॥ १४. प्र–नास्ति । १५. भ–रावणस्य रणे रामः शरानग्निशिखोपमान् । राघवेण प्रयुक्तास्ते कवचे निशिताः शराः ॥ १६. भ–अभेद्यकवचावृते । १७. प्र–नास्ति । भ–तु । १८. भ–चक्रुराहवे । १९. भ–नास्ति । २०. रा$_{1}$–सर्वासु कुशलं । ल$_{1}$ ल$_{2}$ ब अ प्र–०स्त्रकुशलं । २१. भ–अताडयन्महास्त्रेण गांधर्वेण महाबलः ॥ २२. रा$_{2}$ फ भ–बाणरूपाणि । २३. रा$_{1}$ अ प्र–०शीर्षा इवो । भ–०शीर्षा महोरगाः । टि०–वा=इव । २४. रा$_{2}$–०न प्रयोजिताः । भ–रामेण प्रतिचो० ॥ २५. म–नास्ति ।

६८] आसुरं सु-महाघोरम् अन्यद् अस्त्रं मुमोच[१] ह[१] ॥७५॥ [३९
व्याघ्र-सिंह-मुखान् बाणान् काक-कङ्क-मुखांस्[२] तथा ।
६९] गृध्र-दीप्ताऽऽननांश् चाऽपि[३] सृगाल-वदनान्[४] शितान्[४] ॥७६॥ [४०
ईहामृग-मुखांश् चाऽपि[५] व्यादिताऽऽस्यान् भयाऽऽवहान्[६] ।
७०] पञ्चाऽऽस्यांल् लेलिहानांश् च ससर्ज वि-विधाञ्[७] छरान् ।[८] [४१
७१उ] रामं प्रति महा-तेजाः क्रुद्धः[९] सर्प[९] इव श्वसन् ॥७७॥ [४३उ
आसुरेण समा-विष्टः(?द्धः) सोऽस्त्रेण[१०] युधि राघवः ।
७२] ससर्जाऽस्त्रं महोत्साहः[११] पावकं पावकोपमः[१२] ॥७८॥ [४४
अग्नि-दीप्त-मुखान् बाणांश् चन्द्र-सूर्य-मुखांस्[१३] तथा ।
७३] चन्द्राऽर्धचन्द्र-वक्त्रांश्[१४] च[१४] धूम-केतु-निभान् अपि ॥७९॥ [४५
ग्रह-नक्षत्र-वक्त्रांश्[१५] च महोल्का-मुख-संस्थितान् ।
७४] विद्युज्-जिह्वांस् तथा[१६] चाऽन्यान्[१६] वि-ससर्ज[१७] शिताञ्[१७] छरान्।८०।[४६
ते रावण-शरा घोरा राघवाऽस्त्रेण[१८] मोहिताः[१८] ।
७५] वि-लयं जग्मुर् आ-काशे विनि-कृत्ताः[१९] सहस्र-धा[२०] ॥८१॥ [४७
तद् अस्त्रं नि-हतं दृष्ट्वा रामेणाऽक्लिष्ट-कर्मणा ।
७६] हृष्टा नेदुस् ततः सर्वे हरयः काम-रूपिणः ॥८२[२१]॥ [४८

इत्यार्षे रामायणे युद्ध-काण्डे[२२] राम-रावणयोर् अस्त्र-युद्धं
नामाऽष्टासप्ततितमः सर्गः ॥ ७८ ॥

---

१. रा$_2$ फ भ–समाददे ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–काकगृध्रमु० । ३. भ–चैव । ४. म–०नांस्तथा । भ–वराहवदनांस्तथा ॥ ५. रा$_2$ फ म भ–चान्यान् । ६. म–महाभयान् । ७. भ–निशिताञ् । ८. म–नास्ति । अतः परमधिकः पाठः—रा$_2$ फ भ–खरान्खरमुखांश्चान्यान् वराहमुखसंस्थितान् । कूर्मकुक्कुटवक्त्रांश्च मकराशीविषाननान् ॥ एतांश्चान्यांश्च मायाभिः ससर्ज विविधाञ्छरान् ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ–क्षुद्रः सर्पं । रा$_2$–महासर्पं । १०. ल$_1$ ल$_2$ ब अ प्र–शस्त्रेण । ११. भ–महातेजाः । १२. भ–दिव्यमुत्तमम् ॥ १३. रा$_1$ ल$_1$ ल$_2$ अ प्र रा$_2$ फ–०र्यसमांस् । भ–सूर्यवायुमु० । १४. भ–०र्धवक्त्रान्विमलान् ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ म–०वर्णांश् । १६. रा$_2$ फ म भ–तथैवान्यान् । १७. रा$_2$ फ–ससर्ज निशिताञ् । म भ–ससर्ज विविधाञ् ॥ १८. भ–राघवस्य समीपतः । १९. भ–जघ्नुश्चैव । २०. फ म भ–०स्रशः ॥ २१. अतः परमधिकः पाठः—भ–सुग्रीवप्रमुखा वीराः सर्वे ते प्रत्यपूजयन् ॥ २२. प्र भ–लंकाकांडे । म–युद्धपर्वणि ॥

अस्त्रेणाऽस्त्रं प्रति-हतं दृष्ट्वा रामेण रावणः ।
१] क्रोधं तु द्वि-गुणं चक्रे क्रोधात् स[1] तद्-अनन्तरम्[1] ॥१ ॥[१
मयेन माया-विहितं[2] रौद्रम् अस्त्रं महा-बलः[2] ।
२] उत्-स्रष्टुं[3] रावणो घोरं[4] राघवायोपचक्रमे[5] ॥२ ॥[२
ततः[6] प्राऽऽसाश् च निष्-पेतुर् गदाश् च मुसलान्य्[7] अपि[8] ।
३] कार्मुका दीप्यमानाश्[9] च[9] वज्र-धाराश्[10] च[10] सर्व-शः ॥३ ॥[३
मुद्गराः कूट-यन्त्राणि[11] दीप्ताश् चाऽशनयस् तथा ।
४] निष्-पेतुर् वि-विधास् तीक्ष्णा[12] वाता इव युगाऽत्यये[13] ॥४ ॥[४
ततस् तद्[14] राघवः शीघ्रम्[15] अस्त्रम् अस्त्र-विदां[15] वरः ।
५] जघान परमाऽस्त्रेण गान्धर्वेण महा-द्युतिः ॥५[16] ॥[५
ततश् चक्राणि निष्-पेतुर् भास्वराणि[17] महांति[18] च[18] ।
७] कार्मुकाद् भीम-वेगानि[19] राघवस्य महाऽऽत्मनः[19] ॥६ ॥[७
तैर् आसीद् गगनं व्याप्तं[20] सं-पतद्भिस् तमो-नुदैः ।
८] भासिताः[21] सर्व-लोकाश् च[21] चन्द्राऽऽदित्य-ग्रहैर् इव ॥७ ॥[८
तैः स[22] चिच्छेद[22] तान् बाणान् अस्त्राणि[23] वि-विधानि[23] च ।[24]
९] आ-युधानि वि-चित्राणि रावणस्य चमू-मुखे ॥८ ॥[९
तद् अस्त्रं नि-हतं[25] दृष्ट्वा रावणो राक्षसेश्वरः[26] ।
१०] विव्याध नि-शितैर्[27] बाणै रामं सर्वेषु मर्मसु ॥९ ॥[१०
स विद्धो बहुभिर् बाणैर् महा-कार्मुक-निःसृतैः ।[28]

---

१. भ-अस्त्रं ससर्ज ह ॥ २. भ-विहितं रौद्रमन्यदस्त्रं महाद्युतिः । ३. भ-सुघोरं । ४. भ-भीमं । ५. भ-०वाय महात्मने ॥ ६. भ-शूलाः । ७. रा$_2$ फ-मुशलानि । ८. रा$_2$ फ म भ-च । ९. रा$_2$ फ म भ-०नानि । १०. रा$_2$ फ म भ-०राणि ॥ ११. रा$_2$ फ म-कूटजालानि । भ-कूटसंज्ञाश्च । १२. रा$_2$ फ-तीव्रा । १३. रा$_2$ फ-युगक्षये ॥ १४. भ-तु । १५. भ-श्रीमानस्त्रशास्त्रविदां । १६. अतः परमधिकः पाठः—भ-तदस्त्रं निहतं दृष्ट्वा राघवेण महात्मना । पैशाचं सुमहातेजाः सोऽन्यदस्त्रमुदैरयत् ॥ १७. ल$_1$ ल$_2$ अ रा$_2$ फ-भासुराणि । १८. भ-महात्मनः । १९. भ-०वेगस्य दशग्रीवस्य रक्षसः ॥ २०. रा$_2$ फ म-हृष्टैः । २१. भ-पतद्भिः स्वर्गलोकेभ्यश् ॥ २२. रा$_2$ फ-निचि० । २३. रा$_2$ फ-शूलानि मुशलानि । २४. भ-नास्ति ॥ २५. रा$_1$-विहतं । २६. भ-राक्षसाधिपः । २७. भ-दशभिर् ॥ २८. भ-सोतिविद्धः शितैर्बाणै रामः सर्वेषु मर्मसु ।

११] रावणेन महा-तेजा न प्राऽकम्पत[1] राघवः[2] ॥१०॥ [११
ततो विव्याध गात्रेषु सर्वेषु समितिं-जयः ।
१२] रामः सु-संरब्धतरो रावणं नि-शितैः शरैः ॥११[3]॥ [१२
वि-भीषणश् च साऽमात्यः सु-ग्रीवश्[3] च स-सैनिकः[3] ।
N] प्रेक्षकाः सम्-अपद्यन्त दश-ग्रीवस्य सैनिकाः ॥[4]१२[5]॥ [N
एतस्मिन्न् अन्तरे क्रुद्धो राघवस्याऽनु-जो बली ।
१४] लक्ष्मणः सायकान् सप्त जग्राह पर-वीर-हा ॥१३॥ [१३
तैः सायकैर् महा-वेगै रावणस्य महा-द्युतेः[6] ।
१५] ध्वजं मनुष्य-शीर्षं[7] च तदा[8] चिच्छेद वीर्य-वान्[9] ॥१४॥ [१४
सारथेश् चैव[9] बाणेन[9] शिरो ज्वलित-कुण्डलम्[10] ।
१६] जहार लक्ष्मणः श्री-मान् रथाद्[11] आशु पपात च[11] ॥१५॥ [१५
कृष्यमाणं[12] तु[12] चिच्छेद धनुर् गजकरोपमम् ।
१७] लक्ष्मणो राक्षसेन्द्रस्य पञ्चभिः पञ्चभिः[13] शरैः[13] ॥१६॥ [१६
नील-मेघ-निभांश्[14] चाऽस्य[14] सद्-अश्वान् पर्वतोपमान् ।
१८] नि-जघान[15] तदा वेगाद् रावणस्य[15] वि-भीषणः[16] ॥१७॥ [१७
हताऽश्वो[17] वेग-वान्[18] वेगाद् अव-प्लुत्य[19] महा-रथात्[19] ।
१९] क्रोधम् आऽहारयत्[20] तीव्रं[20] भ्रातरं प्रति रावणः ॥१८॥ [१८

---

१. भ–मनागप्यकंपत ॥ २. अतः परमधिकः पाठः—भ–यथा प्रावृषि मेघो वै धारावर्षं विमुंचति । एवं रामो महात्मा तु बाणवर्षं व्यमुंचत ॥ पूरयन् शरवर्षेण गगनं मेदिनीं तथा । अभिनच्च रथं रामः सपताकध्वजं तथा ॥ स रथो राक्षसेन्द्रस्य रामेणाभ्याहतः शरैः । साश्वः सारथिनोपेतः सध्वजः पतितो भुवि ॥ पदातिर्नष्टसंज्ञश्च कृतो वै रक्षसां पतिः । निमेषान्तरमात्रेण सज्जमन्यं रथोत्तमम् ॥ आरुरोह ततः शीघ्रं रावणो राक्षसाधिपः । मायया विहितैर्बाणै रामं विव्याध संयुगे ॥ ३. अ–०वस्य च सैनिकाः । ४. म–नास्ति । ५. भ–नास्ति ॥ ६. म–दुरात्मनः । भ–०द्युतिः । ७. ब प्र रा$_2$ फ म भ–तस्य । ८. भ–सायकैः ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ–चैकबा० । १०. ल$_1$ ल$_2$ ब–०तमंड० । ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०इषुमथांतरं । म–नास्ति । भ–आशु पपात सः ॥ १२. भ–नाम्यमानं च । १३. रा$_2$ फ म भ–पंचपर्वभिः ॥ १४. म–०निकासाश्च । भ–०भांश्चैव । १५. रा$_2$ फ म–०न महावेगान्रा० । भ–जघान गदया तत्र रथे भ्रातुर ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–रथे स्थितान् । १७. रा$_2$ फ म–०श्वाद् । १८. म–तु तदा । १९. भ–आप्लुत्य स महारथः । २०. भ–आह्वयांचक्रे ॥

ततस् तु स[1] महा-शक्तिं[1] दीप्ताम् अग्नि-शिखाम् इव ।[2]
२०] वि-भीषणाय चिक्षेप राक्षसेन्द्रः प्रताप-वान् ॥१९॥ [१९
२१पू] अ-प्राऽऽप्ताम् एव तां बाणैस् त्रिभिश् चिच्छेद राघवः । [२०पू
तां दृष्ट्वा नि-हतां शक्तिं[3] राघवेण महाऽऽत्मना[3] । [N
२२] उद्-अतिष्ठन्[4] महा-नादो[4] वानराणां रणे[5] तदा[5] ॥२०॥ [२०उ
२१उ] सा पपात त्रि-धा छिन्ना[6] शक्तिः कनक-भूषणा[7] ।
N] स-विस्फुलिङ्गा ज्वलिता महोल्केव नभश्-च्युता ॥[8]२१॥ [२१
ततः स[9] राक्षसेन्द्रोऽन्यां[9] कालेनाऽपि दुरा-सदाम् ।
२३] मुमोच[10] विपुलां[10] शक्तिं दीप्यमानां[11] स्व-तेजसा[11] ॥२२॥ [२२
सा[12] प्र-मुक्ता[12] बल-वता रावणेन[13] दुर्-आत्मना[13] ।
२४] जज्वाल सु-महावेगा[14] दिवि[14] सौदामिनी यथा ॥२३॥ [२३
एतस्मिन्न् अन्तरे वीरो लक्ष्मणस् तं वि-भीषणम् ।
२५] प्राण-संशयम् आ-पन्नं तूर्णम् एवाऽभ्य्-अपद्यत[15] ॥२४॥ [२४
तं मुमोचयिषुर् वीरश् चापम् उद्-यम्य[16] लक्ष्मणः ।
२६] रावणं शक्ति-हस्तं तं शर-वर्षैर् अवाऽकिरत् ॥२५॥ [२५
कीर्य-माणः शरौघेण वि-सृष्टेन महाऽऽत्मना ।
२७] न प्र-हर्तुं मनश् चक्रे विमुखी-कृत-विक्रमः[17] ॥२६॥ [२६
मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः ।
२८] लक्ष्मणाऽभिमुखो[18] भूत्वा ततो[18] वचनम् अब्रवीत् ॥२७॥ [२७
रक्षितस् ते बल-श्लाघिन्[19] यस्माद् एष वि-भीषणः ।
२९] वि-मुच्य राक्षसं तस्मात् त्वयि शक्तिः पतिष्यति ॥२८॥ [२८
एषा ते हृदयं भित्त्वा शक्तिर् बर्हिण-लक्षणा ।

---

१. अ-वज्रं-सुम० । २. भ-ततः शक्तिं महाबाहुर् दीप्तां दीप्तमिवाशनिं ॥ ३. भ-बाणैर्दीप्तामिव महाशनिं । ४. भ-उत्तस्थौ सुमहान्नादो । ५. रा$_2$ फ-महात्मनां । भ-चमूमुखे ॥ ६. रा$_2$ फ-भिन्ना । ७. भ-कांचनमालिनी । ८ भ-नास्ति ॥ ९. प्र रा$_2$ फ म भ-संभाविततरां । १०. रा$_2$ फ म भ-जग्राह विमलां । ११. ल$_1$-राघवेण महात्मना । ल$_2$ अ-न्तां सुते० । १२. रा$_2$ फ म-सोत्तोलिता । भ-सा पीडिता । १३. प्र-अत आरभ्य २४-शश्लोकस्य प्रथमपादपर्यंतं नास्ति । म भ-०णेन महात्मना । १४. भ-०हातेजा व्योम्नि ॥ १५. भ-अभ्युपपद्यत ॥ १६. रा$_2$ फ म-संयम्य । भ-आनम्य ॥ १७. म-०तनिश्चयः । १८ भ-०खं तिष्ठन्निदं ॥ १९. भ-०श्लाघ्य ॥

३०] मद्-बाहु-बल-वेगेन[1] प्राणान् आ-दाय यास्यति ॥२९[2]॥[२९
इत्य् एवम् उक्त्वा तां शक्तिम् अष्ट-घण्टां[3] महा-स्वनाम्[3] ।
३२] मयेन माया-विहिताम् अ-मोघां[4] शत्रु-तापिनीम्[4] ॥३०॥ [३०
लक्ष्मणाय समुद्-दिश्य ज्वलन्तीम् इव[5] तेजसा ।
३३] रावणः परमः क्रुद्धश् चिक्षेप च ननाद च ॥३१॥ [३१
सा क्षिप्ता भीम-वेगेन वज्राऽशनि-सम-प्रभा[6] ।
३४] शक्तिर् अभ्याऽपतद्[7] वेगाल् लक्ष्मणं रण-मूर्धनि ॥३२॥ [३२
ताम् अनुव्याऽहरच् छक्तिम् आ-पतन्तीं स राघवः ।
३५] स्वस्त्य् अस्तु लक्ष्मणायेति[8] मोघा भव हतोद्यमा[9] ॥[10]३३॥[३३
३६उ] न्य्-अपतत् सा महा-वेगा लक्ष्मणस्य[11] महोरसि[11] ।
जिह्वेवोरग-राजस्य दीप्यमाना महा-द्युतिः ॥३४॥ [३५
३७] ततो रावण-वेगेन सु-दूरम्[12] अव-गाढया[12] ।
शक्त्या[13] निर्भिन्न-हृदयः[13] पपात भुवि लक्ष्मणः ॥३५॥ [३६
३८] तद्-अवस्थं समीप-स्थो लक्ष्मणं वीऽऽक्ष्य[14] राघवः ।

---

१. भ-मद्बाहुपरिघोत्सृष्टा । २. रा$_1$ अ-नास्ति । अतः परमधिकः पाठः—भ-एवमुक्त्वा दशग्रीवो रथस्थो राक्षसेश्वरः । प्रगृह्य रोषताम्राक्षः शक्तिं बालार्कसन्निभाम् ॥ कृशानुज्वलिताकारां युगांतोल्कासमद्युतिम् । विस्फुलिंग-सहस्राणि तां च वै शक्तिमुत्तमाम् ॥ विकिरंतीं महत्प्रेक्ष्य घंटाशतनिनादिताम् । दृष्ट्वैव ज्वलितां शक्तिं देवताः क्षोभमागताः ॥ आदित्यो निष्प्रभश्चासीन्मंदतेजश्च पावकः । शक्तिं सुमहतीं दृष्ट्वा नक्षत्राणि प्रदुद्रुवुः ॥ गगनं चांतरिक्षं च मही चैव प्रकंपिता । यक्षा भूताः पिशाचाश्च तथा विद्याधरोरगाः ॥ चकंपिरे भयत्रस्ता दृष्ट्वा शक्तिं समुद्यताम् । प्रतिस्रोतः प्रवृत्ताश्च गंतुं वै निम्नगास्तदा ॥ हाहाभूतमिदं सर्वं दृष्ट्वा शक्तिं समुद्यताम् । अप्यादाय शुभां शक्तिं लक्ष्मणं रावणोऽब्रवीत् ॥ सुदृष्टः क्रियतां लोको लक्ष्मण त्वं हि तापसः । स्मर त्वं मातापितरौ भार्यां च सुहृदस्तथा ॥ राममामन्त्र्य क्षिप्रं सुग्रीवं च विभीषणम् । अस्माल्लोकादमुं लोकमचिरात्त्वं गमिष्यसि ॥ कार्तिकेयं कुमारं हि समाराध्य पुरा भृशम् । सम्प्राप्तेयं मया शक्तिरेकशत्रुविनाशिनी ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-स्वष्टबाणम० । ४. रा$_2$ फ म-०त्रुनाशिनीं । भ-एकशत्रुविनाशिनीं ॥ ५. भ-स्वेन ॥ ६. प्र रा$_2$-०समस्वना ॥ ७. रा$_2$ फ म भ-अभ्यप० ॥ ८. प्र-राघवायेति । ९. भ-महाद्युते । १०. अतः परमधिकः पाठः—भ-इत्येवं ध्यायतस्तस्य राघवस्य महात्मनः ॥ ११. ल$_1$-०णं रणमूर्धनि ॥ १२ रा$_1$ ल$_1$ ल$_2$ ब अ प्र-सा वेगेन जगाम यत् ॥ १३. रा$_2$ फ म-वर्जं-शक्तिनि० ॥ १४. प्र रा$_2$ फ म-प्रेक्ष्य ।

भ्रातृ-स्नेहेन मनसा[1] विषण्ण-वदनोऽभवत्[1] ॥३६॥ [३७
३९] स मुहूर्तम् इव[2] ध्यात्वा[2] बाष्प-व्याकुल-लोचनः ।
बभूव संरब्ध-तरो युगान्ताऽग्निर् इवोत्थि (द्‌-स्थि) तः[3] ॥३७॥[३८
४०] न वि-षादस्य[4] कालोऽयम् इति सं-चिन्त्य राघवः । [३९पू
ततस् तु नि-शितैर् बाणैर् वीरो दशरथाऽऽत्मजः ।[5] [N
४१] चक्रे सु-तुमुलं युद्धं रावणस्य वधे[6] वृतः[6] ॥[7]३८[7]॥[३९पू

इत्यार्षे रामायणे युद्ध-काण्डे[8] लक्ष्मण-शक्ति-भेदो[9]
नामैकोनाशीतितमः सर्गः ॥ ७९ ॥

---

## [ वं-८१ ]= [ अशीतितमः सर्गः ] =[ दा-१०१ ]

तं ददर्श तदा[10] रामः शक्त्या[11] निर्-भिन्नम्[11] आ-हवे ।
१] लक्ष्मणं रुधिराऽऽदिग्धं स-पन्नगम् इवाऽचलम्[12] ॥१ ॥[४०
२पू] ताम्[13] अस्मै[13] प्र-हितां शक्तिं रावणेन बलीयसा ।[14]
यत्नेन[15] ते[15] हरि-श्रेष्ठा न शेकुर् अप-कर्षितुम् ॥२ ॥
३] अर्दितं[16] चैव बाणौघैः[17] क्षिप्र-हस्तेन रक्षसा । [४१
N] सौमित्रिं[18] चैव भित्त्वा सा विवेश[18] धरणी-तलम् ॥३ ॥[४२
तां कराभ्यां परा-मृष्य रामः शक्तिं भयाऽऽवहाम् ।
४] बभञ्ज सम्-अरे[19] क्रुद्धो बल-वान्[20] अप-कृष्य च[20] ॥४ ॥[४३

---

१. भ–महता विषण्णहृदयोभवत् ॥ २. भ–अनुध्यात्वा । ३. भ–इव ज्वलन् ॥ ४. रा$_{1}$ अ–विवादस्य । ५. म–नास्ति । ६. रा$_{1}$–वधे कृतः । रा$_{2}$ फ–वधे युतः । भ–वधोद्यतः । ७. अतः परमधिकः पाठः—भ–स तं ममंथाशु सरथध्वजं च दशाननं बाणगणेन राघवः । प्रपूरयामास नभश्च संयुगे शरार्दितश्चापि मुमोह रावणः ॥ म भ–भिन्नेषु–स कीर्यमाणः शरजालवृष्टिभिर्महात्मना दीप्तधनुष्मता रणे । ततोऽपसर्पद्रणसन्निकर्षाद्यथानिलेनाभिहतो बलाहकः ॥ ८. रा$_{1}$ प्र भ–लंकाकांडे । म–युद्धपर्वणि । ९. रा$_{2}$–०शक्त्यभिघातो । भ–शक्तिभेदः ॥ १०. भ–ततो । ११. अ–शक्तिनि० । १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–इवानलं ॥ १३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–तेनास्मै । म–तां तस्य । भ–तामस्य । १४. अतः परमधिकः पाठः—भ–सुग्रीवोऽथांऽगदश्चैव तथा हनूमदादयः ॥ १५. भ–यत्नेनैते । १६. रा$_{1}$ ल$_{1}$ अ प्र म भ–अर्दितास् । १७. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ–ते बाणैः । १८. भ–लक्ष्मणं चापि सा भित्त्वा प्रविष्टा ॥ १९. भ–बलवान् । २०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब फ म–०कर्षं च । भ–निश्चकर्ष च वीर्यवान् ॥

तस्य निष्-कर्षतः[1] शक्तिं नाराचान् दीप्त-तेजसः[2] ।
५] नि-चखान दश-ग्रीवः सर्व-गात्रेषु[3] वीर्य-वान्[3] ॥५ ॥ [४४
अ-चिन्तयित्वा तान् बाणान् समुत्था(द्-स्था)प्य च लक्ष्मणम् ।
६] अब्रवीद् धनु-मन्तं च सु-ग्रीवं चैव[4] वानरम्[4] ॥६[5] ॥ [४५
लक्ष्मणं सम्परि-ष्वज्य नीत्वा चैव स्वम् आ-लयम् ।[6]
N] कुरुध्वं स्तोककस्येव[7] घर्माऽन्ते[8] मेऽद्य[8] दर्शनम् ॥[9]७ ॥ [४६
अस्मिन् मुहूर्ते न चिरात् सत्यं प्रति-शृणोमि[10] वः ।
१०] अ-रावणम् अ-रामं वा जगद् द्रक्ष्यथ वानराः[11] ॥८ ॥ [४७
राज्य-नाशं[12] वने वासं दण्डके परि-सर्पणम्[13] ।
१५] वैदेह्याश् च पराऽऽमर्षं[14] रक्षोभिश् च समा-गमम्[15] ॥९ ॥ [४८
एतद् दुःखं महा-घोरं क्लेशं च[16] निरयोपमम्[16] ।
१६] त्यक्ष्यामि सर्वम् एवाऽहं[17] हत्वेमं राक्षसं[17] रणे ॥१०॥ [४९
यद्-अर्थं वानरं सैन्यं समा-नीतम्[18] इदं मया ।
१७] सु-ग्रीवश् च कृतो राजा तं हनिष्यामि रावणम् ॥११[19]॥ [५०
यद्-अर्थं सागरः क्रान्तः सेतुर्[20] बद्धश्[20] च सागरे[21] ।
१८] सोऽयम् अद्य रणे[22] पापश् चक्षुर्-विषयम् आ-गतः ॥१२॥ [५१
चक्षुर्-विषयम्[23] आ-गत्य[23] नाऽयं जीवितुम् अर्हति ।
१९] दृष्टिं दृष्टि-विषस्येव सर्पस्य समुपाऽऽगतः[24] ॥१३॥ [५२

---

१. रा$_2$–कर्षतः । २. रा$_1$–०सा । ३. रा$_1$ ल$_1$ ल$_2$ ब अ–सर्वायुधविशारदः ॥ ४. भ–अथ वानरान् । ५. अतः परमधिकः पाठः—भ–लक्ष्मणं परिवार्यैह तिष्ठत प्लवगर्षभाः । परिवृत्याप्रमादेन रक्षितव्यो महाबलः ॥ पराक्रमस्य कालोऽयं संप्राप्तो मे चिरेक्षितः । अयं स रावणः पापः पापी पापविनिश्चयः ॥ अग्रतो मे स्थितो युद्धे घर्मांते मेघवन्नदन् । स्तोकका इव मेघानां तदीक्षध्वं समागमम् ॥ ६. प्र भ–नास्ति । ७. रा$_1$ ल$_1$ ल$_2$ ब अ–०कस्याद्य । रा$_2$ फ–चातक० । ८. रा$_1$ ल$_1$ ब–घर्मार्थं बत । ल$_2$–०र्थं तव । अ प्र रा$_2$–०न्ते मेघद० । ९. म भ–नास्ति ॥ १० प्र–परिवृणोमि । ११. भ–यूथपाः ॥ १२. म–राष्ट्रभंगं । भ–राज्यभ्रंशो । १३. भ–परिधावनम् । १४. भ–०र्षौ । १५. भ–०मः ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–वातरयो० । १७. भ–अद्याहं तं हत्वा रावणं ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–समीचीनम् । १९. भ–नास्ति ॥ २०. प्र म भ–सेतुबंधश्च । २१. म–वानरैः । २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ–हतः ॥ २३. प्र रा$_2$ फ–०यमागम्य । भ–मच्चक्षुर्विषयं प्राप्य । २४. रा$_1$ ब–समजायत । रा$_2$ फ म–मम मानदाः ॥

सुखं पश्यत[1] दुर्-धर्षा[2] युद्धं[2] वानर-पुङ्गवाः ।
२०] आ-सीनाः पर्वतस्याऽग्रे[3] ममेदं रावणस्य च ॥[4]१४॥[५३
अद्य रामस्य राम-त्वं सं-पश्यन्त्व्[5] अत्र[5] सं-युगे ।
२१] त्रयो लोकाः स-गन्धर्वाः स-महेन्द्राः[6] स-चारणाः[6] ॥१५॥ [५४
अद्य कर्म करिष्यामि यल् लोकाः स-चराऽचराः ।
२२] स-देवाः कथयिष्यन्ति यावद् भूमिर् धरिष्यति[7] ॥१६॥ [५५
एवम् उक्त्वा शितैर् बाणैस् तप्त-काञ्चन-भूषणैः[8] ।
२३] आ-जघान रणे रामो दश-ग्रीवं समा-हितः[9] ॥१७॥ [५६
अथ प्र-दीप्तैर् नाराचैर्[8] मुसलैर्[10] इव रावणः ।
२४] अभ्य्-अवर्षत् तदा रामं धाराभिर् इव तोय-दः ॥१८[11]॥[५७
राम-रावण-मुक्तानाम् अन्योऽन्यम् अभि-धावताम्[12] ।
२५] शराणां[13] च[13] शराणां च बभूव तुमुलः स्वनः ॥१९॥ [५८
ते वि-कीर्णा[14] वि-शीर्णा[15] वा[15] राम-रावणयोः शराः[16] ।
२६] अन्तरिक्षात् प्रदीप्ताऽग्रा नि-पेतुर् धरणी-तले[17] ॥२०॥ [५९
तयोर् ज्या-तल-निर्घोषो राम-रावणयोर् युधि[18] ।
२७] त्रास-कः[19] सर्व-भूतानां स बभूवाऽद्भुतो[20] महान्[20] ॥२१॥ [६०

स कीर्यमाणः शर-जाल-वृष्टिभिर्
महौजसा[21] दीप्त-धनुष्मता रणे ।
भयात् प्र-दुद्राव सम्-एत्य रावणो
N] यथाऽनिलेनाऽभि-हतो बलाहकः ॥२२[22]॥[६१

इत्यार्षे रामायणे युद्ध-काण्डे[23] रावण-विद्रावणं[24] नामाऽशीतितमः सर्गः[24] ॥ ८० ॥

---

१. भ–पश्यंतु । २. रा$_1$ ल ल$_2$ ब अ प्र–०र्षं युद्धे । ३. भ–पर्वताग्रेषु । ४. रा$_1$ ल$_1$ ल$_2$ ब अ म–०नास्ति ॥ ५. भ–पश्यन्तु मम । ६. भ–सहदेवर्षिचारणाः ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–भविष्यति ॥ ८. ब–नास्ति ॥ ९. रा$_2$ फ म भ–०हितैः ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ–मुसुलैर् । भ–मुशु० । ११. अतः परमधिकः पाठः—भ–ततो युद्धं समभवद्रामरावणयोस्तदा ॥ १२. भ–अभिनिघ्नताम् । १३. भ–समस्तानां ॥ १४. प्र रा$_2$ फ–विशीर्णा । म–विस्तीर्णा । भ–छिन्नाश्च । १५. प्र फ–विप्रकीर्णा । भ–विकीर्णाश्च । १६. भ–तदा । १७. भ–वसुधातले ॥ १८. भ–तदा । १९. रा$_2$ म भ–त्रासनः । २०. म भ–०तोपमः ॥ २१. प्र रा$_2$ फ म भ–महात्मना । २२. अ–नास्ति ॥ २३. प्र भ–लंकाकांडे । म–युद्धपर्वणि । २४. भ–रावणापक्रमणं ॥

स दत्त्वा[1] सु-महद्[2] युद्धं राघवस्य[3] निशा-चरः ।[4] [२पू

१] द्वन्द्व-युद्ध-परिश्रान्तस्[5] ततोऽप-क्रम्य[6] वै[6] स्थितः ॥१ ॥ [N

सन्नि-कर्षाद् अप-क्रान्ते किं-चित्[7] तस्मिन् निशा-चरे । [N

२] वि-श्राम्यन्तं समा-लक्ष्य सु-षेणं राघवोऽब्रवीत्[8] ॥२ ॥ [२उ

एष[9] रावण-वेगेन लक्ष्मणः पातितो[10] भुवि ।

३] सर्प-वच्[11] चेष्टते[12] वीरो मम शोकम् उद्-ईरयन् ॥३ ॥ [३

शोणिताऽऽर्द्रम् इमं वीरं प्राणात्[13] प्रिय-तरं[13] मम ।

४] पश्यतो बत[14] का शान्तिर्[15] योद्धुं पर्याकुलाऽऽत्मनः ॥४ ॥ [४

अयं हि समर-श्लाघी भ्राता मे शुभ-लक्षणः ।

५] यदि पञ्च-त्वम् आ-पन्नः किं मे प्राणैर् जयेन वा ॥५ ॥ [५

मज्जतीऽव हि मे वीर्यं भ्रश्यतीऽव कराद् धनुः ।

६] परि-षीदन्ति मे प्राणा दृष्टिर् बाष्प-वशं गता ॥६ ॥ [६

चिन्ता मे वर्धते तीव्रा मुमूर्षा चोप-जायते ।

७] अ-जेयं नि-हतं दृष्ट्वा लक्ष्मणं[16] रण-मूर्धनि ॥७ [17]॥ [७

तन् न युद्धेन[18] मे[18] कार्यं न प्राणैर् न च सीतया ।

८] भ्रातरं नि-हतं दृष्ट्वा[16] लक्ष्मणं पांसु-गुण्ठितम् ॥८ ॥ [१०

किं मे युद्धेन किं प्राणैर् युद्ध-कार्यं न विद्यते ।

९] यत्राऽयं नि-हतः शेते रण-मूर्धनि लक्ष्मणः ॥[19]९ ॥ [११

---

१ रा$_2$ फ–वर्जं—कृत्वा। २. म–तुमुलं। ३. रा$_2$–०वाय। ४. टि. भ–अस्मिन् सर्गे वंगीयपाठमनुसरतीति त्यक्तः। ५. रा$_1$–द्वन्द्वं युद्धे प०। ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तत्याज क्रमणे ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब–गते। ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–वाक्यमब्र० ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–पश्य। १०. म–वर्जं—पतितो। ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–चर्मवद्। १२. रा$_1$ रा$_2$ प्र फ–वेष्टते। ल$_1$ ल$_2$ ब अ–वेष्टितो ॥ १३. रा$_2$ फ म–प्राणैरिष्टतरं। १४. अ प्र रा फ म–मम। १५. म–शक्तिर् ॥ १६. म–नास्ति। १७. टि. तु. ८–मश्लोकादारभ्य २३–शश्लोकपर्यन्तं गपू. २५-श स. ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ–युद्धे मया। १९. अतः परमधिकः पाठः—रा$_2$ फ–अद्यैव तत्परित्यक्ष्ये जीवितं त्वहमात्मनः। लक्ष्मणस्य शिरो गात्रे संस्थाप्यैव तु राघवः ॥ रुरोद करुणं दुःखं लक्ष्मणं शुभलक्षणम्। हा भ्रातः स्नेहसर्वस्व हा भ्रातर्मम जीवितम् ॥ सर्वान्भोगान्परित्यज्य मया सह वनं गतः। वनतो व्यसनं प्राप्तः सीताव्यसनदुःखितः ॥ क्व गच्छसि महाबाहो सौमित्रेभ्रातृवत्सल। विचेष्टमानं मां हि त्वमुच्छ्वसंतं मुहुर्मुहुः ॥

किं नु राज्येन मे कार्यं लक्ष्मणो यत्र पातितः ।
N] कथं शक्ष्यामि सं-सोढुं सोढुं दत्तं सु-मित्रया ? ॥१०[1]॥ [१३
किं नु वक्ष्यामि कौसल्यां मातरं किं नु कैकयीम् ।
N] भ्रातरं किं नु वक्ष्यामि शत्रु-घ्नं च महा-बलम् ॥११॥
सह येन वनं यातो विना तेन गमे कथम् । [१४
N] इहैव मरणं श्रेयो न तु बन्धु-विगर्हणम् ॥१२॥ [१५
किं मया दुष्-कृतं कर्म कृतम् अन्यत्र जन्मनि[2] ।
N] येन मे धार्मिको भ्राता म्रियते चाऽग्र-तः स्थितः ॥१३॥ [१६
हा भ्रातर् मनुज-श्रेष्ठ शूराणां प्र-वरः प्र-भुः ।
N] एकाकी कस्य मां त्यक्त्वा पर-लोकाय गच्छसि ॥१४॥ [१७
वि-लपन्तं च शोकाऽऽर्तं किं नु मां नाऽभि-भाषसे ।
N] उत्-तिष्ठ वीर किं शेषे मां दीनं पश्य चक्षुषा ॥१५॥ [१८
शोकाऽऽर्तस्य प्र-मत्तस्य पर्वतेषु वनेषु च ।
N] मा[3] शोचस्व[4] महा-बाहो सीतां प्रति महा-बल[5] ॥१६॥ [१९
तत्र गत्वाऽऽनयिष्यामि यत्र नीता तु मैथिली ।
N] प्रति-ज्ञा सा च काकुत्स्थ या त्वया भाषिता पुरा ॥१७॥ [N
एवम् आ-श्वास्य मां पूर्वं सौमित्रे वि-जने वने ।
N] अ-मित्रेषु परि-त्यज्य कस्य मां गन्तुम् अर्हसि[6] ॥१८॥ [N
हा हतोऽस्मि महा-बाहो त्वया वीर विना-कृतः ।
N] वि-लपन् इति दुःखाऽऽर्तो नि-पपात मही-तले ॥१९॥ [N
सं-ज्ञां सम्प्राऽऽप्य तेजस्वी सु-षेणं राम इत्य् अथ[7] ।
N] उवाच मधुरं वाक्यं शृण्वं[8](?णु)तु(?त्वं)मम[9] वानराः(?र)॥२०॥[N
शृणु सत्यं महा-बाहो न मे प्राणैः प्र-योजनम् । [N
N] यद् अयं नि-हतः शेते रण-मूर्धनि लक्ष्मणः ॥२१॥ [११उ
वि-जयोऽपि हि मे सम्यग् लक्ष्मणेन विना कथम् ।
N] अन्धस्येवोदितश् चन्द्रः कां प्रीतिं जनयिष्यति ॥२२[10]॥[N
रामम् एवं ब्रुवाणं तु शोक-विह्वलितेन्द्रियम् ।

---

१. अत आरभ्य रा$_2$ फ म-१०-२२-शश्लोकान्तः पाठो नास्ति ॥ २. प्र-कर्मणि ॥ ३. अ-मां । ४. प्र-विभूय । ५. प्र-महाभुज ॥ ६. अ-इच्छसि ॥ ७. प्र-अथो । ८. प्र-शृण्वतां । ९. प्र-सर्ववानराः । ल$_1$-मम वानरः ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-श्लोकोऽयं ८-मश्लोकात्परं "लक्ष्मणे विनिपातिते इति" पाठभेदेन पूर्वमपि पठितः ॥

N] आ-श्वासयन् उवाचेदं सु-षेणः परमं वचः ।।२३।। [२०
त्यजेमां नर-शार्दूल बुद्धि-वैक्लव्य-कारिणीम्[१] ।
३०] शोक-संजननीं चिन्तां[२] तुल्यां बाणैश्[३] चमू-मुखे ।।२४।। [N
नैष पञ्च-त्वम् आ-पन्नो[४] लक्ष्मणो लक्ष्मि-वर्धनः[५] ।
३१] न ह्य् अस्य वि-कृतं वक्त्रं नैवाऽस्याऽऽवर्तम् आ-गतम् ।।२५।। [२१
सु-प्रभं[६] च प्र-सन्नं च[६] मुखम् अस्य हि[७] दृश्यते[७] ।
३२] पद्म-पत्र-निभौ हस्तौ सु-प्रसन्ने च लोचने ।।२६।। [२२
नेदृशं दृश्यते[८] रूपं गताऽसूनां विशां-पते । [२३पू
३३] मा वि-षादं कृथा देव[९] स-प्राणोऽयम् अरिं-दम[१०] ।।[११]२७।। [२४उ
पश्य चाऽस्य प्र-सुप्तस्य शस्त्र-गात्रस्य[१२] भू-तले ।[१२]
३४] सोच्छ्वासं[१३] हृदयं[१३] वीर कम्पमानं मुहुर्-मुहुः ।।२८।। [२५
एवम् उक्त्वा महा-प्राज्ञः सु-षेणो राघवं[१४] वचः[१४] ।
N] समीप-स्थम्[१५] उवाचेदं हनू-मन्तं[१६] प्लवं-गमम्[१६] ।।२९।। [२६
सौम्य शीघ्रम् इतो गत्वा शैलं तं[१७] सु-महोदयम्[१७] ।
N] पूर्वं ते कथितो योऽसौ वीर जाम्ब-वता तदा ।।[१८]३०।। [२७
दक्षिणे शिखरे जाताम् ओषधीं ताम् इहाऽन्-अघ[१९] ।
N] विशल्य-करणीं नाम शीघ्रम्[२०] आ-नय तां[२०] शुभाम्[२१] ।।३१।। [२८
सं-जीवनीं तथा वीर सन्धिनीं च महौषधीम् ।[२२]
सवर्ण-करणीं[२३] चैव दिव्यां देव-विनिर्मिताम् ।[२२]
N] सञ्जीवनाऽर्थं वीरस्य लक्ष्मणस्य त्वम्[२४] आ-नय[२४] ।।३२।। [२९
समुद्-उद्रं समति-क्रम्य लवणोदं महोदधिम् ।[२५]
N] क्षीरोदं च समुत्-तीर्य कुश-द्वीपम् अतीत्य च ।।[२६]३३।। [N

---

१. रा$_2$ म-०कारिकां । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-विद्यां । ३. रा$_1$ ल$_2$ अ रा$_2$ म-बाणैश् ॥ ४. प्र-आयातो । ५. म-लक्षणान्वितः ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-प्रसन्नं च शुभं चैव । ७. रा$_2$ फ म-निरीक्ष्यतां ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-विद्यते । ९. रा$_2$ फ-शूर । १०. रा$_2$-वर्ज—०दमः । ११. म-नास्ति ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब-शस्त्रघातस्य । १३. म-नास्ति ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-प्रति राघवं । १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-हनूमंतम् । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-स्थितं रामस्य पार्श्वतः ॥ १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-एव म० । १८. म-नास्ति ॥ १९. रा$_2$ फ-इहानय । २०. रा$_2$ फ म-सवर्णकरणीं । २१. म-तथा ॥ २२. रा$_2$ फ म-नास्ति । २३. रा$_1$-स्वव० । ल$_2$-सुव० । २४. रा$_2$ फ-महात्मनः ॥ २५. म-अत आरभ्य ४३-शश्लोकपर्यन्तं नास्ति । २६. रा$_2$ फ-कुशद्वीपमतिक्रम्य क्षीरोदं च महार्णवम् ॥

तस्माद् उत्तर-तो भागे कुश-द्वीपस्य[1] वायु-ज[1] ।
N] सं-जीवकौ[2] समौ दिव्यौ वि-शल्यौ[3] देव-निर्मितौ ॥३४॥ [N
चन्द्रश् च नाम्ना द्रोणश् च पर्वतौ तौ महोदयौ ।
४९उ] अ-मृतं यत्र वि-न्यस्तं तत्र जाता महौषधीः ॥३५॥ [N
५०पू] तं च गन्धर्व-राजानो रक्षन्ते[4] शैलम्[4] उत्-तमम् ।
५१उ] तैश् चाऽपि सह योद्धव्यं गन्धर्वैर् युद्ध-दुर्मदैः ॥३६॥ [N
बहु-मायाश् च मार्गे[5] तु[5] राक्षसाः काम-रूपिणः ।
५७] अ-प्रमत्तेन गन्तव्यं त्वया वीर महा-बल ॥३७॥ [N
लक्ष-त्रयं योजनानां शतानि दशभिर्[6] दश ।
N] यातव्यो वीर ते सोऽध्वा द्वि-गुणस् तु गताऽऽगतैः ॥३८॥ [N
यावन् न क्षीयते रात्रिर् यावन् नोदयते रविः ।
५८] तावत् त्वया महा-बाहो आ-गन्तव्यं महा-जव[7] ॥३९॥ [N
निशा-क्षये तु[8] सं-पन्ने[8] उद्-इते तु दिवा-करे ।
N] मन्द-वीर्यास् ततो वीर ओषध्यो हि भवन्ति वै ॥[9]४०॥ [N
N] लक्ष्मणोऽपि वि-नश्येत नियतं शर्वरी-क्षये ।
ओषधीनां तु चिह्नानि कथयामि महा-कपे ॥४१॥ [N
६०] पीतलानि[10] तु[11] पत्राणि फलानि हरितानि च ।
६१उ] पुष्पाणि चैव तासां तु रक्तानि हरि-पुङ्गव ॥४२॥ [N
त्वर वीर महा-बाहो रामम्[12] आ-मन्त्रयस्व[12] च ।
५२] वि-भीषणं च[13] सु-ग्रीवं[13] जाम्ब-वन्तम् अथाऽङ्ग-दम् ॥४३॥ [N
४१पू] एवम् उक्ते सु-षेणेन रामोऽप्य् एनम् अथाऽब्रवीत् ।[14]
४२पू] गच्छ वीर महा-बाहो भ्रातृ-भिक्षां ददस्व मे ।[15]
४३पू] चतुर्णाम् एव भ्रातृणाम् अस्माकं पञ्चमो भव[16] ॥४४॥ [N
एवम् उक्तोऽथ[17] हनुमान् नादं चक्रे[18] कपीऽऽश्वरः[18] ।
N] येन सा चलिता लङ्का क्षुभितश् च महोदधिः ॥४५॥ [N

---

१. रा$_2$ फ—क्षीरोदस्य हरीश्वर। २. ल$_2$ ब—सुजी०। ३. रा$_2$ फ—वर्जं— विशालौ॥ ४. रा$_2$ फ—०न्ति गिरिम्॥ ५. रा$_2$ फ—मार्गेषु॥ ६. रा$_2$ फ—दशतीर्॥ ७. रा$_2$ फ—महाबल॥ ८. प्र रा$_2$ फ—निवृत्ते तु। ९. रा$_2$ फ—भवंति स्म महावीर ओषध्यो मंदतेजसः॥ १०. रा$_2$ फ—शीत०। ११. प्र—हि॥ १२. प्र रा$_2$ फ—पार्थिवं मं०। १३. रा$_1$ ल$_1$ ल$_2$ ब अ—ससु०॥ १४. म—इत्येवमुक्तो हनुमान्सुषेणेन महौजसा। १५. म—नास्ति। १६. रा$_2$ फ—भवान्॥ १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—उक्तस्तु। १८. रा$_2$ फ—उच्चैर्ननाद च॥

पतितं पुष्प-वर्षं च दुन्दुभिश्[1] चाऽऽहतो[1] दिवि ।
N] प्रणि-पत्य ततो रामम् अब्रवीद् वायु-नन्दनः ।।[2]४६।। [N
वैक्लव्यं[3] गच्छ मा देव मयि भृत्येऽव-तिष्ठति ।[4]
N] अहं शैलवनोपेतां सप्त-द्वीपां स-सागराम् ।।४७।। [N
महीम् अतीत्याऽऽगमिष्ये यावन् नोत्-तिष्ठते रविः ।[5]
N] रामस्[6] तु[6] पुनर् एवेदम् उवाच पवनाऽऽत्मजम् ।।४८।। [N
५५३उ] त्वर वीर त्वया[7] गत्या आ-नयस्व[7] महौषधीः ।
N] स्वस्ति तेऽस्तु महा-सत्त्व गच्छ यात्रां प्र-साधय ।।४९।। [N
एवम् उक्तस् तु रामेण सु-ग्रीवेणाऽङ्ग-देन च ।
सु-वेलम् अधिसं-रुह्य सं-पीड्याऽऽप्लुत्य[8] चाऽम्बरम्[8] ।
६३उ] जगाम[9] त्वरया श्री-मान्[9] उपर्य्-उपरि सागरम् ।।५०[10]।। [N
व्रजन्तं चैव वि-ज्ञाय रावणः पवनाऽऽत्मजम् ।[11]
६४] अब्रवीत्[12] स्व-समीप-स्थं[12] काल-नेमिं निशा-चरम् ।[13]
चतुर्-मुखं चतुर्-बाहुं चतुर्-दंष्ट्रं मनो-जवम् ।।५१।। [N
६५] श्रूयतां वचनं मह्यं[14] काल-नेमे निशा-चर ।[13]
हनु-मान् गच्छते वीरः कुश-द्वीपं मनो-जवः[15] ।।५२।। [N
६६] ओषध्य्-अर्थं महा-सत्त्वो यत्र तौ वर-पर्वतौ ।
N] द्रोणो[16] नाम्नाऽथ चन्द्रश्[16] च तयोर् जाता महौषधीः ।।५३।। [N
ताश्[17] चाऽनेतुं प्र-यानस्य[17] व्रज पूर्वं निशा-चर[18] ।
६७] कुरु वि-घ्नं ततो गत्वा यावद् उत्-तिष्ठते[19] रविः ।।५४।। [N
N] तत्र गत्वा महा-बाहो मायया[20] कुरु चाऽऽश्रमम् ।
६८उ] ऋषि-रूप-धरो भूत्वा आतिथ्यं[21] कुरु मा चिरम्[21] ।।५५।। [N

---

१. रा$_2$–दुंदुभ्यश्च हता । २. म–रामं प्रदक्षिणं कृत्वा मंदरं देवसेवितं ॥ ३. प्र रा$_2$ फ–विक्लवं । ४. म–अत आरभ्य ५०-शश्लोकपूर्वार्धं यावन्नास्ति ॥ ५. रा$_2$ फ–वर्जं-क्रमित्वा पुनरागच्छे यावदुत्ति० । ६. रा$_2$ फ–राघवः ॥ ७. रा$_2$ फ–त्वयावश्यमानेतव्या ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–क्रमित्वा वायुनंदनः । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तत्रोत्प्लुत्य गतो वीर । १०. म–ततो निमिषमात्रेण वेगवान्मारुतात्मजः । जगाम पर्वतश्रेष्ठमोषधीशतमंडितम् ॥ ११. म–अत आरभ्य १२१–शश्लोकपूर्वार्धं यावन्नास्ति । १२. रा$_2$ फ–आज्ञापयन् स० ॥ १३. प्र–नास्ति ॥ १४. फ–मेऽद्य । १५. रा$_2$ फ–वर्जं-महाजवः ॥ १६. प्र रा$_2$ फ–चन्द्रो नामाथ द्रोणश् ॥ १७. रा$_1$ ब अ प्र–गच्छं तं तामानयितुं । १८. प्र रा$_2$ फ–विहायसा । १९. रा$_2$–चोत्० ॥ २०. रा$_2$ फ–वर्जं–ऋषिवत् । २१. रा$_2$–आतिथ्यनिरतो भव ॥

७३पू] यत्र सा वसति ग्राही अ-दृश्या[1] प्राण-हारिणी[1] ।
७५उ] देवता अपि गृह्णाति[2] का शङ्का वानरेषु च ॥५६॥ [N
तत्र त्वयैष हन्तव्य उपायेन प्लवं-गमः ।
७६] हनू-मति वि-नष्टे तु लक्ष्मणो न भविष्यति ॥५७॥ [N
लक्ष्मणस्य वि-नाशेन रामोऽपि न भविष्यति ।
७७] रामस्य तु वि-नाशेन सु-ग्रीवोऽपि[3] वि-नश्यति[3] ॥५८॥ [N
सु-ग्रीवस्य वि-नाशेन अङ्ग-दोऽपि[4] वि-नश्यति[4] ।
७८पू] अङ्ग-दस्य वि-नाशेन क्षयं यास्यन्ति वानराः ॥५९॥ [N
७९पू] ध्रुवम् अस्मज् जयो[5] वीर गच्छ शीघ्रं महा-बल ।
६९पू] राज्याऽर्धं[6] ते[6] प्र-दास्यामि कृते कर्मणि राक्षस ॥६०॥ [N
एवम् उक्तो[7] राक्षसस् तु[7] प्रणि-पत्य दशाऽऽननम् ।
८१] गतो[8] जवेन[8] सम्प्राऽऽप्तः[9] शीघ्रं[10] तं[10] चन्द्र-पर्वतम् ॥६१॥ [N
तस्मिन् पर्वत-पार्श्वे तु[11] वि-दधे[11] माययाऽऽश्रमम् ।
८२] अग्नि-होत्रेण दिव्येन उपवास-कृशोदरः ॥६२॥ [N
जटा-मुकुट-भारेण[12] चीर-वल्कल-संवृतः ।
८३] दीर्घ-श्मश्रु-धरो भूत्वा तस्थौ जाप्य-परायणः[13] ॥६३[14]॥[N
१४२उ] अ-चिरेण तु सम्प्राऽऽप्तस्[15] तत्र कालेन मारुतिः[15] ।
१४३पू] अपश्यद् आ-श्रमं दिव्यं[16] कदली-षण्ड-मण्डितम्[17] ॥६४॥ [N
ऋषि-रूप-धरं चैव ह्य्[18] अपश्यद् राक्षसं तु तम्[18] ।
N] हनू-मान् अभि-वाद्यैव[19] बली[19] तस्याऽग्र-तः स्थितः ॥६५॥ [N
१४४पू] स्व्-आगतं चाऽब्रवीत् सोऽपि अब्रवीत् तं च वाग्-यतः ।
वि-श्रमस्व कपि-श्रेष्ठ भुक्त्वा पीत्वा च गम्यताम्[20] ॥६६॥ [N

---

१. रा$_{1}$—०श्या प्राणदारिणी । रा$_{2}$ फ—अमोघा प्रा० । ल$_{1}$ ल$_{2}$ ब प्र—०श्या प्राणधारिणी । २. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब—गृह्णंति ॥ ३. रा$_{2}$ फ—०वो न भविष्यति ॥ ४. रा$_{2}$ फ—०दो न भविष्यति ॥ ५. अ प्र फ—वर्जं—जयं । ६. प्र रा$_{2}$ फ—अर्धराज्यं ॥ ७. रा$_{2}$ फ—उक्तं तु तद्रक्षः । प्र—उक्तस्त्वसौ रक्षः । ८. ल$_{1}$ ल$_{2}$—ततो ज० । रा$_{2}$ फ—मनोज० । ९. रा$_{2}$ फ—वेगेन । १०. प्र—शुभ्रं तं । रा$_{2}$फ—संप्राप्तश् ॥ ११. रा$_{2}$ फ—सोऽकार्षीन् ॥ १२. प्र—०टजूटेन । १३. फ—वर्जं—जप्यप० । १४. अतः परमधिकः पाठः—रा$_{2}$ फ—गृह्याक्षमालां हस्तेन तस्य गमनकांक्षया । हनुमानपि तेजस्वी पितुस्तुल्यपराक्रमः ॥ १५. रा$_{1}$—कालेन यत्रासौ कृतको मुनिः । १६. रा फ—वर्जं—घोरं । १७. रा$_{2}$ फ—०लीखंड० ॥ १८. रा$_{2}$ फ—तं चापश्यन्निशाचरं । १९. रा$_{2}$ फ—०वाद्याथ प्राह ॥ २०. रा$_{2}$ फ—वर्जं—रम्यताम् ॥

१४५उ] तस्य तद् वचनं श्रुत्वा हनू-मान् वाक्यम् अब्रवीत् ।
१४६उ] श्रूयते[1] यदि किष्किन्धा वानराणां महा-पुरी ॥६७॥ [N
सु-ग्रीवो वसते[2] यत्र वानरेशो[2] महा-बलः ।
१४७] तस्य मित्रं महा-तेजा रामो दशरथाऽऽत्मजः ॥६८॥ [N
तस्य भार्या जन-स्थानाद्[3] धृता[3] सीतेति वि-श्रुता ।
१४८] मायाविना राक्षसेन रावणेन दुर्-आत्मना ॥६९॥ [N
तस्याऽर्थे[4] तु महद् युद्धं घोरं परम-दारुणम् ।[5]
१४९] राम-भ्राता महा-वीरो लक्ष्मणो नाम वि-श्रुतः ॥[6]७०॥ [N
शक्त्या[7] विनि-हतो[7] विप्र[8] निर्-भिन्नो[9] मेदिनीं गतः ।
१५०] तस्याऽर्थेऽहम् इह प्राऽऽप्त ओषधीः प्रति तापस ॥७१॥ [N
१५१पू] विशल्य-करणी नाम[10] सेह[10] जाता शिलोच्चये ।
१५२पू] वि-लम्बो[11] नैव कर्तव्यो[11] यदि जानासि कथ्यताम् ॥७२॥ [N
यावत् स-चन्द्र-नक्षत्रा[12] न रात्रिः[13] क्षयम् आप्नुयात्[13] ।
N] तावन् मयाऽद्य गन्तव्यं गृहीत्वा परमौषधीः ॥७३॥ [N
पानीयं पातुम् इच्छामि शीघ्रं[14] सं(?स)भा(?मा)व(?न)यस्व मे ।
N] येन तृप्तिं गमिष्यामि[14] तत् कुरुष्व महा-तपः ॥७४॥ [N
१५३उ] तस्य तद्-वचनं श्रुत्वा रक्षो वचनम् अब्रवीत् ।
N] श्रूयतां वचनं मह्यं यत् सत्यं वानरोत्तमः[15] (?म) ॥७५[16]॥[N
इदं महत् सरो दिव्यं तपसा[17] निर्-मितं मया ।
१५५] अस्मिन् पीत्वा तु पानीयं मासं न भवति क्षुधा ॥७६[16]॥[N
तस्य तद्-वचनं श्रुत्वा एवम् अस्त्व् इति मारुतिः ।
१५६] अव-तीर्य सरो दिव्यं[17] पानीयं पातुम् उद्-यतः ॥७७॥ [N

---

१. रा$_2$ फ-श्रुता ते ॥ २. रा$_2$ फ-यत्र वसति वानरेंद्रो ॥ ३. रा$_2$ फ-०स्थाने हृता ॥ ४. टि. सन्धिरार्षः द्र० । ५. रा$_2$-तस्या निमित्तं सुमहद्युद्धं घोरमासीत्सुदा० । फ-तस्या निमित्तं सुमहायुद्धमासीत्सुदा० । ६. रा$_2$ फ-तस्य भ्राता राघवस्य लक्ष्मणो नाम वीर्यवान् ॥ ७. रा$_2$ फ-शक्त्यासौ ताडितो । ८. रा$_1$ ल$_1$ ल$_2$ ब अ-वीर । ९. रा$_2$ फ-निर्भग्नो ॥ १०. रा$_2$ फ-वर्ज-चैव इह । ११. रा$_1$ अ-वर्ज-०बं न च कर्तव्यं ॥ १२. रा$_2$ फ-०न्द्रतिलका । १३. ल$_1$ ल$_2$ ब प्र-शर्वरी नहि प्रत्ययात् । रा फ-प्रयातीह शर्वरी ॥ १४. रा$_2$ फ-वर्ज-नास्ति । १५. रा फ-०राधिपः । १६. ल$_1$ ल$_2$ ब प्र-नास्ति ॥ १७. फ-नास्ति ॥

पिबतस् तस्य पानीयं पद्म-पत्र-पुटेन तु ।
१५७] उदकाऽभ्यन्तरे ग्राही पादं जग्राह दक्षिणम् ॥७८॥ [N
ततस् तां स[1] महा-वेगो[2] हनू-मान् मारुताऽऽत्मजः[3] ।
१५८] स्थले[4] नि-पातयित्वा[4] तु नखैस् तीक्ष्णैर् व्य्-अदारयत् ॥७९॥ [N
१५९पू] नि-हता तत्-क्षणे दिव्या साऽऽकाशेऽधि-ष्ठिताऽब्रवीत् ।
N] कस् त्वं वानर-रूपेण मम मृत्युर् इहाऽऽगतः ॥[5]८०॥ [N
श्रोतुम् इच्छा (?च्छे) महा-बाहो किम्-अर्थं[6] त्वम् इहाऽऽगतः ।
N] ग्राह्यास् तु वचनं श्रुत्वा हनू-मान् वाक्यम् अब्रवीत् ॥[6]८१[5]॥[N
मा वि-षादं कुरु त्वं हि मरणं प्रति सुन्दरि ।
N] हनू-मान् वायु-पुत्रोऽहं[7] सम्प्राऽऽप्तो गन्ध-मादनम् ॥८२[8]॥[N
तस्य[9] तद् वचनं श्रुत्वा ग्राही वचनम् अब्रवीत् ।
N] मां वि-जानीह्य् अप्-सरसं विद्युन्-मालेति वि-श्रुताम् ॥८३॥[N
१६०] गच्छन्त्याऽऽकाश-मार्गेण स्वर्-भानुर् दीप्त-विग्रहः ।
१६१] ऋषिर् मयाऽव-धूतो हि[10] तेनाऽहं पातिता भुवि ॥८४॥ [N
१६२उ] अव-लिप्तेति[11] स क्रोधान् माम् उवाच महा-मुनिः ।
१६४उ] गच्छ ग्राही भवस्वेति शप्ताऽहं तेन वानर ॥८५॥ [N
इहाऽहं वसती भद्र वर्षाणाम् अयुतं शतम् ।
१६५] उक्ता च तेन ऋषिणा दीप्त-क्रोधेन मान-द ॥८६॥ [N
यदा वीरो हनू-मांस् त्वां ग्रहोष्यति जले[12] गताम्[12] ।
१६६] तदा शापाद्[13] वि-मोक्षस् ते[13] भविष्यति[14] न[15] सं-शयः[15] ॥८७॥[N
१६७उ] दिष्ट्या त्वम् इह सम्प्राऽऽप्तः शापाच् चाऽहं[16] वि-मोक्षिता ।
१६८पू] भृशं प्रीताऽस्मि ते वीर राघवाऽऽज्ञां प्र-कुर्वतः ॥८८॥[N
पापाऽऽत्मा ह्य् एष दुर्-बुद्धिर् यम् एनं मन्यसे ऋषिम्[17] ।
N] जहि[18] रक्षो महा-मायं[19] विप्र-वेशं[20] महा-बल ॥८९॥ [N

---

१. रा$_2$ फ–वर्जं–तु । २. रा$_2$ फ–महाबाहुर् । ३. ल$_1$ ल$_2$ ब प्र–पवनात्मजः । ४. रा$_2$ फ–स्थलं निर्यात० ॥ ५. अ प्र फ–नास्ति ॥ ६. रा$_2$–नास्ति ॥ ७. रा$_2$–रामदूतोऽहं । ८. फ–नास्ति ॥ ९. ल$_1$ ल$_2$ ब–ततस् ॥ १०. रा$_1$ अ–वर्जं–स ॥ ११. रा फ–वर्जं–०लिप्तो हि ॥ १२. रा$_2$–जलेचरीं । १३. रा$_1$ अ–संप्राप्तमोक्षा त्वं । १४. अ–०ष्यसि । १५. रा$_2$ फ–वर्जं–निरामया ॥ १६. ल$_1$ ल$_2$ ब प्र–अस्माद् । रा$_2$ फ–चैव ॥ १७. रा$_1$ अ–मुनिं । १८. रा$_2$ फ–वर्जं–एष । १९. ल$_1$ ल$_2$ ब प्र–०मायो । २०. ल$_1$ ल ब प्र–०वेशो ॥ रा$_2$–वेषविप्रं ॥

एष राक्षस-राजेन रावणेन दुर्-आत्मना ।
N ] प्रेषितस् त्वद्-विनाशाय काल-नेमिर् निशा-चरः ।।९०।। [N
इत्य् उक्त्वा वायु-पुत्रं सा अप्सरा काम-रूपिणी ।
N] अन्तर्-धानं गता तत्र दृश्यमाना हनू-मता ।।९१।। [N
N] ग्राह्यां गतायां हनु-मांश् चिन्तयामास बुद्धि-मान् ।
१७४पू] रक्षसां सदृशान्य् अस्य दृश्यन्ते चरितानि हि ।।९२।। [N
सु-व्यक्तं राक्षसो ह्य् एष पाप-बुद्धिर् नृशंस-कृत् ।
१७५] न हि जानाति मन्दाऽऽत्मा स्व-मृत्युं माम् इहाऽऽगतम् ।।९३।। [N
N] इत्य् एवं चिन्तयित्वा तं प्राऽऽह गत्वा निशा-चरम् ।
तिष्ठ पाप दुर्-आचार न मे जीवन् वि-मोक्ष्यसे ।।[1]९४।। [N
१७६] तस्य तद् वचनं श्रुत्वा काल-नेमिर् निशा-चरः ।[1]
१७७पू] रूपं वि-कुरुते घोरं[2] दश-नल्वं[3] प्रमाण-तः ।।९५।। [N
ऊर्ध्वं तु योजनं पञ्च धुन्वन् रूक्षाञ् छिरो-रुहान् ।
N] अष्टौ दंष्ट्राः सु-तीक्ष्णाऽग्राः सृक्किणीं चोपसं-लिहन्[4] ।।९६।। [N
विवृत-नयनो[5] घोरो[5] मेघ-स्तनित-निःस्वनः ।
N] अर्ध-दग्धम् अलातं तु[6] प्र-गृह्याऽभ्य्-एति[7] तं[7] हरिम् ।।९७।। [N
१७९उ] हनू-मान् अपि दुर्-धर्षो दश-योजनम् आ-यतम् ।
N] रूपं कृत्वा सु-विपुलं महा-कायो महा-बलः ।।९८।। [N
उत्-प्लुत्याऽऽकाश-मार्गे तु न्य्-अपतद् रक्षसो[8] हृदि[8] ।
N] तलेनैव जघानाऽऽशु वज्रपातोपमेन तम् ।।९९।। [N
N] स विनिर्भिन्न-मस्तिष्कः शिरः-स्फुटित-बन्धनः[9] ।
गताऽसुर् नि-पपातोर्व्यां काल-नेमिर्[10] निशा-चरः[10] ।।१००।।[N
१८३] तं नि-हत्य महा-नादं ननाद स महा-कपिः ।
१८४पू] तेन नादेन गन्धर्वाः प्र-बुद्धाः शैल-वासिनः ।।१०१।।[N
N] असि-शक्ति-धराः पेतुर् गदा-मुसल-पाणयः[11] ।

---

१. रा$_{2}$ फ—वर्जं—नास्ति ॥ २. रा$_{1}$ अ—भीमं । ३. रा$_{2}$—वर्जं—दशकल्पं ॥ ४. रा$_{2}$ फ—चापि सं० ॥ ५. रा$_{2}$ फ—वर्जं—विवृते नयने घोरे । ६. रा$_{2}$—च । ७. रा$_{1}$ ल$_{1}$ ब प्र—०भ्यर्दितो । अ—०ह्याभिद्रुतो ॥ ८. रा$_{2}$ फ—राक्षसोपरि ॥ ९. रा$_{2}$ फ—चिरं स्फु० । १०. रा$_{2}$ फ—विशीर्ण इव पर्वतः ॥ ११. रा$_{2}$ फ—वर्जं—०मुसुल० ।

१८४उ] वि-लोकयन्तः सहसा सं-नद्धाः[1] सर्व-तो दिशः ॥१०२॥[N
वं-८३] हत्वा निशा-चरं घोरं[2] हनू-मान् मारुताऽऽत्मजः ।
१] आ-रुरोह गिरेः[3] शृङ्गं[3] नाना-रत्न-विभूषितम् ॥१०३॥[N
आ-रुहन् स महा-शैलं गन्धर्वैर् अन्व्-अरुध्यत ।
२] कस्[4] त्वं[4] वानर-रूपेण सम्प्राऽऽप्तो निशि दारुणे ॥१०४॥[N
गन्धर्वाणां वचः श्रुत्वा हनू-मान् वाक्यम् अब्रवीत् ।
३] श्रुता वो यदि किष्किन्धा जम्बू-द्वीप-समाश्रया ॥१०५॥ N
४पू] वानराऽधिपतिस् तत्र सु-ग्रीवो नाम वि-श्रुतः ।
मित्रकार्याऽर्थम् उद्-युक्तो[5] रावणेनाऽथ वि-ग्रहे ॥१०६॥[N
६] मित्र-भ्राता राक्षसेन शक्त्या च विनि-पातितः ।
७उ] तद्-अर्थं सम्प्र-यातोऽहम् ओषधीः[6] प्रति[7] पर्वतम्[7] ॥१०७॥[N
८पू] विशल्य-करणीं नाम जानेऽहं परमौषधीम्[8] ।
N] वि-घ्नं न मे प्र-कर्तव्यं प्र-सादं कर्तुम् अर्हथ ॥१०८॥[N
८उ] अहं वानर-राजस्य भृत्यस् तु परमैर् गुणैः ।
९पू] हनू-मान् इति वि-ख्यातः स्वाम्य्-अर्थे प्राऽर्थयामि वः॥१०९॥[N
१२उ] हनू-मतो[9] वचः[9] श्रुत्वा गन्धर्वास् ते महा-बलाः ।
विचित्र-कवचाः[10] सर्वे नानाप्रहरणोद्यताः ।
१३] कोलाहलं प्र-कुर्वन्तः साऽऽयुधाः समभ्य्-अद्रवन् ॥[11]११०॥[N
N] ततो हनू-मता तूर्णं कृत्वा रूपं च दारुणम् ।[11]
१७उ] लाङ्गूलेनाऽऽहताः[12] के-चित् के-चिद् दन्तैर् वि-दारिताः ।
मुहूर्तेनाऽऽहताः सर्वे गन्धर्वा युद्ध-दुर्मदाः ॥१११॥[N
N] हत्वा गन्धर्व-वीराणां सहस्राणि चतुर्-दश ।
२१पू] पर्य्-अटन् स गिरिं सर्वं नैवाऽपश्यद्[13] इहौषधीः[14] ॥११२॥[N
चिन्तयामास हनु-मांस् तस्याश्[15] चिह्नं न लक्षये[15] ।

१. प्र-सन्नादाः ॥ २. रा$_{1}$ अ-क्रूरं । ३. रा$_{2}$ फ-गिरिं रम्यं ॥ ४. रा$_{2}$-वर्ज-कथं ॥ ५. रा$_{2}$ फ-वर्ज-इक्ष्वाको । फ-संयुक्तो ॥ ६. रा$_{2}$-०धीं । ७. फ-प्रेषितो वनं ॥ ८. ल$_{1}$ ल$_{2}$ अ प्र-प्रवरौषधीं ॥ ९. रा$_{2}$ फ-०मद्वचनं । १०. रा$_{2}$ फ-०म्रवसनाः । ११. रा$_{2}$-नास्ति ॥ १२. रा$_{1}$-लांगले० ॥ १३. रा$_{2}$ फ-नापश्यत्तां । १४. रा$_{1}$-महौ० । रा$_{2}$ फ-महौषधिं ॥ १५. रा$_{2}$ फ-कृते कर्मणि निष्फले ।

N] स चिरं चिन्तयित्वा तु हृदये न व्य्-अदूयत ॥११३॥[N
२०पू] ततो द्रुमलताऽऽकीर्णं सिंह-व्याघ्र-समाकुलम् ।[1]
२१उ] मृगयंश् च सम्-अन्तात् तु न पश्यति महौषधीः ॥११४॥[N
अचिन्तयच् च तेनाऽथ किं करोमीऽति वै तदा ।
यद्य् अहं न नयिष्यामि कथं द्रक्ष्यामि पार्थिवम् ।
N] वानराणां च सर्वेषाम् अव-हास्यो भवाम्य् अहम् ॥११५॥[N
N] इमम् एव नयिष्यामि पर्वतं गन्ध-मादनम् ।
२५पू] नानाद्रुमलताऽऽकीर्णं नानापुष्पोपशोभितम् ॥११६॥[N
१७पू] ततः सम्-अभवद् युद्धं गन्धर्वैः सु-महाबलैः ।
N] पुरा त्रि-(?ति)विक्रमे सोऽ(?णाऽ)थ बलि-(?ली)य-(?यु)ज्ञे(?द्धे) महाऽऽत्मनः[2]
उत्-पाट्य शिखरं तस्य पर्वतस्य महा-कपिः ।
N] चूर्णयामास तान् सर्वान् गन्धर्वान् काल-चोदितान्[3] ॥११८॥[N
मुहूर्ताद् एव ते सर्वे सं-क्रुद्धेन हनू-मता ।
१९] त्रयः कोट्यो हतास् तत्र गन्धर्वाणां महाऽऽत्मनाम् ॥११९॥[N
हत्वा गन्धर्व-राज्ञोऽसौ गिरिम् आ-रुरुहे ततः ।
N] नानाद्रुमलताऽऽकीर्णं सिंह-व्याघ्र-निषेवितम् ॥१२०॥[N
वि-चिन्वानः सम्-अन्ताच् च गिरि-श्रेष्ठे महौषधीः ।
N] न ज्ञातवान् स वै तत्र चिन्ताम् अभ्य्-अगमत् कपिः ॥[4]१२१॥[३०उ
तस्य बुद्धिः समुत्-पन्ना हनू-मतो[5] महाऽऽत्मनः[5] । [३१पू
N] बहु-त्वान् नोप-गच्छामि विशल्य-करणीं तथा ॥[6]१२२॥[N
२२पू] इदम् एव[7] नयिष्यामि गृहीत्वा[7] शिखरं गिरेः । [३१उ
N] प्र-गृह्य यदि गच्छामि तन् मे स्यात् सु-कृतं कृतम् ॥[8]१२३॥[३२पू
N] मार्गमाणे[9] महा-दोषः कालस्याऽति-व्यतिक्रमः ।[10] [N
कालाऽत्यये महा-दोषो[11] वैरस्यं[11] च महद् भवेत् । [३३उ

---

१. अतः परमधिकः पाठः—प्र-ते सम्मताश्चौषध्यो गंधर्वास्ते महाबलाः ॥ २. अ प्र फ-वर्जं—०ना ॥ ३. रा, ल, ल अ-०दितः ॥ ४. म-चिन्तामभ्यगमद्धीमानपश्यंस्तां महौषधीम् ॥ ५. म-मारुतेर्मारुतौजसः । ६. म-नास्ति ॥ ७. म-एवास्य नेष्यामि दक्षिणं । ८. म-अगृहीत्वैव गच्छामि विशल्यकरणीं यदि ॥ ९. ल, ल, ब अ प्र-०माणो । १०. म-नास्ति । ११. म-च दोषः स्याद्वैक्लव्यं ।

२४] इति सं-चिन्त्य[१] मनसा उन्-ममाथ[२] महा-गिरिम्[२] ॥१२४॥[३४पू

२७पू] नाना-तरु-गणाऽऽकीर्णं[३] नाना-धातु-विभूषितम्[४] । [३५पू

२५उ] अनेक-रत्न-निलयं शिला-पादप-शोभितम् ॥१२५॥[N

वापीषु भ्रान्त-विहगं लीन-विद्याधरोरगम् । [३६पू

२६] सिंह-व्याघ्र-समाकीर्णं गज-यूथ-समाकुलम् ॥[५]१२६॥[N

२८पू] शत-योजन-विस्तीर्णं ततो विंशतिम्[६] आ-यतम् । [N

२९पू] उत्-पाटयित्वा बाहुभ्यां[७] लीलया[७] चाऽचलोप(?त्त)मम्[८] ।१२७[८]॥[३५उ

N] ततस् तं पर्वतं गृह्य आ-काशेन स गच्छति ।[९] [३६उ

२९उ] पतन्ति शिखरात् तस्माल् लताभिः सह पाद-पाः ॥[१०]१२८[११]॥[N

वि-द्रुताः शर-भाः सिंहा व्यालाश् च महिषा गजाः ।

N] उत्-पाट्य शैलं बाहुभ्याम् आ-जगाम महा-बलः ॥१२९॥[N

खे-चरैः स्तूयमानस् तु स-विद्याधरकिन्नरैः ।

N] आ-जगाम हरि-श्रेष्ठो द्वितीय इव पर्वतः ॥१३०॥[N

N] पुष्प-वृष्टिं वि-मुञ्चन्ति गतं मार्गे हरीऽऽश्वरम् ।

३२पू] स-विद्याधरगन्धर्वा देवाश् च सह किं-नरैः ॥१३१॥[N

N] वायु-मुख्याश् च ते सर्वे सं-स्तुवन्ति हरीऽऽश्वरम्[१२] ।

३२उ] अब्रुवन् वि-स्मिता दृष्ट्वा हनू-मन्तं विहायसि ॥१३२॥[N

त्रैलोक्येऽपि न पश्यामो महतां कर्म चेदृशम् ।

३३] यो हि कुर्याद् इदं कर्म गन्धर्वाणां वधं रणे ॥१३३॥[N

पर्वतोत्पाटनं चैव कोऽन्यः कुर्याद् धनू-मतः ।

३४] साधु साधु महा-वीर्य वि-क्रान्तोऽसि महा-बलः ॥१३४॥[N

३५पू] शापाद् वि-मोक्षिता चैव गन्ध-(?विद्युन्)माली(?ला) त्वयाऽप्सराः ।

N] त्रयो गन्धर्व-कोट्यस् तु हतास् ते निमिषेण वै ॥१३५॥[N

३५उ] इमम् ओषधि-सम्पूर्णं पर्वतं गृह्य गच्छसि ।

N] वायोस् तु वचनं श्रुत्वा हनू-मान् वाक्यम् अब्रवीत् ॥१३६॥[N

---

१. म—निश्चित्य । २. म—निष्प्रकंपं गिरेस्तटं ॥ ३. म—फुल्लं नानातरुतलं । ४. म—नास्ति ॥ ५. अ—नास्ति ॥ ६. ल$_1$ ल$_2$ ब—विस्तीर्णं । ७. म—हस्ताभ्यां समलोडयत् । ८. अ प्र—नास्ति ॥ ९. म—परिगृहीत्वा प्रययौ तच्छैलशिखरं महत् । १०. म—अत आरभ्य १६६-तमश्लोकं यावन्नास्ति । ११. प्र—नास्ति ॥ १२. रा, ल$_1$ ल$_2$ ब अ—हनूमतं ॥

लक्ष्मणं जीवयिष्यामि आज्ञां कुरु मम प्र-भो ।
अभि-वाद्य पितुः पादौ जगाम स कपीऽऽश्वरः ।
N] खे-चरैः स्तूयमानस् तु स-विद्याधरकिन्नरैः ॥१३७॥[N
N] रावणेनाऽपि क्रुद्धेन विदित्वा वि-क्रमं रिपोः ।
वं-८४,१३उ] राक्षसाः पूर्वम् आ-दिष्टा गृह्यतां वानराऽधमः ॥१३८॥[N
N] नि-हते वानरे त्व् अद्य अर्ध-राज्यं ददाम्य् अहम् ।
?तस्य राज्यं प्र-दास्यामि? तिष्ठध्वं खे निशा-चराः ॥१३९॥[N
१४] रावणस्य वचः श्रुत्वा ये प्र-धाना महा-बलाः ।
१५पू] गृहीत्वा शर-निस्त्रिंशान् नि-पेतुस् ते मही-तलम् ॥१४०॥[N
स्थूल-दंष्ट्रा महा-नादा अष्ट-दंष्ट्राश् च राक्षसाः ।
१२] उल्का-मुखो महा-वक्त्रश् चतुर्-नेत्रो महा-बलः ॥१४१॥[N
१३पू] हस्ति-कर्णो द्वि-जिह्वश् च महा-वक्त्रो महा-बलः ।
N] रक्ताऽक्षः पिङ्गलाऽक्षश् च दंष्ट्रोदर-महोदरौ ॥१४२॥[N
वक्र-नासो वि-नासश् च काक-तुण्डः स-भैरवः ।
N] गृध्र-तुण्डश् च हस्त्य्-अश्वः काककुवदनाव् उभौ ॥१४३॥[N
उल्का-केशो महा-कायो हस्ति-पादश् च राक्षसः ।
N] एते चाऽन्ये च बहवो रावणस्य हितैषिणः ॥१४४॥[N
१५उ] आ-वृत्य गगनं तस्थुर् हनूमद्-वध-कांक्षया[1] ।[2]
N] मायाविनो महा-वीर्या मायां कुर्वन्ति राक्षसाः ॥१४५॥[N
१८उ] शक्रो वैश्रवणः के-चिद् यमो वरुण एव च ।
१९पू] ब्रह्मा विष्णुः स्वयं रुद्र आदित्यो वायु-शीतगू ॥१४६॥[N
ऋषयः पितरो देवाः के-चिद् भूता हुताऽशनाः[3] ।
यतन्ते राक्षसाः सर्वे देवा भूत्वा महा-बलाः ।
N] आ-वृत्य गगनं तस्थुर् हनू-मान् येन गच्छति ॥१४७॥[N
हनू-मान् अपि तेजस्वी गृहीत्वा शिखरं गिरेः ।
N] आ-जगाम महा-तेजा लीलया स हरीऽऽश्वरः ॥१४८॥[N
स तैर् बहुभिर् आ-वृत्य शक्ति-शूल-धरैस् तथा ।
N] नि-रुद्धः स महा-वीर्यः पन्न-गैर् इव पर्वतः ॥१४९॥[N

१. प्र-०कांक्षिणः । २. अ-अत आरभ्य १४७-शश्लोकस्य पंचमपादपर्यंतं नास्ति ॥ ३. रा१ ल१ प्र-०शनः ॥

N] वि-ज्ञातास् ते ततः सर्वे हनू-मता महौजसा ।
१९उ] अब्रवीद् राक्षसान् सर्वान् वि-हस्य पवनाऽऽत्मजः ॥१५०॥[N
यदि रुद्र-गणाः सर्वे युद्धाऽर्थम् इह चाऽऽगताः ।
N] तथाऽपि तान् हनिष्येऽहं राक्षसाऽर्थे समुद्-यतान् ॥१५१॥[N
यदि प्राऽऽप्तास् त्रयो लोकाः स-देवाऽसुरपन्नगाः ।
२०] सह सर्वान् हनिष्यामि का शङ्का मम राक्षसैः ॥१५२॥[N
तच् छ्रुत्वा वचनं ते तु हनू-मन्तं समन्त-तः ।
N] पूरयञ्[1] छर-वर्षेण राक्षसाः पवनाऽऽत्मजम् ॥१५३॥[N
N] स हन्यमानो बहुभिर् न चकम्पे महा-बलः ।
२२पू] बाहुभ्यां पर्वतं गृह्य पद्भ्याम् एव स युध्यति ॥१५४॥[N
२४उ] बद्ध-लाङ्गूल-पाशेन पद्भ्यां प्र-हरते कपिः ।
N] कस्य-चिद् बल-वद् वक्त्रं कांश्-चित् कर्णाद् अगृह्यत ॥१५५॥[N
कांश्-चिज् जग्राह चरणे जानुभ्यां निष्-पिपेष च ।
२३] बभञ्ज बाहु-वक्षांसि कांश्-चिन् नेत्रैर् व्य्-अयोजयत् ॥१५६॥[N
एवं ते राक्षसाः सर्वे स-विद्याधरचारणाः ।
२८] साधु साध्व् इति तं वीरं पुष्प-वर्षैर् अवाऽकिरन् ॥१५७॥[N
तस्मिन् वि-मर्दे तुमुले स्थूल-जङ्घो महा-जवः[2] ।
एक एव प्र-दुद्राव निः-श्वसन्न् उर-गो यथा ॥१५८॥[N
३१] स गत्वा रावणे सर्वं स्व-सैन्यस्य न्य्-अवेदयत् ।
हताः सर्वे महा-वीरा ये बलिष्ठा निशा-चराः ।
३२] एकेन कपि-मुख्येन लीलया रण-मूर्धनि ॥१५९॥[N
अहम् एको महद् युद्धं तदा तस्य महा-प्रभो ।
३३] कथं-चिद् एव सम्प्राऽऽप्तस् तव राजन् नि-वेदितुम् ॥१६०॥[N
तस्य तद् भाषितं श्रुत्वा राक्षसस्य महाऽऽत्मनः ।
३४] दीर्घम् उष्णं च निः-श्वस्य न किं-चिद् इति चाऽब्रवीत् ॥१६१॥[N
दैवम् एव परं मन्ये पौरुषं तु निर्-अर्थकम् ।
३५] यत्र वानर-मात्रेण राक्षसा बहवो हताः ॥१६२॥[N
हनू-मांश् च महा-तेजा नि-हत्य रजनी-चरान् ।
N] आ-जगामाऽचलं गृह्य जगर्ज च महा-बलः ॥१६३[3]॥[N

१. टि० आर्षोऽडभावः ॥ २. ल१ ल२ प्र—महाबलः ॥ ३. अ—नास्ति ॥

तस्य नादं ततः श्रुत्वा सर्वे ते हरि-यूथपाः ।[1]
N] हनू-मान् इह सम्प्राऽऽप्त इति हर्षम् उपा-गताः ॥१६४॥[N
राघवोऽपि स्वं श्रुत्वा हनू-मतो महाऽऽत्मनः ।
N] बाष्प-पर्याकुले नेत्रे प्र-मृज्य मुदितोऽभवत्[2] ॥१६५॥[N
स-विद्युद् इव जीमूतस् तोय-पूर्णो नभस्-तले ।
N] आ-जगाम गृहीत्वाऽथ हनू-मान् सौषधिं गिरिम् ॥१६६॥[N
वं-८३] स चाऽऽगम्य महा-तेजा भूमौ न्य्-अस्य मही-धरम् ।
४०] वि-नीतश् चाऽञ्जलिं कृत्वा हनू-मान् वाक्यम् अब्रवीत् ॥१६७[3]॥[३७
४१पू] उपाऽऽगम्य ततो रामं वि-ज्ञापयति बुद्धि-मान् ।
N] वि-ज्ञाप्य[4] राम-सुग्रीवौ किं तु राजन् नि-बोध मे ॥१६८[5]॥[N
४१उ] ताम् ओषधिं न जानामि गृहीत्वा शैलम् आ-गतः ।[6]
४५पू] व्यतिक्रम-कृतं दोषं तन् मम क्षन्तुम् अर्हथ (?:) ॥[7]१६९॥[३८
बहु-विघ्नानि मार्गे मे तन् नाऽहं शीघ्रम् आ-गतः ।
४४] विघ्न-करा दुर्-आत्मानो नि-हताः कूट-राक्षसाः ॥१७०॥[N
एवं कथयमानं तं प्र-गृह्य पवनाऽऽत्मजम् ।
N] सु-षेणो वानर-श्रेष्ठो रामः सु-ग्रीव एव च ॥१७१॥[३९
४९उ] साधु वीर महाऽर्होऽसि यस्य चेदृक् पराऽऽक्रमः ।
N] तस्मिन् बभूवुर् हृष्टाश् च रणे वानर-पुङ्गवाः ॥१७२॥[N
N] दृष्ट्वा हनु-मतः कर्म वि-स्मयं जग्मुर् उत्-तमम् ।[7]
स प्र-शस्य हनू-मन्तं सु-षेणं राघवोऽब्रवीत् ॥[8]१७३॥[N
५०] मृगयस्व महा-प्राज्ञ ओषधीः पर्वते शुभे ।
५१पू] रम्यं गिरिं तम् आ-रूढः सु-षेणो वानराऽधिपः ॥[9]१७४॥[N
५२] नाना-ना(?न)ग-समाकीर्णं नाना-धातु-विचित्रितम् ।
५१उ] पश्यमानो महा-शैलं दिव्यौषधि-विभूषितम् ॥१७५[10]॥[N
ताम्[11] ओषधिं ततो गृह्य अव-तीर्णो मही-तले । [N
५४] शिलायां जर्जरी-कृत्य सु-षेणो वानरोत्तमः ।[12]

१. अ—नास्ति ॥ २. ल१—०तोऽब्रवीत् ॥ ३. म—व्यानीय च महावेगात्तच्छैल-शिखरं हरिः। विश्रववाहू हनुमान्सुषेणमिदमब्रवीत् ॥ ४. प्र—विज्ञाप्यौ । ५. म—नास्ति । ६. म—ओषधीं नावगच्छामि तामिह हरिपुंगव । तदिदं शिखरं सर्वं गिरेस्तस्य मयाहृतम् ॥ ७. म—नास्ति ॥ ८. म—एवं कथयमानं तं प्रशस्य पवनात्मजम् ॥ ९. म—नास्ति ॥ १०. अ म—नास्ति ॥ ११. म—सुषेणो वानरश्रेष्ठस्तामुत्पाट्य महौषधीम् ।

लक्ष्मणाय ददौ नस्यं[1] शल्येषु च महा-द्युतिः[1] ॥१७६॥[४१
५५] वि-शल्यां[2] च[2] समा-घ्राय लक्ष्मणः पर-वीर-हा ।
५६पू] वि-शल्यो वि-रुजः श्री-मान्[3] उद्-अतिष्ठन् मही-तलात् ॥१७७॥[४२
५९उ] समुत्थि (द्-स्थि)तं[4] तु हरयो भू-तलात् प्रेक्ष्य लक्ष्मणम् । [४३पू
N] वि-स्मिताश् च बभूवुस् ते सर्वे वानर-राक्षसाः ॥[5]१७८॥
N] दृष्ट्वा हनु-मतः कर्म तत् सुरैर् अपि दुष्-करम्[6] ।[7] [४०उ
६०पू] साधु साध्व् इति ते[8] प्रीता हनू-मन्तम् अपूजयन्[8] ॥१७९॥[४३उ
राघवः परम-प्रीतः प्र-शस्य पवनाऽऽत्मजम् ।
N] भ्रातरं चैव धर्माऽऽत्मा प्रीताऽऽत्मा रघु-नन्दनः ॥१८०[9]॥[N
एह्य् एहीऽत्य् अब्रवीत् प्रीतो[9] लक्ष्मणं शुभ-लक्षणम् ।
५७] स-स्रजं[10] सस्वजे गाढं[10] बाष्पपर्याकुलेक्षणः ॥१८१[४४
५८उ] अब्रवीच् च परि-ष्वज्य सौमित्रिं राघवस्[11] तदा[11] ।
५९उ] दिष्ट्या त्वां वीर पश्यामि मरणात् पुनर् उत्थि(द्-स्थि)तम्।[12]१८२॥[४५
न मे वीर जयेनाऽर्थः सीतया जीवितेन वा ।[12]
N] कश्[13] च मे जीवितेनाऽर्थस्[13] त्वयि पञ्च-त्वम् आ-गते ॥१८३॥[४६
एवम् आ-भाष्य सौमित्रिं रामो मारुतिम् अब्रवीत् ।
६१] त्वत्-प्रसादेन पश्यामि लक्ष्मणं शुभ-लक्षणम् ॥१८४[14]॥[N
वं-८५] पञ्च-त्वं यद्य् अयं यातो लक्ष्मणो मारुते मम ।
६] नैव मे वि-जयेनाऽर्थो न मैथिल्या न चाऽऽत्मना ॥१८५[14]॥[N
७पू] इत्य् एवं वदतस् तस्य राघवस्य[15] महाऽऽत्मनः । [४७पू
N] लक्ष्मणोऽपि समुत्था(द्-स्था)य पर्य्-अष्वजत मारुतिम् ॥१८६॥[N
१३] सर्वे ते हर्षम् आ-पन्ना वानराः काम-रूपिणः ।
वं-८४] अ-पूर्वं पर्वतं दृष्ट्वा कौतूहल-समन्विताः ॥१८७॥ [N
२] ततस् ते वानराः सर्वे राघवं वाक्यम् अब्रुवन् ।
३पू] कौतूहलं महा-राज अस्माकं पर्वतं प्रति ॥१८८॥ [N

---

१. म—नस्तः शल्ये च सुम० ॥ २. म—तां विशल्यां । ३. म—शीघ्रं ॥ ४. म—तमुत्थितं । ५. म—नास्ति ॥ ६. रा₁—वीरहा । ७. म—हृष्टास्ते सुषेणं प्रत्यपू० ॥ ८. म—नास्ति ॥ ९. म—रामो । १०. म—सस्वजे स्नेहगाढं च ॥ ११. म—रघुनन्दनः । १२. म—नास्ति ॥ १३. म—को हि मे जीवितस्यार्थस् ॥ १४. म—नास्ति ॥ १५. म—अत आरभ्य १९७-तम-श्लोकं यावन्नास्ति ॥

N] अनु-ज्ञां देहि राजेन्द्र पर्वताऽऽरोहणे प्र-भो ।
३उ] दत्ताऽनुज्ञास् तु रामेण सु-ग्रीवेण च वानराः ।
N] ते तु हृष्ट-तमा भूत्वा आ-रोहन्ति समन्त-तः ।।[1]१८९।।[N
भक्षयन्तः पिबन्तश् च लोरयन्तश् च पर्वते ।
५] क्षणेन वानरास् तृप्ता[2] मधु-मत्ताश् च सर्व-शः ।।१९०।।[N
भक्षयित्वा फलान्[3] दिव्यान् पीत्वा पानीयम् उत्-तमम् ।
६] अव-तीर्णाः समन्ताच् च वानराः काम-रूपिणः ।।१९१।।[N
अव-तीर्णेषु तृप्तेषु वानरेषु महाऽऽत्मसु ।
७] रामोऽब्रवीच् च सु-ग्रीवं हनू-मान् उच्यतां कपिः ।
८पू] नीयतां पर्वतस् तत्र त्वयाऽऽनीतो यतो ह्य् अयम् ।।१९२।।[N
९पू] राघवस्य वचः श्रुत्वा हनू-मान् वानरेश्वरः ।
१०पू] बाहुभ्यां पर्वतं गृह्य जगाम वि-मलेऽम्बरे ।।१९३।।[N
वं-८५] दैवतैः स्तूयमानस् तु तथा तुम्बुरु-नारदैः ।
२] अप्सरो (?रै र्)[3] गीयमानस् तु तथा किन्नर-चारणैः ।।१९४।।[N
१पू] स्व-स्थाने स्थापयित्वा तं न-गं नग-सत्तमम्[4] ।
३उ] पुनर् आऽयाज् जवेनाऽऽशु शापाज् ज्वर इव च्युतः ।।१९५।।[N
रामस्य त्वरितं गत्वा वि-नयेन कृताऽञ्जलिः ।
N] ननाम शिरसा पादौ सु-ग्रीवस्य च धी-मतः ।।१९६।।[N
तं प्र-शस्य हनू-मन्तं सु-ग्रीवं स-विभीषणम् ।
N] ते सर्वे हर्षम् आ-पन्ना दृष्ट्वा लक्ष्मणम् उत्थि(द्-स्थि)तम् ।।१९७।। [N
N] ततोऽब्रवीन् महा-तेजा लक्ष्मणो राघवं तदा । [N
७उ] भिन्न-शिथिलया वाचा स-क्रोधो रावणं प्रति ।।१९८[5]।।[४७उ
प्रति-ज्ञातं प्रति-ज्ञाय पुनः सत्य-पराऽऽक्रम ।
८] लघुः कश्-चिद् इवाऽतेजास् तेनैवं वक्तुम् अर्हसि ।।१९९[6]।।[४८
न प्रति-ज्ञां तु कुर्वन्ति वि-तथां साधवोऽन्-अघ ।
९] लक्षणं तु महत्-त्वस्य[6] प्रतिज्ञा-प्रतिपालनम् ।।२००।। [४९
तद् अलं मत्-कृते नैव[7] नैराश्यम् उप-गम्यते[8] ।

---

१. प्र—नास्ति ॥ २. रा$_1$, ल$_1$, ल$_2$ ब अ—सुप्ता । प्र फ—सर्वे ॥ ३. टि. आर्षः पुं. द्र. ॥ ४. ल$_2$—नगमुत्त० ॥ ५. म—स्मृत्वा शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥ ६. म—नास्ति ॥ ७. म—नेदं । ८. म—उपपद्यते ।

१०] वधेन रावणस्याऽथ[1] प्रतिज्ञा-प्रतिपालनम्[1] ॥[2]२०१॥[५०
नहि जीविष्यते राम तव चाप-पथं[3] गतः ।
११] नदतस्[4] तीक्ष्ण-दंष्ट्रस्य सिंहस्येव महा-गजः ॥२०२[5]॥[५१
अहं तु वधम् इच्छामि शीघ्रं तस्य[5] दुर्-आत्मनः ।
१२] यावद् अस्तं न यात्य् एष कृत-कर्मा दिवा-करः ॥२०३॥[५२
तम इव किरणैः सहस्र-रश्मिः
शर-किरणैर् जहि रावणं सु-तीक्ष्णैः ।
रण-शिरसि नि-पातितस्य[6] वक्त्रं
१३] मुदित-मनाः समवेक्षितुं त्वरेऽहम् ॥२०४[7]॥[N

इत्यार्षे रामायणे युद्ध-काण्डे[8] लक्ष्मण-सञ्जीवनं
नामैकाशीतितमः सर्गः ॥ ८१ ॥

---

१. म–०स्याद्य प्रतिज्ञां परिपालय । २. अ–नास्ति ॥ ३. म–बाणपथं । ४. म–नर्दतस् ॥ ५. म–अस्य ॥ ६. म–पाति० ॥ ७. अतः परमधिको विपर्यस्तश्च पाठः—रा₂ फ–असंगृह्य यदि गच्छेयमुपहासो भविष्यति । सर्वं तु पर्वतं हृत्वा प्रयास्ये मा विलम्बितः ॥ तत्र ज्ञास्यति वैद्योऽसौ सुषेणः परमौषधिम् । यस्मिन् हि शैले संजाता ओषधी च सुखावहा ॥ प्रागर्कादवगच्छेति सुषेणो मां यथाऽब्रवीत् । इति संचिन्त्य बलवानवतीर्य गिरेस्तदा । उत्पाटने तु शैलस्य चकार मतिमान्मतिम् ॥ ततो द्रुमलताकीर्णं नानारत्नोपशोभितम् । सिंहव्याघ्रगजाकीर्णमुज्जहार महागिरिम् ॥ न्यपतन् गिरिशृंगाणि द्रुमवल्लीगणास्तथा । पक्षिणो विद्रुताः सर्वे पर्वतास्फोटनेन तु ॥ दशयोजनविस्तीर्णं पञ्चयोजनमायतम् । दोर्भ्यामुद्गृह्य तं शैलमुत्पपात विहायसा ॥ ततस्तं पर्वतं हृत्वा शीघ्रं स प्लवगोत्तमः । जगामाकाशमाविश्य लीलया वायुनन्दनः ॥ अथ देवगणाः सर्वे पुरन्दरपुरोगमाः । पुष्पवर्षैरभ्यकिरन् गच्छन्तं कपिकुञ्जरम् । गीयमानोऽप्सरोगणैः स्तूयमानो महर्षिभिः ॥ इत्यार्षे रामायणे कालनेमिवध ओषधीहनुमत्प्रत्यागमनं नाम सर्गः ॥ एतस्मिन्नन्तरे वायुः प्रववौ सुखशीतलः । क्षीणाकारास्तथा ताराः प्रत्यूषः समपद्यत ॥ अस्तं प्रयातो भगवान् सोमः प्रक्षीणमण्डलः । हा लक्ष्मण प्रियभ्रातः क्व प्रयासि विहाय माम् ॥ हा हतोस्मि क्व गच्छामि कं पृच्छामि महाभुज । किं मे राज्येन भोगैर्वा किं प्राणैः सीतयाऽपि वा ॥ यत् प्रयातुं महाबाहो दीर्घमध्वानमुद्यतः । कौशल्यां किन्नु वक्ष्यामि सुमित्रां वा परंतप ॥ भरतं चाऽपि शत्रुघ्नं त्वया वीर्यवता विना । हा वीर सुमहाबाहो प्रतिवाक्यं प्रयच्छ मे ॥ न त्वमर्हसि सौमित्रे

त्यक्तुं दुःखार्दितं हि माम् । त्वद्वियोगसमुत्थेन शोकेन समुदीरितः । करोम्यराक्षसामुर्वीं त्रैलोक्यं च दहाम्यहम् ॥ एवमुक्त्वा महाबाहुः प्रगृहीताऽग्र्यकार्मुकः । युगाऽन्तकाले भगवान् पिनाकीऽव व्यरोचत ॥ ततः सन्त्रस्तमनसो वानरा भीमविक्रमाः । किमेतद् इति भाषंतः ससुग्रीवविभीषणाः । प्रणिपत्याग्रतः स्थित्वा सर्वे प्राञ्जलयोब्रुवन् ॥ एकस्यार्थे महाबाहो त्रैलोक्यं मा विनाशय । त्वामेवं क्रुद्धमालोक्य रौद्रास्त्रोद्यतपाणिनम् ॥ दृष्ट्वा देवाः सगन्धर्वाः प्रद्रवन्ति दिशो दश । स्फुरते गगने विद्युज्जालैर्दीप्तमिवाम्बरम् ॥ चलन्ति वसु(?हु)धा वा (?) तोद्धू (?) ता उन्नदन्ति महार्णवाः । प्रलम्बन्ति शिलाः शैला जाता नष्टा दिशो दश ॥ किमिदमिति भाषन्तो दिविस्थाः स्थिरचारिणः । एवं विज्ञापितस्याथ सुग्रीवाद्यैः प्लवंगमैः ॥ प्रशान्तिमगमत् कोपो राघवस्य महात्मनः । भूयः शोकसमाविष्टो रामो दशरथात्मजः ॥ लक्ष्मणं पतितं दृष्ट्वा निशां च क्षयमेयुषीम् । अब्रवीद्राघवो दीनः सुग्रीवं वानरेश्वरम् ॥ सुग्रीव गच्छ किष्किन्धां सह वानरसेनया । कृतं मित्रप्रदानं ते यदन्यैर्भुवि दुष्करम् ॥ अहं वाद्य महाबाहो यत्करिष्यामि तच्छृणु । आत्मानं प्रदहिष्यामि प्रदीप्ते हव्यवाहने ॥ सहानेन गमिष्यामि लक्ष्मणेन महाबल । प्रेतराजपुरं दिव्यं नोत्सहे कर्तुमन्यथा ॥ विभीषणस्य कर्तव्यं न कृतं भाषितं मया । एतद्दहति मे चेतः शुष्कं काष्ठमिवानलः ॥ एवमुक्तस्तु रामेण सुग्रीवो वाक्यमब्रवीत् । किमर्थं मुह्यसे देव त्वादृशो नैव मुह्यति ॥ त्रियामा शर्वरी याता पश्चिमेयं प्रवर्तते । नियतं पश्चिमे यामे [1]हनूमानागमिष्यति ॥ इति तेषां ब्रुवाणानां हनूमान् समदृश्यत । प्रदीप्त इव शैलेन्द्रो गगने प्रपलायितः ॥ किमेतदिति संभ्रान्ताः कपयो जातविस्मयाः । केचिद् द्रुमान्समारूढाः केचिद्भीताः प्रदुद्रुवुः ॥ केचिद्गृहान् प्रविविशुः सेतुमन्ये प्रपेदिरे । केचित् सज्जीकृतास्तस्थुः केचिद् धावन्ति दर्पिताः ॥ केचिच्छैलाग्रमारूढाः केचिद्वक्त्राणि रक्षसाम् । प्रगृह्याभ्यद्रवन् केचिन्नादं मुञ्चन्ति चाऽपरे ॥ अधावन्तं प्रधावन्ति ह्यूर्ध्वपुच्छास्ततस्ततः । मायावी राक्षसः कोयमस्मान् हन्तुमुपागतः ॥ इति तं संभ्रमं दृष्ट्वा रामः सुग्रीवमब्रवीत् । वानराधिप मा भैषीरियं रक्षोविभीषिका । निर्भीर्भव महाबाहो निहन्म्येनं पतत्रिभिः ॥ एतस्मिन्नन्तरे वीरः सोवतीर्य नभस्तलात् । निक्षिप्य पर्वतं भूमौ नानारत्नविभूषितम् । विनीतः प्राञ्जलिर्भूत्वा राघवं वाक्यमब्रवीत् ॥ विज्ञाप्यं श्रूयतां देव ससुग्रीवविभीषणः । ओषधीर्नाधिगच्छामि विदित्वापि नरेश्वर ॥ ततोऽयं ते मयानीतः कृत्स्नश्चौषधिपर्वतः । व्यतिक्रमं ममैतत्त्वं क्षन्तुमर्हसि सुव्रत ॥ बहुविघ्नाश्च तत्रासन् येनाऽहं च विलम्बितः । हनूमतो वचः श्रुत्वा रामो वचनमब्रवीत् ॥ साधु वीर महाबाहो यस्येदृक् ते पराक्रमः । देवानां सदृशं कर्म

१. रा₁–हनुमान् ॥

कृतमेवं परंतप ॥ सुग्रीवस्त्वब्रवीत्तत्र सुषेणं वैद्यमुत्तमम् । आरोहैनं गिरिं रम्यं यत्र जाता महौषधी । तामौषधीं विजानीहि येन जीवति लक्ष्मणः ॥ सुग्रीवस्य वचः श्रुत्वा सुषेणोऽन्ये च वानराः । गिरिमारुह्य तं रम्यं नानाधातुविभूषितम् ॥ गिरिकूटानि दिव्यानि बहुपक्षिसत्त्वानि च । पद्मषण्डानि पश्यन्तश्चन्दनान्यगुरूणि च ॥ चम्पकैर्नागपुन्नागैः कर्णिकारैश्च शोभितम् । अन्विष्यन्ति गिरिं तं तु ओषध्यर्थं प्लवंगमाः ॥ सुषेणोभ्यवदत्तांस्तु पूर्ववृत्तानि सूचयन् । इह विष्णुश्च ब्रह्मा च शक्रोग्निर्वरुणो यमः । लोकपालश्च भगवान् कुबेरः सह राक्षसैः ॥ इदं तदमृतस्थानं यत्र देवैः समागतैः । संपीतमप्सरोभिश्च ऋषिभिश्च महाव्रतैः ॥ अत्र राहोः शिरश्छिन्नं विष्णुना प्रभविष्णुना । जाता चात्रौषधिर्दिव्या विशल्यकरणी शुभा ॥ इयं सा चेति हृष्टात्मा ददर्श परमौषधिम् । उत्थाय च स संभ्रान्तः सुषेणो भिषजां वरः । तामोषधीं गृहीत्वाऽसौ ह्यवतीर्य महीतले ॥ समुत्थितं ते हरयो भूतलात्प्रेक्ष्य लक्ष्मणम् । साधु साध्विति सुप्रीताः सुषेणं प्रत्यपूजयन् ॥ उत्थितं भ्रातरं दृष्ट्वा रामो हर्षसमन्वितः । परिष्वज्य च सौमित्रिं सबाष्पश्चेदमब्रवीत् । दिष्ट्या पश्यामि सौमित्रे त्वां विरोगिणमव्रणम् ॥ नीरुजं निर्विकारं जीवन्तं पुनरुत्थितम् । ततः प्रीतमना रामः सुषेणं वाक्यमब्रवीत् ॥ त्वत्प्रसादान्महाबाहो लक्ष्मणं शुभलक्षणम् । पश्यामि परिपूर्णोयं पौर्णमास्यां यथा शशी ॥ हनूमतोपि सुप्रीतो राघवो वाक्यमब्रवीत् । एहि वत्स कपिश्रेष्ठ मत्प्राणद महाबल ॥ परिष्वंगं प्रयच्छामि ममावस्थेयमीदृशी । ममैवांगविशीर्णं तु यत्त्वयोपकृतं मम ॥ नरः प्रत्युपकाराणामापत्सु लभते फलम् । एवमुक्त्वा तु सौमित्रिं राघवस्तु महायशाः ॥ पर्यस्वजत सौमित्रिस्तं हरिं पवनात्मजम् । सर्वे ते वानरा हृष्टाः समर्थाः कामरूपिणः ॥ अपूर्वं तं गिरिं दृष्ट्वा कौतूहलसमन्विताः । विज्ञापयन्ति सुग्रीवं राघवं सहलक्ष्मणम् ॥ कौतूहलसमाऽऽविष्टाः पर्वतारोहणं प्रति । दत्तानुज्ञा राघवेण सुग्रीवेणांगदेन च ॥ तं समारुरुहुः शैलं नानारत्नोपशोभितम् । पश्यन्ति गिरिकूटानि भक्षयन्ति फलानि च ॥ दिव्यानि मधुजालानि पिबन्ति मधुपिंगलाः । संभक्ष्य फलमूलानि पीत्वा पानीयमुत्तमम् ॥ अवतीर्णास्ततः सर्वे वानरा हृष्टमानसाः । अथोवाच हनूमन्तं रामः सुग्रीवसन्निधौ ॥ पर्वतो नीयतां वीर मर्यादा वार्णवस्य तु । एवमुक्तस्तु हनूमान् कृतरंहा महाकपिः ॥ दोर्भ्यामुद्यम्य तं शैलं प्रयातुमुपचक्रमे । अथोदतिष्ठत् तीक्ष्णांशुर्लंघयित्वा महार्णवम् ॥ दिशश्च विमलाः सर्वा जाताश्च हिमपाण्डुराः । हनूमन्तं स विक्रान्तमुत्पत्य गगने स्थितम् ॥ अपश्यन् राक्षसाः सर्वे व्रजन्तं सागरोपरि । रावणस्त्वब्रवीद् दृष्ट्वा समीपस्थान् निशाचरान् ॥ स्थूलजंघं महानादं महावक्त्रं महोरसम् । उल्कामुखं महावीर्यं चतुर्वक्त्रं च राक्षसम् ॥ हस्तिकर्णं शंकुकर्णं

मेघचित्रं च राक्षसम् । एते चाऽन्ये च बहव आज्ञप्ता रावणेन तु ॥ शीघ्रं मायाप्रभावेण हनूमान् गृह्यतामिति । यो निगृह्यानयेत्तूर्णं तस्य राज्यं ददाम्यहम् ॥ श्रुत्वा तु राक्षसेन्द्रस्य वचस्ते त्वरयान्विताः । विचित्रकवचाः सर्वे नानाप्रहरणोद्यताः ॥ विहायसमगुः क्षिप्रं कृत्वा देववरं वपुः । वेष्टयन्ति हनूमन्तं मेघा इव दिवाकरम् ॥ कस्त्वं वानररूपेण गिरिं संगृह्य गच्छसि । न त्वं बिभेषि देवानां दैत्यानां च महात्मनाम् ॥ एवं तैर्निगृहीतस्तु विचिन्त्येदं वचोब्रवीत् । यदि प्राप्तास्त्रयो लोका भवद्भिः सहिताः सुराः । ब्रह्माणमग्रतः कृत्वा न समो मम केनचित् ॥ इत्येवं ब्रुवतस्तस्य कपिसिंहस्य तत्क्षणे । ततोवर्धत लांगूलं कालपाशोपमं द्विषाम् ॥ अयं वायुसुतस्तस्मिन् प्रव्रजमानो विहायसा । बाहुभ्यां पर्वतव्यग्रो लांगूलेनाभ्ययुध्यत ॥ ततस्तु तस्य लांगूलं वज्रप्रतिमगौरवम् । कालचक्रमिवाविद्धं भ्रमते सर्वतो दिशम् । प्राहरन् राक्षसाः सर्वे शिलाशक्तिपरश्वधैः । लांगूले तस्य ते कर्तुं स्वल्पं वाऽनर्थं न (?वै) क्षणम् ॥ एकं द्वौ त्रिचतुरो विंशतिंत्रिशत्तथा शतम् । लांगूलाऽग्रेण तान्वेष्ट्य भ्रामयित्वा भुव्यक्षिपत् ॥ अन्यांस्तु बलिनः शूरान् राक्षसान् भीमविक्रमान् । बद्ध्वा लांगूलपाशेन पद्भ्यां समप्राहरत् कपिः ॥ केचिद् दृष्ट्वास्य संत्रस्ताः केचिन् नादेन भीषिताः । केचित् पुच्छाभिघातेन पातिता धरणीतले ॥ एवं स कदनं कुर्वन् रक्षसां मेघवर्चसाम् । दिवाकर इव व्योम्नि सोगच्छद्वायुनन्दनः ॥ अतिदैवं कृतं कर्म दृष्ट्वा तत्तस्य देवताः । साधु साध्विति भाषन्तः पुष्पवर्षैरवाकिरन् ॥ हत्वा रक्षःसहस्राणि लांगूलचरणायुधः । स्वस्थाने पर्वतं स्थाप्य रामस्याग्रे समागतः ॥ प्रणिपत्य ततो रामं ससुग्रीवं सलक्ष्मणम् । आचचक्षे यथावृत्तं यत्पूर्वं यच्च साम्प्रतम् ॥ तच्छ्रुत्वा वचनं तस्य रामसुग्रीवलक्ष्मणाः । पर्यस्वजन्त संहृष्टा भुजैस्तं वायुनन्दनम् ॥ वानरास्तु ततः सर्वे हर्षसम्पूर्णमानसाः । पर्यस्वजन्त चान्योन्यं भुजैरास्फोटयन्ति च ॥ साधु वीर सुषेण त्वं साधु मारुतनन्दन । इत्येवं प्रवदन्तस्ते सिंहनादैनर्दन्ति च ॥ पुनरेव महाबाहुः सौमित्रिं भ्रातृवत्सलः । एह्येहीत्यब्रवीद्रामो लक्ष्मणं लक्ष्मिवर्धनम् ॥ अब्रवीच्च सुसंहृष्टः सौमित्रिं मित्रवर्धनः । दिष्ट्या त्वां वीर पश्यामि मरणात्पुनरागतम् ॥ न मे वीर जयेनार्थः सीतया जीवितेन च । को हि मे विषयेनार्थस्त्वयि पञ्चत्वमागते ॥ इत्येवं वदतस्तस्य राघवस्य महात्मनः ॥ भिन्नशिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥ तां प्रतिज्ञां प्रतिज्ञाय पुराऽसह्यपराक्रमः । लघुः कश्चिदिवाऽसत्त्वो नैवं त्वं वक्तुमर्हसि ॥ इत्यार्षे हनूमदोषधिपर्वतस्वस्थाने स्थापनं नाम सर्गः ॥ द. प्र—लंकाकाण्डे ॥

[1]लक्ष्मणस्य तु तद् वाक्यम् उक्तं[2] श्रुत्वा तु राघवः[2] ।
उवाच हितम् अत्य्-अर्थं राघवं[3] रघु-नन्दनम्[3] ॥१॥
एवम् एतन् महा-बाहो यथा वदसि लक्ष्मण ।
न प्रति-ज्ञां प्र-कुर्वन्ति वि-तथां साधवो जनाः ॥२॥
प्रति-ज्ञातं[4] मया[5] तस्य[6] रावणस्य[7] दुर्-आत्मनः[7] ।
अहम् एनं वधिष्यामि सत्यम् एतद् ब्रवीमि[8] वः[8] ॥३॥
वि-ध्वंसय[9] शरैस् तीक्ष्णैर् दिवसो[10] ह्य् अति-वर्तते[11] ।
प्रति-ज्ञां रघु-शार्दूल[12] स-फलां कर्तुम् अर्हसि[12] ॥४॥
एवम् उक्त्वा ततो राम इक्ष्वाकु-कुल-नन्दनम्[13] ।
वि-भीषणम् इदं वाक्यं प्रत्य्-उवाच महा-बलः[14] ॥५॥
क्वाऽसौ लङ्केश्वरः क्षुद्रो रावणो युद्ध-दुर्मदः ।
रण-भूमिं परि-त्यज्य क्वाऽऽस्ते किं चाऽस्य चेष्टितम् ॥६॥
मयि छिद्र-प्रहर्ता[15] च कृत-पापश्[16] च राक्षसः[16] ।
बोद्धव्यं च[17] त्वया वीर शीघ्रम्[18] एव ममाऽऽज्ञया ॥[19]७॥
रामस्य वचनं श्रुत्वा तत्-कालाऽर्थ-समन्वितम् ।[20]
उवाच वचनं धी-मान् रामम् एतद् वि-भीषणः ॥८[21]॥
प्र-विवेश पुरीं तूर्णं लङ्काम् एव सहाऽनुगः ।
सोऽव-तीर्य रथात् तत्र वधम् इच्छंस् तवाऽन्-अघ ॥९॥
चिन्तयामास काकुत्स्थ[21] वर-दानम् अथाऽद्भुतम्[22] ।
यद्[23] दत्तं शम्भुना[23] पूर्वं सर्व-शत्रु-विनाशनम् ॥१०॥
अ-जेयं[24] सप्तभिर् लोकैः स-सुराऽसुरमानवैः[25] ।

---

१. म–नास्त्ययं सर्गः । २. फ–श्रुत्वा राजा विभीषणः । भ–श्रुत्वा तत्र स रा० । ३. रा$_2$–०वो रघु० । रा$_2$–०वं रघुनंदनः । भ–लक्ष्मणं समितिंजयः ॥ ४. रा$_2$–०तस् ५. रा$_2$ फ–त्वया । ६. रा$_2$ फ–तावद् । भ–यत्तु । ७. रा$_2$फ–०स्य वधो नृप । भ–०णं लोकरावणं । ८. रा$_1$ ल$_1$ ल$_2$ ब–वदामि वः । रा$_2$ फ–०स्यहं ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०थे । भ–०यन् । १०. भ–०से । ११. भ–ह्यनिवर्तिते । १२. रा$_2$ फ–०लां कुरु मानद । भ–सफलामद्य करिष्ये नात्र संशयः ॥ १३. रा$_2$–रघूणां कुलवर्द्धनः । भ–०न्दनः ॥ १४. अ प्र भ–महायशाः ॥ १५. भ–छिद्रे प्र० । १६. रा$_2$ फ–कर्ता पापस्य कर्मणः । १७. भ– तु । १८. फ–क्षिप्रं । १९. रा$_2$–नास्ति ॥ २०. फ–राघवस्य वचः श्रुत्वा चारैरन्विष्य सर्वतः ॥ २१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–स तदा । भ–दुष्टात्मा । २२. रा$_2$ फ–महात्मनः । २३. रा$_2$ फ–दत्तं स्वयंभुवो । भ–यत् सृष्टं स्व० ॥ २४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अमेयं । २५. भ–०मानुषैः ॥

रथं सर्वाऽऽयुधोपेतं दिव्यम् अद्भुत-दर्शनम् ॥११॥
युक्तम् अश्वैर् महा-वेगैः काम-गैः काम-रूपिभिः ।
अ-भेद्यं कवचं चाऽपि सर्वाऽस्त्रैर् अभि-संवृतम्[1] ॥१२॥
तस्य होमस्य कालोऽयं देवाऽऽयतनम् आ-स्थितः ।
जुहोत्य् अग्निं समाधि-स्थो रौद्र-मन्त्रैर्[2] महा-यशाः ॥१३॥
तस्य यावत् तु तत् कर्म न[3] सिद्धयति[3] दुर्-आत्मनः ।
तस्य[4] तावत् त्वया राम[4] विघ्नः कार्यो बलीयसः ॥१४॥
अ-वध्यः सम्-अरे तस्मिन् कृते कर्मणि रावणः[5] ।
चारैर् मम समा-ख्यातं यत्राऽसौ[6] परि-वर्तते[6] ॥१५॥
वि-भीषणस्य तद् वाक्यम् अति-घोरं भयाऽऽवहम् ।
श्रुत्वा रामो महा-तेजाः स्व-बलं[7] चाऽभिवीऽऽक्ष्य[7] च ॥१६॥
आ-ज्ञापयामास तदा विघ्नाऽर्थं[8] दश यूथ-पान्[8] ।
माल्य-वन्तं सु-षेणं च गवाऽक्षं गवयं तथा ॥[9]१७॥
अङ्ग-दं च हनू-मन्तं शर-भं गन्ध-मादनम् ।
ऋक्ष-सेना-पतिं चैव नीलं चाऽपि[10] महा-बलम् ॥१८[11]॥
लब्ध्व् आज्ञास् ते महा-वीर्या यूथ-पाः कृत-निश्चयाः ।
उत्-तस्थुस् ते[12] बलैः[12] सार्धं गर्जन्त इव तोय-दाः ॥१९॥
ते शिला-पादप-धरा महा-काया महा-बलाः ।
गर्जन्तो रेजिरे[13] सर्वे जङ्गमा इव पर्वताः ॥२०॥
क्षणात् सम्प्राऽऽप्य नगरीं लङ्कां रावण-पालिताम् ।
प्राकारम् अभि[14] चाऽऽप्लुत्य[14] विविशुस् ते प्लवं-गमाः ॥२१॥
ददृशुर् देवताऽऽगारे रावणं रक्षि-रक्षितम्[15] ।
स्रुव-हस्तं सम्-आसीनं प्राङ्-मुखं रक्त-वाससम् ॥२२॥
रक्तोष्णीष-धरं वीरं[16] पुरा[17] ज्वालित-पावकम्[17] ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ—अपिसं० । रा$_2$—अभिसंगतैः ॥ २. रा$_2$ फ—रौद्रैर्मंत्रैर् ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ—संसि० । ४. रा$_2$ फ—०या वीर । भ—तावत्त्वया महावीर ॥ ५. प्र रा$_2$ फ—राक्षसः । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—यत्र संपरि० ॥ ७. भ—सुग्रीवमभि० ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—विघ्नंकरभयंकरान् । भ—विघ्नं कुरु भयंकरं । ९. रा$_2$ फ—वर्जं—सुषेणं च गवाक्षं च गवयं च महाबलम् ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ—चैव । ११. प्र—नास्ति ॥ १२. भ—हरिभिः ॥ १३. भ—भेजिरे ॥ १४. रा$_2$ फ—अथ चोत्पत्य ॥ १५. रा$_2$ फ—बलरक्षितं ॥ १६. रा$_2$ फ—देवं । १७. रा$_2$ फ—पुरोज्व० । रा$_1$ ल$_1$ ल$_2$ ब प्र—अत आरभ्य २४-शश्लोकस्य प्रथमपादं यावन्नास्ति ।

विद्युद्-भास्वर-संयुक्तं सन्ध्यायाम् इव तोय-दम् ।।२३[1]।।
तं बाहु-पादप-धरं किरीटोच्छ्रित-शृङ्गिणम्[2] ।
हार-निर्झर-तोयाऽऽढ्यं महा-वदन-कन्दरम् ।
वासो-मनःशिल-धरं गिरिं नीलम् इव स्थितम् ।।[3]२४[3]।।
दृष्ट्वा तस्याऽद्भुतं[4] कर्म[4] वानराः कृत-निश्चयाः ।
हनू-मन्तं पुरस्-कृत्य सर्वे युद्धाय तस्थिरे ।।२५।।
राक्षसाश् च[5] महा-वीर्याः प्राऽऽसाऽसिपरिघाऽऽयुधाः ।
दंशितास्[6] तस्थिरे सर्वे युद्धायाऽमित-विक्रमाः ।।२६[7]।।
ते बलेऽन्योऽन्यम्[8] आ-साद्य रणे[9] वानर-रक्षसाम्[10] ।
चक्राते क्र-दनं घोरम् अद्भुतं लोम-हर्षणम्[11] ।।२७।।
पाद-पैः शैल-शृङ्गैश् च शिलाभिर् दशनैर् नखैः ।
वानरा राक्षसाञ् जघ्नुस् तलैर् मुष्टिभिर् एव च ।।२८[7]।।
राक्षसाः क्रोध-रक्ताऽक्षास् तथा वानरपुङ्गवान् ।
नाराचैर् बिभिदुस् तीक्ष्णैश् चिच्छिदुश् च महाऽसिभिः ।।२९।।
ते छिन्न-भिन्न-सर्वाऽङ्गा[12] वानरास् त्यक्त-जीविताः ।
नि-पेतुर् भू-तले भिन्ना[13] केचिद्[14] रुधिर-कर्दमे[15] ।।३०।।
रक्षांसि च तथा पेतुर् वानरैर् भीम-विक्रमैः ।
चूर्णिता वि-विधैः[16] शैलैः[16] पाद-पैर् मुष्टिभिस् तथा[17] ।।३१।।
दारिताश् च नखैस् तीक्ष्णैर्[18] दन्तैर् अपि सु-दारुणैः ।
तत् प्र-वृत्तं महद् युद्धं कबन्ध-शत-सङ्कुलम् ।।३२।।
शूराणां हर्ष-जननं भीरूणां भय-वर्धनम्[19] ।[20]

---

१. अ–नास्ति ॥ २. रा$_2$ फ–०तभूषणं । ३. रा$_1$ ल$_1$ ल$_2$ ब प्र–वासो मनःशिलाघोरं रौद्रं रौद्रपराक्रमम् । रा$_2$–नास्ति । अतः परमधिकः पाठः—फ–स्रवंतमद्भुताकारं रुद्रं रौद्रपराक्रमम् ॥ ४. भ–तमद्भुताकारं ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब प्र–तु । ६. रा$_1$ ल$_1$ ल$_2$ ब प्र–दंसितास् । ७. अ–नास्ति ॥ ८. भ–च तेन्यो० । ९. रा$_2$–घोरे । १०. रा$_1$ ल$_1$ ल$_2$ ब प्र–०राक्षसे । भ–०राक्षसाः । ११. रा$_2$ फ–रोम० ॥ १२. रा$_2$ फ–वर्जं—छिन्ना भि० । १३. ब भ–भग्ना । १४. भ–वमंतो । १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०रमुद्वमन् । भ–रं बहु ॥ १६. रा$_2$ फ–भिन्नेषु–निशितैः शैलैः । भ–०धैः शूलैः । १७. रा$_1$–तदा ॥ १८. रा$_2$ फ–भिन्नेषु–चैव ॥ १९. रा$_2$ फ–च भयावहं । २०. अतः परमधिकः पाठः–ल$_1$ ल$_2$ ब अ प्र–युद्धं पौरुषशिष्याणां निष्कर्षार्थं मनस्विनाम् । यशःपताकहर्षाणां स्वर्गं द्वारमपावृतम् ॥

हर्षणं सुर-नारीणां सर्व-दुःख-विमोक्षणम्[1] ।।३३[2]।।
तस्मिन् युद्धे महा-घोरे रक्षो-वानर-संक्षये ।
प्राऽवर्तत नदी घोरा शोणितोदक-वाहिनी ।।[3]३४।।
शूर-प्रमोद-जननी भीरूणां भय-वर्धिनी ।
क्रव्याऽदाऽऽनन्द-जननी गृध्रकङ्कोत्सवा[4] तदा[4] ।।३५।।
दुर्-गमा ह्य् अल्प-सत्त्वानां सेव्या तेजस्विनां तथा ।
उत्-तेरुस् तां नदीं सर्वे यूथ-पास् ते महौजसः ।।३६[5]।।
दृष्ट्वाऽपि[6] स्व-बलं[6] भग्नं हत-वीरं[7] गत-प्रभम् ।[8]
राक्षसेन्द्रो न चुक्रोध जुहावाऽग्निं समा-हितः ।।३७।।
वानरैस् तद् बलं भग्नं[7] दृष्ट्वा संहृष्ट-मानसाः ।
अङ्गद-प्रमुखाः सर्वे विविशुर् देवताऽऽलयम् ।।३८।।
आ-स्फोटयामास तदा समीपे तस्य रक्षसः ।
हनू-मान् वाक्यम् एतच् च स-रोषं[9] प्राऽऽह रावणम्[10] ।।३९।।
किम् आस्सेऽद्य[11] नयं[12] त्यज्य[12] शूरस् त्वं राक्षसेश्वर[13] ।
न हि[14] सत्त्व-वताम्[14] एवं चरितं तिष्ठसे[15] यथा ।।[16]४०।।
क्व त(?त्व)न् नयः क्व शान्तिस् ते सा सिद्धिः क्व च रावण ।[17]
न त्वं(?त्व् अ)धर्म-कृतं(?तां)कर्म तादृशं[18] धर्मम्[18] आप्नुयाः(?यात्)।४१[19]।।

---

१. रा$_{1}$, ल$_{1}$, ल$_{2}$ ब अ प्र–०दुष्टवि० । २. भ–नास्ति ॥ ३. अतः परमधिकः पाठः—रा$_{2}$ फ भ–नानापताकासंवृत्ता द्विपदेह शिलातटा । विकोशासिचरन्मीना मांसक्लेदककर्दमा ॥ रथचक्रमहाग्राहा पाशपट्टिशभोगिनी । शीर्णाभरणरत्नाढ्या हतशूरमुखांबुजा ॥ चर्मकच्छपसंबाधा वस्त्रफेनावगाहिनी ॥ ४. भ–०त्सवांभसा ॥ ५. अतः परमधिकः पाठः—रा$_{2}$ फ भ–नरा विच्छिन्नपाप्मानो नदीं वैतरणीमिव । राक्षसा हतभूयिष्ठा विरथा हतचेतसः ॥ त्यक्तसंभ्रमसत्त्वास्ते भेजिरे सर्वतो दिशः ॥ ६. रा$_{1}$, ल$_{1}$, ल$_{2}$ ब अ–वानराश्च बलं । रा$_{2}$–०पि सबलं । ७. ब–नास्ति । ८. फ–अत आरभ्य ५४–शश्लोकपूर्वार्धं यावन्नास्ति ॥ ९. भ–०षः । १०. रा$_{2}$–राक्षसं ॥ ११. रा$_{1}$–आसने । १२. भ–भयं त्यक्त्वा । १३. रा$_{2}$ भ–०साधम । १४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–निहतं निहतां । १५. भ–वर्जं—तिष्ठते । १६. रा$_{2}$–अत आरभ्य ४३–शश्लोकस्य द्वितीयपादं यावन्नास्ति ॥ १७. भ–क्व ते रूपं क्व सोऽसिस्ते सा सिद्धिः क्वाथ रावण। १८. भ–यादृशीं सिद्धिं । १९. अतः परमधिकः पाठः—भ–त्वं रावण न शूरो वा न योद्धा मेऽसि सम्मतः ॥

न चाऽप्य् औशनसं (?सो) मन्त्रं (?न्त्रश्) चेष्टतां[1] राक्षसाऽधम ।
राम-वीर्य-विषं यस्य चरत्य् अङ्गेषु साऽऽयुधम्[2] ॥४२॥
नैव ते वर-दानानि न तथा तव[3] शिक्षितम्[3] ।
भवेद्[4] यथा न[4] लङ्केश नैव[5] सिद्धिर् नराऽन्तक[6] ॥४३॥
उत्-तिष्ठोत्-तिष्ठ युध्यस्व न मे जीवन् वि-मोक्ष्यसे[7] ।
अ-गृहीताऽऽयुधं भीमं न हन्मि त्वद्-विधं रणे ॥४४॥
हनू-मतैवम् उक्तोऽपि रथम् इच्छन् हुताऽशनात् ।
जुहावाऽऽहुतिम् एवाऽथ न चुकोप कथं-चन ॥४५॥
ततो वायु-सुतः श्री-मान् सर्वान् वानर-यूथपान् ।
उवाच वाक्यं[8] काल-ज्ञः शृण्वतस्[9] तस्य रक्षसः ॥४६॥
यथा मन्दोदरीं शीघ्रम् आ-नयध्वं प्लवं-गमाः ।
नाऽन्यथा शक्यते कर्तुं मन्युर् अस्य दुर्-आत्मनः ॥४७॥
वि-जानात्व् एष पापाऽऽत्मा यत् फलं पाप-कर्मणाम्[10] ।
यद् अनेनाऽवशा[11] सीता जन-स्थानाद् धृता बलात् ॥४८॥
न ह्य् अ-धर्मोऽत्र युष्माकं माऽभूत् सिद्धिर्[12](?काचिद्)विचं(?चा)क्ष(?र)णा[12]
न हि दुष्यति लोकेऽस्मिन् पापे पापं समा-चरन् ॥४९॥
इति तस्य वचः श्रुत्वा वालि-पुत्रोऽब्रवीद् इदम् ।
आ-नयेयम् अहं यूयं सर्वे तिष्ठत वानराः ॥५०॥
भार्याम् अस्य प्रियां त्व् अद्य[13] पश्यतां वः प्लवं-गमाः ।
भवन्तोऽस्याऽग्नि-कार्यं[14] वै[14] वि-ध्वंसयत मा चिरम् ॥५१॥
इत्य् उक्त्वा प्र-विवेशाऽथ रावणस्य नि-वेशनम् ।
अङ्ग-दः प्लवग-श्रेष्ठः सिंहो गिरि-गुहाम् इव ॥५२॥
ततोऽन्तःपुर-मध्यात् तां केशेष्व् आ-दाय वीर्य-वान् ।
निर्-जगाम मृगी-मध्याद् व्याघ्रो मृग-वधूम् इव ॥५३॥

---

१. प्र-चेष्टितं । २. भ-तेऽबुध ॥ ३. भ-रक्षिता शिवः । ४. भ-न भवान्यथा । ५. भ-न ते । ६. भ-न ते जयः ॥ ७. ल₁ ल₂ ब रा₂-०क्षसे ॥ ८. भ-वाचं । ९. रा₁ ल₁ ल₂ ब अ प्र-शृणुतस् ॥ १०. भ-०र्मणः । ११. रा₁ ल₁ ल₂ ब अ प्र-०न च सा ॥ १२. रा₁ ल₁ ल₂ ब अ प्र-कश्चिद्विचक्षणः । भ-०णाः ॥ १३. रा₁ ल₁ ल₂ ब अ प्र-अस्य । १४. रा₁ ल₁ ल₂ ब अ प्र-हतवंतोऽग्निकार्यं वो । भ-०र्यं हिं ॥

तां विकीर्ण-शिरो-मालां प्रभ्रष्टोत्तरवाससम् ।
आ-नीय रावणस्याऽन्तम् इदम् आहाऽङ्ग-दो वचः ॥५४॥
इमां मन्दोदरीं पार्श्वान् नयामि तव पश्यतः ।
नहि मुञ्चाम्य् अहं शूर मैथिलीं त्वं यथा पुरा ॥५५॥
या[1] ते[1] शक्तिर् बलं वीर्यं तेन तिष्ठ[2] त्वम् अग्र-त[2]ः ।
कृत्वा शिरसि ते पादं नयाम्य् एनां प्रियां तव ॥५६॥
तच् छ्रुत्वा रावणः क्रुद्धो दृष्ट्वा नीतां प्रियां तदा ।
उत्था (द्-स्था) य सहसा क्रोधात् त्यक्त्वा होमं दशाऽऽननः ॥[3]५७॥
अङ्ग-दं मुष्टिना जघ्ने मूर्च्छितः स पपात ह ।
ताम् आ-दाय भुजाभ्यां तु ताडयित्वा[4] च[4] रावणम् ।[5]
लांगूलेनाऽञ्जना-पुत्रस् तं नि-हत्योत्-पपात ह ॥५८॥
तथा[6] तस्योदकं स्रुच्यं[7] दर्भान् पावकम् एव च ।
बलि-कर्म च वि-ध्वस्य खम्[8] उत्-पेतुर्[8] महा-जवाः[9] ॥५९॥
ततो मन्दोदरी दीना रावणं वाक्यम् अब्रवीत् ।
किं न पश्यसि मां राजन्न् अ-नाथां त्वयि जीवति ॥६०॥
वानरैः परि-क्लिश्यन्तीम् इतश् चेतश् च धावतीम् ।
पतितां च निर्-आशां च भार्यां[10] दृष्ट्वाऽथ रक्षसः[10] ॥६१[11]॥

---

१. भ–यथा । २. रा₂ फ–तिष्ठस्व मेग्रतः ॥ ३. रा₂ फ–नास्ति ॥ ४. रा₂ फ–०त्वा तु । भ–ताडयामास । ५. प्र–नास्ति ॥ ६. भ–तदा । ७. रा₂ फ म–हव्यं । ८. भ–समुत्० । ९. रा₂ फ–प्लवंगमाः ॥ १०. भ-वर्ज–नास्ति ॥ ११. अतः परमधिकः पाठः—रा₂ फ–शोकातुरपरिभ्रष्टां रूढामिव जले लताम् । विज्ञानबलसंपन्नैः पुरुषैर्लोकवर्तिभिः । पुत्रदारसुखार्थं हि जीवितव्यमिति स्थितिः ॥ त्वं पुनः पुत्रदारस्य सुहृद्बन्धुजनस्य च ॥ कृत्वा विनाशं लब्धाशीः किं सुखं तद् ब्रवीहि मे ॥ न श्रुतं धर्मशीलस्य भ्रातुर्वाक्यं त्वया हितम् । मद्वचनं न कृतं राजन्न श्रुतं सुहृदां तथा ॥ अर्थशास्त्रविदां सम्यक्कृतं न च हितैषिणाम् । शिष्येणौशनसः साक्षात्कथमात्मा निवेशितः । कथं लोकापवादात्ते भयाल्लज्जा न विद्यते । अपवादभयात्संतस्त्यजंति सुखमागतम् । धर्ममूलं सुखं सर्वं यशो धर्मात्प्रवर्तते । अयशो यस्य लोकेऽस्मिन् यं सञ्चरति शाश्वतम् । तस्य लोकावुभौ नष्टौ सुखं चैव न कुत्रचित् ॥ जहि राक्षसराजेंद्र शत्रूनुत्तिष्ठ मा चिरम् । श्रेयो हि मरणं पुंसां नापवादान्मनस्विनाम् ॥ इति तस्या वचः श्रुत्वा करुणं परिदेवितम् । दृष्ट्वा तस्याः परामर्शं रावणः क्रोधमूर्च्छितः । साभिमानैर्वचोभिस्तां सांत्वयन्निदमब्रवीत् ॥

तस्य[1] निष्-क्रममाणस्य[1] दग्धु-कामस्य रोदसी ।
रूपम् आसीन् महा-घोरम् अर्कस्येव[2] युग-क्षये ॥६२॥
निमित्तानि च तत्राऽऽसन् भय-शंसीनि सर्व-तः[3] ।[4]
प्रति-लोमं[5] ववौ वायुर् मन्द-रश्मिश् च भास्-करः ॥[6]६३॥
सागरश् चुक्षुभे चैव चकम्पे च वसुं-धरा ।
जानुभिः पेतुर् अश्वाश् च मुमुचुर् वाष्पम् एव च ॥६४॥
तान् उत्-पातान् अ-चिन्त्यैव रावणः क्रोध-मूर्च्छितः ।[7]
शरान्[8] आ-दाय वेगेन[8] रण-भूमिं विवेश ह[9] ॥६५॥

इत्यार्षे रामायणे युद्ध-काण्डे[10] मन्दोदरी-केश-ग्रहणं[11] नाम
द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

## [ वं–८६ ]= [ त्र्यशीतितमः सर्गः ] =[ दा–१०३ ]

राघवोऽपि च तं दृष्ट्वा क्रोध-पर्याकुलेक्षणः[12] ।[13] [N

---

निर्धापयन्निव परैर्दह्यमानां वनस्थलीम् । किं रोदिषि शुभे दीना मयि जीवति मानिनि ॥ न मे कश्चित्समो युद्धे त्रिषु लोकेषु भामिनि । सेंद्राः सुरगणाः सर्वे तिष्ठन्ति हि वशे मम ॥ किमल्पसारैः शक्योऽहं जेतुं मानुषवानरैः । मयाद्य त्रासितं तेषां बलं सर्वं वनौकसाम् ॥ न तु शक्ष्यामि तन्वंगि न्यक्कारं सोढुमीदृशम् । चिरप्रमादमलिनां विद्यां गुरुकुलादिव ॥ तीव्रक्रोधस्य पश्यामि संग्रामे युध्यतः परैः । न मे दृष्टिपथं गच्छेन्मम वीर्यं दुरासदम् ॥ मा भैः शत्रुशिरांस्यद्य निकृत्याहं यशस्विनि । मन्दोदरि करिष्यामि तवाद्याश्रुप्रमार्जनम् ॥ इति तां शोकसंतप्तां शमयित्वा तु रावणः । रथमारुह्य वेगेन निर्जगाम रणं प्रति ॥ संक्रुद्धः कवची खड्गी शरी धन्वी तथैव च ।

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–नास्ति । भ-कोपेन परिपूर्णस्य । २. रा$_2$ फ–कालस्येव ॥ ३. भ–रक्षसः । ४. रा$_2$ फ भ–वर्जं—नास्ति । ५. भ–०लोमो । ६. रा$_2$ फ भ–वर्जं–तेऽपि मंदोदरीं त्यक्त्वा खमगुस्तत्र वानराः ॥ ७. अतः परमधिकः पाठः—भ–रथस्थः सोऽब्रवीच् छीघ्रं रणार्थं लोकरावणः । ८. रा$_2$ फ–सशरं धनुरादाय । ९. भ–च ॥ १०. प्र भ–लंकाकांडे । ११. म–रावणप्रधर्षणो ॥ १२. रा$_1$–०णम् । १३. रा$_2$ फ–नास्ति ।

N] [1]रावणस्य[2] शरान् घोरान् वि-ससर्ज चमू-मुखे ।।१[3] ।।[१उ
दश-ग्रीवो रथ-स्थस्[4] तु[4] रामं वज्रोपमैः शरैः ।
N] आ-जघान[5] महा-घोरो[5] धाराभिर् इव तोय-दः ।।२[6] ।।[२
ततः[7] पावक-संकाशैः शरैः काञ्चन-भूषणैः[8] ।
N] अभ्य्-अवर्षद्[9] रणे रामो दश-ग्रीवं समा-हितः ।।[10]३ ।।[४
भूमौ[11] स्थितस्य[11] रामस्य रथ-स्थस्य च रक्षसः ।
६] न समं युद्धम् इत्य् आहुर् देव-गन्धर्व-दानवाः ।।[12]४ ।।[५

---

१. इतः पूर्वमधिकः पाठः—रा$_{2}$ फ–ततः संस्मृत्य पुत्रं तु शक्रजेतारमाहवे । कुम्भकर्णं महावीर्यं भ्रातरं विपुलौजसम् ॥ प्रहस्तादीनमात्यांश्च सर्वान्संस्मृत्य पातितान् । राजाशां जीविताशां च त्यक्त्वैश्वर्यस्पृहां तथा । बन्धुशोकसमाविष्टः क्रोधात्मा क्रोधमाहरन् ॥ यथा मध्यगतो भानुर्दुर्निरीक्ष्यो जनस्य तु । तथा क्रोधतनुर्दीप्तो रावणः स बभूव ह ॥ आत्मनात्मानमुद्यम्य रावणः क्रोधमूर्छितः । संग्रामाभिमुखो राममब्रवीत् परुषं वचः ॥ राम त्वं तु समाश्वस्तः समाश्वस्तस्तथाप्यहम् । स्थितस्त्वया समं योद्धुं तिष्ठेदानीं स्थिरो भव ॥ विरथश्चास्मि संवृत्तस्त्वत्सकाशादरिंदम । क्रमेण परिनष्टाश्वस्तेनाहमपयातवान् ॥ नाहं बिभ्ये सुराणां हि समस्तानामपि प्रभो । किं पुनर्वानराणां तु येषामाश्रयिता भवान् ॥ यत्ते वीर्यं बलं तेजः सर्वशस्त्रेषु या प्रभा । तद्दर्शय ममाद्य त्वं पुरुषो भव राघव ॥ काकुत्स्थोपि महातेजाः श्रुत्वा रावणभाषितम् । न किंचिदुक्त्वा धर्मात्मा तस्थौ संग्राममूर्धनि ॥ लक्ष्मणस्य वचः श्रुत्वा स व्रीडितमनास्तदा । २. भ–रावणाय । ३. अतः परमधिकः पाठः—रा फ–विवृत्य नयने धीरो रावणो लोकरावणः । अभ्यद्रवत काकुत्स्थं स्वर्भानुरिव भास्करम् ॥ म भ–दशग्रीवस्त्वपक्रम्य मायया राक्षसर्षभः । कल्पयामास रुचिरं रथं पावकसन्निभम् ॥ युक्तं मनुष्यभयदैर्हयैः परमशीघ्रगैः । सर्वशस्त्रायुधोपेतं कालाग्निसमदर्शनम् ॥ मनसस्तुल्यगं दिव्यं सुचक्रं सुवरूथिनम् । प्राज्ञसूतयुतम् श्रीमत् सर्वगं हेमभूषितम् ॥ ४. भ–तमारुह्य । ५. म–अभ्यवर्षत्पुनर्भीमो । भ–०घोरैर् । ६. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–नास्ति । अतः परमधिकः पाठः—म–राघवाय शरान्घोरान्विससर्ज महाबलः । दशग्रीवो रणश्लाघी प्रमुखे हरियूथपान् ॥ ७. रा$_{2}$ फ–अथ । ८. भ–कनकभू० । ९. भ–अभ्यद्रवद् । १०. म भ–वर्जं—नास्ति ॥ ११. रा$_{2}$ फ–भूमिस्थस्य च । १२. अतः परमधिकः पाठः—रा$_{2}$ फ–ततो देववरः श्रीमाञ्छ्रुत्वा तेषां वचोऽर्थवत् । आहूय मातलिं शक्रो वचनं चेदमब्रवीत् ॥ रथेन मम भूमिस्थं शीघ्रं याहि रघूत्तमम् । रामाय मातले यन्तः कुरु देवहितं महत् ॥ इत्युक्तो देवराजेन मातलिः शक्रसारथिः । प्रणम्य शिरसा देवं ततो वचनमब्रवीत् ॥ ततो हयांश्च संयोज्य हरिभिः स्यंदनोत्तमम् । स्वर्गाज्जयार्थं रामाय परिचक्राम मातलिः ॥ भ–देवतानां वचः श्रुत्वा शतक्रतुरनंतरम् । प्रेषयामास रामाय रथं मातलिसारथिम् ॥

ततो रत्न-विचित्राऽङ्गः[1] किङ्किणी-जाल-भूषितः[2] ।
८] तरुणाऽऽदित्य-सङ्काशो वैडूर्य-मय-कूबरः[3] ॥५ ॥[१०
सद्-अश्वैः काञ्चनाऽऽपीडैर् युक्तः[4] श्वेत-प्रकीर्णकैः[5] ।
९] हरिभिः सूर्य-सङ्काशैर्[3] हेम-जाल-विभूषितैः ॥६ ॥[११
रुक्म-दण्ड-ध्वजः[6] श्रीमान् देवराज-रथोत्तमः[7] ।[8]
१०] अभ्य्-अवर्तत काकुत्स्थम् अव-तीर्य त्रि-विष्टपात् ॥[9]७ ॥[१२
अब्रवीच् च तदा[10] रामं स-प्रतोदो रथे स्थितः ।[11]
१९] प्राऽञ्जलिर् मातलिर् वाक्यं सहस्राऽक्षस्य सारथिः ॥८ ॥[१३॥
सहस्राऽक्षेण काकुत्स्थ रथोऽयं वि-जयाय वै[12] ।
२०] प्रेषितस्[13] ते[13] महेन्द्रेण श्री-मान्[14] छत्रु-निबर्हणः ॥९ ॥[१४
इदम् ऐन्द्रं महच् चापं कवचं चाऽपि[15] सु-प्रभम्[15] ।
२१] शराश् चाऽऽदित्य-सङ्काशाः[16] शक्त्यश् च वि-मलाः शिताः[16] ॥१०॥[१५
आ-रुह्यैनं[17] रथं वीर[18] राक्षसं जहि[18] रावणम् ।

---

१. रा$_{2}$ फ म–कांचनचि० । भ–कनकचि० । २. रा$_{2}$ फ–०णीकृतभूषणः । भ–०लसंवृतः । ३. फ–नास्ति ॥ ४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–युक्तैः । ५. रा$_{2}$–श्वेतैः प्र० ॥ ६. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–०डधरः । भ–रुक्मवेणुध्वजः । ७. ल$_{1}$–०थो स्थितः । रा$_{2}$ फ–०थो महान् । भ–०थो वरः । ८. अतः परमधिकः पाठः—रा$_{2}$ फ–तं रथं समुपादाय मातलिः शक्रसारथिः । ९. ल$_{1}$–नास्ति । अतः परमधिकः पाठः—भ–रामलक्ष्मणसुग्रीवा हनूमान् सविभीषणः । अवतीर्णं रथं दृष्ट्वा सर्वे विस्मयमागताः ॥ विस्मितौ रामसुग्रीवौ लक्ष्मणः सविभीषणः । अंगदो जांबवांश्चैव केशरी पनसस्तथा ॥ मंत्रयंति स्म तेऽन्योऽन्यं कारणं हि भविष्यति । उपायेनेदृशेनायं छलितुं नूनमिच्छति ॥ बहुमायाधरः क्रूरो रावणो राक्षसाधिपः । रामस्य वचनं श्रुत्वा सुग्रीवो वाक्यमब्रवीत् ॥ वयं सर्वे परीक्षामो रथमश्वं ससारथिम् । अश्वान् संस्थितान्भूमौ युद्धसज्जान्मनोजवान् ॥ विभीषणो महाप्राज्ञो दृष्ट्वा वचनमब्रवीत् । सुविश्रब्धं रथं वीर आरोह त्वमशंकितः ॥ अहं सर्वां विजानामि मायां वै राक्षसामिह । अभिगम्य च काकुत्स्थं दशग्रीवस्य पश्यतः ॥ १०. रा$_{1}$ ल$_{2}$ ब अ प्र–तथा । रा$_{2}$ फ–ततो । ११. ल –नास्ति ॥ १२. ल$_{1}$ ल –च । रा फ–ते । १३. रा$_{2}$ फ म–दत्तस्तव । १४. म–शीघ्रं ॥ १५. रा$_{2}$ फ भ–चाग्निसन्निभं । १६. म–०काशाः शक्तिश्च विपुलाः शिलाः ॥ १७. रा फ म भ–आरुह्येमं । १८. म–त्रुटितः पाठः । भ–राम राक्ष० ।

मया सारथिना युक्तं[1] महेन्द्र इव दानवान् ॥११[2]॥[१६
२३पू] इत्य् उक्तः स परि-क्रम्य जयाय[3] रथम् अस्त्र-वित्[3] ।[4]
२४उ] आ-रुरोह रथं रामो लोकं[5] लक्ष्म्या वि-राजयन्[5] ॥१२[6]॥[१७
ततोऽभवन्[7] महा-युद्धं[7] द्वैरथं रोम-हर्षणम्[8] ।
२७] रामस्य च महा-बाहोर् बलिनो[9] रावणस्य च[9] ॥१३॥ [१८
गान्धर्वेण तु गान्धर्वं दैवं दैवेन राघवः ।
२८] अस्त्रं राक्षस-राजस्य जघान परमाऽस्त्र-वित् ॥१४॥ [१९
अस्त्र-युद्धे च परमे रावणो राक्षसेश्वरः ।[10]
२९] ससर्ज परम-क्रुद्धः पुनर् एव स[11] राघवे[11] ॥१५॥ [२०
ते रावण-धनुर्-मुक्ताः शराः काञ्चन-भूषणाः[12] ।
३०] अभ्य्-अवर्तन्त काकुत्स्थं सर्पा[13] भूत्वा महा-विषाः ॥१६॥ [२१
ते सर्प-वदना[14] घोरा वमन्तो ज्वलनं मुखैः ।
३१] रामम् एवाऽभ्य्-अवर्तन्त[15] व्यादिताऽऽस्या भयाऽऽवहाः[16] ।१७[२२

---

१. रा$_2$ फ–राजन् । भ–राम । २. अतः परमधिकः पाठः—भ–एवमुक्तस्तदा तेन दृष्ट्वा दिव्यं च तं रथम् । विभीषणमथोवाच राघवो बुद्धिसम्मतम् ॥ सुग्रीवं चैव दुर्धर्षं लक्ष्मणं च महारथम् । हनूमंतं सुषेणं च प्रधानांश्च हरींस्तथा ॥ परीक्षध्वं रथं सर्वे रक्षसा निर्मितं भवेत् । परीक्षितं यथातत्त्वमारोक्ष्यामि ततो रथम् ॥ तस्य तद्वचनं श्रुत्वा वानराः सविभीषणाः । परीक्ष्य सुचिरं बुद्ध्या रथं तस्य न्यवेदयन् ॥ इन्द्रदत्तमिमं वीर आरोह त्वमशंकितः । रावणं च दुराधर्षं राक्षसं जहि राघव ॥ भ–वर्जं–विभीषणमतेनैव परीक्ष्य च यथाबलम् । रा$_2$ फ–यथाबलं यथावीर्यं रथस्थो रथिनां वरः । हन त्वं राक्षसान्राजन् महेंद्र इव शम्बरम् ॥ ३. रा$_2$ फ भ–रथं तमभिवाद्य च । ४. अतः परमधिकः पाठः—भ–प्रदक्षिणं तथा कृत्वा मातलिं वाजिनस्तथा । ५. भ–विभीषणपरीक्षितं । ६. रा$_2$ फ–अतः परं सर्गसमाप्तिः—इत्यार्षे रामायणे युद्धकांडे महेन्द्ररथावतरणो नाम सर्गः । अधिकः पाठः—भ–कवचं च समाबद्ध्य माहेंद्रं राघवस्तदा । श्रियाभिरुरुचे रामो लोकपालाधिराजवत् ॥ ते तु दिव्या हरिहया जानुभ्यामगमन्महीम् । सन्नियम्य तु तानश्वान् मातलिर्वरसारथिः । मनसादेशयामास यथेप्सितमरिंदमः ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–तद्बभूवाद्भुतं युद्धं । भ–अथाभूदद्भुतं । ८. म भ–लोम० । ९. रा$_2$–०नो राक्षसस्य च । भ–रावणस्य च रक्षसः ॥ १०. भ–अस्त्रं तत्परमं घोरं राक्षसो राक्षसाधिपः । ११. म–च रा । भ–निशाचरः ॥ १२. रा$_2$ अ–०भूषिताः । १३. प्र–शरा ॥ १४. भ–दीप्त० । १५. भ–एवाभ्यधावंत । १६. म–महाभयाः ॥

तैर् वासुकि-सम-स्पर्शैर् दीप्त-भोगैर्[1] महा-विषैः ।
३२] दिशश् च वि-दिशश् चैव समन्ताद् आ-वृता बभुः ॥[2]१८॥[२३
रामः[3] सं-पततो दृष्ट्वा पन्न-गांस् तान्[3] सहस्र-शः ।
३३] सौपर्णाऽस्त्रं[4] तदा[4] घोरं पुनः[5] प्राऽवर्तयद् रणे[5] ॥१९॥[२४
रामेण तु शरा मुक्ता रुक्म-पुङ्खाः शिला-शिताः ।[6]
३४] सु-पर्णाः काञ्चना भूत्वा वि-रेजुः[7] सर्प-शत्रवः ॥२०॥[२५
ते तान् सर्वाञ् छराञ् जघ्नुः[8] सर्प-भूतान्[9] महा-विषान् ।
N] सुपर्ण-रूपा रामस्य वि-शिखाः काम-चारिणः[10] ॥२१॥[२६
अस्त्रे प्रति-हते क्रुद्धो[11] रावणो राक्षसेश्वरः[12] ।
३५] अभ्य्-अवर्षत् तदा रामं घोराभिः शर-वृष्टिभिः ॥२२॥[२७
ततः शर-सहस्रेण रामम् अ-क्लिष्टकारिणम् ।[13]
३६] अर्दयित्वा[14] शरौघेण मातलिं प्रत्य्-अविध्यत ॥[15]२३॥[२८
पातयित्वा रथोपस्थे रामम् अ-क्लिष्टकारिणम् ।[16]
३७] ऐन्द्रान् अश्वान् अभ्य्-अहनद्[17] घोराभिः शर-वृष्टिभिः[17] ॥२४॥[२९
वि-षेदुर्[18] देव-गन्धर्वाश् चारणाः[19] पितरस् तथा[19] ।
३८] रामम् आर्तं तदा[20] दृष्ट्वा सिद्धाश्[21] च परमर्षयः[21] ॥२५॥ [३०उ
व्यथिता वानरेन्द्राश् च व्यथितश्[22] च वि-भीषणः[22] ।
३९] रामं चन्द्र-समं दृष्ट्वा ग्रस्तं रावण-राहुणा ॥[23]२६॥[३१
प्राजापत्यं तु नक्ष-त्रं[24] रोहिणीं शशिनः प्रियाम्[25] ।
४०] समा-क्रम्य बुधस् तस्थे प्र-जानाम् अ-हिते रतः ॥२७॥[३२

---

१. भ–दीप्तजिह्वैः । २. भ–दिशश्च संवृताः सर्वाः प्रदिशश्च समावृताः ॥ ३. भ–तान् दृष्ट्वा पन्नगान् रामः पततोऽथ । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–०र्णमस्त्रं तद् । ५. भ–प्रादुश्चक्रे भयानकं ॥ ६. भ–राघवेण ततो मुक्ता रुक्मपुंखाः शिखिप्रभाः । ७. रा$_2$ फ म भ–विचेरुः । ८. रा ल$_1$ ल$_2$ ब अ प्र–भित्वा । ९. रा$_2$ फ म भ–सर्परूपान् । १०. प्र रा$_2$ फ म भ–कामरूपिणः ॥ ११. रा$_1$ ल ल$_2$ ब अ प्र–क्रूरे । १२. भ–०साधिपः ॥ १३. ब–अत आरभ्य २४-शश्लोकं यावन्नास्ति । १४. भ–पूरयित्वा । १५. रा$_1$ ल$_1$ ल$_2$ अ प्र–नास्ति ॥ १६. भ–सूदयित्वा रथोपस्थे रथकेतुं च कांचनं । रा$_1$ ल$_1$ ल$_2$ अ प्र–नास्ति । १७. भ–जघानाशु शरैरानतपर्वभिः ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–विनेशुर् । भ–ऋषयो । १९. भ–णाश्च सवासवाः । २०. भ–तथा । २१. प्र–ग्रस्तं रावणराहुणा । म–तौ समेतौ जलदाविव ॥ २२. भ–बभूवुः सविभीषणाः । २३. म–अत आरभ्य सर्गान्तं यावन्नास्ति ॥ २४. टि. वैतु. पाप्र. = न-क्षत्र-इति ॥ २५. रा$_r$ फ–प्रभां ॥

स-धूमः परिवृत्तोर्मिः[१] प्र-ज्वलन्न् इव सागरः[२] ।
४१] उत्-पपात तदा क्रुद्धः स्पृशन्न् इव दिवा-करम् ॥[३]२८॥[३३
शस्त्र-वर्णः[४] स-परुषो मन्द-रश्मिर् दिवा-करः ।[३]
४२] अदृश्यत[५] कबन्धाऽङ्कः सं-सक्तो धूम-केतुना ॥२९॥[३४
कोशलानां[६] तु न-क्षत्रं[६] ज्येष्ठाम्[७] इन्द्राऽग्नि-दैवतम् ।
४३] आ-क्रम्याऽङ्गारकस्[८] तस्थौ वि-शाखाम् अपि चाऽम्बरे ॥[९]३०॥[३५
दश-ग्रीवो विंश-भुजः प्रगृहीत-शराऽऽसनः ।[१०]
४४] अदृश्यत तदाऽकम्पो[११] मैनाक इव पर्वतः ॥३१॥ [३६
निर्-अस्यमानो रामस् तु दश-ग्रीवेण रक्षसा ।
४५] नैवाऽशक्नोत्[१२] सं-धयितुं[१३] सायकान् रण-मूर्धनि ॥३२[१४]॥[३७
स कृत्वा भ्रूकुटीं[१५] वक्त्रे क्रोध-संरक्त-लोचनः[१६] ।
४६] क्रोधं[१७] चकार सु-भृशं[१७] निर्-दहन्न् इव पावकः[१८] ॥३३॥[३८
सुरपति-धनुर्-आकृतिं ललाटे
भय-जननीं भ्रूकुटीं[१९] वि-तत्य[२०] रामः[२०] ।
हुत-वह इव सर्पिषाऽव-सिक्तो
N] द्विगुण-तरं बल-वांश्[२१] (?मा-)चकार वीरः[२१] ॥३४॥[N
स्व-तेजसा प्र-ज्वलितः परं-तपः
प्र-चक्रमे दर्शयितुं पराऽऽक्रमम् ।
नि-शम्य रामं[२२] परमं व्यव-स्थितं[२२]
N] परं[२३] प्र-हर्षं परमर्षयो[२३] गताः ॥३५॥[N

इत्यार्षे रामायणे युद्ध-काण्डे[२४] द्वैरथ-युद्धं[२५] नाम त्र्यशीतितमः सर्गः ॥८३॥

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ–०त्तोऽग्निः । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–सागरं । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति ॥ ४. भ–अस्तवर्णः । ५. भ–प्राद० ॥ ६. भ–कौशल्याजन्मन० । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–श्रेष्ठं । ८. भ–आहत्यांगा० । ९. रा$_2$–नास्ति ॥ १०. भ–विंशद्बाहुर्दशग्रीवो दशशीर्षो दशाननः । ११. प्र–०कंप्यो । भ–महातेजा ॥ १२. भ–अशक्नुवन् । १३. रा$_1$ ल$_1$ ल$_2$ ब अ–धर्षयितुं । भ–वारयितुं । १४. अतः परमधिकः पाठः—भ–किंचिदागतसंत्रासस्तस्थौ तत्र रणाजिरे । आविध्यमानः काकुत्स्थस्तीक्ष्णाभिः शरवृष्टिभिः ॥ अभवत्स तदा रामो रोषरक्तांतलोचनः । प्रदहन्निव कोपेन युगांते पावको यथा ॥ १५. प्र रा$_2$ फ–भ्रूकुटी । ब अ–भ्रु० । १६. भ–किंचिदारक्त० । १७. भ–जगाम सुमहाकोपं । १८. रा$_2$ फ म–राक्षसः ॥ १९. प्र रा$_2$ फ–भ्रूकुटीं । ब अ–भ्रु० । २०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–विभज्यमानः । २१. रा$_1$ ल$_1$ ल$_2$ ब अ–भगवांश्च० । रा$_2$ फ–०वांश्चुकोप वीरः । भ–बलमादधत्सुघोरः ॥ २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–रामः परमास्थितः परं । २३. भ–वर्जं –हर्षं परं ते तु महर्षयो ॥ २४. ब प्र भ–लंकाकाण्डे । रा$_2$–युद्धपर्वणि । २५. भ–देवरथागमनं ॥

[1]तस्य क्रुद्धस्य वदनं दृष्ट्वा रामस्य धी-मतः ।
१] सर्व-भूतानि वि-त्रेसुः प्राऽकम्पत मही तदा[2] ॥१ ॥ [१
सिंहशार्दूल-वाञ् छैलः स-सर्पो मलय-द्रुमः ।
२] बभूव चाऽपि[3] क्षुभितः[3] सम्-उद्र इव पर्वसु ॥२ ॥ [२
खराश् च खर-निर्घोषा गगने परुषा घनाः ।
३] औत्पातिका[4] वि-नर्दन्तः[4] सम्-अन्तात् परि-चक्रमुः ॥३ ॥ [३
रामं दृष्ट्वाऽथ[5] सं-रब्धम्[5] उत्-पातांश् च सु-दारुणान् ।
४] त्रस्तानि सर्व-भूतानि रावणं चाऽविशद्[6] भयम् ॥४ ॥ [४
विमान-स्थास् ततो देवा गन्धर्वाः[7] स-महोरगाः[7] ।
५] तदा[8] दानव-दैत्याश् च गरुत्-मन्तश्[9] च खे-चराः ॥५ ॥ [५
ददृशुस् ते ततो युद्धं लोक-संवर्तकं[10] स्थिरम्[10] ।
६] नाना-प्रहरणैर् भीमैः शूरयोः सम्प्र-वृद्धयोः ॥६[11] ॥ [६
ऊचुस् तदाऽसुराः सर्वे सुरैर् वि-ग्रहम् आ-गताः ।
७] प्रेक्षमाणा महा-भागा वाक्यं भक्त्या प्रहृष्ट-वत् ॥७[11] ॥ [७
दश-ग्रीवं जयेत्य् आहुर्[12] अ-सुराः समव-स्थिताः ।
८] देवा रामम् अथोचुश् च जयस्वेति[13] पुनः पुनः ॥८ ॥ [८
एतस्मिन्न् अन्तरे क्रुद्धो[14] राघवाय स रावणः ।
९] प्रहर्तु-कामो दुष्टाऽऽत्मा स्पृष्ट्वा[15] प्र-हरणं महत् ॥९ ॥ [९
१०पू] वज्र-धारं[16] महा-नाभं[17] सर्व-शत्रु-निबर्हणम् ।
N] शैल-शृङ्ग-निभैः कूटैश् चितं[18] दृष्टिभयाऽऽवहम् ॥१०॥ [१०
N] स-धूमम् इव तीक्ष्णाऽग्रं युगाऽन्ताऽग्निचयोपमम्[19] ।
१०उ] अन्-औपम्यम् अन्-आसाद्यं[20] कालेनाऽपि सु-दुःसहम्[21] ॥११॥ [११

---

१. भ–नास्त्ययं सर्गः । २. रा$_{2}$ फ–तथा ॥ ३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–चाभिक्षु० । भ–चातिक्षु० ॥ ४. रा$_{2}$ फ भ–वर्जं—०तिकं निनादं च ॥ ५. प्र रा$_{2}$ फ–दृष्ट्वा सुसं० । भ–च वीक्ष्य सं० । ६. भ–चागमद् ॥ ७. भ–सगंधर्वम० । ८. रा$_{2}$ फ–तथा । ९. रा$_{2}$ भ–वर्जं—गुरुमं० । भ–मरुत्वंतश् ॥ १०. भ–०तंसंस्थितं । ११. भ–नास्ति ॥ १२. भ–ऊचुर् । १३. भ–त्वं जयेति ॥ १४. भ–कोपाद् । १५. रा$_{2}$ फ भ–स्पृशन् ॥ १६. ल$_{1}$–वज्रनाभं । १७. रा$_{2}$–०नादं । १८. भ–वर्जं—चित्रं ॥ १९. भ–०ग्निसमप्रभं । २०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–अनासह्यं । भ–अनाधृष्यं । २१. भ–दुरासदं ॥

त्रासनं सर्व-भूतानां दारुणं नि-नदंस्[1] तथा(?दा)[1] ।
११] प्र-दीप्त इव रोषेण शूलं जग्राह रावणः ॥१२॥ [१२
तच् छूलं रावणः[2] क्रुद्धः[2] प्र-गृह्य[3] युधि वीर्य-वान् ।
१२] अनू-एकैः समू-अरे शूरै रावणः[4] परि-वारितः ॥१३॥ [१३
१३पू] समुन्-नद्य[5] महा-नादं ननाद[6] युधि भैरवम् ।
N] संरक्त-नयनो रोषात्[6] स्व-सैन्यम् अभि-हर्षयन् ॥१४॥ [१४
१३उ] पृथिवीं चाऽन्तरिक्षं च दिशोऽथ वि-दिशस् तथा ।
प्राऽकम्पयत शब्देन राक्षसेन्द्रः सु-दारुणम् ॥[7]१५॥ [१५
१४] अति-नादेन तेनाऽस्य घोरेणाऽत्युग्र-कर्मणा ।[8]
१५पू] सर्व-भूतानि वि-त्रेसुः सागरश् चाऽपि[9] चुक्षुभे[9] ॥१६॥ [१६
स गृहीत्वा महा-वीर्यः[10] शूलं तद्[10] रावणो महत् ।
१६] वि-नद्य सु-महानादं परुषं[11] वाक्यम्[11] अब्रवीत् ॥१७॥ [१७
शूलस्[12] ते वज्र-धारोऽयं[12] राम रोषान् मयोद्-यतः ।[13]
१७] घोरो[14] भ्रातृ-सहायस्य सद्यः प्राणान् हरिष्यति[15] ॥१८॥ [१८
राक्षसानां[16] च[16] शूराणां निहतानां चमू-मुखे ।
१८] त्वां नि-हत्य रण-श्लाघिन् करिष्येऽस्त्रु-प्रमार्जनम्[17] ॥१९॥ [१९
तिष्ठेदानीं नि-हन्मि त्वाम् एष[18] शूलेन[18] राघव ।
१९] एवम् उक्त्वा च[19] चिक्षेप तच्[20] छूलं[20] राक्षसाऽधिपः ॥२०[21]॥ [२०
आ-पतन्तं शरौघैस् तं युगाऽन्ताऽग्निसमप्रभम्[22] ।
२१] निर्-बिभेद तदा रामो वि-रामो रिपु-सम्पदाम् ॥[23]२१॥ [२२

---

१. रा$_2$ फ-दारणं तथा । भ-चातकोपमं ॥ २. भ-परमक्रुद्धः । ३. भ-संगृह्य । ४. रा$_2$-राक्षसैः ॥ ५. भ-वर्जं—समुद्यम्य । ६. भ-नास्ति ॥ ७ भ-प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः ॥ ८. भ-अतीव तेन नादेन तानि तस्यांतकात्मनः । ९. भ-च प्रचु० ॥ १०. भ-महाबाहुस्तच्छूलं । ११. भ-रामं परुषं ॥ १२. रा$_1$ ल$_1$ ब अ प्र-शूलहस्तो वज्रधारो । १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-समुद्यतः । १४. रा$_1$ ल$_1$ ल ब अ प्र-घोरान् । भ-तव । १५. रा$_1$ ल$_1$ ल$_2$ ब-हनिष्यति ॥ १६. भ-रक्षसामद्य । १७. भ-करोम्यश्रुप्र० ॥ १८. भ-शूलेनानेन । १९. भ-स । २०. भ-तं शूलं । २१. अतः परमधिकः पाठः—भ-तं चापि राघवो दृष्ट्वा ज्वलंतं घोरदर्शनम् । ससर्ज निशितान्बाणान् चापमुद्यम्य वीर्यवान् ॥ २२. रा फ-वारयामास राघवः । २३. प्र भ-नास्ति । रा$_2$ फ-उत्पतंतं युगांताग्निं जलौघैरिव सागरः ॥

निर्-ददाह तदा[1] बाणान् राम-कार्मुक-निःसृतान् ।
२२] रावणस्य महा-शूलः[2] पतंगान् इव पावकः ॥२२॥ [२४
दृष्ट्वा तान् भस्मसाद्-भूतान् शूल-स्पर्श-विचूर्णितान्[3] ।
२३] सायकान् अन्तरिक्ष-स्थान् राघवः[4] क्रोध[4] आऽविशत् ॥२३॥ [२५
स तां मातलिना दत्तां[5] शक्तिं वासव-सम्मताम्[6] ।
२४] जग्राह परम-क्रुद्धो राघवो रघु-नन्दनः ॥२४[7]॥ [२६
सा तोलिता बल-वता शक्तिर् घण्टाऽट्टहासिनी ।[8]
२५] नभः[9] प्र-ज्वालयामास[10] युगाऽन्तोल्केव दीप्यती[11] ॥२५॥ [२७
तोलयित्वा जवाच् छक्तिं घण्टा-शत-कृत-स्वनाम् ।
N] चिक्षेप परम-क्रुद्धस् तरसा रघु-नन्दनः ॥२६[12]॥ [N
सा क्षिप्ता राक्षसेन्द्रस्य शूले[13] शक्तिः[13] पपात ह ।
२६] स[14] भिन्नो[14] बहु-धा शूलो[15] नि-पपात महा-द्युतिः[15] ॥[16]२७॥ [२९
निर्-बिभेद ततस् तस्य[17] बाणैर्[18] अश्वान् महा-जवान्[18] ।
२७] रामस्[19] तीक्ष्णैर् महा-वेगैर्[19] वज्र-स्पर्श-समैः शितैः[20] ॥२८॥ [२१
निर्- बिभेदोरसि च[21] तं[21] रावणं नि-शितैस् त्रिभिः[22] ।
२८] राघवः परमाऽऽयस्तो ललाटं[23] च त्रिभिः शरैः[23] ॥२९॥ [३०
स शरैर् भिन्न-सर्वाऽङ्गो[24] गात्रात् प्रस्रुत-शोणितः ।
२९] राक्षसेन्द्रः समूह-स्थः[25] फुल्लाऽशोक इवाऽऽबभौ ॥३०॥ [३१

---

१. भ–स तान् । २. रा$_1$ ल$_1$ ल$_2$ ब अ–तदा शूलं ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०विघूर्णि० । भ–शूलसंस्पर्श० । ४. भ–०वः क्रोधं ॥ ५. भ–नीतां । ६. भ–०वनिर्मिता । ७. अतः परमधिकः पाठः—भ–वर्जं—तोलयामास तां शक्तिं समरे लघुविक्रमः ॥ ८. भ–सा शक्तिस्तोलिता तेन चंडघंटामहास्वना । ९. रा$_2$ फ भ–वर्जं—ततः । १०. रा$_1$ ल$_1$ ल$_2$ ब–प्रजज्वाल च सा । ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–दीप्यते ॥ १२. भ–नास्ति ॥ १३. भ–तस्मिन् शूले । १४. अ प्र फ–तद् भित्वा । रा$_2$–तद्भिन्नं । १५. अ प्र फ–०लं भूमौ सा निपपात ह । रा$_2$–०लं निपपात गतद्युति । १६. रा$_1$ ल$_1$ ल$_2$ ब–नास्ति ॥ १७. भ–बाणैर् । १८. रा$_1$ ल$_1$ ल$_2$ ब अ–०श्वान्महाबलान् । प्र–नास्ति । भ–हयानस्य म० । १९. रा$_2$ फ भ–वर्जं–०क्ष्णैस्ततस्तस्य । प्र–नास्ति । २०. भ–वर्जं—शरैः ॥ २१. भ–क्रुद्धो । २२. भ–शरैः । २३. भ–०टे पत्रिभिस्त्रिभिः ॥ २४. भ–कीर्णस० । २५ रा$_1$ ल$_1$ ल$_2$ ब अ प्र–गिरींद्रस्थः ॥

स राम-बाणैर् अति-विद्ध-गात्रो[1]
निशाचरेन्द्रः क्षतजाऽऽर्द्र-गात्रः[2] ।
जगाम खेदं च समूह-मध्ये
N] क्रोधं च चक्रे द्वि-गुणं[3] तदानीम्[3] ॥३१॥[३२

इत्यार्षे रामायणे युद्ध-काण्डे[4] रावण-धर्षणं[5] नाम
चतुरशीतितमः सर्गः ॥ ८४ ॥

---

## [वं-८८]= [पञ्चाऽशीतितमः सर्गः] =[दा-१०५]

स तु तेन तदा युद्धे राघवेण[6] प्र-धर्षितः ।
१] रावणः परमाऽमर्षी भृशं क्रोधं[7] समाऽविशत्[7] ॥१ ॥[१
स दीप्त-नयनः क्रुद्धश्[8] चापम् उद्-यम्य वीर्य-वान् ।
२] प्रत्य्-अर्दयत[9] सं-क्रुद्धो राघवं पुनर् आ-हवे ॥२ ॥[२
बाण-धारा-सहस्रैस् तं[10] स तोय-द इवाऽम्बरे ।
३] राघवं रावणो वीरस्[11] तडाग-वद्[12] अपूरयत्[13] ॥३ ॥[३
पूरितः शर-जालेन धनुर्-मुक्तेन[14] सं-युगे ।
४] महा-गिरिर् इवाऽकम्पो[15] राघवो[15] न प्र-कम्पितः[16] ॥४ ॥[४
शरांस् तान् नर-शार्दूलो रामः[17] परम-दारुणान्[17] ।[18] [N
५] गभस्तीन्[19] इव चाऽर्कस्य[19] प्रति-जग्राह वीर्य-वान् ॥५ ॥
शरैस् तु शर-जालानि व्य्-अधमत्[20] सम्-अरे स्थितः । [५
N] जीमूत इव घर्माऽन्ते[21] शर-वर्षं[22] ववर्ष ह[22] ॥६ ॥[N

---

१. म—अभिवि० । २. म—०जावसिक्तः । ३. भ—स तदा महान्तम् ॥ ४. ब प्र भ—लंकाकांडे । ५. ल$_2$—०णदर्शनं । रा$_2$ फ—रामरावणयुद्धं ॥ ६. भ—काकुत्स्थेन । ७. रा$_1$ ल$_1$ ल$_2$ ब—कोप इवाविशत् । रा$_2$ फ म भ—क्रोधमुपागमत् ॥ ८. भ—कोपाच् । ९. भ—प्रत्यार्द० ॥ १०. भ—तु । ११. भ—बाणैस् । १२. प्र रा$_2$ फ म भ—०गमिव । १३. प्र रा$_2$ फ—पूर० । म भ—पूरयन् ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—मुहुर्मु० । १५. भ—०कम्प्यः काकुत्स्थो । १६. रा$_2$ फ म भ—व्यकंपत ॥ १७. रा$_2$ फ म—रक्षसः परदारणान् । १८. भ—नास्ति । १९. भ—स गभस्तीनिवार्कस्य ॥ २०. रा$_1$ ल$_1$ ल$_2$ ब अ—निवार्य । प्र—विषमं । २१. ल$_1$ ल$_2$ अ—नंदंश्च । प्र—नर्दन् स । रा$_2$ फ म—नर्दंश्च । २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०वर्षी व्यव० । रा$_2$ फ म—शरवृष्टिं व्यव० ॥

ततः शर-सहस्राणि क्षिप्र-हस्तो निशा-चरः ।
६] नि-चखानोरसि क्रुद्धो राघवस्य महाऽऽत्मनः ॥७ ॥[६
स शोणित-समादिग्धः[१] सम्-अरे लक्ष्मणाऽग्रजः ।
७] बभौ[२] फुल्ल[२] इवाऽरण्ये सु-महान् किंशुक-द्रुमः ॥८ ॥[७
शराऽभिघात-संक्रुद्धः[३] सोऽपि जग्राह सायकान्[४] ।
८] काकुत्स्थः सु-महावेगो युगाऽन्ताऽग्नि-सम-प्रभः[५] ॥९ ॥[८
ततोऽन्योऽन्यं सु-संरब्धाव्[६] उभौ राघव-रावणौ[७] ।
९] शराऽन्धकारे महति[८] नोप-लक्षयतां(?तस्) तदा ॥१०[९]॥[९
ततः क्रोध-समाविष्टो रामो दशरथाऽऽत्मजः ।
१०] उवाच रावणं वीरः[१०] प्र-हस्य परुषं वचः ॥११॥[१०
मम भार्या जन-स्थानाद्[११] यत्[१२] त्वया राक्षसाऽधम[१२] ।
११] हृताऽत्र[१३] वि-वशा[१३] यस्मात् तस्मात् त्वं न भविष्यसि ॥१२॥[११
मया वि-रहितां दीनां वर्तमानां महा-वने ।
१२] वैदेहीं वि-वशां[१४] हृत्वा[१५] शूरोऽहम् इति मन्यसे ॥१३॥[१२
स्त्रीषु चौर्यम्[१६] अ-नाथासु[१६] पर-दार-प्रधर्षक[१७] ।
१३] कृत्वा का-पुरुषं कर्म शूरोऽहम् इति मन्यसे ॥१४[१८]॥[१३
भिन्न-मर्याद निर्-लज्ज चारित्रेष्व् अन्-अवस्थितः ।
१४] दर्पान् मृत्युम् उप-स्थाय[१९] शूरोऽहम्[२०] इति मन्यसे[२०] ॥१५॥[१४
शूरेण धनद-भ्रात्रा बलैः[२१] समुद्-इतेन च ।

---

१. रा$_{2}$ भ म-वर्जं—०तमहादिग्धः । २. भ-स पुष्पित ॥ ३. भ-०घातात्सं० । ४. रा$_{1}$ ल$_{1}$ ल$_{2}$ अ फ-सायकं । भ-कार्मुकं । ५. भ-०न्तादित्यवत्स्थितः ॥ ६. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-तु सं० । ७. भ-तौ रामरा० । ८. भ-समरे । ९. अतः परमधिकः पाठः—भ-संच्छन्नः शरजालेन रावणेन स राघवः । निष्पपात स तं भित्त्वा मेघादिव दिवाकरः ॥ १०. भ-क्रुद्धः ॥ ११. म-०व्यसनात् । १२. रा$_{2}$-रहिते रा० । भ-इह ते रा० । म-नास्ति । १३. प्र-हृता च वि० । रा$_{2}$ फ-हृता त्वयावशा । भ-आनीता वि० । म-नास्ति ॥ १४. भ-विजने । १५. रा$_{2}$ म-वर्जं—कृत्वा ॥ १६. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र रा$_{2}$-शूर विना० । १७. रा$_{1}$ ल$_{1}$ अ रा$_{2}$ फ-०र्षकः । भ-०दाराभिमर्षणं । १८. अतः परमधिकः पाठः—भ-ब्राह्मणेषु च ये शूराः स्त्रीषु गोषु तपस्विषु । वृंतादिव फलं पक्वं रक्षोऽधम पतंति ते ॥ १९. रा$_{2}$ फ म भ-उपादाय । २०. भ-कथं जीवितुमिच्छसि ॥ २१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-वर्गैः । म-गुणैः ।

१५] श्लाघनीयं यशस्यं च कृतं कर्म महत् त्वया ॥१६॥ [१५
अ-नाथैश् चैव भीतैश् च पूज्यमानः[१] स्व[१]-राक्षसैः ।
१६] उत्-सेकाच् चैव दर्पाच् च शूरोऽहम् इति मन्यसे ॥१७॥ [N
मायया[२] मृग-रूपेण[२] मद्-भार्याऽप-हृता त्वया ।
१७] सर्व-था दर्शितं वीर्यं[३] कृतं कर्म सु-दुष्करम् ॥१८॥ [N
नि-कृतस्[४] त्वं[५] सदाऽन्-आर्य[५] गर्हितश् चैव[६] कर्मणा ।
१८] श्लाघसे[७] त्वं कथं नाम यस्य ते वृत्तम् ईदृशम् ॥१९॥ [N
निशि[८] नैव स्वपिम्य्[९] अद्य[९] दिवा वा रजनी-चर ।[१०]
१९] राक्षसाऽधम[११] दुर्-बुद्धे[११] त्वाम् अन्-उत्पाट्य मूल-तः ॥२०॥ [N
इमे मासास् त्व् अति-क्रान्तास् त्वद्-वधं ध्यायता[१२] सदा[१२] ।[१३]
२०] वधाऽर्हस्य वधाऽर्थं[१४] ते[१४] मृत्यु-द्वारम् अपाऽऽवृतम् ॥२१॥ [N
उत्-सेकाद् अभि-पन्नस्[१५] त्वं गर्हितं चाऽहितं च यत्[१५] ।
२१] कर्मणः[१६] प्राऽऽप्नुहीऽदानीं तस्याऽद्य सु-महत् फलम् ॥२२॥ [१६
शूरोऽहम् इति चाऽऽत्मानम् अव-गच्छसि दुर्-मते ।
२२] न[१७] चैव लज्जसे[१७] सीतां चौर-वत् त्वं[१८] प्र-कर्षयन्[१८] ॥२३॥ [१७
यदि मत्-सन्निधौ सीता धर्षिता स्यात् त्वया बलात् ।
२३] भ्रातरं[१९] त्वं खरं पश्येस्[१९] तदा मत्-सायकैर् हतम् ॥२४॥ [१८
दिष्ट्याऽसि मम दुष्टाऽऽत्मंश्[२०] चक्षुर्-विषयम् आ-गतः ।
२४] अद्य त्वा सायकैस् तीक्ष्णैर् नयामि यम-सादनम् ॥२५[२१]॥ [१९
अद्य ते मच्-छरैश् छिन्नं शिरो ज्वलित-कुण्डलम् ।

---

१. भ—०नोथ रा० । रा$_1$ ल$_1$ ल$_2$ ब प्र म—०नश्च रा० । अ—०मानैश्च रा० ॥ २. रा$_1$ ल$_1$ ल$_2$ ब प्र—०यानृतरू० । ३. म—चार्थं ॥ ४. रा$_2$ फ—विकृ० । म भ—धिकृ० । ५. भ—चाप्यनार्यश्च । ६. रा$_1$ ल$_1$ ल ब अ प्र—त्वं च । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—श्लाघ्यसे ॥ ८. रा$_2$ फ म—निशासु । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०स्वपाम्यद्य । रा$_2$ फ म—स्वपिमि । १०. भ—शये नाहं दिवारात्रौ रौद्रकर्म निशाचर । ११. रा$_2$ फ म—न रावण शमं लप्स्ये । भ—न रावण लभे शांतिं ॥ १२. रा$_1$—वर्जं—०धं परिचिंतता । १३. भ—अत्यक्राममिमान्मासांस्त्वद्वधं परिचिंतयन् । १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—वधं तेऽद्य ॥ १५. भ—अभिमानस्य गर्हितस्य च कर्मणः । १६. भ—संग्रामे ॥ १७. ल$_1$ ल$_2$ ब—नापि लज्जयसे । रा$_2$ फ म भ—नास्ति लज्जा च ते । १८. भ—व्यपकर्षतः ॥ १९. भ—खरं तं भ्रातरं पश्य ॥ २०. भ—दुर्बुद्धे । २१. अतः परमधिकः पाठः—भ—पश्यतां सर्वयोधानां प्रसह्य रणमूर्धनि ॥

२५] क्रव्याऽदा व्यप-कर्षन्तु वि-कीर्णं भूमि-पांसुषु[1] ॥२६॥ [२०
नि-पत्योरसि ते गृध्राः[2] क्षितौ क्षिप्तस्य रावण ।
२६] पिबन्तु रुधिरं गात्राद्[3] बाणशल्याऽन्तरोत्थि(द्-स्थि)तम्[4] ।२७।[२१
अद्य मद्-बाण-भिन्नस्य गताऽसोः स्वपतस्[5] तव[5] ।
२७] कर्षन्त्व् अन्त्राणि विह-गा गरुत्-मन्त[6] इवोरगान्[6] ॥२८॥ [२२
इत्य्[7] एवं सं-वदन् वीरो रामः[7] शत्रु-निबर्हणः ।
२८] राक्षसेन्द्रं संयुग-स्थं[8] शर-वर्षैर् अवाऽकिरत् ॥२९॥ [२४
तस्य क्रुद्धस्य सम्-अरे रामस्याऽक्लिष्ट-कर्मणः । [N
२९] बभूव द्वि-गुणं वीर्यं बलं हर्षश् च सं-युगे ॥३०[9]॥
रामस्याऽस्त्र-बलं चैव शत्रोर् निधन-काङ्क्षिणः[10] । [२५
३०] प्रादुर्-बभूवुर् अस्त्राणि सर्वाणि विदिताऽऽत्मनः ।
३१पू] प्र-हरंश् च महा-तेजा लघुहस्त-तरोऽभवत्[11] ॥३१[12]॥ [२६
शुभान्य् एतानि चिन्हानि वि-ज्ञायाऽऽत्म-हितानि[13] सः[14] ।
३२] भूय एवाऽद्रवद् रामो रावणं राक्षसाऽन्तकः[15] ॥३२॥ [२७
N] जवनैः पत्रिभिस् तीक्ष्णैः शरै राघव-नोदितैः ।[16]
३३उ] वध्यमानो दश-ग्रीवो विघूर्ण-हृदयोऽभवत्[17] ॥३३॥ [२८
यथा-वन् नाऽस्त्रम् आ-रेभे न व्य्-अकर्षच् छराऽऽसनम् ।
३४] नाऽस्य प्रत्य्-अकरोद् वीर्यं वि-क्लवेनाऽन्तर्-आत्मना ॥३४॥ [२९
क्षिप्ता ह्य् अपि शरास् तेन शस्त्राणि वि-विधानि च ।
३५] न रणाऽर्थम्[18] अकल्पन्त[18] मृत्युकालाऽभिवर्तिनः ॥३५॥ [३०

---

१. रा$_{2}$ फ म–रणपां० । भ–रणपांशुभिः ॥ २. रा$_{1}$–क्रुद्धाः । ३. भ–हृष्टा । ४. भ–वर्जं—०तरे स्थिताः ॥ ५. भ–पतितस्य ते । ६. भ–०त्मानिव पन्नगान् ॥ ७. प्र–०दन् धीरो रामः । भ–इत्युक्त्वा स तदा रामो वीरः । ८. प्र रा$_{2}$ फ म भ–समूहस्थं ॥ ९. अतः परमधिकः पाठः—भ–वित्रेसुः सर्वभूतानि कालस्येव दिधक्षतः ॥ १०. रा$_{1}$ ल$_{1}$ ल ब अ प्र–च वधकां० । भ–विजयकां० । ११. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–शीघ्रं हृष्टत० । म भ–०स्तस्ततोऽभ० । १२. अतः परमधिकः पाठः—भ–दृढप्रहारता चैव दूरपातस्तथैव च ॥ १३. ल$_{2}$–०ताय । १४. रा$_{2}$ म–वर्जं—च । १५. भ–०साधिपं ॥ १६. रा$_{2}$ फ म–हरिभिः सोश्मविकिरैः शरै रामेण चाहवे । भ–रामेण शरवर्षैश्च वानरैश्चाश्मवृष्टिभिः । १७. भ–विभ्रांतहृ० ॥ १८. रा$_{2}$ फ–चैवार्थाय कल्पंते ॥ भ–नाकल्पन्त रणार्थाय ॥

सूतस् तु व्यथितस्[1] तस्य[1] तद्-अवस्थं नि-शम्य तम् ।
३६] तस्माद् रणाद् अपाऽवहद् रावणं लोक-रावणम् ॥[2]३६॥[३१
रथं तु तस्याऽथ जवेन सारथिर्
नि-वर्त्य भीमं[3] जलद्-स्वनं तथा[3] ।
जगाम शीघ्रं सम्-अरात् स-संभ्रमः[4]
N] परिश्रमाऽधोमुखम्[5] ईक्ष्य[6] तं स्थितम्[6] ॥३७॥ [३४

इत्यार्षे रामायणे युद्ध-काण्डे[7] रावणाऽऽक्षेपो[8] नाम
पञ्चाऽशीतितमः सर्गः ॥ ८५ ॥

---

## [वं-८६]= [षडशीतितमः सर्गः] =[दा-१०६]

स तु मोहात् सु-संरब्धः कृताऽन्त-बल-नोदितः ।
१] क्रोध-संरक्त-नयनो[9] रावणः सूतम् अब्रवीत्[10] ॥१ ॥[१
हीन-वीर्यम् इवाऽशक्तं पौरुषेण[11] वि-वर्जितम् ।
२] भीतं लघुम् इवाऽसत्त्वं[12] वि-हीनम् इव तेजसा ॥२ ॥[२
वि-मुक्तम्[13] इव मायाभिर् अस्त्रैर् इव बहिष्-कृतम् ।
N] माम् अव-ज्ञाय दुर्-बुद्धे स्व-बुद्ध्या किं वि-चेष्टसे ॥३ ॥[३
किम्-अर्थं माम् अव-ज्ञाय मच्-छन्दम्[14] अनु-अवेक्ष्य[15] च ।
३] त्वयाऽद्य शत्रु-मध्यान् मे रथोऽयम् अप-वाहितः ॥४ ॥[४
त्वयाऽद्य हि ममाऽनु-आर्य चिर-काल-समर्जितम्[16] ।
४] यशो वीर्यं च तेजश् च प्रत्यु-अयश् च नि-पातितः[17] ॥५ ॥[५
शत्रोर् विख्यात-वीर्यस्य रञ्जनीयस्य वि-क्रमैः ।

---

१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–०तस्तेन । भ–रथनेतास्य । २. भ–शनैर्युद्धात्सुसंभ्रांतो रथं तस्यापवाहयत् ॥ ३. भ–तस्माज्जलवाहनिस्वनं । ४. भ–वर्जं—महात्मा । रा$_{2}$ फ म–महामतिः । ५. भ–वर्जं—पराक्रमा० । ६. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–अव्यवस्थं । म–अव्यवस्थितं । भ–रावणोक्षितः ॥ ७. ब अ भ–लंकाकाण्डे । ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–द्वैरथेनाक्षेपो । भ–रथपर्यावर्तनं ॥ ९. भ–क्रोधेन महताविष्टो । १०. रा$_{1}$–नास्ति ॥ ११. म–'पौरु' इत्यादि '०सत्त्वं' इत्यन्तः पाठो नास्ति । १२. रा$_{2}$ फ भ–वर्जं—इवाशक्तं ॥ १३. म भ–वियुक्तं ॥ १४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र फ–स्वच्छन्दम् । म–मद्वीर्यम् । १५. भ–अनपेक्ष्य ॥ १६. म–०कलार्जितं मया । १७. भ–विनाशितः ॥

५] पश्यतो युद्ध-लुब्धोऽहं कृतः का-पुरुषस् त्वया ॥६[1]॥ [६
कस्माद् रथम् इमं युद्धान्[2] नयस्य् अन्यत्र दुर्-मते ।
६] परेणोप-कृतो[3] व्यक्तं तेन वध्योऽसि मे मतः ॥७ ॥ [७
नहीऽदं[4] विद्यते कर्म सु-हृदः श्रेय[5] इच्छतः[5] ।
७] रिपूणां सदृशं यच्[6] च तत् त्वयेदम् अनु-ष्ठितम्[6] ॥८ ॥ [८
नि-वर्तय रथं शीघ्रं यावन् नाऽपैति[7] मे रिपुः ।
८] यदि न व्यथितः स्यास्[8] त्वं[8] स्मर्यन्ते यदि वा गुणाः ॥[9]९ ॥ [९
एवम् उक्तः स[10] परुषं हत-बुद्धिर्[10] अ-बुद्धिना ।
९] अब्रवीद् रावणं सूतो हितं साऽनुनयं वचः ॥१०॥ [१०
न भीतोऽस्मि न मूढोऽस्मि नोप-जप्तोऽस्मि शत्रुणा ।
१०] न प्र-मत्तो न वि-स्नेहो वि-स्मृता न च ते गुणाः ॥११॥ [११
मया तु[11] हित-कामेन[11] यशश्[12] च[12] परि-रक्षता[13] ।
११] स्नेह-प्रस्कन्न-मनसा हितम् इत्य् एव ते कृतम् ॥[14]१२॥ [१२
उप-देशो हि सूतानाम् आपत्सु रथिनां-वर ।
N] रक्षितव्यो रथी यस्मात् तस्माद् इदम् अनु-ष्ठितम् ॥१३॥ [N
नाऽस्मिन्न् अर्थे महा-राज त्वं[15] मां प्रिय-हिते रतम् ।
१२] किं-चिल्[16] लघुम् इवाऽसत्त्वं[16] दोष-तो गन्तुम् अर्हसि ॥१४॥ [१३
श्रूयताम् अभि-धास्यामि[17] यन्-निमित्तं मया रथः ।
१३] नदी-वेग इवाऽम्भोधेः सं-युगाद् विनि-वर्तितः ॥१५॥ [१४
श्रमं[18] तेऽद्याऽव-गच्छामि[19] महता रण-कर्मणा ।
१४] न हि ते वीर[20] सौमुख्यं[20] प्र-हर्षम् उप-लक्ष्यते[21] ॥१६॥ [१५

---

१. अतः परमधिकः पाठः—भ-यस्त्वं रथमिमं मोहादपवाहितवानसि । सुव्यक्तोऽयं प्रतर्कों मे परेण त्वमुपस्कृतः ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-बुद्धया । ३. भ-०पस्कृतो ॥ ४. म-नहि तद् । ५. भ-शुभकांक्षिणः । ६. रा$_2$ फ म-ह्यद्य यत्त्वयैतदनु० । भ-ह्येतद्यत्त्वया समनु० ॥ ७. रा$_2$ फ भ-नाभ्येति । ८. रा$_2$ फ-वासि । ९. रा$_2$ फ भ-वर्ज—नास्ति ॥ १०. रा$_2$ फ भ-परुषमुक्तस्तु हित० ॥ ११. भ-वर्ज—त्वद्धित० । १२. भ-जयं तु । १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०रक्षितम् । भ-परिमार्गता । १४. भ-त्वत्स्नेहेन च भक्त्या च प्रियमित्यप्रियं कृतं ॥ १५. रा$_1$-त्वां । १६. अ ल$_1$ ल$_2$ ब श्र प्र म-लघुमिवाशक्तं । भ-लघुः कश्चिदिवानार्यं ॥ १७. भ-चाभिधास्यानि ॥ १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-शमं । १९. भ-तवाव० । २०. रा$_1$ अ-वीर्यसौ० । ल$_1$ ल$_2$ ब-वीर्यसामुख्यं । प्र-वीर्यमायुष्यं । २१. भ-वोप० ॥

रथोऽयं[1] शर-भिन्नाऽङ्गः खिन्नाश् च[1] रथ-वाजिनः ।
१५] दीना[2] घर्म-परिश्रान्ताः[2] कु-वर्षेणेव[3] कर्षकाः[3] ॥१७॥ [१६
देश-कालौ च वि-ज्ञेयौ लक्षणैश्[4] चेङ्गितानि[4] च ।
१७] दैन्यं हर्षश्[5] च तेजश्[5] च रथिनश् च बलाऽबलम्[6] ॥१८॥ [१८
निमित्तानि च भूयिष्ठं प्रति-कूलानि लक्षये ।
१६] नूनं तेषु निमित्तेषु लक्षयाम्य् अ-प्रदक्षिणम् ॥१९[7]॥ [१७
स्थूल-निम्नानि भूमेश्[8] च समानि वि-षमाणि च ।
१८] युद्ध-कालश्[9] च[9] वि-ज्ञेयः परस्याऽन्तर-दर्शिना[10] ॥२०॥ [१९
अपयानाऽभियाने[11] च स्थान-प्रत्युपसर्पणे[12] ।
१९] सर्वम् एतद् रथ-स्थेन ज्ञेयं रथ-कुटुम्बिना ॥२१॥ [२०
तव विश्राम-हेतोश् च[13] तथैव[13] रथ-वाजिनाम्[14] ।
२०] रौद्रं[15] वि-जानता चैव[15] क्षणात्[16] कृतम् इदं मया ॥२२॥
न मयाऽऽत्मेच्छया[17] देव[17] रथोऽयम् अप-वाहितः । [२१
२१] भर्तृ-स्नेह-परोऽतेन[18] मयैतत् त्वत्-कृते[19] कृतम् ॥२३॥ [२२
आ-ज्ञापयस्व मां वीर यच् च वक्ष्यसि मान-द ।
२२] तत् करिष्याम्य् अहं सर्वं त्वद्-गतेनैव चेतसा ॥२४[20]॥ [२३
तुष्टस् तेन[21] तु[21] वाक्येन रावणस् तस्य सारथेः ।
२३] विश्वास्यैनं[22] बहु-विधं युद्ध-लुब्धोऽब्रवीद् वचः ॥२५॥ [२४
शीघ्रं रथम् इमं सूत राघवाऽभिमुखं[23] कुरु ।[24]

---

१. रा$_2$ फ म–धुरोवहनखिन्नाश्च तव ये । भ–भारोद्वहनखिन्नाश्च इमे ते । २. भ–वर्जं—विना कर्म० । ३. ल$_1$ ल$_2$ ब अ–०व कर्षकः । रा$_2$ फ भ–कुवर्षाभिहता इव ॥ ४. भ–निमित्तानींगि० । ५. म–खेदश्च हर्षश्च । भ–०श् च रोषश् । ६. ल$_1$ ल$_2$ ब–यथाबलम् ॥ ७. भ–नास्ति ॥ ८. भ–भूमौ । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०लः स । १०. ल$_1$ ल$_2$ ब–०र्शितः ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अपायं नाभिजाने । भ–उपयानापयाने । १२. रा$_1$ ल$_1$ ल$_2$ ब अ–०र्पतः । भ–०प्रत्यवसर्पणं ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–च रथोयं । भ–तु रथिनो । १४. भ–०जिनः । १५. ल$_1$ ल$_2$ ब प्र–रौद्रं च जा० । रा$_1$ फ–रौद्रं वर्जयता । भ–परस्य च विघातार्थं । १६. भ–क्षेमं ॥ १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०या चैव । रा$_2$ फ म–मया स्वेच्छया राजन् । १८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–भर्तुःस्ने० । १९. भ–दुष्कृतं ॥ २०. भ–आज्ञापय यथा शत्रुं त्वं धक्षस्यरिसूदन । करिष्येहं तथा वीर गतानृण्येन चेतसा ॥ २१. ल$_1$ ल$_2$ ब प्र–तेनैव । रा$_2$ फ म–तेन च ॥ २२. भ–प्रशस्यैनं ॥ २३. रा$_1$ फ म– रामायाभि० । २४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति ।

२४] नाऽहत्वा सम्-अरे शत्रु[1] नि-वर्तिष्यामि राघवम्[1] ॥२६[2]॥[२५
ततो द्रुतं रावण-वाक्य-देशितः[3]
प्र-णोदयामास[4] हयान्[5] स सारथिः ।
स[6] राक्षसेन्द्रस्य रथो महा-ध्वजः[6]
२५] क्षणेन रामस्य तदाऽग्र-तोऽभवत्[7] ॥२७॥[२८
इत्यार्षे रामायणे युद्ध-काण्डे[8] सूतोपालम्भो[9] नाम
षडशीतितमः सर्गः ॥ ८६ ॥

---

## [वं-६०]= [सप्ताऽशीतितमः सर्गः] =[दा-१०८]

तम् आ-पतन्तं सहसा वेग-वन्तं[10] महा-स्वनम्[10] ।
१] रथं राक्षस-राजस्य नर-राजो ददर्श ह ॥१ ॥[४
कृष्ट(?ष्ण)-वाजि-समायुक्तं[11] युक्तं रौद्रेण वर्चसा[12] ।
२] उह्यमानम् इवाऽऽकाशे वि-मानं स-जलैर् घनैः ॥२ ॥[५
तडित्-पताका-गहनं दर्शितेन्द्राऽऽयुधोपमम् ।
N ] शर-धारा वि-मुञ्चन्तं धारा-सारम् इवाऽम्बु-दम् ॥३ ॥[५
तं दृष्ट्वा मेघ-सङ्काशम् आ-पतन्तं रथं रिपोः । [६पू
३] अब्रवीन् मातलिं रामो महेन्द्र-रथ-सारथिम् ॥[13]४ ॥[७उ
मातले पश्य सं-रब्धम् आ-पतन्तं रथं रिपोः ।[14] [८
४] गिरेर् वज्र-विभिन्नस्य[15] दीर्यतः सदृश-स्वनम् ॥५ ॥[६उ
यथाऽप-सृत्याऽऽपतितो[16] वेगेन महता पुनः ।
५] सम्-अरे हन्तुम् आत्मानं कृता[17] तेन मतिर् ध्रुवम्[17] ॥६ ॥[९
तद् अ-प्रमादम् आ-तिष्ठ प्रत्युद्-गच्छ[18] रथं रिपोः ।
६] वि-ध्वंसयितुम् इच्छामि वायुर् मेघम् इवाऽऽयतम्[19] ॥७ ॥[१०

---

१. म-शत्रून्निवर्तिष्यति रावणः । २. अतः परमधिकः पाठः—भ-एव-मुक्त्वा ततस्तुष्टो रावणो राक्षसेश्वरः । ददौ स सारथेः श्रीमान्हस्ताभरण-मुत्तमम् ॥ ३. रा$_2$ फ म-०क्यनोदितः । भ-०क्यचोदितः । ४. भ-प्रचोद० । ५. भ-रथं । ६. भ-निशाचरेन्द्रश्च ततो महारथः । ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-तथाग्र० । रा$_2$-पथाग्र० । म-रथाग्र० ॥ ८. ब प्र भ-लंकाकांडे । ९. भ-सूतोपदेशः ॥ १०. भ-महामेघौघनिःस्वनं ॥ ११. रा$_2$ वर्जं—क्लसवा० । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-वीर्यवान् । म-कर्मणा ॥ १३. रा$_1$ ल$_1$ ब अ-उवाच च रामो मतिमान् मातलिं शक्रसारथिं । ल$_2$ प्र-नास्ति ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-नास्ति । १५. भ-वज्रोपसृष्टस्य ॥ १६. रा$_1$ ब-०पततो । १७. भ-अनेन तु कृता मतिः ॥ १८. भ-०गम्य । १९. भ-इवोत्थितम् ॥

अ-विक्लवम्[1] अ-सम्भ्रान्तम् अ-व्यग्रहृदयेक्षणः[2] ।
७] रश्मि-संचार-नियतः[3] प्र-णोदय[4] रथं द्रुतम् ॥८ ॥ [११
कामं न त्वं समा-धेयः पुरन्दररथोचितः ।
८] युयुत्सुस् त्व् अहम् एकाऽग्रः[5] स्मारये त्वां न शिक्षये ॥९ ॥ [१२
परि-तुष्टस् तु रामस्य तेन वाक्येन मातलिः ।
९] प्र-णोदयामास ततो हयान् सारथि-सत्तमः ॥१०॥ [१३
अप-सव्यं ततः कुर्वन्[6] रावणस्य महा-रथम्[7] ।
१०] चक्रोत्-क्षिप्तेन रजसा रावणं स व्य्-अपूरयत्[8] ॥११॥ [१४
ततः क्रुद्धो दश-ग्रीवः क्रोधविस्फारितेक्षणः[9] ।
११] रथ-प्रतिमुखं रामं सायकैः सम्-अपूरयत्[10] ॥१२॥ [१५
धर्षणाऽमर्षितो रामो धैर्यं रोषेण लङ्घयन् ।
१२] जग्राह सु-महावीर्यम्[11] ऐन्द्रं युधि शराऽऽसनम् ॥१३॥
शरांश् च सु-महावेगान् सूर्य-रश्मि-निभाञ् छितान् । [१६
१३] जग्राह सम्-अरे रामः सर्पान् इव महा-विषान् ॥१४॥ [N
१४पू] त उ(?त्र) पौ(?प्रौ) ढौ(?ढे)[12] महा-युद्धे[13] लघु-चित्रं[14] च स-स्वनम्[14,15]।
N] विजयाऽऽकांक्षिणौ वीराव्[16] अन्योऽन्यं तौ ततक्षतुः ॥१५॥ [N
१४उ] परस्पराऽभिमुखयोर् मत्त-मातङ्गयोर् इव ।[17]
N] राम-रावणयोर् युद्धं तद् अभूत् तुमुलं तदा ॥[18]१६॥ [N
ततो देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।
१५] सम्-ईयुर् द्वैरथं द्रष्टुं[19] तयोर् विजय-कांक्षिणोः[19] ॥१७॥ [१८
अस्त्रैर् अस्त्राणि नि-घ्नन्तौ दर्शयन्तौ च लाघवम् ।
१७] शरैर् आशीविषाऽऽकारैर् अन्तरिक्षं ववर्षतुः ॥१८॥ [N
समुत्-पेतुर् अथोत्पाता दारुणा रोम-हर्षणाः ।

---

१. म–आतिष्ठ त्वं । २. भ–०क्षणं । ३. भ–०यतं ॥ ४. रा$_2$ फ म भ–प्रचोदय । ५. रा$_1$ ब प्र म–एवाग्रः ॥ ६. भ–कृत्वा । ७. भ–रथं तदा । ८. म–व्यधूमयत् ॥ ९. रा$_2$ फ–दीप्तवि० । म भ–ताम्रवि० । १०. प्र–अवपू० । रा$_2$ फ–अन्वपू० । म–अन्वधूनयत् । भ–तं व्यधूनयत् ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०वीर्यो ॥ १२. ल$_1$ रा$_2$ फ–तदुपोढं । म–शतयुद्धं । भ–तदसोढं । १३. रा$_1$ ल$_2$ ब अ रा$_2$ फ भ–महद्युद्धं । १४. रा$_2$ फ म भ–अन्योऽन्यवधकांक्षिणोः । १५. अतः परमधिकः पाठः—भ–तयोः समभवद् युद्धं लघुचित्रं च सुष्ठु च । १६. रा$_2$ फ म भ–शूराव् ॥ १७. भ–निवातवातोद्धूतयोर्गगने मेघयोरिव । १८. रा$_2$ फ म–नास्ति । भ–विजयाकांक्षिणोस्तत्र रामरावणोस्तदा ॥ १९. रा$_2$ फ म–युद्धं राक्षसक्षयकांक्षिणः ॥

१८] रावणस्य वि-नाशाय राघवस्य जयाय च ॥[1]१९॥ [१९
ववर्ष रुधिरं देवो रावणस्य रथं प्रति ।
१९] वाता मण्डलिनश् चैनम् अप-सव्यं प्र-चक्रमुः ॥२०॥ [२०
महद् गृध्र-कुलं चाऽस्य भ्रममाणं नभस्-तले ।
२०] येन येन रथो याति तेन तेन[2] स्म धावति[2] ॥२१॥ [२१
सन्ध्यया चाऽऽवृता लङ्का जपा-पुष्प-निकाशया ।
२१] दृश्यते सम्प्र-दीप्तेव दिवा-रात्रं प्र-वृद्धया ॥[3]२२॥ [२२
२२उ] स-निर्घाता महोल्काश् च सम्प्र-पेतुर् महा-स्वनाः ।
N] वि-षादयन्त्यो रक्षांसि रावणस्य रथोपरि ॥२३॥ [२३
२२पू] रावणश् चाऽभवत्[4] त्रस्तश् चचाल च[4] वसुं-धरा ।
रक्षसां[5] च[5] प्र-हरतां गृहीता इव बाहवः ॥२४॥ [२४
२३] ताम्राः पीताः सिताः श्वेताः पतिताः[6] सूर्य-रश्मयः ।[7]
दृश्यन्ते[8] रावणस्याऽङ्गे[9] पर्वतस्येव धातवः[10] ॥२५॥ [२५
२४] गृध्रैर् व्यनु-सृताश् चैव वमन्त्यो ज्वलनं मुखैः ।
प्र-णेदुर्[11] मुखम् ईक्षन्त्यः[11] सं-रब्धम् अ-शिवं शिवाः ॥२६॥ [२६
२५] गृध्रा बलाकाः कङ्काश् च कुर्वन्तो दृष्टि-लोपनम् ।
N] अन्-इष्टं भैरवं नेदुः सं-हृष्टा[12] वि-कृतैः स्वरैः[12] ॥[13]२७॥ [N
२६उ] प्रति-कूलं ववौ वायुर् उत्-किरन् स रजो महत् ।
तस्य रावण-सैन्यस्य कुर्वन् दृष्टि-निवारणम् ॥[14]२८॥ [२७
२७] नि-पेतुर् इन्द्राऽशनयः सैन्ये चाऽपि[15] समन्ततः[16] ।
दुर्विषह्य-स्वना[17] घोरा[17] विना जल-धरैस्[18] तथा[18] ॥[19]२९॥ [२८
२८] दिशश् च वि-दिशश् चैव[20] बभूवुस् तमसाऽऽवृताः[21]।[22]

---

१. रा₁ ल₁ ल₂ ब अ प्र—नास्ति ॥ २. रा₁ ल१ ल२ ब अ प्र—तेनास्य धा० । भ—तेन प्रधा० ॥ ३. भ—ददृशे सम्प्रदीप्ता च दिवसे परिरुद्धया ॥ ४. भ—च यतस्तत्र प्रचचाल । ५. म भ—राक्षसानां ॥ ६. भ—प्रकीर्णाः । ७. म—शिवाश्चाशिववादिन्यो भ्रांताः सर्वा रथं प्रति । ८. भ—ऐक्ष्यंत । ९. रा₂ फ—०स्यांते । म भ—०स्यांगे । १०. प्र—तिष्ठतः ॥ ११. ल१ ब अ प्र—०दुर्मुखमीक्ष्यंत्यः । भ—वीक्षमाणा मुखं नेदुः ॥ १२. ल₁ ल₂ ब अ प्र रा₂ फ म—संरब्धमशिवं शिवाः । १३. रा₁—नास्ति । १४. भ—तस्य राक्षसराजस्य कर्तुं दृष्टिविलोपनं । १५. रा₂ फ म भ—चास्य । १६. भ—महात्मनः ॥ १७. भ—दुर्विसह्या महा० । १८. भ—जलदनिस्वनैः ॥ १९. रा२ फ—नास्ति ॥ २०. भ—सर्वा । ११. भ—तिमिरावृताः । २२. रा₂ फ—नास्ति ।

पांसु-वर्षेण[1] सु-महद् दुर्-दिनं च नभोऽभवत् ॥३०॥ [२९
२९] कुर्वन्तः[2] कलहं घोरं पक्षिणोऽस्य[3] रथाऽग्र-तः ।
नि-पेतुः शत-शस् तत्र दारुणा[4] दारुण[4]-स्वनाः ॥३१॥ [३०
३०] जघनैर्[5] वि-स्फुलिङ्गाश् च नेत्राभ्यां[6] चाऽस्रु-सन्ततिम्[6] ।
मुमुचुस् तस्य तुर-गाः खुरेष्व्[7] अग्निश् चचार[7] च[8] ॥३२॥ [३१
३१] एवं[9] प्रकारा बहवः[9] समुत्-पाता[10] भयाऽऽवहाः ।
रावणस्य वि-नाशाय दारुणाः सम्प्र-जज्ञिरे ॥३३॥ [३२
३२] रामस्याऽपि[11] निमित्तानि सौम्यानि च शिवानि[12] च ।
जय-शंसीनि दृश्यन्ते प्रादुर्-भूतानि सर्व-तः ॥[13]३४॥ [३३
ततो नि-शम्याऽथ हिताय[14] राघवो
रणे निमित्तानि निमित्त-कोविदः ।
जगाम हर्षं[15] च परां[15] च निर्-वृतिं
३३] चकार युद्धेऽभ्य-अधिकं पराऽऽक्रमम्[16] ॥३५॥ [३५

इत्यार्षे रामायणे युद्ध-काण्डे[17] औत्पातिकदर्शनं[18] नाम
सप्ताऽशीतितमः सर्गः ॥ ८७ ॥

---

## [वं-६१]= [अष्टाऽशीतितमः] =[दा-१०६]

ततः प्र-वृत्तं तुमुलं राम-रावणयोस् तदा ।
१] महद् द्वैरथं युद्धं तत् सर्व-लोक-भयाऽऽवहम् ॥[19]१॥ [१
ततो राक्षस-सैन्यं च हरीणां च महद् बलम्[20] ।
२] प्रगृहीत-प्रहरणं[21] निश्-चेष्टम् अभवत्[22] तदा[22] ॥२॥ [२
सम्प्र-वृत्तौ[23] ततो[24] दृष्ट्वा सं-रब्धौ[25] नर-राक्षसौ[25] ।

---

१. रा$_2$ फ भ–पांसुव० ॥ २. भ–कुर्वाणाः । ३. रा$_1$ ल$_1$ ल$_1$ ल$_2$ ब अ प्र–०णोऽथ । ४. रा$_1$ ल$_1$ ल$_2$ ब अ–०णाः पर्वतस्वनाः ॥ ५. रा$_2$ फ भ–गात्रेभ्यो । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ–०भ्यां चाश्रुसंततम् । भ–नेत्रेभ्यश्चाश्रुबिंदवः । ७. भ–तुल्यमग्निं च वारि । ८. रा$_1$–ह ॥ ९. भ–ईदृशा बहवस्तस्य । १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०पेतुर् ॥ ११. भ–राघवस्य । १२. भ–शुभानि । १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म–नास्ति ॥ १४. भ–शुभानि । १५. भ–हर्षं परमां । १६. भ–च विक्र० ॥ १७. प्र भ–लंकाकाण्डे । १८. भ–निमित्तदर्शनं ॥ १९. रा$_1$–नास्ति । म–सुमहद्द्वैरथं युद्धं संभूतं भूतमानसः ॥ २०. ल$_1$–भयं ॥ २१. भ–०हीतायुधं सर्वं । २२. भ–व्यवतिष्ठत ॥ २३. ल$_1$ ल$_2$ ब प्र–०वृद्धौ । रा$_1$–०बुद्धौ । फ म भ–०युद्धौ । २४. रा$_2$ फ–हि तौ । म–हतौ । भ–तु तौ । २५. भ–बलिनौ रामरावणौ ।

३] व्याक्षिप्त-हृदयाः सर्वे परं वि-स्मयम्[1] आ-गताः ॥३ ॥[३
नाना-प्रहरण-व्यग्रैर्[2] भुजैर् विस्मित-बुद्धयः ।
४] तस्थुस् ते[3] प्रेक्षकाः सर्वे नाऽभि-जघ्नुः[3] परस्परम् ॥[4]४ ॥[४
रक्षसां राक्षसेन्द्रं च वानराणां च राघवम् ।[4]
५] पश्यतां विस्मिताऽक्षाणां सैन्यं चित्रम् इवाऽऽबभौ ॥५ ॥[५
ततस् तानि निमित्तानि दृष्ट्वा तौ[5] राम-रावणौ[5] ।
६] कृत-बुद्धी कृताऽमर्षौ चक्रतुर्[6] युद्धम् उत्-तमम्[6] ॥६ ॥[६
जेतव्यम् इति काकुत्स्थो मर्तव्यम् इति रावणः ।
७] वृत्तैः[7] स्व-वीर्य-सर्वस्वं[7] दर्शयेते[8] परस्परम् ॥७ ॥[७
ततः क्रोधाद् दश-ग्रीवः शरान् सं-धाय वीर्य-वान् ।
८] मुमोच ध्वजम् उद्-दिश्य राघवस्य रथ-स्थितम्[9] ॥८ ॥[८
ते शरास् तम् अन्-आसाद्य पुरन्दर-रथ-ध्वजम् ।
९] रथ-शक्तिं पराऽऽमृश्य नि-पेतुर् धरणी-तले ॥९ ॥[९
ततो रामोऽपि[10] सं-क्रुद्धश्[10] चापम् आ-सज्य वीर्य-वान् ।
१०] कृते प्रति-कृतिं कर्तुं तदै (?दे) व[11] च प्र-चक्रमे[11] ॥१०॥[१०
रावण-ध्वजम् उद्-दिश्य प्र-मुमोच[12] ततः शरम्[12] ।
११] महा-सर्पम् इवाऽसह्यं ज्वलन्तम् इव[13] तेजसा ॥११॥[११
दशग्रीव-ध्वजं छित्त्वा जगाम स महीं शरः ।
१२] स नि-कृत्तोऽपतद् भूमौ रावणस्य रथ-ध्वजः ॥१२[14]॥[१२
१३उ] ध्वजस्योन्-मथनं दृष्ट्वा रावणः सु-महाबलः[15] ।
क्रोध-जेनाऽग्निना संख्ये सं-दीप्त इव चाऽभवत्[16] ॥[17]१३॥[१३
१४] स रोष-वशम् आ-पन्नः शर-वर्षं मुमोच[18] ह[18] ।

---

१. फ-अत आरभ्य ४-र्थश्लोकस्य तृतीयपादं यावन्नास्ति ॥ २. ल$_2$ रा$_2$-०णैर्व्यग्रैर् । ३. भ-संप्रेक्षमाणास्तेऽजिघांसन्त: । ४. म-नास्ति ॥ ५. भ-राघवरावणौ । ६. भ-तदा स्थिरमयुद्ध्यताम् ॥ ७. रा$_1$ रा$_2$ फ-वृत्तौ स्व० । भ-उभौ तौ वी० । ८. रा$_1$ रा$_2$-०यंतौ । भ-युद्धेऽदर्शयतां ॥ ९. रा$_2$-परस्परं । फ-रथं प्रति । म भ-रथे स्थितं । १०. रा$_2$ फ म भ-रामोऽभिसं० । ११. रा$_2$ फ म भ-मनसा संप्र० ॥ १२. रा$_1$-०च ततः शरान् । भ-मुमोच स तु सायकम् । १३. भ-स्वेन ॥ १४. अतः परमधिकः पाठः—भ-शक्रवज्राभिनिहतः पर्वतान् ( ?त् ) तृण ( ?वृक्ष )राडिव ॥ १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-तु म० । म-स म० । १६. म-०चावभौ । १७. भ-सम्प्रदीप्तोऽभवत्क्रोधादमर्षप्रभवाग्निना ॥ १८. रा$_2$ फ भ-ववर्ष च ।

रामस्य तुर्-गांश्[१] चैव[१] शरैर् विव्याध दारुणैः[२] ॥१४॥ [१४
१५] ते हता[३] हरयस्[३] तस्य नाऽस्खलन् नाऽपि बभ्रमुः[४] ।
वि-चेरुः[५] स्वच्छ-हृदयाः[५] पद्म-नालैर् इवाऽऽहताः ॥१५॥ [१५
१६] तेषाम् अ-सम्भ्रमं दृष्ट्वा वाजिनां रावणस् ततः ।
भूय एव सु-संरब्धः शर-वर्षम् अवाऽसृजत्[६] ॥१६॥ [१६
१७] गदाश् च परि-घांश् चैव चक्राणि मुसलानि[७] च ।
१८पू] गिरि-शृङ्गाणि वृक्षांश् च तथा शूल-परश्वधान् ॥१७[८]॥ [१७
१९पू] माया-विहितम्[९] एतद् धि शस्त्र-वर्षम्[९] अपातयत्[१०] । [१८पू
वि-मुच्य राघव-रथं न्य्-अपतद्[११] वानरे बले ॥१८॥
२०] ततः सम्-अभवद् युद्धं नैकशस्त्र-मयं महत् । [१९
२१उ] तुमुलं त्रास-जननं भीमं भीम-प्रतिस्वनम् ॥१९[१२]॥ [१८उ
सहस्र-शस् ततो[१३] बाणान्[१३] अश्रान्त-हृदयोद्यमः ।
२२] स मुमोच दश-ग्रीवो निः-शङ्केनाऽन्तर्-आत्मना ॥२०[१४]॥ [२०
२३उ] व्या-यच्छमानं दृष्ट्वा तं तत्-परं रावणं रणे ।
प्र-हसन् इव काकुत्स्थः सं-दधे सायकाञ् छितान् ॥२१॥ [२१
२४] स मुमोच ततो[१५] बाणांस्[१६] तीक्ष्णाञ् छत-सहस्र-शः[१६] ।
सायकैर् अन्तरिक्षं च चकार स निर्-अन्तरम् ॥२२॥ [२२
२५] ततस् तस्य[१७] प्र-युक्तेन शर-वर्षेण भास्वता ।[१८]
नभ-स्थलम् इवाऽऽभाति द्वितीयं[१९] (?य-)भास्वद्-अम्बरम्[१९] ॥[२०] २३॥ [२३
२६] नाऽनिमित्तोऽभवद् बाणो नाऽनिर्भेत्ता न[२१] निष्-क्रियः[२१] । [२४

१. भ—०गान्दीक्षैः ॥ २. भ—रावणः ॥ ३. भ—हयास्तु रथात् । ४. म—चक्रमुः । ५. भ—बभूवुः स्वस्थहृ० । रा$_2$ भ—०रुः स्वस्थहृ० ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—स चासृ० । भ—ववर्ष ह ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—मुसुलानि । ८. अतः परमधिकः पाठः—भ—तोमरानर्धचन्द्रांश्च प्रासासिकुणपांस्तथा । मुद्गरानंकुशान्भल्लान् भुशुंडी ऋष्टिनस्तथा ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०हितमेवैतच्छस्त्र० । म—धनुर्ज्याविहितान्येव श० । १०. म भ—अवासृजत् । ११. भ—समंताद् ॥ १२. भ—तान् दृष्ट्वा निष्फलांस्तत्र रावणो राक्षसाधिपः । राघवस्य वधार्थाय शरानाशीविषोपमान् ॥ १३. भ—ततश्चान्यान् । १४. अतः परमधिकः पाठः—भ—रथे ध्वजे शरीरे च शीघ्रहस्तो निशाचरः ॥ १५. भ—तदा । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ—बाणानथो श० । भ—बाणान् रणे शत० ॥ १७. भ—ताभ्यां । १८. रा$_2$—ततस्तु सृजतो बाणान्राघवस्य महात्मनः । १९. फ म भ—वर्जं —०यो वाम्बुदोम्बरे । २०. रा$_2$ नास्ति ॥ २१. फ—विनि० । भ—न निष्फलः ।

२७पू] तथा वि-सृजतो[1] ध्यानाद् राघवस्य महाऽऽत्मनः ॥२४॥ [२५उ
प्र-युध्यन्ताव्[2] अव-विच्छिन्नम् अस्यन्तौ सव्य-दक्षिणम्[3] ।
N] चक्रतुस् तौ शरौघेण निर्-उच्छ्वासौ परस्परम् ॥२५॥ [२६
२७उ] रावणस्य हयान् रामो हयान् रामस्य रावणः ।
२८पू] जघ्नतुस् तौ तदाऽन्योऽन्यं कृताऽनुकृत-कारिणौ[4] ॥२६॥ [२८
न बाण-जालस्य गतिर् न वाऽऽगतिः
प्र-बुध्यते[5] रुध्यत[6] एव खं[7] शरैः ।
हता[8] अदृश्यन्त तथा न राक्षसाः[8]
N] शराऽभिसंच्छन्न-तले[9] मही-तले[10] ॥२७॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे[11] रावण-ध्वज-प्रमथनो[12]
नामाऽष्टाऽशीतितमः सर्गः ॥ ८८ ॥

---

## [वं-९२]= [एकोननवतितमः सर्गः] =[ दा-११०]

तौ तथा युध्यमानौ तु सम्-अरे राम-रावणौ ।
१] ददृशुः सर्व-भूतानि वि-स्मितेनाऽन्तर्-आत्मना ॥१ ॥ [१
अर्दयन्तौ हि सम्-अरे ततस्[13] तौ स्यन्दनोत्तमौ[13] ।
२] परस्परम् अभि-क्रुद्धाव्[14] एक-रूपौ[14] बभूवतुः ॥[15]२ ॥ [२
मण्डलानि च[16] वीथीश् च[16] गत-प्रत्यागतानि च ।
३] दर्शयन्तौ बहु-विधां[17] सूत-सामर्थ्य-जां गतिम्[17] ॥३ ॥ [३
अर्दयन् रावणं रामो राघवं चाऽपि रावणः ।
४] अ-प्रधर्षणम्[18] आ-पन्नौ[18] निवर्तन-विवर्तनैः ॥४ ॥ [४
क्षिपन्तौ शर-जालानि गृहीत-स्यन्दनोत्तमौ[19] ।

---

१. ल१ अ फ-विसृष्यतो ॥ २. रा१ अ-प्रविध्यंताव् । फ म भ-प्रयुद्धौ ताव् ॥ ३. भ-लघुविक्रमौ । ४. ल१ ल२ ब-०नुकृतिका० ॥ ५. भ-प्रादृश्यते । ६. रा१ ल१ ल२ ब अ प्र-बुध्यत । म-दृश्यत । ७. ल१ ल२ ब-तैः । ८. रा१ ल१ ल२ ब-मृताः प्रादृश्यंत च तत्र ये हताः । म-न दृश्यते किंचिदपि प्रमर्दे । ९. म-रामस्य संग्रामतले । भ-शरौघसं० । १०. भ-नभस्तले ॥ ११. ब प्र भ-लंकाकाण्डे । १२. भ-०ध्वजोन्मथनं ॥ १३. भ-स्थितौ तौ रथयोस्तदा । १४. भ-०द्धौ क्रूररूपौ । १५. फ-नास्ति ॥ १६. रा२ भ-विचित्राणि । १७. भ-०धान्सूतसामर्थ्यजान् गुणान् ॥ १८. रा१-तव दर्शनमा० । ब अ-तावदर्शनमा० । रा२-गतीर्दर्शनमा० । भ-गतिवेगसमापन्नैः ॥ १९. रा१ ल२-किरंतौ स्यं० । अ-अन्योऽन्यं स्यं० । भ-तावुभौ तु रणे स्थितौ ।

५] रेजतुस्[१] तौ[१] रण-गतौ[२] साऽऽसारौ[३] जल-दाव् इव ॥५ ॥[५
दर्शयित्वा ततस् तौ तु गतीर् बहु-विधा रणे ।[४]
६] परस्परस्याऽभि-मुखौ[५] पुनर् एव स्थितौ[६] रणे[६] ॥[७]६ ॥[६
धुर्यो[८] धुर्येण[८] रथयोर् योक्त्रा[९] योक्त्ररि[९] वाजिनाम् ।
७] पताकाश् च पताकाभिः सम्-ईयुः स्थितयोस्[१०] तयोः ॥७[७] ॥[७
रावणस्य[११] ततो रामो धनुर्-मुक्तैः शितैः शरैः ।
८] चतुर्भिश् चतुरो दीप्तैर् हयान्[१२] सम्प्रत्य् अमर्षयत्[१२] ॥८ ॥[८
स क्रोध-वशम् आ-पन्नो हयानां प्रत्य्-अमर्षणात्[१३] ।
९] मुमोच नि-शितान् बाणान् राघवाय निशा-चरः ॥९ ॥[९
सोऽति-विद्धो बल-वता[१४] दश-ग्रीवेण राघवः ।
१०] चकार[१५] न वि-कारं च[१६] नाऽपि च[१६] व्यथितोऽभवत् ॥१०॥[१०
चिक्षेपाऽथ[१७] पुनर् बाणान् वज्र-पात-सम-स्वनान् ।
११] सारथिं वज्र-पाणेश्[१८] च[१८] समुद्-दिश्य निशा-चरः ॥११॥[११
मातलेस् तु महा-वेगाः[१९] शरीरे पतिताः शराः[१९] ।
१२] न सूक्ष्मम् अपि सं-मोहं[२०] व्यथां[२१] वाऽजनयन् युधि[२१] ॥१२॥[१२
१३पू] तया[२२] धर्षणया[२२] क्रुद्धो मातलेश् च तथाऽऽत्मनः ।
N] चकार शर-वर्षेण राघवो[२३] वि-मुखं रिपुम् ॥१३[२४]॥[१३
विंशतिं विंशतिं[२५] चाऽथ शत-शोऽथ सहस्र-शः ।
N] मुमोच सायकान् वीरो राघवः[२६] स्यन्दने[२६] स्थितः[२७] ॥१४॥[१४

१. म–वर्जं—चेरतुस्तौ । म–दर्शयंतौ । २. भ–रणे रूपं । ३. रा१ ल१ ल२ ब अ प्र–सशरौ ॥ ४. भ–दर्शयंतौ तु तौ तत्र गतिं बहुविधां रणे । म–अत आरभ्य सर्गान्तं यावन्नास्ति । ५. भ–अन्योऽन्यं चाप्यभिमुखौ । ६. रा२ फ–व्यवस्थितौ । भ–व्यतिष्ठतां । ७. अ–नास्ति ॥ ८. भ–धुरं धुरेण । ९. रा२ फ–वक्त्रैर्वक्त्राणि । भ–वक्त्रं वक्त्रेण । १०. रा१ ल१ ल२ ब प्र–स्थिरयोस् ॥ ११. अ–परस्परं । १२. भ–प्रत्यवासर्पयद्धयान् । १३. रा२–अद्य सर्पणात् । फ–अपसर्पणात् ॥ १४. भ–तदा तेन । १५. भ–जगाम । १६. रा२ फ–स न चापि ॥ १७. रा१–चिक्षेपेऽथ । भ–चिक्षेप च । १८. म–०णेस्तु ॥ १९. रा१ ल१ ल२ ब अ प्र–०गान्छरीरे पातयञ्छरान् । २०. रा१ ल१ ल२ ब अ–समरे । २१. रा१ ल१ ल२ ब अ–०थामज० ॥ भ–वा चक्रुराहवे । २२. रा१ ल१ ल२ ब अ प्र–ततः प्रधर्षयन् । २३. रा१ ल१ ल२ ब अ प्र–सद्यश्च । २४. अतः परमधिकः पाठः—भ–अग्नेराज्याहुतस्येव तस्य कोपो व्यजायत । स विनाम्य धनुर्भूयः पूरयित्वा महाहवे ॥ २५. भ–त्रिंशतं ॥ २६. रा२–रावणस्यन्द० । २७. रा२ फ भ–रिपोः ॥

प्र-गृह्य राघवस् तस्य वि-कृष्य च महद् धनुः ।
१४] क्षुरेण पृथु-धारेण चकर्त्त स[1] शराऽऽसनम् ॥१५॥ [N
द्वितीयेनाऽस्य बाणेन हस्ताऽऽवापं न्य्-अपातयत् ।
१५] ततोऽस्य कवचं बाणैर् व्य्-अधमत् सर्व-तः शितैः[2] ॥१६॥ [N
स छिन्न-धन्वा[3] पौलस्त्यो रथाद् आ-दाय कार्मुकम् ।
१६] ववर्ष शर-वर्षेण स-रथं राघवं पुनः ॥१७॥ [N
मायां च वि-षमां[4] चक्रे प्र-यत्नाद् धनदाऽनुजः ।
N] सृजञ्[5] छर-सहस्राणि[5] बहूनि कृतहस्त-वत् ॥१८॥ [N
गदानां मुसलानां[6] च वज्राणां चैव[6] निः-स्वनः[7] । [१७पू
१७] बभूव तस्मिन् सम्-अरे पततां राघवं[8] प्रति[8] ॥१९॥ [N
राघवश् चाऽपि दुर्-धर्षो घोरम् अस्त्र-मयं[9] महत् ।
१८] शर-वर्षेण[10] मेधावी प्रत्य्-अवारयद् आशु[11] तत्[11] ॥२०[12]॥[N
ततो देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।
१९] चिन्ताम् आ-पेदिरे[13] सर्वे समं[14] युद्धं निर्-ईक्ष्य तत्[14] ॥२१॥ [२०
स्वस्त्य् अस्तु राघवायेति देवाः सर्षि-गणा (ऽ)ब्रुवन् ।[15]
२०] लोकेभ्यश् चैव सर्वेभ्यस् तदाऽशंसन्त[16] सर्व-शः ॥[17]२२॥[२१
२१पू] जहीऽमं पाप-कर्माणम् इति देवास् तम् अब्रुवन् ।[18]
N] विमान-स्था महाऽऽत्मानं रामम् अक्लिष्ट-कारिणम् ॥[19]२३॥[N
रामो वि-जयतां राजा धर्मोत्तरम्[20] इदं जगत् ।

---

१. फ–च ॥ २ रा१ ल१ ल२ ब अ प्र–स्थितैः ॥ ३. भ–छिन्नवर्मा ॥ ४. रा१ ब अ प्र–विक्रमी । ल१ ल२–विक्रमे । ५. रा२ फ–व्यसृजच्छरवर्षाणि ॥ ६. भ–परिघानां च मुसलानां च । ७. ल१–०नैः । ८. रा१ ल१ ल२ ब अ प्र–राघवोपरि ॥ ९. रा१ ल१ ल२ ब अ प्र भ–शस्त्र० । १०. ल१ ल२ ब अ प्र–शस्त्रव० । ११. रा१ ल१ ल२ ब अ प्र–आशुगैः ॥ १२. अतः परमधिकः पाठः—भ–शराणां पुंखवातैश्च क्षुभिताः सप्तसागराः । क्षुब्धानां सागराणां च पातालतलवासिनः ॥ व्यथिताः पन्नगाः सर्वे दानवाश्च चकंपिरे । चकंपे मेदिनी सर्वा सशैलवनकानना ॥ भास्करो निष्प्रभश्चासीत् प्रववौ न च मारुतः ॥ १३. भ–अभ्यगमन् । १४. भ–सकिन्नरमहोरगाः । रा१ अ–०क्ष्य ह । ल१ ल२ ब–०क्ष्य च ॥ १५. टि.–आर्षः सन्धिः । भ–स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकास्तिष्ठंतु शाश्वताः । १६. रा१ ल१ ल२ ब अ प्र–तदा स्वस्त्यस्तु । १७. भ–जयतां राघवः संख्ये रावणं राक्षसेश्वरं । १८. भ–एवमूचुर्हि पश्यंतस्तद्युद्धं रामरक्षसोः । १९. भ–नास्ति ॥ २०. रा१ ल१ ल२ ब प्र–धर्मोतरं ॥

N] भवत्व् इति महर्षीणां वाचोऽश्रूयन्त सर्व-शः ॥२४॥ [२२पू
मुमुचुः पुष्प-वर्षं च गन्धर्वाऽप्सरसो महत् ।[1]
N] दिव्यं मूर्धनि[2] रामस्य पूजयन्तोऽस्य[3] कर्म तत् ॥[4]२५॥ [N
लक्ष्मणस् त्व्[5] अब्रवीद्[5] रामं सु-ग्रीवश् च हरीऽऽश्वरः ।
N] हर्षयन्तौ स्तुवन्तौ च स च राजा वि-भीषणः ॥२६॥ [N
किम् इहोपेक्षसे वीर शत्रुं हस्तम् उपाऽऽगतम् ।
N] नैष शक्य इहाऽन्येन जेतुं[6] शत्रु-भयङ्करः[7] ॥२७॥ [N
त्वम् अस्य हन्ता नाऽन्योऽस्ति सर्व-लोकेषु मान-द ।
N] तत् कुरुष्व महा-बाहो कर्मौपयिकम्[8] आत्मनः ॥२८॥ [N
भवन्त्व् अद्य निरा-बाधाः सर्वे लोका नरेश्वर ।
N] सुर-शत्रौ नि-पतिते रावणे लोक-रावणे ॥२९॥ [N
लीलायसे किम् अद्य त्वं जहीऽमं पापम् ओजसा ।
N] प्रति-ज्ञां स-फलाम् अद्य कुरु हत्वा दशाऽऽननम् ॥३०॥ [N
इत्य् उक्तः स[9] नर-श्रेष्ठो रामस्[9] तान् प्रत्य्-अपूजयत् ।[10]
N] बाढम् इत्य् अब्रवीच् चैतान् छरान् आ-दाय षोडश ॥[11]३१॥ [N
शरेणैकेन रामस तु रावणस्याऽथ लाघवात् ।
धनुषो ज्यां दृढां दूराच् चिच्छेद कृतहस्त-वत् ।[11]
N] तस्य तद् दारुण-रवं छिन्न-ज्यं चाऽस्फुटद् धनुः ॥३२॥ [N
सोऽन्यत् कार्मुकम् आ-दाय स-ज्यं चक्रे त्वराऽन्वितः ।
कोसलेन्द्रश् चतुर्भिश् च रिपोस् तस्याऽभि-धावतः[12] ।
N] जघान चतुरो वाहांस् ते हताः सहसाऽपतन्[13] ॥३३॥ [N
षष्ठेनाऽथ[14] स बाणेन सूतम् अस्य न्य्-अपातयत् ।
N] हृदि भित्त्वाऽर्ध-चन्द्रेण[15] ततः सं-धाय सप्तमम् ॥३४॥ [N
ततोऽस्य रथ-शक्तिं च[16] मुकुटं च महर्द्धि-मत् ।

---

१. अ—मुमुचुर्युधि वर्षं च बाणानां पतिताः शराः । २. रा$_1$ ल$_1$ ल$_2$ ब भ—च मूर्ध्नि । ३. भ—वर्जं—०न्तोऽपि । ४. अ—नास्ति ॥ ५. रा$_2$ फ—चाब्र० ॥ ६. रा$_1$ अ—हंतुं । ७. रा$_1$—शत्रुर्भ० । फ—०र ॥ ८. ल$_1$ ल$_2$ प्र रा$_2$—कर्मौपा० ॥ ९. रा$_2$ फ भ—समरे श्रेष्ठः सर्वास् । १०. अ—अत आरभ्य "चक्रे त्वरान्वितः" इति ३३-शश्लोकपूर्वार्धं यावन्नास्ति । ११. रा$_1$ ल$_1$ ल$_2$ ब प्र—नास्ति ॥ १२. भ—तस्याऽथ धा० । १३. अ—राक्षसोऽभवत् । रा$_1$ ल$_1$ ल$_2$ ब प्र रा$_2$ फ—राक्षसाभवन् ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—सज्जेनाथ । १५. भ—विद्धार्धं० ॥ १६. ल$_1$ ल$_2$ ब प्र—स ।

N] चिच्छेद परमाऽऽयस्तो राघवः शत्रु-कर्षणः ॥३५[1]॥ [N
अष्टमेनाऽथ[2] बाणेन रथात् तस्य[3] पतिष्यतः[3] ।
जहार पृथु-धारेण[4] शिरो ज्वलित-कुण्डलम् ।
N] शिरस्य् अप-हृते तस्मिंस् ततो नव-शिरा बभौ ॥३६॥ [N
ततो भूयस् त्रिभिर् बाणैः शिरांसि त्रीणि राघवः ।
पातयामास सं-क्रुद्धः स बभूवाऽथ षड्-शिराः ॥[5]३७॥[N
N] तेषां षण्णां शरैस् तीक्ष्णैः पञ्च चिच्छेद राघवः ।[5] [N
२४पू] शिरांसि परम-क्रुद्धः सोऽभूद् एक-शिरास् ततः ॥[6]३८॥
तद् अप्य् अशनि-संकाशं छिन्नं रामेण दृश्यते ।[6] [२७
२५] छिद्यते जायते चैव[7] रावणस्य पुनः पुनः ॥३९॥
रामेण सम्-अरे रोषात् राक्षसस्य दुर्-आत्मनः ।[8]
शतम् एकोत्तरं छिन्नं शिरसां तुल्य-वर्चसाम् ॥४०॥ [२९
२६] न चैव राक्षसेन्द्रस्य दृश्यते जीवित-क्षयः[9] ।
ततः सर्वाऽस्त्र-विच्[10] छूरः[10] कौसल्याऽऽनन्द-वर्धनः ।
२८] वि-षमैर्[11] बहुभिर् युक्तं[11] चिन्तयामास राघवः ॥४१॥ [३१
रावणो हत-सूतश्[12] च हताऽश्वश् छिन्न-कार्मुकः ।
N] र (?अ)थ-(?थ)शक्तिं महा-घोराम् आ-दायाऽवाऽतरद् रथात् ॥४२[N
स तां मुक्ताम् इवाऽऽकाशे भीमां सौदामिनीं यथा ।
N] काल-रात्रिम् इवाऽत्य्-उग्राम् उद्-यम्याऽभ्य्-अद्रवद् रणे[13]॥४३॥[N
तम् आ-द्रवन्तं भीमाऽक्षं रुधिरौघ-परिप्लुतम्[14] ।
N] शक्ति-हस्तं कृताऽन्ताऽऽभं सौमित्रिः प्रत्य्-अपद्यत ॥४४॥ [N
शरैर् आशीविषाऽऽकारैर् अथैनं हृदि लक्ष्मणः ।
N] बिभेद पृथु-धारैश् च दशभिर् हेम-भूषितैः[15] ॥४५॥ [N

---

१. भ–नास्ति ॥ २. रा२ फ–तथाष्टमेन । ३. रा२ फ–तस्योत्प० । भ–तस्मात्प० । ४. रा१ ल१ ल२ ब अ प्र–क्षुरधा० ॥ ५. फ–नास्ति । ६. रा१ ल१ ल२ ब अ प्र–नास्ति ॥ ७. रा१ ल१ ल२ ब अ प्र–शीघ्रं ॥ ८. रा१ ल१ ल२ ब अ प्र–एवमेव रणे तस्मिञ्छिरो नैवाप संक्षयं ॥ ९. रा१ ल१ ल२ ब अ प्र–०क्षये । १०. रा२–०विद् वीरः । ११. रा२ फ–वर्जं—मार्गणैर्बहुभिर्युद्धं । भ–विमर्शैर्ब० ॥ १२. रा२ फ भ–हतयंता ॥ १३. रा२ फ भ–बली ॥ १४. भ–०वप्रवर्षितं ॥ १५. रा१ अ–वर्जं—०भूषणैः ॥

स भिन्न-वर्मा रुधिरं वमन् वक्त्रेण रावणः ।
N] ततः क्रुद्धो दश-ग्रीवस् तां शक्तिं हेम-भूषणाम् ॥४६॥ [N
लक्ष्मणाय प्र-चिक्षेप जिह्वां वैवस्वतीम् इव ।
N] अ-प्राऽऽप्ताम् एव तां शक्तिं चिच्छेद रघु-नन्दनः ॥४७॥ [N
तां शक्तिं शत-धा[1] कृत्वा[2] लक्ष्मणः पर-वीर-हा ।
चक्रे सु-तुमुलं युद्धं वानरैः परि-वारितः ।
N] वि-संज्ञं[3] रावणं कृत्वा स ननाद च हर्षितः ॥४८॥ [N
मुहूर्ताल् लब्ध-संज्ञस् तु रावणः क्रोध-मूर्च्छितः ।
N] रामम् अभ्य्-अद्रवत् प्रेक्ष्य स्रवन् गिरिर् इवाऽपरः ॥४९[4]॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे[5] राम-रावण-युद्धं[6] नामै-
कोननवतितमः सर्गः ॥ ८९ ॥

---

१. रा$_1$, ल$_1$, ल$_2$ ब अ प्र—च द्विधा । २. भ—भित्त्वा । ३. भ—वर्जं-निःसंज्ञं ॥
४. अतः परमधिकः पाठः—रा$_1$, ल$_1$, ल$_2$ ब अ प्र—ततोऽभवत्पुनर्युद्धं वृत्रवासवयोरिव । रामरावणयोर्युद्धं सुघोरं रोमहर्षणम् ॥ गन्धर्वाप्सरसश्चैव सिद्धाश्च सह चारणैः । द्रष्टुमभ्याययुः सर्वे तद्युद्धं रोमहर्षणम् ॥ ततः क्रुद्धो महाबाहुर्वानराणां कीर्तिवर्धनः ॥ रा$_1$, ल$_1$, ल$_2$ ब अ प्र भ—संधाय रामो धनुषि शरमाशीविषोपमम् ॥ मारीचो निहतो यैस्तु दूषणश्च खरस्तथा । त्रिशिराश्च विराधश्च हतो वाली च संयुगे ॥ त इमे सायका युद्धे सर्वे प्रत्यर्पिता मया । किं नु तत्कारणं येन रावणे मंदतेजसः ॥ इति संचिंतयन्सर्वं सोऽप्रमत्ततरोऽभवत् । ववर्ष शरवर्षाणि राघवो रावणोरसि ॥ रावणोऽपि ततः क्रुद्धो रथाऽथो राक्षसेश्वरः । गदामुसुलवर्षेण रामं प्रत्यद्रवद्रणे❀[1] ॥ तत्प्रवृत्तं महारौद्रं तुमुलं रोमहर्षणम् ❀[2] । रा$_1$, ल$_1$, ल$_2$ ब अ प्र—उभयोः सृजतोर्बाणान्रामरावणयोर्मृधे ॥ ५. प्र भ—लंकाकांडे । ६. भ—रावणशिरश्छेदो ॥

---

❀१ अतः परं भ—गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव ॥

❀२ अतः परं भ—अंतरिक्षे च भूमौ च पुनश्च गिरिमूर्धनि । देवदानवयक्षाणां पिशाचोरगरक्षसाम् ॥ पश्यतां तन्महद्युद्धं सप्तरात्रमवर्तत । नैव रात्रिं न दिवसं न मुहूर्तं न च क्षणम् ॥ रामरावणयोर्युद्धं विश्राममगमत्तदा ॥

[1]अथ सं-स्मारयामास मातली राघवं तदा ।
३९] अ-जानन् इव वीर त्वं किम् एवम्[2] अभि-वर्तसे[3] ॥१ ॥ [१
वि-सृजाऽस्मै वधायेदम्[4] अस्त्रं पैतामहं वि-भो ।
४०] विनाश-कालः प्रथितो यत् सुरैः सोऽभि-वर्तते[5] ॥[6]२ ॥ [२
ततः[7] सं-स्मारितो रामस्[7] तेन वाक्येन मातलेः ।
४२] जग्राह स शरं दीप्तं निः-श्वसन्तम् इवोरगम् ॥३ ॥ [३
यम् अस्मै प्रथमं प्राऽदाद् अगस्त्यो भग-वान् ऋषिः ।
४३] ब्रह्म-दत्तं महा-बाणं जग्राह युधि तद्-वधे[8] ॥४ ॥ [४
ब्रह्मणा निर्-मितं पूर्वम् इन्द्राऽर्थम्[9] अ-मितौजसा[9] ।
४४] दत्तं सुर-पतेः पूर्वं त्रैलोक्य-जय-कांक्षिणः[10] ॥५ ॥ [५
यस्य[11] वाजेषु पवनः[11] फले पावक-भास्करौ ।
४५] शरीरम् आकाश-मयं गौरवे मेरु-मन्दरौ ॥६ ॥ [६
पर्वस्व् अपि च वि-न्यस्ता लोक-पालाः महौजसः ।[12]
४६] धन-दो वरुणश् चैव पाश-हस्तस् तथाऽन्तकः ॥७ ॥ [N
जाज्वल्यमानं वपुषा सु-पुङ्खं हेम-भूषितम् ।
४७] तेजसा सर्व-भूतानां कृतं[13] भास्कर-तेजसा[13] ॥८ ॥ [७
स-धूमम् इव कालाऽग्निं दीप्यमानं[14] रविं यथा[14] ।

---

१. इतः पूर्वमधिकः पाठः—भ–ततो युद्धपरिश्रांतं समरे चिंतया स्थितम् । रावणश्चाग्रतो दृष्ट्वा युद्धाय समुपस्थितः ॥ २. भ–एनमनुव० । ३. अतः परमधिकः पाठः—भ–अद्य जन्म यथार्थं ते भविष्यति महाबल । राक्षसेन्द्रं दुरात्मानं हत्वैनं रावणं रणे ॥ अद्य वीर सुयुद्धं ते दृष्ट्वा दिव्येन चक्षुषा । वृतो देवर्षिभिः श्रीमान् सुप्रीतोऽस्तु पितामहः ॥ अद्य देवाः सगंधर्वाः सिद्धाश्च परमर्षयः । निर्भया विचरिष्यंति त्वत्कृतेन नरोत्तम ॥ ४. भ–वधाय त्वं । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०रभि० । फ म–सौम्य व० । ६. भ–विनाशो निर्मितो ह्यस्य स्वयमेव स्वयंभुवा ॥ अतः परमधिकश्च पाठः—उत्तमांगं न चैतस्य छेतव्यं राघव त्वया । नैष मूर्ध्नि प्रभो वध्यो वध्य एष हि मर्मसु ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–स्मारितस्तेन रामोसौ ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–विधिवद्धनुः । भ–परवीरहा ॥ ९. भ–०न्द्रस्यार्थेऽमितौजसः । १०. रा$_2$ म–त्रिलोकज० ॥ ११. भ–पवनो यत्र पुंखे तु ॥ १२. भ–प्रति पर्वं च विन्यस्ता भगवंतो जयावहाः । १३. रा$_1$ अ–भास्करस्य च ते० । रा$_2$ फ म भ–कृतं भास्वरवर्चसम् ॥ १४. भ–लेलिहानमिवोरगम् ।

४८] रथनागाऽश्व-वृन्दानां[1] भेदनं क्षिप्र-कारिणम् ॥[2]९ ॥ [८
N] वारणं[3] परि-घाणां च गिरीणां चैव भेदनम् ।[2]
४९पू] नाना-रुधिर-दिग्धाऽङ्गं[4] मेदो-दिग्धं[5] सु-दारुणम् ॥१०॥ [९
N] वज्र-नाभं महा-नादं नानाऽशनि-विदारणम् ।[6]
४९उ] सर्व-वित्रासनं भीमं श्वसन्तम् इव पन्न-गम् ॥११[7]॥ [१०
काक-गृध्र-बलाकानां[8] गोमायु-वृक्क-रक्षसाम्[9] ।
५०] नित्यं भक्ष-प्रदं[10] युद्धे यम-रूपं भयाऽऽवहम् ॥१२॥ [११
नन्दनं वानरेन्द्राणां रक्षसाम् अव-सादनम् ।[11] [१२पू
५१] द्विषतां कीर्ति-हरणं प्रकर्ष-करम्[12] आत्मनः ॥१३॥ [१३उ
अभि-मन्त्र्य ततो रामस् तं महेषुं महा-भुजः ।
५२] वेद-प्रोक्तेन[13] विधिना[13] सं-दधे कार्मुके बली ॥१४[14]॥ [१४
स रावणाय वेगेन[15] चिक्षेप शरम् उत्-तमम् । [१६पू
५४] महा-वेगं महा-घोषं[16] गिरीणाम् अपि दारणम्[17] ॥१५[18]॥ [N
५५पू] स शक्र-धनुषो[19] मुक्तो हन्तुं रामेण[20] रावणम्[20] ।[21]
धूम-पूर्वं प्र-जज्वाल प्राऽऽप्य[22] वायु-पथं महत्[23] ॥१६॥ [N
५६] स वज्र इव दुर्-धर्षो[22] वज्र-पाणि-विसर्जितः[24] ।
५७पू] कृताऽन्तक[25] इवाऽवार्यो[25] न्य्-अपतद् रावणोरसि[26] ॥१७॥ [१७

---

१. भ—वरनागाश्ववृक्षाणां । २. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र—नास्ति ॥ ३. रा$_{2}$ फ म—द्वाराणां । ४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र—०रसिक्तांगं । ५. भ—मेदःसिक्तं ॥ ६. रा$_{1}$ ल ल ब अ प्र भ—नास्ति । ७. अतः परमधिकः पाठः—रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र म—दुराधर्षं दुर्विषहं सर्वदुष्टविनाशनम् । आशीविषसमस्पर्शं वेगसंपन्नमूर्जितम् ॥ ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र—०विहंगानां । रा$_{2}$ फ म—०वकानां च । ९. ल$_{1}$ ल$_{2}$ ब प्र—०युसृगर० । भ—०युगणर० । अ—"०रक्षसाम्" इत्यारभ्य "द्विषतां कीर्तिह०" इत्यन्तो नास्ति । १०. रा$_{1}$—भक्ष्यप्रदं । ११. म—नास्ति । अतः परमधिकः पाठः—भ—राजितं विविधैः पत्रैश्चारुचित्रैर्गरुत्मतः । तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम् ॥ १२. रा$_{2}$ फ—कीर्तिप्रक० । म भ—प्रहर्ष० ॥ १३. म—०प्रयुक्तवि० । १४. अतः परमधिकः पाठः—भ—तस्मिन्संधायमाने तु राघवेण शरोत्तमे । वित्रेसुः सर्वभूतानि चचाल च वसुंधरा ॥ १५. रा$_{2}$ फ म—तं वेगात् । १६. म—०घोरं । १७. रा$_{1}$ प्र—वर्जं—०दारुणं । १८. भ—स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् । चिक्षेप परमामर्षी तं शरं मर्मघातिनम् ॥ १९. रा$_{2}$ फ म भ—०नुषा । २०. भ—शत्रुं महात्मना । २१. अ—नास्ति । अतः परमधिकः पाठः—भ—सहितः परमास्त्रेण वियोज्य विसृतः शरः । २२. ल$_{1}$ ल$_{2}$ ब प्र—नास्ति । २३. भ—तदा । २४. भ—वज्रबाहु० । २५. रा$_{2}$ फ म—०न्त इव चावार्यो । भ—०न्त इव दुर्वार्यो । २६. रा$_{2}$ अ भ—राक्षसोरसि ॥

N] स नि-मग्नो[1] महा-घोरः[1] शरीराऽन्त-करः शरः ।
५७उ] बिभेद हृदयं तूर्णं रावणस्य दुर्-आत्मनः[2] ॥[3]१८॥[१८
रुधिराऽक्तः स वेगेन रावणाऽन्त-करः शरः ।[3]
५८] रावणस्य हरन् प्राणान् विवेश[4] धरणी-तले[4] ॥१९॥ [१९
स शरो रावणं हत्वा[5] लोहिताऽऽर्द्री-कृत-च्छविः[5] ।
५९] कृत-कर्मा निभृत-वत्[6] स्व-तूणं[6] पुनर् आऽविशत् ॥२०॥ [२०
तस्य[7] हस्ताद् धतस्याऽऽशु[7] कार्मुकं तत् स-सायकम् ।[8]
६०] प्राऽभ्रश्यत सह प्राणैर् भ्रश्यमानस्य जीवितम्[9] ॥२१॥ [२१
गताऽसुर् भीम-वेगस् तु राक्षसेन्द्रो हत-द्युतिः ।
६१] पपात सहसा भूमौ पुरा[10] वृत्रो हतो[10] यथा ॥२२[8]॥[२२
तं दृष्ट्वा[11] पतितं भूमौ हत-शेषा निशा-चराः ।
६३] हत-नाथा भय-त्रस्ता दुद्रुवुः सर्व-तो दिशम् ॥२३[12]॥[२३
नन्दन्तश्[13] चाऽभि-पेतुस् ते[14] वानरा द्रुम-योधिनः[15] ।[16] [२४पू
N] दशग्रीव-वधाद्[17] धृष्टा[17] राघवस्य जयैषिणः ॥[18]२४॥
तेऽर्दिता वानरैर् हृष्टैर् लङ्काम् अभि-ययुर् भयात् ।
६४] हताऽऽश्रयत्वात् करुणैर्[19] बाष्प-प्रस्रवणैर् मुखैः ॥२५॥[२५
ततो वि-नेदुः सं-हृष्टा वानरा जित-काशिनः ।
६५] वदन्तो राघव-जयं[20] रावणस्य वधं[21] तथा[21] ॥२६॥ [२६
६६पू] अथाऽन्तरिक्षे व्य्-अनदत् सौम्यस्[22] त्रिदश-दुन्दुभिः ।[23]
६७उ] दिव्य-गन्ध-वहश् चैव मारुतः स-सुखो[24] ववौ ॥२७॥ [२७

---

१. भ–विसृष्टो महावेगः । २. रा$_2$ फ–महास्वनः । म–महात्मनः । ३. भ–नास्ति ॥ ४. भ–भित्त्वा चैव क्षितिं गतः ॥ ५. भ–भित्त्वा रुधिरार्द्राक्ति० । ६. भ–निववृते स तू० । ७. म–ततो हस्ताद्रक्षःपतेः । ८. भ–समुद्रं समुपस्पृश्य वसुधायां व्यशीर्यंत । रावणस्य शरीरं तु पंचनल्वानुविस्तृतं । ९. म–जीवितात् ॥ १०. रा$_2$ फ म–वृत्रो वज्रह० । ११. रा$_2$ फ–तथा । १२. भ–व्यद्रवंत दिशः सर्वा वानरैरर्दिता रणे ॥ १३. म भ–नर्दंतश् । १४. रा$_2$ फ भ–वर्जं—च । १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–द्रुतयो० । १६. अतः परमधिकः पाठः—भ–हतेश्वरा रजोध्वस्ता हतभूयिष्ठ-वाहनाः । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०वधं दृष्ट्वा । १८. भ–दशग्रीवं हतं दृष्ट्वा विजयं राघवस्य च ॥ १९. भ–वर्जं—करुणं ॥ २०. भ–रामविजयं । २१ रा$_2$ फ–च ते वधम् । म–कृतं वधम् ॥ २२. भ–भृशं । २३. अतः परमधिकः पाठः—भ–निहते राक्षसे तस्मिन् रावणे देवकंटके । जये तु सुमहान्नाद आकाशे समजायत । २४. रा$_1$ अ–सुसुखो ॥

नि-पपाताऽन्तरिक्षाच्[1] च[1] पुष्प-वृष्टिस् तदा भुवि ।
६८] किरन्ती राघव-रथं दुर्-आपा[2] याऽल्प-चेतसाम्[2] ॥२८॥ [२८
राघव-स्तुति-संयुक्ता[3] गगने[4] च वि-चुक्रुशुः ।
६९] साधु साध्व् इति हृष्टानां[5] देवतानां शुभा[6] गिरः[6] ॥[7]२९॥ [२९
आ-विवेश महा-हर्षो देवानां सह चारणैः ।
७२] रावणे नि-हते घोरे सर्वलोक-भयाऽऽवहे ॥३०॥ [३०
N] प्र-शशंस च तान् सर्वान् कुलगोत्रोपचारतः[8] ।[9]
७४पू] ऋक्ष-वानर-गोपुच्छान् राक्षसं[10] च वि-भीषणम्[10] ॥[11]३१॥ [N
भवतां बाहु-वीर्येण वि-क्रमेण बलेन च ।
७५] हतो राक्षस-राजोऽयं रावणो लोक-रावणः ॥३२॥ [N
अत्य्-अद्भुतम् इदं कर्म भवतां कीर्ति-वर्धनम् ।
७६] कथयिष्यन्ति पुरुषा[12] यावद् भूमिर् धरिष्यति ॥३३॥ [N
एतच् चाऽन्यच् च वि-विधं युक्तम् अर्थ-वद्[13] उत्-तमम्[13] ।
७७] पुनः पुनर् उवाचैनान्[14] रामः सं-हर्षयन् गिरा ॥३४[15]॥ [N
स[16] च[16] तैः पृथिवी-पालः शस्यमानः[17] समन्त-तः ।
८०] सु-हृद्भिः शुशुभे धी-मान्[18] देवैर् इव मरुत्-पतिः[19] ॥३५॥ [N

---

१. भ–ततोऽतरिक्षात्पतिता । २. रा$_2$ फ भ–वर्जं—०पा चाल्प० । भ–दिव्यैः पुष्पैः सुगन्धिभिः ॥ ३. भ–०वस्तवसं० । ४. म–अपि चक्रुर्मिथः कथां । भ–०ने चापि शुश्रुवुः । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–निष्ठानां । भ–वाचश्च । ६. भ–महात्मनां । ७. अतः परमधिकः पाठः—भ–नारदस्तुंबुरुर्गार्ग्यः सुदामाथ हाहा हुहूः । एते गंधर्वराजानो राघवस्याग्रतो जगुः ॥ ऊर्वशी मेनका रम्भा पंचचूडा तिलोत्तमा । उपानृत्यंत काकुत्स्थं प्रहृष्टा रक्षसो वधात् ॥ ८. रा$_2$ फ–०गोत्राभिधानतः । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–वर्जं—प्रशशंसुश्च सचिवाः कुलं गोत्रोपचारतः । म–प्रशशंसुश्च तान्सर्वान्देवदानवसंभवान् । भ–ततः सकामं सुग्रीवमंगदं सुहृदस्तथा । प्रीत्या परमया युक्तो हत्वा राक्षसपुंगवं ॥ १०. रा$_1$–वानरं च वि० । भ–लक्ष्मणं सवि० । ११. अतः परमधिकः पाठः—भ–उवाचेदं तदा सर्वान् रामः सुमधुरं वचः ॥ १२. ल$_1$ ल$_2$ ब प्र–भूतानि ॥ १३. भ–अर्थमनुत्तमं । १४. रा$_2$ फ–वर्जं—०चैनं । म–०चेदं । भ–०चैतान् । १५. अतः परमधिकः पाठः—भ–एवमुक्ताश्च ते तेन हृष्टा राघवमब्रुवन् । तवैव तेजसा दग्धः पापोऽयं सपुरःसरः ॥ अस्माकमल्पवीर्याणां शक्तिः का रघुनन्दन । कर्तुमेतद्रणे कर्म यत्त्वया सुमहत्कृतम् ॥ १६. भ–एवं । १७. रा$_2$ फ म भ–पूज्यमानः । १८. भ– श्रीमान् । १९. म–शतक्रतुः ॥

ततः स रामः सु-ग्रीवम् अङ्ग-दं च वि-भीषणम्[1] ।
७३] सस्वजे लक्ष्मणं प्रीतो हत्वा राक्षस-पुङ्गवम् ॥३६॥ [३१

ततो जगाम प्र-शमं च मारुतो
दिशः प्र-सेदुर् वि-मलं नभोऽभवत् ।
मही[2] चकम्पे न तदाऽशुभाऽऽवहा[2]
८१] शुभ-प्रभश्[3] चैव तताप भास्-करः[3] ॥३७॥ [३२

ततस् तु सुग्रीवविभीषणाऽऽदयः[4]
सुहृद्-गणास्[5] ते[5] सह-लक्ष्मणास् तदा ।
सम्-एत्य हृष्टा वि-जयाय[6] राघवं
८२] रणेऽभ्य्-अनन्दन् विधिनाऽभ्य्-अपूजयन्[7] ॥३८॥[३३

स तु निहत-रिपुः स्थिर-प्रतिज्ञः
स्वजनबलाऽभिवृतो रणेऽभ्य्-अराजत्[8] ।[9]
रघु-कुल-नृप-नन्दनो महौजास्
८३] त्रिदश-गणैर् इव[10] पूजितो महेन्द्रः[10] ॥३९॥ [३४

इति समर-जयाय[11] कोशलेन्द्रो
वि-जयम् अवाऽऽप्य स तैश् च पूज्यमानः ।
रण-शिरसि जनेन्द्र[12] इन्द्र-कर्मा
N] व्यपहृत-शल्य[13] इवाऽऽस[14] वीत-शोकः ॥४०[15]॥[N

इत्यार्षे रामायणे युद्ध-काण्डे[16] रावण-वधो नाम
नवतितमः सर्गः ॥ ९० ॥[17]

---

१. रा$_1$ ल$_1$-महाबलः । ल$_2$ ब अ प्र रा$_2$ फ म-महाबलम् ॥ २. रा$_2$ फ म-०दा भयावहं । भ-स्थिता महेंद्रप्रमुखाश्च देवताः । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०प्रदश् चैव तता० । भ-स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०णौ च । ५. रा$_2$ फ म भ-०द्विशेषाः । ६. भ-०येन । ७. रा$_2$ फ-वर्जं—विजयादपू० । भ-विधिवद् व्यपू० ॥ ८. भ-विराजमानः । ९. म-नास्ति । १०. भ-अभिपूजितो यथेन्द्रः ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-परविजयाय । १२. रा$_2$ फ म-यथेंद्र । १३. रा$_2$-व्यपहत० । १४. ल$_1$ ल$_2$ ब म-इव स । १५. भ-नास्ति ॥ १६. ब अ भ-लंकाकांडे । रा$_2$ म-महर्षिवाल्मीकिविरचिते युद्धपर्वणि । १७. अतः परं सर्गोऽयमधिकः पठितः—भ-रावणं निहतं दृष्ट्वा राघवेण

महात्मना । राक्षसा (? सा) त्रि (? नि) हतान्स (? ताः स) वै नादान्मुंचंति वानराः ॥ रावणं पतितं दृष्ट्वा ससारथिपुरोगमम् । रामस्य भयसंत्रस्ता दिग्विदिग्भ्यो विदुद्रुवुः ॥ सागरांतर्गताः केचित्केचित्पर्वतमाश्रिताः । याता रसातलं केचित्केचिद्वनमुपाश्रिताः ॥ प्रविष्टाश्चापरे लंकां पुत्रस्नेहेन राक्षसाः । समुद्रे पतिताः केचिद्राक्षसा विद्रुता रणे ॥ हाहाभूतास्तदा सर्वे बालवृद्धजनाकुला । लंका प्रचलिता सर्वा राक्षसानां च विद्रवात् ॥ वानराश्च महात्मानो लंकां गच्छन्ति चापरे । प्रविशंति ततो गत्वा वानराः सिंहविक्रमाः ॥ पश्यंतो हर्षिताः सर्वे सर्वरत्नोपशोभिताम् । द्वारा मणिमयास्तत्र तपनीयेन रंजिताः ॥ तोरणानि च सर्वाणि शक्रचापनिभानि च । मुक्तादामैश्च सर्वत्र माल्यदामविभूषितम् ॥ द्वारं दृष्ट्वा महात्मानो विस्मयं परमं गताः । प्राकाराणि च सर्वाणि तथाट्टपरिखाणि च ॥ देशे देशे च तत्रैव प्राकारवरशोभिताम् । पूर्णकुंभैश्च सर्वत्र द्वारि द्वारि च निष्ठिताम् ॥ दशयोजनविस्तीर्णां त्रिंशद्योयजनमायताम् । अष्टद्वारां पुरीं लंकामष्टप्राकारवेष्टिताम् ॥ शारदाभ्रप्रतीकाशां निर्मितां विश्वकर्मणा । सुवर्णरचितां दिव्यामुद्यानैरुपशोभिताम् ॥ मणिमुक्ताप्रवालैश्च पताकाभिश्च शोभिताम् । दृष्ट्वा विभूषितां लंकां वानरा विस्मयं गताः ॥ भ्रातरं निहतं दृष्ट्वा शयानं रणपांशुषु । शोकवेगपरीतात्मा विललाप विभीषणः ॥ वीर विक्रांत विख्यात विनीत नयकोविद । महार्हशयनो भूत्वा किं शेषेऽद्य हतो भुवि ॥ विक्षिप्य दीर्घौ निश्चेष्टौ भुजावंगदभूषणौ । मुकुटेनापविद्धेन भास्कराकारवर्चसा ॥ तदिदं वीर संप्राप्तं यन्मया पूर्वमीरितम् । काममोहपरीतस्य तद्वै न रुचितं तव ॥ यद्दर्पान्न प्रहस्तो वा नेंद्रजिन्नापरे जनाः । मद्वाक्यमन्ववर्तंत तस्यैतत्कार्यमागतम् ॥ त्वमेतत्सुनीतानां गतो धर्मविपर्ययः । गतः सत्यस्य संक्षेपः प्रसवानां गतिर्गता ॥ आदित्यः पतितो भूमौ मग्नस्तमसि चंद्रमाः । चित्रभानुः प्रशांतार्चिः सिक्तो घटशतैरिव ॥ रावणाग्निः प्रशांतोऽद्य राममेघशरांबुभिः । तस्मिन्निपतिते भूमौ वीरे शत्रुभृतां वरे ॥ किं शेषमिह लोकस्य हतवीर्यस्य सांप्रतम् । धृतिप्रवालः प्रसराभिपुष्पस्तपःफलः शौर्यविवृद्धमूलः । रणे महान् राक्षसराजवृक्ष उन्मूलितो राघवमारुतेन ॥ तेजोविषाणः कुलवंशवंशो मदप्रसेकाकुलचंडहस्तः । इक्ष्वाकुसिंहेन गृहीतदेहः सुप्तः क्षितौ रावणगंधहस्ती ॥ पराक्रमोत्साहविजृंभितार्चिर्निश्वासधूमः स्वबलप्रतापः । प्रतापयन्संप्रति रावणाग्निर्निर्वापितो रामपयोधरेण ॥ प्रतापलांगूलककुद्विषाणः पराभियोगोद्यतगात्रशाली । रक्षोवृषश्चापि विकीर्णचक्षुः क्षितीश्वरव्याघ्रहतोऽवसन्नः ॥ ततस्तद्धेतुमद्वाक्यं परं दृष्टार्थनिश्चयम् । रामः शोकसमाविष्टं प्रत्युवाच विभीषणम् ॥ नायं विनष्टो निश्चेष्टः समरे चंडविक्रमः । अनिवृत्तमहोत्साहः पतितोऽयमशंकितः ॥ नैवं विनष्टं शोचंति क्षत्रधर्मे व्यवस्थिताः । बुद्धिमंतोऽविघाताय निपतंति रणाजिरे ॥ येन सेंद्रास्त्रयो लोकास्त्रासिता युधि धीमता । तस्मिन्कालसमायुक्ते न कालः परिशोचितुम् ॥ नैकांतं विजयो

## [वं-९४]= [ एकनवतितमः सर्गः ] =[दा-११३]

रावणं नि-हतं श्रुत्वा राघवेण महाऽऽत्मना ।
१] अन्तः-पुराद् विनिष्-क्रम्य[1] राक्षस्यः शोक-कर्षिताः[2] ॥१ ॥[१
बहु-शो बाष्पमाणाश्[3] च प्र-दिग्धाः क्षिति-पांसुभिः ।[4]
२] विमुक्त-केशा दुःखाऽऽर्ता गावो हत-वृषा[5] इव ॥२[6] ॥[२
३उ] उत्तरेण विनिष्-पत्य द्वारेण सह[7] राक्षसैः[7] ।
प्र-विश्याऽऽयोधनं[8] घोरं[8] वि-चिन्वन्त्यो[9] हतं पतिम् ॥३[10]॥[३
४] हाऽऽर्य-पुत्रेति वादिन्यो हा नाथेति च सर्व-शः ।
५पू] परि-पेतुः कबन्धाऽङ्कां महीं शोणित-कर्दमाम् ॥४[11] ॥[४
ता बाष्प-परिरुद्धाऽक्ष्यो[12] भर्तृ-शोक-समाहिताः[13] ।[10]
६] करेणव इव त्रस्ता[14] न रेजुर् हत-यूथपाः ॥५ ॥[५
ददृशुस् तं महा-कायं वीर्य-वन्तं महा-बलम् ।[15]

---

युद्धे भूतपूर्वः कदाचन । परैर्वा हन्यते वीरः परान्वा हंति संयुगे ॥ इयं हि पूर्वनिर्दिष्टा गतिः क्षत्रियशाश्वती । क्षत्रियो हि हतः संख्ये न शोच्य इति निश्चयः ॥ तदेवं निश्चयं ज्ञात्वा स त्वमाज्ञाय विज्वरः । यदिहानंतरं कार्यं कार्यं तत्त्वं विचिंतय ॥ तमुक्तवंतं विक्रांतं राजपुत्रं विभीषणः । उवाच शोकसंतप्तो भ्रातृहीनो ह्यनंतरम् ॥ योऽयं विमर्देषु न भग्नपूर्वः समेत्य देवैः सह वासवेन । भवंतमासाद्य रणे स मग्नो वेलां समासाद्य यथा समुद्रः ॥ एतेन मित्राणि सुरक्षितानि भुक्ताश्च भोगाः सुभृताश्च भृत्याः । धनानि विप्रेषु समर्पितानि वैराण्यमित्रेषु सुपातितानि ॥ अग्न्याहितश्चैव महातपाश्च वेदांतगः कर्मसु चाग्रशूरः । एतस्य यत्प्रेतगतस्य कृत्यं क्रियेत तद्राम तव प्रसादात् ॥ स तेन वाक्यैः करुणैर्महात्मा संबोधितः साधु विभीषणेन । आज्ञापयामास नरेन्द्रसूनुः स्वर्ग्यं समाधानमदीनसत्त्वः ॥ विजयांतानि वैराणि निवृत्ते शांतिरिष्यते । क्रियतामस्य सत्कारो ममाप्येष यथा तव ॥ इत्यार्षे रामायणे लंकाकांडे विभीषणविलापो नाम षडशीतितमः सर्गः ॥

१. रा$_{2}$ भ–विनिष्पेतू । २. रा$_{2}$ फ म भ–शोकमूर्च्छिताः ॥ ३. रा$_{2}$ फ–वेपमानाश् । ४. भ–वार्यमाणाः सुबहुशश्चेष्टंत्यः क्षितिपांशुषु । ५. भ–नष्टर्षभा । ६. अतः परमधिकः पाठ.—भ–उरःशिरांसि निघ्नंत्यो बाहुभिः कनकोज्ज्वलैः ॥ ७. भ–हतभर्तृकाः । ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–०श्यास्य महाघोरं । ९. भ–०न्वंति । १०. म–नास्ति ॥ ११. अतः परमधिकः पाठः—भ–गृध्रगोमायुसंकीर्णां कंकवायसनादिताम् ॥ १२. भ–०रिपूर्णाक्ष्यो । १३. भ–०कपरायणाः । १४. भ–नर्दंत्यो ॥ १५. रा$_{2}$–महाकायं वीर्यवंतं रावणं च महाद्युतिं ॥ भ–ददृशुस्ता महावीर्यं महाकायं महाद्युतिं ।

७] रावणं नि-हतं भूमौ नीलाऽञ्जन-चयोपमम् ॥६ ॥ [६
ताः पतिं सहसा दृष्ट्वा शयानं रण-पांशुषु ।
८] नि-पेतुस् तस्य गात्रेषु छिन्ना[1] वन-लता[1] इव ॥७ ॥ [७
बहु-मानात् परि-ष्वज्य का-चिद् एनं रुरोद ह ।
९] चरणौ का-चिद् आ-लिङ्ग्य का-चित् कण्ठे वि-लम्ब्य[2] च ॥८॥ [८
उद्-धृत्य[3] च[4] भुजौ का-चिद् भूमौ विपरि-वर्तते[5] ।
१०] हतस्य वदनं दृष्ट्वा का-चिन्[6] मोहम् उपाऽऽगता ॥९ ॥ [९
का-चिद् अङ्के शिरः कृत्वा रुरोद[7] भृश-दुःखिता[7] ।
११] स्नपयन्ती मुखं बाष्पैस्[8] तुषारैर् इव पङ्क-जम् ॥१०॥ [१०
एवम्[9] आर्ताः पतिं[9] दृष्ट्वा रावणं नि-हतं रणे[10] ।
१२] चक्रुर्[11] बहु-विधं शोकं भूयस् ताः पर्य्-अदेवयन् ॥[12]११॥ [११
येन वि-द्रावितः[13] शक्रो येन वि-द्रावितो[13] यमः ।
१३] येन वैश्रवणो राजा[14] पुष्प-केन वि-योजितः ॥१२॥ [१२
गन्धर्वाणाम्[15] ऋषीणां[15] च सुराणाम् अपि चाऽऽहवे ।
१४] भयं यो नाऽभि-जानाति तस्येदं मानुषाद् भयम् ॥[16]१३॥ [१३पू
असुरेभ्यः सुरेभ्यो[17] वा[17] पन्न-गेभ्योऽपि चाऽऽहवे[18] ।
१५] भयं येन महद् दत्तं सोऽयं शेते रणे हतः ॥१४॥ [१३उ
अ-वध्यो देवतानां यस् तथा दानव-रक्षसाम् । [१४
१६] हतः[19] सोऽयं रणे[19] शेते मानुषेण पदातिना ॥१५[20]॥ [१५
यो न शक्यः सुरैर् हन्तुं न शक्यश्[21] चाऽसुरैस् तथा[21] ।
१७] सोऽयं कश्-चिद्[22] इवाऽसत्त्वो[22] मृत्युं मर्त्येन लम्भितः ॥१६॥ [१६

---

१. भ—शस्त्रछिन्ना लता ॥ २. भ—प्रलंब्य ॥ ३. रा$_2$ भ—उत्क्षिप्य । म—उत्सृज्य । ४. रा$_2$ फ—तु । ५. रा$_2$ फ—संपरि० । म—च प० । ६. म—अत आरभ्य ११-शश्लोकस्य प्रथमपादं यावन्नास्ति ॥ ७. भ—पश्यंती प्रारुदन्मुखं । ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—काचित् । रा$_2$ फ—चास्रैस् ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—सर्वास्ताः पतितं । १०. भ—भुवि । ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—कृत्वा । १२. भ—चुक्रुशुर्बहुधा शोकाद्भूयिष्ठं पर्यदेवयन् ॥ १३. म—वित्रासितः शक्रो येन वित्रासितो । १४. भ—भ्राता ॥ १५. भ—०र्वकिन्नराणां । १६. भ—नास्ति ॥ १७. भ—०भ्यश्च । १८. फ म भ—वा तथा ॥ १९. भ—सोयमद्य हतः । २०. अ म—नास्ति । अतः परमधिकः पाठः—अ म-वर्जं—सर्वदा च सुराणां हि यक्षाणामपि चासकृत् ॥ २१. रा$_2$ फ—०रैस्तदा । भ—यक्षैर्नासुरैस्तथा । २२. रा$_1$—०दिवा सुप्तो म—वा त्रिदशशत्रुः । भ—०दिवाशक्तो ।

एवं ब्रुवन्त्यो[1] बहु-धा[2] रुरुदुस् तस्य[3] ताः[3] स्त्रियः ।[4]
१८] भूय एव च[5] दुःखाऽऽर्ता[6] वि-लेपुस्[7] ताः पुनः पुनः[7] ॥१७॥ [१७
अ-शृण्वता[8] तु सु-हृदां[8] सततं[9] हित-वादिनाम्[9] । [१८पू
१९] ऐश्वर्य-मद-मत्तेन वयम् आत्मा च घातिताः ॥[10]१८॥
ब्रुवाणोऽपि[11] हितं वाक्यं स्निग्धो[12] भ्राता विभीषणः ।
२०] दृढं[13] परुषितो मोहात् त्वयाऽऽत्म-वध-कांक्षया[14] ॥१९॥ [१९
यदि निर्-यातिता चेत्[15] स्यात् सीता रामाय[15] मैथिली ।
२१] न तु[16] स्याद् व्यसनं घोरम् इदं मूल-हरं हि[17] नः[17] ॥२०॥ [२०
कृत-कामो[18] भवेद्[19] भ्राता रामो मित्र-कुलं[20] भवेत्[20] ।
२२] वयं चाऽविधवाः स्याम स-कामा[21] न च[21] शत्रवः ॥२१॥ [२१
त्वया पुनर् नृ-शंसेन सीतां सं-रुन्धता[22] बलात् ।
२३] राक्षसा वयम् आत्मा च त्रय[23] एव नि-पातिताः[23] ॥२२॥ [२२
काम-कारोऽस्ति[24] यन् नित्यं[24] तव राक्षस-पुङ्गव ।
२४] दैवं चेष्टयते सर्वं ततो दैवेन हन्यते ॥२३॥ [२३
वानराणां वि-नाशोऽयं[25] राक्षसानां च सं-युगे ।
२५] तव चैव महा-बाहो दैव-योगाद् उप-स्थितः ॥[26]२४॥ [२४
न वि-क्रमेण नाऽर्थेन न मानेन न सं-ज्ञया ।[27]

---

१. रा१ अ-वदन्त्यो । २. रा२ फ म-०बहुशो । ३. रा१-तास्तदा । ४. भ-एवं रुदंत्यो नार्यस्ता रावणं करुणं बहु । ५. ल१ ल२ ब-हि । म भ-तु । ६. भ-शोकार्ताः । ७. रा२ फ म-०पुस्तास्ततस्ततः ॥ भ-परलोकस्थमब्रुवन् ॥ ८. म-०ता वचस्तेषां । भ-आश्रितानां च सु० ॥ ९. ल१ ल२ ब-वचनं हित० । म-सुहृदां प्रियवा० । १०. भ-मरणाय हृता सीता घातिताश्च निशाचराः ॥ ११. भ-०णो हि । १२. भ-इष्टो । १३. रा२-धृष्टं । म-भृशं । भ-नित्यं । १४. भ-०कांक्षिणा ॥ १५. भ-नाथ भवेद्रामस्य । १६ भ-हि । १७. म भ-महत् ॥ १८. रा१ अ-भूमिकामो । ल१ ल२ ब प्र-भूतिकामो । १९. रा१ ब अ प्र-ऽभवत् । २०. रा१ ल१ ल२ ब अ प्र-मित्राकुलोऽभवत् । २१. रा२ फ म-०वर्जं—०श्चैव ॥ २२. भ-संहरता । २३. भ-युगपद्विनि० ॥ २४. भ-न कामकारः कामो वा ॥ २५. अ भ-०शाय । २६. भ-आत्मनश्च विनाशाय दैवान्मोहमुपागतः ॥ २७. भ-नैवार्थेन न मानेन विक्रमेण न मायया ।

२६] शक्या दैव-गतिर् लोके नि-वारयितुम् एव[1] हि[1] ।।२५[2]।।[२५
वि-लेपुर् एवं दीनास् ता राक्षसाऽधिप-योषितः ।
२७] कुरर्य इव दुःखाऽऽर्ता बाष्प-पर्याकुलेक्षणाः[3] ।।२६।। [२६

इत्यार्षे रामायणे युद्ध-काण्डे[4] ऽन्तःपुर-विलापो[5]
नामैकनवतितमः सर्गः ॥ ९१ ॥

---

## [वं–९५]= [ द्विनवतितमः सर्गः ] =[दा–११४]

१पू] एवं[6] वि-लपमानानां तदा[7] राक्षस-योषिताम्[7] । [१पू
N] नि-शम्य करुणं तासां[8] दुःखितानां[8] समन्त-तः । [N
१उ] ज्येष्ठा पत्नी प्रिया दीना भर्तारं समुद्-ऐक्षत ।।१ ।। [१उ
दश-ग्रीवं हतं दृष्ट्वा रामेणाऽक्लिष्ट-कर्मणा ।
२] पतिं मन्दोदरी तत्र करुणं[9] पर्य्-अदेवयत् ।।२ ।। [२
ननु नाम महा-बाहो तव वैश्रवणाऽनुज ।
३] क्रुद्धस्य प्र-मुखे[10] स्थातुं न स्याद्[11] अपि शत-क्रतुः[11] ।।३ ।।
ऋषयश् चाऽपि[12] देवाश् च गन्धर्वाश् च यशस्विनः[13] । [३
४] यक्षाश् चाऽपि[14] तवौघेन[15] चारणाश्[16] च दिशो गताः[16] ।।४ ।।
स त्वं मानुष-मात्रेण रामेण युधि पातितः[17] ।
५] न ह्य् अप-त्रपसे भूमौ[18] शयानो राक्षसेश्वर[18] ।।५ ।।[४
N] कथम् इन्दीवर-श्यामः शेषे भुवि नि-पातितः[19] ।[20] [N
कथं त्रैलोक्यम् आ-क्रम्य श्रिया वीर्येण चाऽन्व्-इतम्[21] ।

---

१. रा१–एव ह । भ–ओजसा । २. अतः परमधिकः पाठः—भ–इति दानवयक्षाणां कन्यास्ताश्चारुलोचनाः । रक्षसां पन्नगानां च चुक्रुशुर्निहतेश्वराः ॥ तासां रुदितशब्देन राक्षसाधिपयोषिताम् । प्रगीतेव पुरी लंका बभूव च रणाजिरे ॥ ३. रा२ फ म–बाष्पव्याकुलितेक्षणाः । भ–बाष्पव्याकुललोचनाः ॥ ४. ब प्र भ–लंकाकांडे । फ–आभ्युदयिके । ५. म–रावणान्तःपुरविलापो । भ–राक्षसीविलापः ॥ ६. रा२ फ म भ–तासां । ७. भ–राक्षसाधिपयो० । ८. रा२ फ म भ–तत्र दुःखार्तानां ॥ ९. रा१ अ रा२ फ म भ–कृपणं ॥ १०. रा१ रा२ म–संमुखे । ११. भ–समर्थः पुरंदरः ॥ १२. भ–च हि । १३. भ–दिवौकसः । १४. भ–चैव । १५. रा२–तवोद्वेगाच् । भ–पिशाचाश्च । १६. रा२–वर्जं—वानराश्च दि० । भ–देवदानवगुह्यकाः ॥ १७. रा१ ल१ ल२ ब अ प्र–निर्जितः । १८. भ–स्वप्तुं किमिदं राक्षसाधिप ॥ १९. रा१–०तितैः । २०. भ–नास्ति । २१. रा१ ल१ ल२ ब अ–चार्चितम् ।

६] अ-विषह्यं जघान त्वां मानुषो वानराऽनुगः ॥६ ॥ [५
मानुषाणाम् अ-विषये चरतः कामरूपिणः ।
७] वि-नाशस् तव रामेण सं-युगे नोपपद्यते ॥७ ॥ [७
न चैतत् कर्म रामस्य श्रद्-दधामि चमू-मुखे ।
८] सर्वैः[१] समुद्-इतैर् देवैस्[१] तव तेनाऽभि-मर्दनम्[२] ॥८ ॥ [८
अथवा राम-रूपेण वासवः स्वयम् आ-गतः ।
९] मायया तव नाशाऽर्थं[३] प्र-विश्याऽन्-उपलक्षितः[३] ॥९ ॥ [१२
यदैव वानरैः सर्वैः[४] सेतुर् बद्धो महाऽर्णवे ।
१३] तदैव हृदयेनाऽहं शङ्के रामम् अ-मानुषम् ॥१०॥ [११
यदैव हि जन-स्थाने राक्षसैर् बहुभिर् वृतः ।
१०] खरस् तव हतो भ्राता तदा रामो न मानुषः ॥११॥ [९
यदैव नगरीं लङ्कां दुष्-प्रवेशां सुरैर् अपि ।
१२] प्र-विष्टो हनु-मान् वीरस् तदा[५] रामो न मानुषः[५] ॥१२[६]॥[१०
यदैव हि महा-बाहुर्[७] नि-हतः कपि-कुञ्जरः[७] ।
११] एकेन[८] चेषुणा वीरस्[८] तदा रामो न मानुषः ॥१३[९]॥ [N
क्रियताम् अ-विरोधश्[१०] च[१०] राघवेणेति यन् मया ।
१४] उच्यमानो न गृह्णीथास्[११] तस्येदं कर्मणः फलम्[११] ॥१४॥ [१९
अ-कामाम् अभि-कामोऽसि[१२] सीतां राक्षस-पुङ्गव ।
१५] ऐश्वर्यस्य वि-नाशाय शरीरस्य ममैव[१३] च[१३] ॥१५[१४]॥[२०
अरुन्धत्या वि-शिष्टां[१५] तां[१५] रोहिण्याश् चाऽपि रावण[१६] ।
N] सीताम् आ-नयता[१७] साध्वीं[१८] त्वया मृत्युः[१९] प्र-कोपितः[१९] ॥१६[२०]॥[२१

---

१. भ–सर्वतः समुदीर्णस्य । २. रा१ ल१ ल२ ब अ प्र–सेना हि मर्दिता ॥ ३. भ–नाशाय विधिना संप्रचोदितः ॥ ४. भ–वीरैः ॥ ५. भ–तदैव व्यथिता ह्यहम् । ६. रा१ प्र फ–नास्ति ॥ ७. भ–रणे वाली त्वत्तः शतगुणो बले । ८. भ–रामेण निहतः संख्ये । ९. रा१ प्र–नास्ति । अतः परमधिकः पाठः—भ–शूर्पणख्या यदा रामः कर्णनासामशातयत् । तदैव हृदयेनाहं शंके रामममानुषम् ॥ १०. भ–०धस्तु । ११. भ–गृह्णीषे तस्यैषा व्युष्टिरागता ॥ १२. रा२ फ–चातिका० । १३. भ–च दुर्मते । १४. अतः परमधिकः पाठः—भ–सीतायाः कोपजेन त्वं नूनं दग्धोऽसि वह्निना ॥ १५. रा२ फ म — वर्जं–वसिष्ठस्य । भ–विशिष्टा या । १६. भ–मानद । १७. भ–धर्षयता । १८. म–नूनं । भ–राजन् । १९. भ–न सदृशं कृतं । २०. अतः परमधिकः पाठः—भ–संत्यन्याः प्रमदास्तुभ्यं रूपेणाभ्यधिकास्तु याः । अनंगवशमापन्नस्त्वं मोहान्नावबुध्यसे ॥

न कुलेन न रूपेण[1] न दाक्षिण्येन[1] मैथिली ।
१७] मयाऽधिका[2] वा तुल्या वा त्वं तु मोहान् न बुध्यसे ॥१७[3]॥[२८
सर्व-था सर्व-सत्त्वानां[4] नास्ति मृत्युर्[5] अ-लक्षणः[5] ।
१९] तव तावद् अयं मृत्युर् मैथिली-कृत-लक्षणः[6] ॥[7]१८॥[२९
मैथिली सह रामेण वि-शोका वि-हरिष्यति ।
२०] अल्प-पुण्या त्व् अहं घोरे पातिता[8] शोक-सागरे[8] ॥१९॥ [३१
कैलासे[8] मन्दरे मेरौ[9] तथा चैत्र-रथे वने ।
२१] देवोद्यानेषु सर्वेषु वि-हृत्य सहिता त्वया ॥२०॥ [३२
२२पू] वि-मानेनाऽनु-रूपेण प्र-याता[10] स्वेच्छया पुरा ।[11]
२३पू] साऽद्य-प्रभृति कामेभ्यः[12] स्पृहयिष्यामि दुःखिता[12] ॥२१[13]॥[३३

---

१. भ–शीलेन न रूपेण च । २. भ–ममाधि० । ३. अतः परमधिकः पाठः—भ–साग्रं तु स्त्रीसहस्रं वै रूपयौवनशालि च । न तेऽभिरुचितं वीर कालेन हतचेतसः ॥ ४. रा₂ फ भ–सर्वभूतानां । ५. रा₂–०त्युः प्रकोपितः । म भ–०रलक्षितः । ६. म–०कृतनिश्चयः । ७. रा₂ फ–नास्ति । भ–सीतानिमित्तजो मृत्युस्तव रामादुपागतः ॥ ८. म–कैलाशे मंदरे नगे ॥ ९. म–विहरामि त्वया सार्धं ॥ १०. रा₁–प्रयासि । ११. भ–विमानेनार्कवर्णेन श्रिया परमया युता । अतः परमधिकश्च पाठः—पश्यंती विविधान् देशांस्तांस्तांश्चित्रस्रगंबरा । १२. भ–०कामानां स्पृहयामि सुदुर्गता । १३. अतः परमधिकः पाठः—भ–भ्रंशिता कामभोगेभ्यः सास्मि वीर वधात्तव । वैधव्येनास्मि संवृत्ता धिग्राज्ञां चपलाः श्रियः ॥ हा राजन्सुकुमारं ते मुखं सुव्यक्तलोचनम् । कान्तिश्रीद्युतिभिस्तुल्यमिन्दुपद्मदिवाकरैः ॥ किरीटमुकुटोदग्रं शृङ्गारोद्दीप्तकुण्डलम् । मदव्याकुलदीप्ताक्षं भवतः पानभूमिषु ॥ विविधस्रग्धरं चारुकर्णं स्मितकथं शुभम् । तदेवाद्य शरीरे ते वक्त्रं न भ्राजते प्रभो ॥ रामसायकनिर्भिन्नं पतितं रणभूमिषु । विकीर्णमेदसा सिक्तं रूक्षं स्यंदनरेणुभिः ॥ हा पश्चिमा मे संवृत्ता वैधव्यकरणी दशा । या मयार्तिर्न संबुद्धा कदाचिदपि मंदया ॥ पिता दानवराजो मे भर्ता मे राक्षसेश्वरः । पुत्रो मे शक्रनिर्जेता इत्येवं गर्विताऽभवम् ॥ दृप्ता विमथनाः शूराः प्रख्यातबलपौरुषाः । न-कुतश्चिद्-भया नाथा ममेत्यासीन्मतिस्तदा ॥ तेषामेवं प्रभावानां युष्माकं राक्षसर्षभाः । कथं भयं समुत्पन्नं मानुषादिदमागतम् ॥ स्निग्धेन्द्रनीलं कायं ते प्रांशु शैलोपमं महत् । केयूरांगदवैदूर्यमुक्ताहारसमुज्ज्वलम् ॥ कांतं विहारेष्वधिकं दीप्तं संग्रामभूमिषु । भात्याभरणशोभाभिर्विद्युद्भिरिव तोयदः ॥ तदेवाद्य शरीरं ते तीक्ष्णैरुग्रैः शरैश्चितम् । पुनर्दुर्लभसंस्पर्शं परिष्वक्तुं न शक्यते ॥ श्वाविद्धं शललैर्यद्वल्लग्नैर्बाणैर्निरंतरम् । स्वर्पितैर्मर्मसु भृशं सुच्छिन्नस्नायुबंधनम् ॥ क्षितौ निपतितं

सत्यं[१] तच् च महा-बाहो[१] देवरो मे यद् अब्रवीत् ।
३०] सर्व-राक्षस-मुख्यानां[२] वि-नाशः[३] समुप-स्थितः[३] ॥२२॥ [N

राजन् पश्यामि रुधिरच्छविम् । शत्रुप्रहारोन्मथितं विकीर्णमिव पर्वतम् ॥ हा स्वप्नं सत्यमेवेद त्वं रामेण कथं हतः । त्वां मृत्युरूपिणं संख्ये प्रत्युद्या-स्यति को रिपुः ॥ त्रैलोक्यस्यावभोक्तारं त्रैलोक्योद्वेगदं सदा । जेतारं लोकपालानां क्षेप्तारं शंकरस्य च ॥ दृप्तानां निग्रहीतारमविगाह्यपरा-क्रमम् । हंतारं दानवेंद्राणां यक्षाणां च सहस्रशः ॥ निवातकवचानां च संग्रामे तारकस्य च । नैकयज्ञविलोप्तारं त्रातारं स्वजनस्य च ॥ लंकाद्वी-पस्य गोप्तारं रक्षसां भीमकर्मणाम् । धर्मव्यवस्थाभेत्तारं मायास्रष्टारमेव च ॥ लोकक्षोभयितारं वै सर्वप्राणिभयंकरम् । तेजसा दृप्तवाक्यानां वक्तारं मन्त्रिसन्निधौ ॥ स्वभृत्ययूथत्रातारं हंतारममितौजसाम् । देवासुरेन्द्रक-न्यानामाहर्तारं ततस्ततः ॥ शत्रूणां शोककर्तारं गोप्तारं स्वजनस्य च । अस्माकं मानभोगानां दातारं रथिनां वरम् ॥ एवं प्रभावं भर्तारं दृष्ट्वा रामेण पातितम् । स्थिरास्मि या देहमिमं धारयामि विना प्रभुम् ॥ शयनेषु महार्हेषु शयित्वा राक्षसेश्वर । इह कस्मात्प्रसुप्तोऽसि धरण्यां रेणुगुंठितः ॥ यदा मे तनयः शस्तो लक्ष्मणेनेन्द्रजिद्युधि । तदैवास्मि हता वीर किं त्वद्य विधवा कृता ॥ साहं बंधुशतैर्हीना त्वया नाथेन रावण । विहीना कामभो-गैश्च शोचिष्ये शाश्वतीः समाः ॥ प्रपन्नो दीर्घमध्वानं राजन् त्वं यासि दुर्गमम् । नय मामपि नह्यार्ता वर्तयिष्ये त्वया विना ॥ कस्य वा मां प्रदाय त्वं कृपणां गंतुमर्हसि । दीनां विलपंतीं मंदां किं च मां नाभिभाषसे ॥ दृष्ट्वा न खल्वसि क्रुद्धो मामिह स्वयमागताम् । न चैवमाश्वासयसि मां त्वं किं नावबुध्यसे । निर्गता नगरीतोऽद्य पद्भ्यामेव हि यत्प्रभो ॥ यस्येष्टदाराः सर्वास्ते भ्रष्टलज्जावगुंठिताः । बहिर्निपातिताः सर्वा नेर्ष्यां त्वं कुरुषे कथम् ॥ क्रीडासहायस्ते नाथ अयं लालप्यते जनः । न चैनमाश्वासयसि किंवा न प्रतिबुध्यसे ॥ यास्त्वया विधवा राजन् कृता नैककुलस्त्रियः । पतिव्रताधर्मपरा गुरुशुश्रूषणे रताः ॥ ताभिः शोकपरीताभिर्दृष्ट्वा वंशपराभ-वम् । त्वया विप्रकृताभिर्नो यदा शस्तं तदा गतम् ॥ त्राहि शोकाभिभूतास्मि नूनं दग्धास्मि हि प्रभो । प्रवादः सत्य एवायं चरति प्रायशो जने । पति-व्रतानां नाकस्मात्पतन्त्यश्रूणि भूतले ॥ कथं च नाम ते राजन् लोकानाक्रम्य तेजसा । नारीचौर्यमिदं कृत्वा क्रूरं शौंडीर्यमाश्रितम् ॥ अपनीयाश्रमा-द्रामं यत्नेन मृगच्छद्मना । आनीता रामपत्नी ते तत्ते कातरलक्षणम् ॥ कातर्यं न च ते युद्धे कदाचित्संस्मराम्यहम् । तव शीलविपर्यासं नूनं ते क्षयलक्षणम् ॥ अतीतानागतार्थज्ञो वर्तमाने विचक्षणः । मैथिलीमाहृतां दृष्ट्वा ध्यात्वा निश्वस्य चागतः ॥

१. भ-सत्यवादी महाभागो ॥ २. भ-इदं राक्षस० । ३. रा₂ फ भ-०शं समुपस्थितम् ॥

काम-क्रोध-प्रवृत्तेन[1] व्यसनेषु प्र-सङ्गिना ।
३१] त्वया कृतम् इदं सर्वम् अ-नाथं रक्षसां[2] बलम् ।।२३।। [N
इन्द्रियाणि पुरा[3] जित्वा[3] त्वया[4] त्रि-भुवनं जितम्[5] ।
N] स्मरद्भिर् इव तद् वैरम् इन्द्रियैस् त्वं पुनर्[5] जितः[5] ।।२४।। [N
शोचितव्यो मया न त्वम् आत्म-दोषैर् नि-पातितः ।[6]
३२] स्त्री-स्वभावात् तु[7] मे बुद्धिः कारुण्यात्[8] परि-वर्तते ।।२५।। [N
सु-कृतं दुष्-कृतं च[9] त्वम् आ-दायाऽऽत्म-गतिं[9] गतः ।
३३] आत्मानं ननु[10] शोचामि[10] न[11] त्वां दुष्कृत-कारिणम्[11] ।।२६।। [N
अ-प्रहृष्टास्[12] त्व्[13] अ-मुदिताः[13] पत्न्यस् ते रजनी-चर ।[14]
३४] सर्वास् तव वि-योगेन प्र-क्षिप्ताः शोक-सागरे[15] ।।[16]२७।।[N
नील-जीमूत-संकाशः[17] पीताऽम्बर-सुसंवृतः[17] ।
३५] सर्व-गात्राणि सं-क्षिप्य[18] किं शेषे रुधिरोक्षितः ।।२८[15]।।[N
प्र-सुप्त इव शोकाऽऽर्ता[19] किं मां न प्रति-भाषसे ।
३६] वि-रोचनस्य दौहित्रीं यमस्य तनयां प्र-भो[20] ।।२९[21]।।[N
येन सूदयसे शत्रून् सम्-अरे सूर्य-वर्चसा[22] ।
३८] वज्रो वज्र-धरस्येव सोऽयं ते[23] सतताऽर्चितः[23] ।।३०।। [N
N] रणे बहु-प्रहरणो[24] हेम-जाल-परिष्कृतः ।

---

१. ल१ ल२ ब प्र–०प्रयुक्तेन । भ–०धसमुत्थेन । २. ल१ ल२ ब प्र–राक्षसं ॥ ३. भ–पराजित्य । ४. रा२ म भ–जितं त्रिभुवनं त्वया । ५. भ–पराजितः ॥ ६. भ–नापि त्वं शोचितव्यो मे प्रख्यातबलपौरुषः । ७. भ–च । ८. भ–कारुण्ये ॥ ९. रा१ ल१ ल२ ब अ–नाथ (?नाथाऽ) पूर्वमादाय त्वं । भ–चैव गृहीत्वा स्वां गतिं । १०. अ रा२ फ म भ–नानुशो० । प्र–अनुशो० । ११. रा२–फ म–त्वां च दु० । भ–वियोगात्सुदुःखिताम् ॥ १२. रा१ ल१ ल२ ब–अपहृष्टास् । १३. भ–प्ररुदिताः । १४. अतः परमधिकः पाठः—भ–आत्मानं नानुशोचंति त्वां तु दुष्कृतकारिणम् । वैधव्यं स्त्रीसहस्राणां त्वत्कृते समुपस्थितम् ॥ स त्वमेवं महासत्त्व किमर्थं नाभिभाषसे । १५. म–नास्ति । १६. भ–नास्ति ॥ १७. भ–०शपीताम्बरशुभानन । १८. भ–विक्षिप्य ॥ १९. रा१ ल१ ल२ ब अ प्र फ–शोकार्तः । २०. भ–विभो ॥ २१. अतः परमधिकः पाठः—भ–उत्तिष्ठ राजन् किं शेषे किं च मां नाभिभाषसे । इमे ते निर्भया लोकाः प्रविष्टाः सूर्यरश्मयः ॥ प्रियां पत्नीं महाबाहो भज मां पुत्रमातरम् । अद्यप्रभृति कामानां स्पृहयिष्यामि दुर्भगा ॥ २२. भ–सूर्यतेजसा । २३. रा१ ल१ ल२ ब अ प्र–ते सततोर्जितः । भ–शूलोऽवमर्दितः ॥ २४. ल१ ल२ ब अ म–बाहुप्र० ।

परि-घो विप्र-कीर्णोऽद्य[1] बाणैश्[2] छिन्नः समन्त-तः[2] ।
३९] शेते प्रिय-सखः[3] श्री-मान् अमात्य इव लज्जितः[4] ॥[5]३१॥[N
धिग् अस्तु मम[6] रौद्राया हृदयं वज्र-सन्निभम्[6] ।
४०] त्वयि पञ्च-त्वम् आ-पन्ने शत-धा[7] यन् न दीर्यते[7] ॥३२[8]॥[८५

प्रियाम् इवोप-गुह्य त्वं शेषे समर-मेदिनीम्[9] ।
N] अ-प्रियाम् इव कस्मात् त्वं[10] न माम् इच्छसि भाषितुम्[10] ॥३३॥ [८४
इत्य् एवं वि-लपन्ती[11] सा[11] बाष्प-व्याकुल-लोचना ।
४१] स्नेहाऽवस्कन्न-हृदया[12] देवी मोहम् उपा-गता ॥३४॥ [८६
कश्मलाऽभिहता दीना पतिता रावणोरसि ।
N] सन्ध्याऽनुरक्त-जलदे दीप्ता वि-द्युद् इवाऽभवत् ॥३५॥ [८७
तथा गतां समुत्था (द्-स्था)प्य स-पत्न्यस् ता भृशाऽऽकुलाः[13] ।
४२] पर्यव-स्थापयामासू रुदन्त्यो रुदतीं भृशम् ॥३६॥ [८८
न ते न विदिता देवि लोकानां गतिर् अ-ध्रुवा ।
४३] दशा-विभागे पर्य्-आप्ते राज्ञां च चपलाः श्रियः ॥३७॥ [८९
इत्य्[14] एवम् उक्ता[14] सा ताभिः स-शब्दं[15] प्र-रुरोद ह ।
४४] अधो-मुखी स्नापयन्ती स्तनौ नेत्राऽम्बु-विन्दुभिः ॥३८॥ [९०

एतस्मिन्न् अन्तरे रामो वि-भीषणम् उवाच ह ।[16]
४५] सत्-कारः[17] क्रियतां भ्रातुः स्त्री-जनः[18] परि-सान्त्व्यताम्[18] ।३९।[९१
तम् उवाच ततो रामं[19] वि-भीषण इदं वचः[19] ।
४६] वि-मृश्य बुद्ध्या तत्त्व-ज्ञो धर्माऽर्थ-संहितं हितम्[20] ॥४०[21]॥[९२

१. रा$_1$ अ प्र—०र्णो वै । ल$_1$ ल$_2$ ब—०र्णोऽयं । भ—०कीर्णस्ते । २. म—छिन्नः स पतितो भुवि । भ—०न्नः सहस्रधा । ३. ल$_1$ ल$_2$ ब अ-प्रिय : सखा । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—दुःखितः । रा$_2$—ताडितः । ५. भ—येन त्वं शोभसे वीर पतितेन समीपतः । निकृत्तेनेव हस्तेन पतितो गजयूथपः ॥ ६. भ—हृदयस्यास्य यन्न दीर्येत्सहस्रधा । ७. भ—नाथेऽस्माकं सुखप्रदे । ८. अतः परं सर्गसमाप्तिर्दृश्यते—रा$_1$ ल$_1$ ल$_2$ ब अ प्र—इत्यार्षे रामायणे युद्धकांडे मंदोदरीविलापो नाम सर्गः ॥ ९. रा$_2$—रणमे० । १०. रा$_2$—च न त्वं मामभिभाषसे ॥ ११. रा$_2$—०लपन्नेव । १२. रा$_2$—स्नेहाच्चाक्रांतहृ० ॥ १३. रा$_2$—भृशातुराः ॥ १४. रा$_2$—इत्युच्यमाना । १५. रा$_2$—दुःशब्दं ॥ १६. म—नास्ति । १७. भ—संस्कारः । १८. रा$_1$ ल$_1$ ल$_2$ ब प्र म—स्त्रीगणः परि० । भ—स्त्रियश्चैव निवर्त्तय ॥ १९. रा$_2$ फ म—धीमान् श्रुतवाक्यो विभीषणः । २०. रा$_1$—तदा । भ—वचः । २१. अतः परमधिकः पाठः—भ—रामस्यैवानुवृत्त्यर्थमुत्तरं प्रत्यपद्यत ॥

लुप्त-धर्म-पथं[१] क्रूरं नृ-शंसं पाप-निश्चयम्[२] ।
४७] नाऽहम् अर्हामि सत्-कर्तुं[३] परदाराऽभिमर्शिनम्[४] ॥४१[५]॥ [९३
भ्रातृ-रूपस्[६] तु[६] मे शत्रुर् एष सर्वाऽहिते रतः ।
४८] रावणो नाऽर्हते पूजां गुरुः[७] पूज्यस् तु गौरवात्[७] ॥४२॥ [९४
नृ-शंस[८] इति[८] मां कामं वक्ष्यन्ति[९] भुवि[१०] राक्षसाः[१०] । [९५पू
४९] इतरे सर्व-लोका मां वक्ष्यन्ति गुण-वान् इति ॥[११]४३॥ [N
५१पू] कृ(?कु) च्छ्रे (?त्से)ण[१२] (?न्त) परम-प्रीतो रामः प्राऽऽह[१३] वि-भीषणम्[१३] ।
N] सं-स्पृशन्[१४] पाणिना धी-मान्[१४] वाक्य-ज्ञो वाक्य-कोविदः ॥४४॥ [९६
५१उ] उच्-छ्रितश् चाऽविनीतश्[१५] च शत्रुश् च रण-मूर्धनि ।
५२पू] गुरुर् एव पुनर्[१६] वीर विग्रहाऽन्ते वि-धीयते ॥४५॥ [N
गुण-वान् निर्-गुणश्[१७] चाऽपि[१७] ज्ञातिर् व्यसनम् आ-गतः ।
N] पूज्यो भवति मान्यश् च लोकेष्व्[१८] एषा[१८] गतिः परा[१९] ॥४६॥ [N
५२उ] तद्[२०] अयं नि-हतः[२१] शेते तव भ्राता वि-भीषण ।
वि-जिते त्यज्यतां[२२] रोषो[२३] विजयाऽन्तो[२४] हि वि-ग्रहः[२५] ॥४७॥ [N
५३] अथवा यः[२६] समुद्-इतो यथा[२६] यस्य[२७] तु बुध्यते[२७] ।
तथा[२८] हि[२८] न परोक्षं ते[२९] धर्म[?२९] पश्यामि बुद्धि-तः[३०] ॥४८॥ [N
५४] मम[३१] चाऽपि वचः[३१] कार्यं[?३२] त्वत्-प्रसादाद् धि मे जयः[३२] ।[३३]

---

१. भ—०र्मव्रतं । २. भ—अनृजुं तथा । ३. भ—संस्कर्तुं । ४. भ—०भिगाभिनम् । ५. अतः परमधिकः पाठः—भ—वर्जं—दग्धं ह्ययशसा लोके न वै धक्ष्यति पावकः । अहं श्लाघ्यो सतां भ्राता न मम क्रोष्टुमर्हति ॥* ६. भ—०रूपेण । ७. रा१ फ—गुरुः पूज्योऽस्ति गौ० । भ—पूज्योऽपि गुरुर्गौ० ॥ ८. ल१ ल२ ब रा२ फ भ—०समिति । रा१ प्र—०स इव । ९. म—वक्षंतु । भ—वदंतु । १०. भ—मनुजा भुवि । ११. भ—स्मृत्वा सर्वगुणांस्तस्य वक्ष्यंति सुकृतं पुनः ॥ १२. भ—तच्छ्रुत्वा । १३. भ—वाक्यं विभीषणात् । १४. भ—विभीषणमुवाचेदं ॥ १५. रा२ फ भ—वर्ज—च वि० । भ—चैव दीनश् । १६. रा२ फ म भ—गुरोर् ॥ १७. रा२ फ म भ—०णो वापि । १८. रा१ ल१ ल२ ब अ प्र—०ष्वेका । रा२ फ—लोकेप्येषा । म—लोकश्चैका । १९. रा१ ल१ ल२ अ प्र—पुरा ॥ २०. भ—यद् । २१. भ—विजितः । २२. भ—दीर्यते । २३. रा१—दोषो । २४. भ—मरणांता । २५. रा२ फ भ—०हाः ॥ २६. म—यं सुचरितः पंथा । भ—यत्ससुचितं यथा । २७. रा१ अ प्र—०ध्यसे । भ—त्वमनुमन्यसे । २८. भ—क्रियतां । २९. भ—वैधर्म्यं । ३०. रा१ ल१ ल२ ब अ प्र—बुद्धिमान् ॥ ३१. रा२ फ—तवापि मत्प्रियं । ३२. म—त्वया राक्षसपुंगव । ३३. भ—त्वयापि मे प्रियं कार्यं कार्यं ते च प्रियं मया ।

---

*रा२—अश्लाघ्यो न सतां भ्राता संस्कर्तुं राम युज्यते ।
अस्मिन् पापसमाचारे न ममाक्रोष्टुमर्हति ॥

एवं कुरुष्व[1] धर्म-ज्ञ स्त्रियश् चैता वि-सर्जय ॥[2]४९॥[N

हेतु-मात्रं[3] वयं ह्य् अद्य[3] त्वन्-मूलो हि जयो मम ।[4]
५५] अवश्यं तु क्षमो वाच्यं (?च्यो) मया त्वं राक्षसोत्तम ॥[5]५०॥[९७
अधर्माऽनृत-संयुक्तः कामं त्व् एष निशा-चरः ।
५६] तेजस्वी बल-वाञ् छूरः सं-ग्रामेषु च सर्व-दा ॥५१[5]॥[९८
यो[6] न शक्र-मुखैर्[6] देवैः श्रूयते हि[7] परा-जितः[7] ।
५७] महाबल-समुत्पन्नो[8] रावणो लोक-रावणः ॥५२॥ [९९
विजयाऽन्तानि[9] वैराणि[9] नि-वृत्तं[10] तत्-प्रयोजनम्[11] ।
N] क्रियताम् अस्य संस्कारो रावणस्य यथा-विधि ॥[11]५३॥[१००
त्वत्-सकाशान् महा-बाहो संस्कारं[12] रावणोऽर्हति[12] । [१०१पू
N] जाति(?त)रोषां[13] महा-बाहो दीर्घ-निद्रां प्र-वेशितः[14] ॥[15]५४[16]॥[N
पश्चिमा सत्-क्रिया चाऽस्य क्रियतां सु-विशेषतः ।[17]
५८] एतद् दत्तम् अहं मन्ये यशो वाऽग्र्यं भविष्यति ॥[18]५५॥
असौ हि शूरो नि-हतो महा-बलो
रणे मया दानव-दर्प-हा च ।
एतस्य यत् प्रेत-गतस्य कृत्यं
N] कुरुष्व लङ्केश्वर मत्-प्रसादात् ॥५६[19]॥ [N

इत्य् उक्तो[20] राम-वचनाद् विधि-दृष्टेन कर्मणा ।[21]
५९] प्रेत-कार्याणि सर्वेषां[22] ज्ञातीनां सम्-अकारयत्[23] ॥५७॥ [N
वि-भीषणस् तु विन्ध्याऽऽदीन्[24] वृद्धाऽमात्यान् बहु-श्रुतान् ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—कुरु च । २. भ—नास्ति ॥ ३. रा$_1$ ल$_1$ ल$_2$ अ प्र—हेतुमच्छ्रावयन् ह्यं । भ—॰यंस्तद्य । ४. रा$_2$ फ—अत आरभ्य ५६—शश्लोकांतं यावन्नास्ति । ५. भ—वर्जं—नास्ति ॥ ६. भ—शतक्रतुमुखैर् । ७. भ—ह्यप॰ । ८. म भ—महात्मा बलसंपन्नो ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—अ( ? आ )मृतांतानि चैतानि । भ—जीवितांतानि वै॰ । १०. म भ—ममाप्येष यथा तव । ११. म भ—नास्ति ॥ १२. भ—सत्कारं विधिपूर्वकं । १३. ल$_1$ अ—एति रोषां । १४. रा$_1$ अ—॰ता । १५. भ—नास्ति । १६. म—नास्ति ॥ १७. म—क्रियतां पश्चिमे द्वारे सत्कारः कुलनंदन । भ—नास्ति । १८. म—नास्ति । भ—क्षिप्रमर्हति धर्मज्ञ त्वद्यशः प्रथयिष्यति । अतः परमधिकश्च पाठः—राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः ॥ १९. म भ—नास्ति ॥ २०. फ म—वर्जं—॰क्ताद् । २१. भ—नास्ति । २२. भ—सर्वाणि । २३. भ—समरोचयत् ॥ २४. भ—तान्वीक्ष्य ।

६०] आ-ज्ञापयामास तदा राजा सत्-क्रियताम् इति ॥५८॥ [N
भ्रातृ-दारांश् च तान्[1] सर्वान्[1] सान्त्वयामास काल-वित् ।[2]
६१] चक्रे स सलिलं भ्रातुर् ज्ञातीनां चाऽनुपूर्व-शः ॥५९[3]॥ [N
राम-वाक्येन विधि-वत् सर्वशास्त्रोपबृंहितः (?म्)।[3] [N
६२] स्त्रियः[4] प्र-वेशयामास[4] सान्त्वयित्वा पुनः पुनः ॥६०॥ [१२०उ
प्र-विष्टासु च सर्वासु राक्षसीषु वि-भीषणः ।
६३] राम-पार्श्वम् उपाऽऽगम्य सम्-अतिष्ठद् विनीत-वत्[5] ॥६१॥ [१२१
रामोऽपि सह सैन्येन स-सुग्रीवः स-लक्ष्मणः ।
६४] हर्षं लेभे रिपुं हत्वा वृत्रं[6] वज्र-धरो यथा[6] ॥६२॥ [१२२
ततः स मुक्त्वा स-शरं शराऽऽसनम्[7]
महेन्द्र-दत्तं कवचं च तन्[8] महत्[8] ।
वि-मुच्य रोषं रिपु-निग्रहे कृतं[9]
६५] शशीऽव सौम्य-त्वम् उपाऽगमत्[10] पुनः[10] ॥६३॥ [१२३

इत्यार्षे रामायणे युद्ध-काण्डे[11] मन्दोदरीविलाप-रावणसत्कारो[12] नाम द्विनवतितमः सर्गः ॥ ९२ ॥

---

## [ वं-९७ ]= [ त्रिनवतितमः सर्गः ] =[ दा-११५ ]

तं राक्षस-वधं[13] दृष्ट्वा देव-गन्धर्व-दानवाः ।
१] जग्मुः स्वैः स्वैर् वि-मानैस् ते कथयन्तः कथाः शुभाः ॥१ ॥ [१
२पू] रावणस्य[14] वधं[14] घोरं राघवस्य[15] पराऽऽक्रमम् । [२पू
अनु-रागं च वीर्यं च लक्ष्मणस्य[16] च धी-मतः[16] ॥२[17] ॥
३] पतिव्रता-त्वं[18] सीताया हनू-मति पराऽऽक्रमम् ।[19] [३

---

१. रा$_2$-ताः सर्वाः । २. अतः परं म-१०१-तमसर्गस्य ११६-तमश्लोकं यावन्नास्ति । ३. भ-नास्ति ॥ ४. भ-ताः स्त्रियः स्नापया० ॥ ५. भ-भभीत० ॥ ६. भ-यथा वृत्रं शतक्रतुः ॥ ७. भ-महद्धनुः । ८. भ-कांचनम् । ९. ल$_1$ ल$_2$ प्र-वृतः । भ-तदा । १०. भ-असावुपागमत् ॥ ११. ब प्र भ-लंकाकाण्डे । रा$_2$ फ-आभ्युदयिके । १२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-रावणसत्कारो । रा$_2$ फ-रावणसत्क्रिया । भ-मंददोरीविलापो । १३. भ-रावणवधं ॥ १४. रा$_2$ फ-ते रावणवधं । १५.भ-रामस्य च । १६. भ-सौमित्रेर्लक्ष्मणस्य च । १७. अतः परमधिकः पाठः— भ-कथयंतो महाभागा जग्मुर्हृष्टा यथाक्रमम् ॥ १८. प्र-पातिव्रतत्वं । १९. भ-नास्ति ।

२३] सु-युद्धं वानराणां च सु-ग्रीवस्य च मित्र-ताम्[१] ॥३ ॥ [२३
राघवस् तु रथं दिव्यम् इन्द्र-दत्तं शिव-प्रदम्[२] ।
४] आ-ज्ञापयामास[३] तदा[३] मातलिं शक्र-सारथिम्[४] ॥४[५]॥ [४
राघवेणाऽभ्यनु-ज्ञातो[६] मातलिः शक्र-सारथिः ।
६] दिव्यं तम्[७] आ-स्थाय रथं दिवम् एवोत्-पपात[८] ह[८] ॥५[९] ॥ [५
७पू] तस्मिंस् तु दिवम् आ-रूढे सारथौ[१०] जयतां वरः[१०] ।
८पू] राघवः परम-प्रीतः सु-ग्रीवं परि-षष्वजे ॥[११]६ ॥[६
N] परि-ष्वज्य च सु-ग्रीवं लक्ष्मणेनाऽभि-वादितः ।
१०उ] पूज्य-मानो हरि-गणैर्[१२] आ-जगाम स्वम्[१३] आ-लयम्[१३] ॥७ ॥ [७
अथोवाच[१४] स काकुत्स्थः[१४] समीप-परिवर्तिनम्[१५] ।
११] सौमित्रिं सत्त्व-सम्पन्नं लक्ष्मणं शुभ-लक्षणम्[१६] ॥८ ॥ [८
वि-भीषणम् इमं सौम्य लङ्कायाम् अभि-षेचय[१७] ।
१२] अनु-रक्तं च भक्तं च तथा[१८] पूर्वोपकारिणम्[१८] ॥९ ॥ [९
एष मे परमः कामो यद् अहं रावणाऽनुजम् ।
१३] लङ्कायां सौम्य पश्येयम्[१७] अभि-षिक्तं वि-भीषणम् ॥१०॥ [१०
एवम् उक्तस् तु सौमित्री राघवेण[१९] महाऽऽत्मना ।
१४] तथेत्य् उक्त्वा[२०] स[२०] सं-हृष्टः सौवर्णं घटम् आ-ददे ॥११॥ [११
शुभेन[२१] तेन सौमित्रिर्[१९] अभ्य्-अषिञ्चद् वि-भीषणम् । [१४

---

१. ल$_{2}$ रा फ भ—मंत्रितम् ॥ २. भ—रविप्रभम् । ३. रा$_{2}$—अनुज्ञाय महाबाहुर् । भ—अनुज्ञाप्य महाभागो । ४. रा$_{2}$ फ—प्रत्यपूजयत् । ५. अतः परमधिकः पाठः—भ—प्रणामो वासवे कार्यो मातले भद्रमस्तु ते । दर्शिता महती शक्तिः कृतं मे प्रियमुत्तमम् ॥ गच्छेदानीमनुज्ञातो मया त्वं त्रिदशालयम् । वधमावेदयस्वेमं शत्रोस्त्रिदिववासिनाम् ॥ ६. भ—इति रामाभ्यनु० । ७. भ—स । ८. भ—एवारुरोह सः । ९. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र—नास्ति ॥ १०. भ—रथे भास्करवर्चसि । ११. भ—राघवः परमप्रीतो हरीन्द्रमिदमब्रवीत् । अतः परमधिकश्च पाठः—दिष्ट्या तव प्रसादेन प्राप्तं हि मनसेप्सितम् । प्रतिज्ञाया गतः पारं हत्वा वै देवकंटकम् ॥ शेषमद्यापरं मन्ये मनस्तुष्टिकरं परम् । लंकायां यत्तु पश्येयमभिषिक्तं विभीषणम् ॥ १२. भ—हरिश्रेष्ठैर् । १३. भ—सहानुजः ॥ १४. भ—अब्रवीच्च तदा रामः । १५. रा$_{2}$ भ—वर्जं—सेनायाः परिवर्तनं । १६. भ—दीप्ततेजसम् ॥ १७. अ—नास्ति । १८. भ—मम चैवोप० ॥ १९. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र—नास्ति । २०. भ—उवाच ॥ २१. भ—घटेन ।

१५] लङ्कायां रक्षसां मध्ये राजानं[१] राम-शासनात् ॥१२॥ [१५पू
अभि-षिच्यमाने तु तदा सर्वे वानर-राक्षसाः ।
१६] प्र-हर्षम् अ-तुलं गत्वा तुष्टुवू रामम् एव हि[२] ॥१३[३]॥ [१६
तस्य मित्राणि तुतुषुर्[४] भक्ता ये चाऽपि[४] राक्षसाः ।
१७] दृष्ट्वाऽभि-षिक्तं लङ्कायां राक्षसेन्द्रं वि-भीषणम् ॥१४॥ [१७
स तद् राज्यं महत् प्राऽऽप्य राम-दत्तं वि-भीषणः ।
१८] प्र-कृतीः[५] सान्त्वयित्वा च[५] ततो रामम् उपाऽगमत् ॥१५॥ [१८
दध्य्[६] अक्षतान् मोदकांश् च लाजाः[६] सु-मनसस् तथा[७] ।
१९] आ-जह्रुर् अथ सं-हृष्टाः पौरास् तस्य निशा-चराः ॥[८]१६॥ [१९
तद्[९] गृहीत्वा तु[९] दुर्-धर्षो राघवाय न्य्-अवेदयत् ।
२०] मङ्गलं[१०] सर्वम् आ-नीतं[१०] लक्ष्मणाय च वीर्य-वान् ॥१७॥ [२०
कृत-कार्यं समृद्धाऽर्थं[११] दृष्ट्वा रामो वि-भीषणम् ।
२१] प्रति-जग्राह तत् सर्वं तस्यैव[१२] प्रिय-काम्यया[१३] ॥१८॥ [२१
महाशैलोपमं वीरं प्राऽञ्जलिं[१४] पुर-तः[१५] स्थितम् ।
२२] उवाचेदं[१६] वचो रामो[१६] हनू-मन्तं प्लवं-गमम् ॥१९॥ [२२
अनु-मान्य महा-राजम् इमं सौम्य वि-भीषणम् ।
२३] प्र-विश्य नगरीं लङ्कां कौशल्यं[१७] ब्रूहि मैथिलीम् ॥२०[१८]॥ [२३
वैदेह्या मां कुशलिनं स-सुग्रीवं स-लक्ष्मणम् ।
२४] आ-चक्ष्व वदतां श्रेष्ठ रावणं च[१९] हतं रणे[१९] ॥२१[१८]॥ [२५
प्रियम् एतद् उपाऽऽख्याहि[२०] वैदेह्यास्[२०] त्वं हरीऽऽश्वर ।
२५] प्रति-गृह्य च सं-देशम् उपाऽऽवर्तितुम् अर्हसि ॥२२॥ [२६

इत्यार्षे रामायणे युद्ध-काण्डे[२१] विभीषणाऽभिषेको नाम त्रिनवतितमः सर्गः ॥९३॥

---

१. ल$_1$ ब प्र भ–लंकायां ॥ २. रा$_2$–च । ३. भ–विधिना मंत्रदृष्टेन प्रहर्षेण समन्वितः । अभ्यषिंचत्स धर्मात्मा धर्मात्मानं विभीषणम् ॥ ४. भ–हृष्टानि भक्ताः सर्वे च ॥ ५. भ–ताः सान्त्वयित्वा प्रकृतीस् ॥ ६. भ–अक्षतान्मोदकान्दिव्याँ-ल्लाजान् । ७. रा$_2$ फ–तदा । ८. भ–आजह्रुस्ते तदा हृष्टा रामार्थं रजनीचराः ॥ ९. भ–स तान्गृहीत्वा । १०. रा$_2$ भ–मांगल्यं मंगलं सर्वं ॥ ११. अ प्र रा$_2$–समृद्ध्यर्थं । १२. रा$_2$ फ–तस्य च । १३. रा$_1$–प्रीतिका० । भ–हितका० ॥ १४. रा$_1$ ल$_2$ ब रा$_2$ फ–०लिः । १५. रा$_2$ फ–पार्श्वतः । १६. भ–अब्रवीच्च वचो धर्म्यं ॥ १७. ल$_1$ ब–कुशलं । ल –कौशलं । अ प्र–कोमलं । १८. भ–नास्ति ॥ १९. रा$_2$–निहतं युधि ॥ २०. भ–इहाख्याहि मैथिल्यास् ॥ २१. ब प्र–लंकाकांडे । रा$_2$–आभ्युदयिके । भ–वाल्मीकीये लंकाकांडे ॥

## [वं-९८]= [ चतुर्नवतितमः सर्गः ] =[ दा-११६ ]

इति प्रतिसमा-दिष्टो हनू-मान् मारुताऽऽत्मजः ।
१] प्र-विवेश पुरीं लङ्कां पूज्यमानो[1] निशा-चरैः ॥१ ॥[१
प्र-विश्य च पुरीं लङ्कां[2] सम्-एत्य च वि-भीषणम् ।
N] प्र-विवेशाऽभ्यनु-ज्ञातो हनू-मान् वृक्ष-वाटिकाम् ॥२ ॥[२
स प्र-विश्य यथा-न्यायं सीताया विदितो हरिः ।[2]
२] स[3] ददर्श तदा सीतां[3] राम-पत्नीम्[4] अ-निन्दिताम्[4] ॥३ ॥ [३
नि-भृतः प्र-यतः प्र-ह्वः[5] सोऽभि-गम्याऽभि-वाद्य च । [४
३] रामस्य वचनं सर्वम् आ-ख्यातुम् उप-चक्रमे ॥४ ॥[६उ
वैदेहि कुशली रामः स-सुग्रीवः[6] स-लक्ष्मणः[6] । [७पू
४] कुशलं त्वाऽऽह[7] सिद्धाऽर्थो हत-शत्रुर् अमित्र-जित्[8] ॥५ ॥ [८
विभीषण-सहायेन रामेण हरिभिः सह ।
५] नि-हतो रावणो देवि[9] लक्ष्मणेन[10] च धी-मता[10] ॥६[11]॥ [९
प्रियम् आ-ख्याति[12] ते वीरो[12] भूयस् त्वां च सभाजये[13] ।
६] दिष्ट्या जीवसि[14] धर्म-ज्ञे जयो रामस्य सं-युगे ॥७ ॥ [११
दिष्ट्याऽत्र कुशलं वीरो रामस् त्वां रघु-नन्दनः । [१२पू
N] अब्रवीत् परम-प्रीतः[15] स-सुग्रीवः स-लक्ष्मणः ॥८ ॥ [N
प्राऽऽप्तो[16] मे वि-जयः सीते स्व-स्था भव गत-व्यथा ।
७] रावणश्[17] च[17] हतः शत्रुर् लङ्का चेयं वशी-कृता[18] ॥९ ॥ [१२उ
मया ह्य्[19] अलब्ध-निद्रेण वृतेन[20] रिपु-निग्रहे[20] ।
८] प्रति-ज्ञेयं समुत्-तीर्णा तीर्णश् च वरुणाऽऽलयः ॥[21]१०॥[१३

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—नास्ति ॥ २. भ—प्रविश्य च महातेजा रावणाक्रीडमृद्धिमत् । ३. रा$_2$—ददर्श पूजया हीनां । भ—ददर्श मृजया हीनां । ४. भ—निष्प्रभामिव रोहिणीम् ॥ ५. रा$_2$ फ भ—प्राह ॥ ६. रा$_1$—सुग्रीवः सहल० । ७. ल$_1$—त्वा हि । ८. भ—अरिंदमः ॥ ९. भ—संख्ये । १०. ल$_1$ ब प्र रा$_2$ फ—०णेन च वीर्यवान् । भ—०णेनानुजेन च । ११. अतः परमधिकः पाठः—भ—पृष्ट्वा च कुशलं वीरो रामस्त्वां रघुनंदनः । अब्रवीत्परमप्रीतः कृतार्थेनांतरात्मना ॥ १२. रा$_2$ फ भ—०ख्यामि ते देवि । १३. रा$_2$ फ भ—वर्जं—०येत् । १४. रा$_2$ फ—जयसि । भ—वर्द्धसि ॥ १५. रा$_2$ फ भ—०मः प्रीतः ॥ १६. भ—लब्धो । १७. भ—०णोऽयं । १८. भ—वशे स्थिता ॥ १९. रा$_2$ फ भ—त्व् । २०. भ—धृता या तव निर्जये । २१. भ—प्रतिज्ञैषा मया तीर्णा तरता भीममर्णवम् ॥

सं-भ्रमश् च न कर्तव्यो वसन्त्या[1] रावणाऽऽलये[1] ।
९] विभीषण-विधेयं हि लङ्कैश्वर्यं[2] कृतं[2] मया[2] ॥११ ॥[१४
तद् आ-श्वसिहि वि-स्रब्धा[3] स्व-गृहे परि-वर्तसे ।
१०] अहम् अप्य्[4] अद्य[4] सं-हृष्टस् त्वद्-दर्शन-समुत्सुकः ॥१२॥ [१५
एवम् उक्ता[5] समुत्-पत्य सीता[6] शशिनिभाऽऽनना[6] ।
११] प्र-हर्षेणाऽव-रुद्धेन[7] व्या-हर्तुं न शशाक ह ॥[7]१३[8]॥[१६
१२पू] ततोऽब्रवीद्[9] हरि-वरः[9] सीताम् अ-प्रतिजल्पतीम् ।[10] [१७पू
N] निवृत्त-हर्षां सहसा वाक्यम्[10] आकार-सूचिताम् ॥[11]१४॥[N
N] हर्षाद् एव समुत्था (द्-स्था) य सहसा व्रीडिताऽऽननाम् ।[11] [N
१२उ] किं त्वं चिन्तयसे देवि किं च मां नाऽभि-भाषसे ॥१५[12]॥[१७उ
एवम् उक्ता[13] हनु-मता सीता धर्म-पथे[14] स्थिता[14] ।
१३] अब्रवीत् परम-प्रीता[15] बाष्प-गद्गदया[16] गिरा[16] ॥१६॥ [१८
प्रियम् एतद् उप-श्रुत्य भर्तुर् वि-जयम्[17] उत्-तमम्[17] ।
१४] प्रहर्ष-वशम् आ-पन्ना निर्-वाक्याऽहं त्वया कृता ॥१७॥ [१९
न[18] हि पश्यामि सदृशं[18] चिन्तयन्ती प्लवं-गम ।
१५] मत्प्रियाऽऽख्यानकस्येह तव प्रत्यभि-नन्दनम् ॥[19]१८॥ [२०
न हिरण्यं न वासांसि न रत्नानि प्लवं-गम ।[20]
१६] अतोऽहं हर्षम् आ-पन्ना पुनर् दैन्यम् उपाऽऽगता ॥१९[20]॥[२२
न च[21] पश्यामि तत् सौम्य पृथिव्याम् अपि[22] किं-चन[22] ।
N] सदृशं यत् प्रियाऽऽख्याने तव दत्त्वा[23] भवेत् समम्[23] ॥२०॥ [२१
एवम् उक्तस् तु वैदेह्या प्रत्य्-उवाच प्लवं-गमः ।
१७] प्रगृहीताऽञ्जलिर्[24] हर्षात् सीतायाः प्र-मुखे स्थितः ॥२१॥ [२३

---

१. भ–वर्तत्या राक्षसालये । २. भ–इदं कृतम् ॥ ३. भ–विश्वस्ता । ४. भ–चाभ्येमि ॥ ५. भ–उक्त्वा । ६. भ–भर्तुर्विजयसंहिताम् । ७. भ–प्रहर्षेणाभिसंरब्धा व्याजहार न किंचन । ८. अ–नास्ति ॥ ९. भ–अब्रवीच्च हरिश्रेष्ठः । १०. रा$_2$ फ–वर्जं—हरिर् । ११. भ–नास्ति ॥ १२. अ–नास्ति ॥ १३. रा$_1$ ब प्र रा$_2$ भ–उक्त्वा । १४. भ–शशिनिभानना । १५. रा$_2$–०प्रीत्या । १६. रा$_2$ फ–हर्षग० । भ–हर्षगद्गदभाषिणी ॥ १७. भ–०यसंभवम् ॥ १८. भ–सदृशं न च पश्यामि । १९. फ–नास्ति ॥ २०. भ–हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च । राज्यं वा त्रिषु लोकेषु नैतदर्हसि तान्यपि ॥ २१. भ–तु । २२. भ–वानराधिप । २३. भ–दातुं भवेन्मम ॥ २४. भ–कृतांजलिपुटो ॥

भर्तुः प्रिय-हिते युक्ता[1] भर्तुर् विजय-काङ्क्षिणी[2] ।
१८] भर्तुर्[3] एवं-विधं योग्यं[4] त्वम् एवाऽर्हस्य्[5] अ-निन्दिते[5] ॥२२॥ [२४
न[6] चैतद्[6] वचनं देवि[7] सार-वत् स्निग्धम्[7] एव च ।
१९] न[8] रत्नैर् हैम-दानेन[8] देव-राज्येन वा[9] पुनः[9] ॥२३॥ [२५
अर्थ-तश्[10] च मया प्राऽऽप्ता देवराज्याऽऽदयो गुणाः ।
२०] हत-शत्रु[10] वि-जयिनं रामं पश्यामि यत् स्थितः ॥२४[11]॥[२६
अहं त्व् एकं वरं देवि त्वत्-तोऽर्हामि[12] प्रियं महत् । [N
२१] तन्[13] मे प्रीता प्र-यच्छस्व[14] रामश् चाऽप्य् अनु-मंस्यते[15] ॥२५॥[३२पू
इह श्रुता मया देवि राक्षस्यो[16] विकृताऽऽननाः ।[17]
२२] अ-सकृत् परुषैर्[18] वाक्यैर्[18] वदन्त्यो रावणाऽऽज्ञया ॥२६॥ [N
तास् त्वं परुष-वादिन्यो दारुणास् तर्जने रताः ।
N] वि-कृता विकृताऽऽचारा ममाऽनु-ज्ञातुम् अर्हसि ॥२७[19]॥[N
शोकाऽऽर्ता त्वां परि-क्लिष्टा श्रावितं (?ता)परुषं वचः । [N
N] हन्तुम् इच्छाम्य् अहं देवि[19] सर्वाः[20] पादतलाऽऽदिभिः[20] ॥२८॥[३२उ
N] क्लेशयन्ति यदा(?त् ता)[21] हि त्वाम् अशोक-वनिका-गताम् ।[21]
घोरा[22] घोर-समाचाराः[22] क्रूराः क्रूरतरेक्षणाः ॥२९॥ [३३पू
२३] इच्छामि वि-विधैर् घातैर् हन्तुम् एताः सु-दारुणाः[23] । [३४उ
N] राक्षसीर्[24] दारुण-कथा[25] वरम् एतं प्र-यच्छ मे ॥३०॥ [३३उ
मुष्टिपार्ष्णितलाऽऽघातैर् वि-शालैश्[26] चैव बाहुभिः[26] । [३४पू
२४] घोरैर् जानु-प्रहारैश् च नयनानां[27] च पीडनैः ॥३१॥
छेदनैः कर्ण-नासानां केशानां च[28] प्र-पातनैः[28] । [३५

१. भ–रक्ते । २. भ–०यनंदिनी । ३. भ–स्निग्धं । ४. भ–वाक्यं । ५. भ–०र्हसि भाषितुं ॥ ६. रा$_2$ फ भ–तवैतद् । ७. भ–सौम्यं सादरं हितम् । ८. रा$_2$–रत्नौघवरदा० । भ–रत्नौघपरिदा० । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–चापरम् । भ–वा समम् ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तथैते । ११. अतः परमधिकः पाठः—भ–सीता ह्यसि नृणां देवि सर्वलोकेष्वरुंधती ॥ १२. भ–त्वत्तो याचे । १३. भ–तं । १४. भ–०च्छ त्वं । १५. भ–०नुमन्यते ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–नास्ति । १७. भ–नास्ति । १८. भ–०षं वाक्यं ॥ १९. भ–नास्ति ॥ २०. रा$_1$ ल$_1$ ल$_2$ ब–भूयः पादतलैरिव । अ प्र–भूयः पादतलैरिह ॥ २१. भ–अथेमा राक्षसीर्घोराः॥ २२. भ–कुरूपिणीः । २३. भ–वर्जं—राक्षस्यो । २४. भ–मानुषाहारा ॥ २५. भ–विकृतैश्चापि शोभनैः । २६. फ–वदनानां ॥ २७. भ–अवलुंचनैः ।

२५] भृशं शुष्क-नदीनां च तारणैर्[1] लंघनैस् तथा ॥३२॥ [३६पू
एवं-प्रकारैर् बहुभिः सम्प्र-हारैर्[2] यशस्विनि ।
२६] योजयेयम् अन्-अर्थेन याभिस् त्वं तर्जिता पुरा ॥[3]३३॥[३७
इत्य्[4] उक्ता सा[4] हनु-मता देवी[5] कृपण-वत्सला[5] ।
२७] हनू-मन्तम् उवाचेदं चिन्तयित्वा वि-मृश्य च ॥[6] ३४॥[३८
राज-संश्रय-वश्यानां प्रेष्यतां[7] चाऽपि कुर्वताम्[7] ।
२८] दूतानां चाऽऽप्त-वाक्यानां नाऽत्र दोषः प्र-कल्प्यते ॥[8]३५॥ [३९
भाग्य-वैषम्य-दोषेण पुरस्-ताद् दुष्-कृतेन च ।
२९] मयैतत्[9] प्राक् कृतं[9] सर्वं स्व-कृतं ह्य् उप-भुज्यते ॥३६॥ [४०
नै(?मै)वं भव(?मैवं) महा-बाहो दैवस्यैषा परा गतिः ।[10]
अ-नाथानां नि-युक्तानां भर्तुः कार्येषु वानर ।[10]
N] ईदृग्-विधो वि-धेयानां न क्रोधो धर्म-दर्शिनाम् ॥[11]३७॥[N
प्राऽऽप्तव्येयं दशाऽवश्यं पूर्व-देह-कृता मया ।[12]
३०] दासीनां रावणस्याऽहं यद् एका[13] वशम् आ-गता[13] ॥३८॥ [४१
आ-ज्ञप्ता रावणेनेमा राक्षस्यस् तर्जयन्ति माम् ।
३१] हते तस्मिन्न् इमा हन्याः कथं वै मारुताऽऽत्मज ॥[14]३९॥ [४२
इमौ ब्रह्म-समाजे[15] तु पुराणे धर्म-संहितौ ।[15]
३२] ऋषि-गीतौ[16] शुभौ श्लोकौ तौ[16] नि-बोध प्लवं-गम ॥४०॥ [४३
न[17] परः[17] पापम् आ-दत्ते परेषां पाप-कर्मणाम्[18] ।[19]
३३] समये[20] रक्षितव्याश् च[20] सन्तश् चारित्र-लक्षणाः ॥४१[21]॥[४४

---

१. भ–कर्षणैर् ॥ २. भ–विप्रकारैर् । ३. भ–निहत्य गंतुमिच्छामि तवेमाः कृतविप्रियाः ॥ ४. भ–एवमुक्ता । ५. भ–वैदेही जनकात्मजा । ६. भ–प्रत्युवाच हनूमन्तं चिन्तयित्वा प्रहस्य च ॥ ७. रा₂ फ–प्रेषणं चा० । भ–वर्ततीनां पराज्ञया । ८. भ–नास्ति ॥ ९. भ–प्राप्तमेतन्मया ॥ १०. भ–नास्ति । ११. रा₂ फ–विधेयानां च दासानां न क्रुद्धो धर्मदर्शिवान् । भ–विधेयानां च दासीनां न क्रुद्ध्यः पवनात्मज ॥ १२. भ–प्राप्तव्यो वा दशायोगो मयाऽयमभिनिश्चितः । १३. भ–मर्षयामि सुदुर्वचः ॥ १४. भ–हते तस्मिन्न कुर्वंति जडांधवधिरा इव ॥ १५. ल₁ ल₂ ब अ प्र–०सकाशे । रा₂ फ भ–व्याघ्रसकाशे । १६. भ–ऋक्षेण गीतो यः श्लोकस्तं ॥ १७. भ–नापरः । १८. भ–पापकारिणाम् । १९. अतः परमधिकः पाठः—भ–वर्जं—कुर्वतामपि पापानि नैव कार्यमशोभनम् । २०. भ–०यो रक्षितव्यस्तु । २१. रा₂–अत आरभ्य ४३-शश्लोकं यावन्नास्ति ॥

पापानाम् वाऽशुभानां वा वधाऽर्हाणाम्[1] अथाऽपि वा[1] ।
३४] कार्यं[2] कारुण्यम् आर्येण कश्-चिन् नैवाऽप-राध्यति ॥[2]४२॥ [४५
लोके हिंसा-विहाराणां पापानां[3] पाप-कर्मणाम्[3] ।
३५] कुर्वताम् अपि पापानि नैव[4] कार्यम् अ-शोभनम्[4] ॥४३॥ [४६
एवम् उक्तस् तु हनु-मान् सीतया वाक्य-कोविदः ।
३६] प्रत्य्-उवाच ततः सीतां राम-पत्नीं यशस्विनीम् ॥४४॥ [४७
युक्ता[5] रामस्य भवती[6] धर्म-पत्नी यशस्विनी[6] ।
३७] प्रति-संदिश माम् आर्ये[7] गमिष्ये यत्र राघवः ॥४५॥ [४८
एवम् उक्ता हनु-मता वैदेही जनकाऽऽत्मजा ।
३८] अब्रवीद् द्रष्टुम् इच्छामि भर्तारं भर्तृ-वत्सल[8] ॥४६॥ [४९
तस्यास् तद् वचनं श्रुत्वा हनू-मान्[9] प्लवगर्षभः[10] ।
३९] हर्षयन्[11] मैथिलीं वाक्यम् उवाचेदं[12] महा-यशाः[12] ॥४७॥ [५०
पूर्ण-चन्द्र-मुखं[13] रामं द्रक्ष्यस्य् आर्ये स-लक्ष्मणम् ।
४०] स्थिर-मित्रं हताऽमित्रं शचीऽवेन्द्रं सुरेश्वरम् ॥४८॥ [५१
ताम् एवम् उक्त्वा भ्राजन्तीं सीतां स्फीताम्[14] इव श्रियम्[14] ।
४१] आ-जगाम महा-तेजा[15] हनू-मान् यत्र राघवः[16] ॥४९॥ [५२
हरि-वर-सचिवस् ततो हनू-मान्
प्रति-वचनं जनकेश्वराऽऽत्मजायाः ।
कथितम् अकथयद् यथा-क्रमेण
N] नर-पतये[17] प्रणि-पत्य[17] राघवाय ॥५०॥ [५३

इत्यार्षे रामायणे युद्ध-काण्डे[18] सीता-प्रमोदो नाम
चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

१. अ—अत आरभ्य४३-शश्लोकस्य तृतीयपादं यावन्नास्ति । भ—परिज्ञाय प्लवंगम । २. प्र—०र्येण कश्चिद्वै नापराध्यति । भ—कार्यकारणकर्तृत्वे न कश्चिदपराध्यति ॥ ३. भ—रक्षसां कामरूपिणां । ४. भ—प्रतिकुर्वन्न शोभते ॥ ५. भ—युक्तं । ६. रा२ फ—वर्ज— ०पत्नी यशस्विनः । भ—महिषी सीता प्रोवाच यद्वचः । ७. भ—देवि ॥ ८. रा२ फ— ०त्सलम् । भ—वानरर्षभ ॥ ९. रा२ फ भ—हनु० । १०. भ—वानरोत्तमः । ११. भ—प्रहर्षन्मै० । १२. भ—इदमाह स मारुतिः ॥ १३. भ—०न्द्रनिभं ॥ १४. भ—श्रियमिवापरां । १५. भ—महाभागो । १६. रा१—०वौ ॥ १७. रा२ फ भ—त्रिदशवरप्रतिमाय ॥ १८. प्र भ—लंकाकांडे । रा२ फ—आभ्युदयिके ॥

तम् उवाच महा-प्राज्ञं[1] सोऽभि-वाद्य[1] प्लवं-गमः ।
१] रामं वचनम् अ-क्षुद्रं[2] वरं सर्व-धनुष्मताम् ॥१ ॥ [१
यन्-निमित्तोऽयम्[3] आ-रम्भः[3] कर्मणां यः[4] फलोदयः ।
२] तां साध्वीं[5] शोक-सन्तप्तां द्रष्टुम् अर्हसि मैथिलीम् ॥२ ॥ [२
सा हि शोक-समाविष्टा बाष्प-पर्याकुलेक्षणा ।[6]
३] मैथिली वि-जयं श्रुत्वा त्वां द्रष्टुम् अभि-कांक्षति ॥[7]३ ॥ [३
माम् उवाचाऽथ वैदेही त्वद्-दर्शन-समुत्सुका[8] ।
N] द्रष्टुम् इच्छामि भर्तारम् इति पर्याकुलेक्षणा ॥[9]४[9]॥ [४
एवम् उक्तो हनु-मता रामो धर्म-भृतां वरः ।
४] अगच्छत्[10] सहसा ध्यानम् ईषद्-बाष्प-परिप्लुतः ॥५ ॥ [५
स दीर्घम् उष्णं नि-श्वस्य जगतीम् अव-लोकयन् ।[11]
५] अ-काम इव तत् कर्तुम् इत्य् उवाचाऽञ्जना-सुतम्[12] ॥६ ॥ [६
N] गच्छ[13] गत्वा[13] पुनर् लङ्कां पुरीं ब्रूहि वि-भीषणम् । [N
निवृत्त-शौचः पश्येथाः सीताम् आ-दाय माम् इति ॥७ ॥
६] द्रष्टुम् इच्छामि वैदेहीं प्रकृति-स्थाम्[14] अ-निन्दिताम्[14] । [७

---

१. रा२ फ भ–०ज्ञमभि० । २. भ–अर्थज्ञो ॥ ३. भ–०त्तं समारंभः । ४. भ–च । ५. भ–देवीं ॥ ६. प्र–नास्ति । ७. रा१–नास्ति ॥ ८. फ–नास्ति । ९. फ–नास्ति । भ–पूर्वस्मात्प्रत्ययाच्चाहमुक्तो विश्वस्तया तया ॥ १०. रा१ ल१ ल२ ब अ प्र फ भ–आग० ॥ ११. अतः परं ३६-शश्लोकं यावत् संक्षिप्तः पाठः—भ–उवाच मेघसंकाशं राक्षसेंद्रं विभीषणम् । मम सीतां शिरःस्नातामुपस्थापय मैथिलीम् । दिव्यांगरागां वैदेहीं दिव्याभरणभूषिताम् ॥ एवमुक्तस्तु रामेण त्वरमाणो विभीषणः । प्रविश्यांतःपुरं सीतां प्रांजलिः प्रत्युवाच ताम् ॥ शिरःस्नाता तु वैदेही दिव्याभरणभूषिता । यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ॥ एवमुक्त्वा तु वैदेही प्रत्युवाच विभीषणम् । अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ॥ तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषणः । यथाह भर्ता राजा च तथा त्वं कर्तुमर्हसि ॥ तस्य तद्वचनं श्रुत्वा मैथिली पतिदेवता । भर्तृभक्तिपरा साध्वी तथेति प्रत्युवाच ह ॥ ततः सीतां शिरःस्नातां युवतिभिरलंकृताम् । महार्हाभरणोपेतां महार्हांबरधारिणीम् ॥ आरोप्य शिविकां दिव्यां परार्ध्यास्तरणावृताम् । राक्षसैर्बहुभिर्युक्त आजगाम विभीषणः ॥ १२. प्र रा२ फ–०नीसुतं ॥ १३. रा२ फ–गच्छस्वाशु । १४. प्र–'प्रकृति०' इत्यत आरभ्य 'तथाकृता' इत्यन्तं नास्ति । फ–अलंकृताम् ॥

प्रतिकर्म-समायुक्तां[१] वासोभिर् भूषणैस् तथा ॥८ ॥
निर्-यात्यतां च वैदेही[२] तथा-रूपा[३] तथा-कृता[३] ।
N] पुरस्-कृत्य स्वयं[४] चैनां भवान्[५] निर्-यातुम् अर्हति ॥९ ॥ [N
इत्य् उक्त्वा स[६] हनू-मन्तं प्र-स्थाप्य च पुरीं प्रति ।
N] गिरेः सु-वेलस्य तदा[७] न्य्-अवसच् छिखरे ततः[८] ॥१०॥ [N
सान्त्वयन्[९] वानरान् सर्वान्[९] कुलगोत्राऽवधान-तः[१०] ।
N] ऋक्षांश् च[११] सु-महाकायान्[११] गो-लाङ्गूलांश् च सर्व-शः ॥११॥ [N
अथाऽऽगत्य महा-तेजा हनू-मान् मारुताऽऽत्मजः ।
N] वि-भीषणाय च तदा राम-वाक्यं न्य्-अवेदयत् ॥१२[१२]॥ [N
७पू] कृत-शौचस् ततो धी-मांस् त्वरमाणो वि-भीषणः । [८पू
N] कृत्वौर्ध्वदैहिकं भ्रातुः[१३] कृत-कृत्यः सुहृद्-वृतः[१४] ॥१३॥ [N
N] श्रुत्वा हनु-मतो वाक्यं सीता निर्-यात्यताम् इति । [N
७उ] भ्रातुर् अन्तःपुराऽध्यक्षान् विन्ध्याऽऽदीन् स तथाऽब्रवीत्[१५] ॥१४॥ [८उ
विनयाऽवनता भूत्वा शिरसाऽभि-प्रणम्य च ।
N] आऽज्ञापयत वैदेहीम् अभि-वाद्य[१६] प्र-साद्य[१६] च ॥१५॥ [९
द्रष्टुम् इच्छति भर्ता त्वां रामो धर्म-भृतां वरः ।
८] स्नाताम् अलं-कृतां चैव[१७] सं-युतां प्रति-कर्मणा ॥१६॥ [१०
इत्य् उक्तास् ते तथा[१८] चक्रुः स्त्र्य्-अध्यक्षा विनयाऽन्विताः[१९] ।
N] सा तद् भर्तृ-वचः[२०] श्रुत्वा बभूव व्रीडिताऽऽनना ॥१७॥ [N
अचिन्तयच्[२१] च[२१] वैदेही किं नु राजा चिकीर्षति ।
N] यन् माम् अलं-कृतां देवो द्रष्टुम् इच्छति राघवः ॥१८॥ [११
प्रति-कर्म कथं[२२] कुर्यां विना[२३] तेन महाऽऽत्मना[२३] ।

---

१. रा$_{१}$ फ-०क्ता । २. ल$_{१}$ ल$_{२}$ ब अ प्र रा$_{२}$-०हीं । ३. रा$_{१}$ ल$_{१}$ ल$_{२}$ ब अ प्र रा$_{२}$-०पां तथाकृताम् । ४. रा$_{२}$ फ-यथा । ५. रा$_{१}$ फ-भयान् ॥ ६. रा$_{२}$ फ-वर्जं—च । ७. रा$_{२}$ फ-ततो । ८. रा$_{२}$ फ-तदा ॥ ९. रा$_{२}$ फ-वानरान्सांत्वयित्वा च । १०. रा$_{१}$ ल$_{१}$ ल$_{२}$ ब अ प्र-०न्नपदानुगः । रा$_{२}$-०न्नप्रधा० । ११. रा$_{२}$ फ-चैव म० ॥ १२. रा$_{२}$-वर्जं —नास्ति ॥ १३. ल$_{१}$ ल$_{२}$ ब प्र-भ्रातः ॥ १४. ल$_{१}$ ल$_{२}$ ब प्र-०द्वचः ॥ १५. रा$_{१}$ अ फ-तदाब्र० ॥ १६. रा$_{१}$-शिरसाभि-प्रणम्य ॥ १७. रा$_{२}$ फ-एवं ॥ १८. रा$_{२}$ फ-वर्जं—तदा । १९. फ-विनताननाः । २०. फ-भर्तुर्वचः ॥ २१. रा$_{२}$ फ-वर्जं—सा चिंतयित्वा ॥ २२. फ-तथा । २३. रा$_{२}$-शुभं वा यदि वाशुभम् ।

यथैतद् वचनं घोरं नि-स्तीर्णम्[1] अ-शुभं मया ।
N] दुःखेन सहिताम् एव किम् अलं-कर्तुम् अर्हति ॥[2]१९॥ [N
किं तु भर्तृ-वचः[3] कार्यं[4] शुभं वा यदि वाऽशुभम् ।
N] तथेति[5] वचनं रूढं[6] हृदये मे निर्-अन्तरम् ॥२०॥ [N
N] इति निश्-चित्य वैदेही स्त्र्य्-अध्यक्षांस् तान् उवाच ह ।
१०उ] यद् आ-ज्ञापयति स्वामी तत् कार्यम् अ-विशङ्कया ॥२१॥ [N
स्त्र्य-अध्यक्षास् ते[7] ततः सर्वे समा-वेद्य वि-भीषणे ।
N] विभीषणाऽऽज्ञया तस्यास्[8] तद् उक्तम् उप-कल्पितम्[8] ॥२२॥ [N
भूषणान्य् अथ वस्त्राणि यद् अन्यद् अपि ते यथा ।
N] स्त्रियश् च कुल-वृद्धाश् च प्रति-कर्मणि[9] नि-ष्ठिताः ॥२३॥ [N
ततः सीता[10] शिरः-स्नाता सं-युक्ता[10] प्रति-कर्मणा ।
१२] तां[11] महाऽऽभरणोपेतां[11] भर्तृ-दर्शन-लालसा ॥२४॥ [१४
मणि-काञ्चन-चित्राऽङ्गीं सम्-अन्ताद् वस्त्र-संयुताम् ।
N] शिविकाम्[12] उह्यमाना(?नां)[12] सा राक्षसैर् वहनोचितैः ॥२५॥ [N
वि-भीषणस्य वचनात् सीता सुरसुतोपमा ।
N] आ-रुरोह सु-संवीता गमने धृत-मानसा ॥२६॥ [N
वृद्धाऽमात्यैः परि-वृतो विनीताऽऽत्मा वि-भीषणः ।
१३] आ-रोप्य शिविकां सीताम् अगमद् यत्र राघवः ॥२७॥ [१५
ततो वानर-मुख्यास् ते कौतूहल-समन्विताः ।
१४] वैदेहीं द्रष्टुम् इच्छन्तस तस्थुः शतसहस्र-शः ॥२८॥ [N
विदितं ह्य् अभवत् तेषां राम-शासन-चोदनात्[13] ।
N] सीताऽभ्यागमनं तत्र पुनर्-जन्म-समं तदा ॥२९॥ [N
ये चाऽन्ये व्य्-आर्तिकास्[14] तत्र सम्प्राऽऽप्तास् तद्-दिदृक्षवः[15] ।
N] तेषाम् अप्य् अभवत् सर्वं रामस्य न भयं तदा ॥३०॥ [N

---

१. अ–विस्ती० । २. रा२ फ–नास्ति ॥ ३. फ–भर्तुर्वचः । ४. रा२–कुर्याम् । ५. रा२ फ–ममेति । ६. रा१ ल१ ल२ ब अ–रूढे ॥ ७. रा१–तु । ८. रा२ फ–चाथ ततस्ते समकल्पयन् ॥ ९. रा१ ल१ फ–०र्माणि ॥ १०. रा२ फ–वर्जं—सीतां शिरः-स्नातां संयुक्तां । ११. रा२ फ–महार्हाभरणोपेता ॥ १२. ल१ ल२ ब प्र–०कां चोह्य० ॥ १३. रा२ फ–०ननोद० ॥ १४. रा२ फ–वर्जं—वादिकास् । १५. रा – तु दि० ॥

निर्-यास्यत्य् अद्य वैदेहीं रामो[1] राक्षस-वेश्मनः[1] ।[2]
N] चिरोषितां प्रियां भार्याम् इति तेऽन्योऽन्यम् अब्रुवन् ॥३१॥ [N
अलं-कृतायाः सीताया भूषितायाश् च दर्शने ।
N] को हेतुः किम् अभि-प्रेतम् इति चैव वि-शङ्किताः ॥३२॥ [N
तेषाम् एवम् अभि-प्रायम् वि-ज्ञाय रघु-नन्दनः ।
N] सुवेल-शिखरात् तस्माद् अव-तीर्य स्थितोऽभवत् ॥३३॥ [N
तं वानर-सहस्राणि प्रयुतान्य् अर्बुदानि च ।
N] परि-वव्रुर् महाऽऽत्मानं राघवं लक्ष्मणं तथा[3] ॥३४॥ [N
१७पू] ततो वि-भीषणो धी-मान् अमात्य-गण-संवृतः ।
N] अनु-यातश्च[4] पादातैः[4] सु-वेशः शुचिर् आत्म-वान् ॥३५॥ [N
N] शिविकां तां पुरस्-कृत्य रामम् एवाऽभ्य्-अगच्छत ।
१७उ] कथं-चिद् इव सं-मर्दाद् वीराणां द्रष्टुम् इच्छताम् ॥[5]३६॥ [N
सोऽभि-गम्य महाऽऽत्मानं प्राऽऽप्त-ध्यानम्[6] अन्-उत्तमम्[6] ।
१८] प्र-णतश् च प्र-हृष्टश् च प्राऽऽप्तां सीतां न्य्-अवेदयत् ॥३७[7]॥ [१६
ताम्[8] आ-गताम् उप-श्रुत्य[8] रक्षो-गृह-चिरोषिताम् ।[9]
१९] रोषो हर्षश्[10] च दैन्यं च राघवं वै[9] समाऽऽविशत्[9] ॥[10]३८॥ [१७
ततो[11] युग्य-गतां[11] सीतां[12] सु-विमर्शं[12] वि-चारयन् ।
२०] वि-भीषणम् इदं वाक्यं वि-मना[13] राघवोऽब्रवीत् ॥३९॥ [१८
राक्षसाऽधिपते सौम्य नित्यं मद्-विजये रत ।
२१] वैदेही सन्नि-कर्षं मे[14] शीघ्रं[15] समुप-गच्छतु[16] ॥[17]४०॥ [१९
तस्य[18] तद् वचनं श्रुत्वा[18] राघवस्य वि-भीषणः ।
२२] तूर्णम् उत्-सारणं तत्र[19] कारयामास धर्म-वित्[19] ॥४१॥ [२०

---

१. ल१ ल२ ब प्र—०श्मनि । रा२ फ—सीतेत्युत्सुकतां गताः । २. अतः परमधिकः पाठः—रा२—किं नु वक्ष्यति वैदेहीं रामो राक्षसवेश्मनि । ३. रा२ फ—तदा ॥ ४. रा१ ल१ ल२ ब अ प्र—पदातिभि ॥ ५. रा२ फ—नास्ति ॥ ६. भ—जितारिं ध्यानमागतम् । ७. प्र—नास्ति ॥ ८. रा२ फ—नाम्ना तामुपश्रुत्याथ । भ—तामागतां प्रतिश्रुत्य । ९. रा२ फ—समुपाविशत् । १०. भ—हर्षौ दैन्यं च शोकश्च त्रयो राममथाविशन् ॥ ११. रा२—ततो यानगतां । भ—कृत्वा पार्श्वगतां । १२. भ—दृष्टिं सविमर्षो । १३. भ—प्रहृष्टो ॥ १४. ल१ ल२ ब अ प्र—तु । १५. रा२ फ—क्षिप्रं । १६. भ—समनुतिष्ठतु । १७. अत आरभ्य रा१—सर्गान्तं यावन्नास्ति ॥ १८. भ—श्रुत्वा तु वचनं राजा । १९. भ—यत्नात्कारयामास सर्वतः ॥

कञ्चुकोष्णीषिणस्[१] तत्र वेत्र-कर्कर-पाणयः[२] ।
२३] उत्-सारयन्तस् तान्[३] योधान् सम्-अन्तात् परि-बभ्रमुः[३] ॥४२॥ [२१
ऋक्षाणां वानराणां च राक्षसानां समन्त-तः[४] ।[५]
२४] वृन्दान्य् उत्-सार्यमाणानि दूरम्[६] उत्-ससृजुस्[६] ततः ॥४३॥ [२२
तेषाम् उत्-सार्यमाणानां निः-स्वनः[७] सु-महान् अभूत्[७] ।
२५] वायुना वर्तमानानां सागराणाम् इव स्वनः ॥[८]४४॥ [२३
उत्-सार्यमाणांस् तान् दृष्ट्वा जनान्[९] संजात-सम्भ्रमान् ।[१०]
२६] दाक्षिण्याच् चाऽनु-रागाच्[११] वारयामास राघवः ॥४५॥ [२४
वानरांश् चाऽपि तान् दृष्ट्वा कौतूहल-समन्वितान् ।[१२]
N] प्रत्य्-अषेधत रामोऽपि ज्ञात्वा तेषां मनो-गतम् ॥४६॥ [N
कथं-रूपा तु वैदेही स्त्री-रत्नं कीदृशं तु तत् ।
१५] तस्या वानर-लोकोऽयं कृते सं-शयम् आ-गतः ॥४७॥ [N
यस्या[१३] हेतोर् हतो राजा रावणो राक्षसाऽधिपः ।
१६] सेतुश् च योजन-शतं जले बद्धो महोदधेः ॥४८॥ [N
१७पू] इति तेषां मनो[१४] ज्ञात्वा वचनं वदताम् अपि ।
N] प्रेषयामास वैदेही प्र-काशम् उप-यात्व् इति ॥४९[१२]॥ [N
सं-रब्धश् चाऽब्रवीद् रामश् चक्षुषा निर्-दहन्[१६] इव ।[१५]
२७] वि-भीषणं महा-प्राज्ञं सोपालम्भम् इदं वचः ॥५०॥ [२५
किम्-अर्थं माम् अन्-आदृत्य क्लेश्यतेऽयं[१७] महा-जनः[१७] ।
२८] नि-वर्तयैषाम्[१८] उद्-वेगं[१८] जनोऽयं स्व-जनो मम ॥५१[१९]॥ [२६

---

१. ल१ ल२–कांचु० । २. भ–वेत्रझर्झरपा० । ३. ल१ ल२ ब अ प्र–सर्वांस्तान्परि० । रा२–०तात्परिचक्रमुः । भ–सहसा समंतात्परिचक्रमुः ॥ ४. रा२ फ–०नांच सर्वशः । ५. भ–वानराणामथर्क्षाणां राक्षसानां च सर्वतः । ६. भ–सस्रुर्दूरतरं ॥ ७. भ–हरीणां रूपमाबभौ ॥ ८. रा१ ल१ ल२ ब अ प्र–नास्ति । भ–वायुना धूयमानस्य सागरस्येव पर्वसु । अतः परमधिकश्च पाठः—पद्मगर्भनिभास्ते वै बालाऽर्कसदृशाननाः । एकांतमाश्रिता रेजुस्तडाग इव सर्वतः ॥ ९. भ–समंताज्जातसं० । १०. रा२ फ भ–वर्जं—नास्ति । ११. भ–तदमर्षाच् ॥ १२. भ–अत आरभ्य ४९–शश्लोकं यावन्नास्ति ॥ १३. ल१ ल२ ब प्र फ–तस्या । १४. अ प्र–मतं । १५. रा२–नास्ति ॥ १६. भ–प्रद० ॥ १७. भ–त्वयायं क्लिश्यते जनः । १८. भ–उद्वेगं मा कृथा ह्येषां । १९. अतः परमधिकः पाठः—भ–विभीषणस्तथा श्रुत्वा व्यथितात्मा तथाकरोत् । विवृतां शिबिकां कृत्वा ततो राघवमन्वयात् ॥

सीता त्व् अन्तर्-गतं रोषं तदा[1] विप्र-कृता सती ।
२९] धारयामास दुर्-धर्षा[2] भर्तृ-वाक्य-समाहिता[3] ।।५२।। [N
ततो राघवम् आ-लोक्य व्रीडिता[4] जनकाऽऽत्मजा ।
३०] हर्षम् अन्तर्-गतं रोषान्[5] नि-जग्राह वराऽऽनना ।।५३।। [N
ततः स्वरेण महता महामेघौघनादिना ।
३१] उवाच राघवो धी-मान् वि-भीषणम् इदं वचः ।।५४।। [N
पुत्र-पक्षे प्र-जा राज्ञां[6] तवाऽपि विदितं ध्रुवम् ।
३२] पश्यन्तु मातरं तस्माद् इमे[7] कौतूहलाऽन्विताः ।।५५।। [N
न गृहाणि न वस्त्राणि न प्र-काशो न सत्-क्रिया ।
३३] न चाऽन्यो राज-सत्कारः[8] शीलम् आ-वरणं[9] स्त्रियः[10] ।।५६।। [२७
व्य्-असनेषु न[11] युद्धेषु न कृच्छ्रेषु[11] स्वयं-वरे ।
३४] न क्रतौ वा विवाहे वा दर्शनं दुष्यति स्त्रियः ।।[12]५७।।[२८
सैषा युद्ध-गता चैव कृच्छ्रे महति च स्थिता ।
३५] दर्शने नाऽस्ति दोषोऽस्या मत्-समीपे विशेष-तः ।।५८।। [२९
वि-सृज्य शिविकां तस्माद् पद्भ्याम् एवोप-सर्पतु[13] ।
३६] समीपे मम वैदेहीं पश्यन्त्व् एतां[14] वनौकसः ।।५९।। [३०
एवम् उक्तस् तु रामेण स-विमर्शो[15] वि-भीषणः ।
३७] रामस्योपाऽनयत् सीतां सन्नि-कर्षं[16] विनीत-वत् ।।६०।। [३२
तच् छ्रुत्वा राघव-वचः सीतां तत्र वनौकसः ।
३८] विभीषण-प्रभृतयः[17] सर्वाः प्र-कृतयस् तथा ।।६१।। [N
वीऽऽक्षांचक्रुस् तदाऽन्योऽन्यं किं नु रामः करिष्यति ।
३९] दृश्यतेऽन्तर्-हितो ह्य् अस्य क्रोधो दृष्ट्या वि-भाव्यते[18] ।।६२।। [N
इत्थं[19] वि-शङ्किताः[19] सर्वे दृष्ट्वा रामस्य चेष्टितम् ।
४०] अपूर्वाऽऽकार-सन्त्रस्ताः सहसैव[20] वि-सर्जने[20] ।।६३।। [N

---

१. भ-तथा । २. भ-दुर्वारं । ३. ल$_1$-०क्यं स० ॥ ४. भ-विवृता जनलज्जया । ५. रा$_2$ फ-क्रोधान् । भ-कृत्वा ॥ ६. रा$_2$ भ-राज्ञस् । ७. भ-इमां ॥ ८. ल$_1$-०संस्कारः ॥ ९. भ-वर्जं—आभरणं । १०. भ-स्त्रियाः ॥ ११. भ-विवाहेषु कन्यानां च । १२. भ-क्रतौ च संयुगे स्त्रीणां दर्शनं सार्वलौकिकम् ॥ १३. भ-एव समानय । १४. रा$_2$ फ-एते । भ-एनां ॥ १५. ल$_1$ ल$_2$ ब अ प्र-वर्जं—स विमृश्य । १६. भ-समीपं स ॥ १७. रा$_2$ फ भ-०णपुरोगाश्च ॥ १८. रा$_2$ फ भ-विभावितः ॥ १९. भ-इति ते विव्यथुः । २०. रा$_2$ फ-०सैव विरेमिरे । भ-जातशंकास्तदाभवन् ॥

लक्ष्मणोऽपि[1] स-सुग्रीवस् ते[2] च सर्वे प्लवं-गमाः[2] ।
४१] आसन् सु-व्रीडितास्[3] तत्र[3] मृत-कल्पास्[4] त्व् अचिन्तयन्[4] ।।६४।।[३३
कलत्र-निरपेक्षैश् च चेष्टितैर् अस्य दारुणैः ।
४२] अ-प्रीतिम्[5] इव सीतायास् तर्कयन्ति स्म राघवे[6] ।।६५।।[३४
लज्जया त्व्[7] अथ लीयन्ती स्वेषु गात्रेषु जानकी[7] ।
४३] वि-भीषणेनाऽनु-गता[8] भर्तारं साऽभ्य्-अवर्तत[8] ।।६६।। [३५
४४पू] ते तां ददृशुर् आ-यान्तीं श्रियं देह-वतीम् इव ।[9]
सीतां दृष्ट्वा वराऽऽरोहां सर्वे वानर-पुङ्गवाः ।[10]
४५] वि-स्मयं परमं जग्मुस् तस्या रूप-श्रियौजसा[11] ।।६७।। [N
सा वस्त्र-संवीत-मुखी[12] लज्जया जन-संसदि ।
४६] तस्थाव् आ-साद्य भर्तारं श्रीर्[13] विष्णुम् इव रूपिणी ।।६८।। [३६
N] अस्रु-सम्पूर्ण-वदना सा सीता जनकाऽऽत्मजा ।[14]
५२उ] रुरोदाऽऽसाद्य भर्तारं[13] हाऽऽर्य-पुत्रेति जल्पती[15] ।।६९।। [N
वि-स्मयाच् च प्र-हर्षाच् च स्नेहाच् च पति-देवता[16] ।
N] उद्वीऽऽक्षन्ती[17] मुखं भर्तुः सौम्यं सौम्यतराऽऽनना ।।[18]७०।।[३७
४७पू] राघवश् चाऽपि तां दृष्ट्वा दिव्य-रूप-वपुर्-धराम्[19] ।[20]
विवर्ण-वदनो रामः क्रोध-स्नेह-विमध्य-गः[21] ।
४८] बभूवाऽधिक-ताम्राऽक्षो बाष्प-निग्रह-तापितः[22] ।।७१।।[N
ताम् अग्र-तः स्थितां देवीं व्रीडोपहत-चेतनाम्[23] ।
४९] बहु-चिन्तां[24] सु-दुःखाऽऽर्तां चिन्तयन्तीम् अनाथ-वत् ।।७२।। [N

---

१. भ–०णस्तु । २. भ–स च तारासुतोंगदः । ३. भ–च व्रीडिताः सर्वे । ४. भ–०श्च चिंतया ॥ ५. ल₁ ब अ प्र–०तं । ६. ल₁ ल₂ ब अ प्र–राघवं । भ–मेनिरे तां परित्यक्तामपविद्धामिव स्रजं ॥ ७. भ–विलयं यांतीं स्वेष्वंगेषु च मैथिलीं । ८. प्र–०ता भर्तारमभिवर्तते । भ–तां सामान्यामिव योषितं ॥ ९. अतः परमधिकः पाठः—भ–देवतामिव लंकायाः प्रभां वैवस्वतीमिव । १०. रा₂ फ–तां च दृष्ट्वा व० । भ–दृष्ट्वा ते हरयः सर्वे सीतां परमया श्रिया ॥ ११. रा₁ ल₁ ब अ–रूपौजसो श्रिया ॥ १२. भ–बाष्पसंरुद्धमुखी । १३. प्र–नास्ति । १४. भ–नास्ति । १५. भ–वर्जं—सा भृशम् ॥ १६. भ–परिदेविता । १७. रा₂–उदीक्षंती । १८. भ–नास्ति ॥ १९. भ–सीतां दिव्यवपुर्धरां । २०. अतः परमधिकः पाठः—रा₂ फ भ–जातशंकेन मनसा बाष्पेण रुद्धलोचनः । २१. भ–स्नेहक्रोधार्धम० । २२. भ–०निग्रहणे रतः ॥ २३. ल₁ ल₂ ब प्र–क्रोधोप० । २४. भ–समालोक्य ॥

राक्षसाऽपहृतां[१] बालां बलात् संरोध-कर्षिताम् ।
५०] कथं-चिद् एव जीवन्तीं मृत्यु-लोकाद्[२] इवाऽऽगताम् ॥७३॥ [N
प्र-मथ्याऽप-हृतां[३] शून्याद् आ-श्रमात् पाप-चेतसा ।
५१] अ-पापां निर्-अवद्याऽङ्गीं नाऽभ्य्-अभाषत राघवः[४] ॥७४॥ [N
५२पू] इति[५] तां[५] बाष्प-रुद्धाऽक्षीम् उपप्रैक्षत[६] राघवः[६] ।
N] बाष्प-व्याकुल-ताम्राऽक्षो मध्ये तेषां महाऽऽत्मनाम् ॥७५॥ [N
तस्या वि-लपितं श्रुत्वा सर्वे ते हरि-यूथपाः ।
५३] रुरुदुर् जात-सन्तापाः शोक-व्याकुल-चेतसः[७] ॥७६॥ [N
मुखं वस्त्रेण सं-च्छाद्य सौमित्रिर् जात-सम्भ्रमः[८] ।
५४] बाष्प-निग्रहणे यत्नम् अकरोद् धैर्यम्[९] आ-स्थितः ॥७७॥ [N
ततः सीता वराऽऽरोहा भर्तुर्[१०] वैकारिकं महत् ।
५५] व्रीडाम् उत्-सृज्य तं(?तद्)दृष्ट्वा तस्थौ तस्य[११] तदाऽग्र-तः ॥७८॥[N
शोकम् उत्-सृज्य वैदेही सत्त्वम् आ-लम्ब्य भामिनी ।
५६] प्र-गृह्य[१२] मनसा भावं[१२] वि-शुद्धेनाऽन्तर्-आत्मना ॥७९॥ [N
वि-स्मयाच् च प्र-हर्षाच् च भयात्[१३] स्नेहात् तथा स्थिता[१३] ।
५७] बहु-रूपं[१४] च[१४] ददृशे भर्तुर् वक्त्रम्[१५] अ-निन्दिता[१५] ॥८०॥ [N
आऽविशद् अन्-उपमं मनः-क्रमं सा
तद् अभिसम्-ईक्ष्य पुनः प्रियस्य वक्त्रम् ।
व्रीडितकुपितविस्मिताऽऽत्मवक्त्रा
N] विविध-वपुर् जनकाऽऽत्मजा बभूव ॥८१[१६]॥[३८

इत्यार्षे रामायणे युद्ध-काण्डे[१७] सीतादर्शनं नाम
पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

१. अ रा२-रक्ष० । २. भ-पुनर्जातां ॥ ३. भ-बलादप० । ४. भ-किंचन ॥ ५. भ-इत्येवं । ६. ल१ ल२ ब अ प्र-उपप्रेक्ष्य च रा० । भ-लज्जया जनसंसदि ॥ ७. भ-बाष्पव्याकुललोचनाः ॥ ८. भ-जातसाध्वसः । ९. फ-भिक्षेषु-दैन्यम् ॥ १०. भ-दृष्ट्वा । ११. भ-भर्तुस् ॥ १२. भ-निगृह्य मनसा बाष्पं ॥ १३. भ-स्नेहात्क्रोधात्क्रमादपि । १४. भ-०रूपेव । १५. भ-वदनमीक्षती ॥ १६. भ-अथ समरकृतात्मनःक्रमं सा सुचिरमदृष्टमुदीक्ष्य च प्रियस्य । वदनमुदितचन्द्रकांतं विमलशशांकनिभानना ननन्द ॥ १७. ब प्र भ-लंकाकांडे । रा२ फ-आभ्युदयिके ॥

स[१] तां[१] देवीं तदा दृष्ट्वा रामः शङ्का-समन्वितः[२] ।[३]
१] हृदयाऽन्तर्गतं भावं[४] व्या-हर्तुम् उप-चक्रमे ॥१ ॥[१
एषाऽसि[५] वि-जिता[६] भद्रे शत्रुं[७] हत्वा[७] मया रणे ।
२] पौरुषाद् यद् अनु-ष्ठेयं मयैतद्[८] उप-पादितम् ॥२ ॥[२
गतोऽस्म्य् अन्तम् अ-मर्षस्य यशश्[९] च स्व-कम् अर्जितम्[९] ।
३] अव-मानश् च शत्रुश् च युगपन्[१०] नि-हतौ मया[१०] ॥३ ॥[३
अद्य मे पौरुषे[११] तुष्टिर्[११] अद्य मे स-फलः श्रमः ।
४] अद्य तीर्ण-प्रतिज्ञोऽहं प्रभावाऽऽदि(?दति) कर्म-तः(?णः)॥[१२]४ ॥[४
यत् त्वं वि-रहिता[१३] नीता छल-च्छिद्रेण[१३] रक्षसा ।
५] दैवाद् यः[१४] पतितो[१४] दोषः स[१५] मया तु समी-कृतः[१५] ॥५ ॥[५
सम्प्राऽऽप्तम्[१६] अव-मानं[१७] यत्[१८] तेजसा तत्[१९] प्र-माजितम्[१९] ।
६] कस् तेन पुरुषेणाऽर्थो महताऽप्य् अल्प-तेजसा ।[२०] [६
N] यो न शत्रौ न मित्रे च वर्तते हि यथोचितम् ॥[२१]६ ॥[N
लङ्घनं च[२२] समु-उद्रस्य लङ्कायाश् चाऽव-मर्दनम् ।
७] स-फलं तद्[२३] यशः प्राऽऽप्तं वि-क्रमं[२३](?माच्)च हनू-मतः ॥७ ॥[७
युद्धे[२४] वि-क्रमतश्[२५] चैव[२५] हितं मन्त्रयतस्[२६] तथा[२६] ।
८] सु-ग्रीवस्य स-सैन्यस्य[२७] कृतोऽद्य[२८] स-फलः श्रमः[२८] ॥८ ॥[८
वि-गुणं[२९] भ्रातरं त्यक्त्वा[३०] यो मां स्वयम् उप-स्थितः ।
९] वि-भीषणस्य च[३१] तथा स-फलोऽयं परि-श्रमः[३१] ॥९ ॥[९

---

१. ल१ ल२ ब रा२–सीतां । फ–तां तु । २. ब–शोकस० । ३. भ–तां तु पार्श्वस्थितां प्रह्वां रामः संप्रेक्ष्य मैथिलीम् । ४. भ–क्रोधं ॥ ५. प्र–एषापि । ६. ल१ ल२ ब प्र–विदिता । ७. भ–शत्रुहस्तान् । ८. भ–तदेतद् ॥ ९. ल२ ब प्र–यशश्चोर्जितमर्जि० । भ–श्रमश्चैव ममार्जितः । १०. भ–मया युगपदुद्धृतौ ॥ ११. भ–पौरुषं दृष्टम् । १२. रा२ फ–वर्जं—नास्ति । भ–अद्य तीर्णप्रतिज्ञत्वात्प्रभवामीह चात्मनः ॥ १३. रा१–०ता तेन छ० । ल१ ल२ ब प्र–प्राप्ता हृता तेन बहुच्छि० । अ–०तानेन बहुच्छि० । १४. भ–संपादितो । १५. भ–पौरुषेणाद्यमार्जितः ॥ १६. भ–०प्तश् । १७. रा१ रा२–स तु मानं । ल१ ल२ ब प्र–यदमानं । भ–चापमानो । १८. भ–यस् । १९. भ–स प्रमार्जितः ॥ २०. रा२ फ–वर्जं—यस्तस्य पौरुषस्यार्थः सह तेनाल्पचेतसा । भ–कस्तस्य पुरुषार्थो हि पुरुषस्याल्पतेजसः । २१. भ–वर्जं—नास्ति ॥ २२. भ–हि । २३. भ–सर्वमेवाद्य महत्कर्म ॥ २४. भ–आदौ विक्राम० । २५. रा१–चाथ । २६. भ–०तश्चनः । २७. ल१ ल२ ब प्र–च सै० । २८. भ–सफलोयं परिश्रमः ॥ २९. रा२ फ–निर्गुणं । ३०. भ–हित्वा । ३१. भ–भक्तस्य कृतोद्य सफलः श्रमः ॥

इत्य् एवं ब्रुवतः सीता[1] श्रुत्वा[1] रामस्य तद् वचः ।
१०] क्षणं[2] चोत्फुल्ल-नयना[2] बभूवाऽस्रु-परिप्लुता ॥१०॥ [१०
पश्यतस् तां तु रामस्य समीपे[3] हृदय-प्रियाम् ।
N] जन-वाद-भयाद् राज्ञो बभूव हृदयं द्वि-धा ॥११॥ [N
सीताम् असितपद्माऽक्षीं नील-कुञ्चित-मूर्धजाम् ।
N] अपश्यत् तां[4] वराऽऽरोहां मध्ये वानर-रक्षसाम् ॥१२॥ [N
११पू] पश्यतस् तां[5] तु[5] रामस्य भूयः[6] क्रोधोऽभ्य्-अवर्धत[7] ।
N] प्रभूताऽऽज्याऽवसिक्तस्य पावकस्येव दीप्यतः ॥१३॥ [११
११उ] स बद्ध्वा भ्रुकुटीं[8] वक्त्रे[9] तिर्यक् सम्प्रेक्ष्य[10] राघवः[10] ।
अब्रवीत् परुषं सीतां मध्ये वानर-रक्षसाम् ॥१४॥ [१२
१२] यत् कर्तव्यं मनुष्येण धर्षणां परि-मार्जता[11] ।
तत् कृतं रावणं[12] हत्वा मयेदं मान-कांक्षिणा[12] ॥१५॥ [१३
१३] विदितश् चाऽस्तु ते भद्रे योऽयं मम[13] परि-श्रमः[13] ।
तीर्णश् च[14] सम्-उद्रो यस् त्व् अ-त्वदर्थे तत् कृतं[14] मया ॥१६॥ [१५
१४] रक्षता ननु[15] यद् व्य्-अक्तम्[15] अप-वादं सु-दुःसहम्[16] ।
प्र-ख्यातस्याऽऽत्म-वीर्यस्य त्वां गां च परि-रक्षता ॥[17]१७॥ [१६
१५] निर्-जिताऽसि मया सीते शत्रु-हस्ताद् अ-मर्षिणा ।
अगस्त्येन दुरा-धर्षा मुनिना दक्षिणेव दिक् ॥१८॥ [१४
१६] प्राऽऽप्त-चारित्र-सन्देहा मम प्रति-मुखे स्थिता । [१७पू
N] पराऽनुकूला भवती तथाऽपि दयिता मम ।[18] [N
दीपो नेत्राऽऽतुरस्येव[19] प्रति-कूलाऽसि मे दृढम् ॥१९॥ [१७उ
१७] तद् गच्छस्वाऽनु-जाने[20] त्वां[21] यथेष्टं जनकाऽऽत्मजे ।

---

१. भ–तस्य सीता । २. रा$_2$ फ भ–मृगीवोत्फु० ॥ ३. अत आरभ्य भ–१३-शश्लोकस्य प्रथमपादं यावन्नास्ति ॥ ४. रा$_2$ फ–वै ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब–तस्य । ६. रा$_1$–पुनः । ७. भ–व्यवर्धत ॥ ८. प्र भ–भ्रू० । ९. रा$_1$ अ–क्रूरां । १०. भ–प्रेरितलोचनः ॥ ११. भ–परिरक्षता । १२. भ–त्वां विनिर्जित्य मयैतन्मानरक्षणम् ॥ १३. रा$_2$ फ भ–रणप० । १४. रा$_2$ फ–वर्जं—समुद्रोऽमर्षौ वात्वद० । भ–स सुहृदामर्षान्न त्वदर्थं कृतो ॥ १५. प्र–०द् व्यर्थं । रा$_2$ फ–तु महद्वृत्तं । भ–तु मया वृत्तं । १६. भ–च सर्वतः । १७. रा$_2$ फ–वर्जं–०स्य त्यागं च प० । भ–०त्मवंशस्य निंदां च परिमार्जता ॥ १८. भ–नास्ति । १९. रा$_2$ फ भ–वर्जं–नेत्रांतरस्येव ॥ २०. भ–०च्छाभ्यनु० । २१. ल$_1$ ल$_2$ ब रा$_2$–ऽहं ।

एता दश दिशो भद्रे कार्यम् अस्ति न मे त्वया ॥२०॥ [१८
१८] कः पुमान् हि कुले जातः स्त्रियं परगृहोषिताम् ।
तेजस्वी पुनर् आ-दद्यात् सुहृल्-लेखेन[1] चेतसा ॥२१॥ [१९
१९] रावणाऽङ्क-परिक्लिष्टां दृष्टां दुष्टेन चक्षुषा[2] ।
कथं पुनर्[3] उपाऽऽदद्यां[3] कुलं व्यप-दिशन् स्वकम्[4] ॥२२॥ [२०
२०] यद्-अर्थं नि-जिता मे त्वं यशः प्रत्या-हृतं मया ।
नास्ति मे त्वय्य् अभि-ष्वङ्गो यथेष्टं गम्यताम् इति[5] ॥२३॥ [२१
२१] इत्य् अभिव्या-हृतं भद्रे मयैतत् कृत-बुद्धिना ।
लक्ष्मणे भरते चाऽऽपि[6] कुरु वृत्तिं[7] यथा-सुखम् ॥२४॥ [२२
२२] शत्रु-घ्ने वाऽथ सु-ग्रीवे हनू-मति वि-भीषणे ।[8]
नि-वेशय मनः सीते यथा वा सुखम् आत्मनः ॥२५॥ [२३
न हि त्वां रावणो दृष्ट्वा दिव्य-रूपां मनो-रमाम्[9] ।
२३] मर्षयेत[10] चिरं[10] सीते स्व-गृहे पर्यव-स्थिताम्[11] ॥२६॥ [२४
ततः[12] प्रियस्य श्रवणाऽप्रियं वचः[12]
सीताऽपि[13] सं-श्रुत्य[13] चिरस्य[14] मैथिली ।
मुमोच बाष्पं रुदती[15] तदा भृशं[15]
N] गजेन्द्रदन्ताऽभिहतेव शल्लकी[16] ॥२७॥ [२५

इत्यार्षे रामायणे युद्ध-काण्डे[17] सीता-परित्यागो नाम
षण्णवतितमः सर्गः ॥ ९६ ॥

---

१. भ-स्वाभिमुख्येन ॥ २. रा फ-चेतसा । ३. त्वां पुनरादद्यां । ४. भ-महत् ॥ ५. भ-त्वया ॥ ६. रा$_2$ फ भ-वा त्वं । ७. फ-बुद्धिं ॥ ८. भ-सुग्रीवे वानरेंद्रे वा शत्रुघ्ने वा महाबले । अतः परमधिकश्च पाठः—नीले नले हनूमति अंगदे वा महाबले । शरभे पनसे चैव कुमुदे गंधमादने ॥ केशरि-द्विविदे मैंदे ऋक्षराजे महात्मनि । वीरे शतबलौ चैव राक्षसे वा विभीषणे ॥ ९. भ-मनोहरां । १०. रा$_1$ ल$_1$ ल$_2$ ब अ-०येद्धुचिरां । ११. भ-परिवर्ततीम् ॥ १२. रा$_2$-०योक्तं श्रवणस्य वाप्रियं वचः । भ-प्रियार्हश्रवणा तद-प्रियं । १३. रा$_2$ फ भ-प्रियादुपश्रुत्य । १४. ल$_1$ ल$_2$ ब प्र-चिराय । १५. भ-सहसा प्रवेपती । १६. भ-वर्जं—सल्लकी ॥ १७. ब भ-लंकाकांडे । रा$_2$ फ-आभ्युदयिके ॥

## [वं–१०१]= [ सप्तनवतितमः सर्गः ]= [दा–११६]

एवम् उक्ता तु वैदेही परुषं लोम-हर्षणम् ।
१] राघवेणाऽति-रोषेण भृशं प्र-व्यथिताऽभवत्[1] ॥१ ॥ [१
सा तदाऽश्रुत-पूर्वं हि जने महति मैथिली ।
२] श्रुत्वा भर्तुर् वचो घोरं[2] लज्जयाऽव-नता[3]ऽभवत् ॥२ ॥ [२
प्र-विशन्तीऽव[4] गात्राणि स्वानि[5] सा[4] जनकाऽऽत्मजा ।
३] वाक्-शरैस् तैः स-शल्येव भृशम् अश्रूण्य् अवर्तयत् ॥३ ॥ [३
ततो बाष्प-परिक्लिन्नं प्र-मार्जन्ती स्वम् आननम् ।
४] शनैस्[6] त्यक्त-गृहीताऽर्थं[6] भर्तारम् इदम् अब्रवीत् ॥४ [7]॥ [४
किं माम् अ-सदृशं वाक्यम् ईदृशं श्रोत्र-दारुणम् ।
५] रूक्षं श्रावयसे वीर प्राकृतः प्राकृताम् इव ॥५ ॥ [५
न तथाऽस्मि[8] महा-बाहो यथा माम् अव-गच्छसि ।
६] प्रत्य्-अयं गच्छ मे स्वेन चारित्रेण[9] च तेजसा[9] ॥६ ॥ [६
वि-शङ्कया हि[10] स्त्रियो नाम स्थाने तु[11] परि-शङ्कसे ।
७] परि-त्यजैनां शङ्कां त्वं यद्य् अपीऽयं[12] परोक्ष-ता[12] ॥७ ॥ [७
यद् अहं गात्र-संस्पर्शं शत्रोर्[13] हस्त-गता[13] प्र-भो ।
८] काम-कारो न मे तत्र दैवं[14] तु बलवत्-तरम्[14] ॥८ ॥ [८
मद्-अधीनं तु यत्[15] तन् मे हृदयं[15] त्वयि वर्तते ।
९] पराऽधीनेषु गात्रेषु[16] किं करिष्याम्य् अन्-ईश्वरी[16] ॥९ [17]॥ [९
सह[18] सम्बद्ध-भावाच् च[18] सं-सर्गेण च मान-द ।

---

१. रा$_2$ फ–०ताऽरुदत् ॥ २. भ–रूक्षं । ३. भ–०या पीडिता० ॥ ४. ल$_1$ ल$_2$ ब अ–०न्ती च । ५. भ–स्वान्येव ॥ ६. रा$_2$ फ–शनैरनुगृ० । भ–शनैर्गद्गदया वाचा । ७. अतः परमधिकः पाठः—भ–कुले महति जातां च दत्तां चैव महाकुले । शैलूषीमिव राजेन्द्र परेभ्यो दातुमिच्छसि ॥ ८. फ भ—वर्जं—तथास्ति । ९. रा$_1$–०त्रेणैव ते० । रा$_2$ फ भ–०णैव ते शपे ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तु । भ–च । ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–च । भ–त्वं । १२. भ–अहं ते परीक्षिता ॥ १३. भ–तव शत्रोर्गता । १४. रा$_2$ फ–दैवतं बल० । भ–दैवं तत्रापराध्यति ॥ १५. भ–हृदयं तच्च मे । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–करिष्याम्यहमीश्वरी । भ–०म्यनीश्वरा । १७. अतः परमधिकः पाठः—भ–त्वामहं न व्यभिचरे मनसापि कदाचन । तेन सत्येन मे देवा दिशंत्वभयमीश्वराः ॥ १८. रा$_2$ फ–वर्जं—सहसा बद्धभावा च । भ–मनसा शुद्धभावेन ।

१२] यदि तेऽहम् अ-विज्ञाता[1] हता[2] तेनाऽस्मि[3] साम्प्रतम्[4] ॥१०॥ [१०
प्रेषितस् ते तदा वीरो हनू-मान् अव-लोकितुम्[5] ।
१३] लंकायाम् अभि-[6]वर्तन्त्या(?ः)किं तदा न[7] वि-वर्जिता[7] ॥११॥ [११
प्रत्यर्थं[8] (?याद्) वानरस्यैव[9] तद् वचः सम्-अनन्तरम् ।
१४] त्वया सं-त्यक्तया वीर त्यक्तं स्याज्[10] जीवितं मया ॥१२॥ [१२
न व्यथा न श्रमोऽभूत् ते सं-शये न्य्-अस्य जीवितम्[11] ।
१५] सुहृज्जन-परिक्लेशो न चाऽयं[12] वि-फलो भवेत्[13] ॥१३॥ [१३
त्वया तु नर-शार्दूल[14] क्रोधम्[15] एवाऽनु-वर्तता[15] ।
१६] लघुनेव[16] मनुष्येण स्त्री-तत्त्वं[17] नोप-धारितम्[17] ॥१४॥ [१४
व्यप-देशो न जानक्या नोत्-पत्तिर् वसुधा-तलात् ।[18]
१७] मम शीलं च भक्तिश् च सर्वं[19] ते न सम्-अर्थितम् ॥[19]१५॥[१५
न प्रमाणी-कृतः पाणिर् बाल्ये बालेन पीडितः ।
१८] मम वृत्तं च शीलं च सर्वं[19] ते पृष्ठ-तः कृतम् ॥१६॥ [१६
एवं[20] ब्रुवाणा[20] रुदती बाष्प-गद्गदया[21] गिरा[21] ।
१९] उवाच[22] लक्ष्मणं दीना सीता ध्यान-परायणा[23] ॥१७॥ [१७
चितां मे कुरु[24] सौमित्रे व्य्-असनस्याऽस्य भेषजम् ।
२०] मिथ्याऽभिशापाऽभि-हता[25] नाऽहं जीवितुम् उत्-सहे ॥१८॥ [१८
अ-प्रतीतैर्[26] गुणैर् भर्त्रा त्यक्ताऽहं[26] जन-संसदि ।
२१] या क्षमा मे[27] तां तु गतिं पतिष्ये[27] हव्य-वाहनम् ॥१९॥ [१९

---

१. भ–न वि० । २. प्र–हृता । ३. प्र रा$_2$ फ भ-वर्जं—नीतास्मि । ४. भ–शाश्वतं । ५. रा$_2$ फ भ–अवलोककः । ६. रा$_2$ फ–०र्तत्यां । भ–मयि तिष्ठंत्यां । ७. भ–ऽस्मि न वर्जिता ॥ ८. रा$_2$ फ–वर्जं—प्रत्युक्तं । भ–प्रत्यक्षं । ९. रा$_1$–०रस्तस्य । प्र–०रस्यास्य । भ–०रेंद्रस्य । १०. रा$_1$ ल$_1$ ल$_2$ ब अ–मा ॥ ११. रा$_2$ फ–वर्जं—वृथा ते श्रमोऽभूच्च संशयो यस्य जीविते । भ–०मोऽयं स्यात्संशयश्चैव जीविते । १२. फ–चाऽपि । १३. भ–निष्फलो ॥ १४. रा$_2$ फ–नृपशा० । १५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–क्रोधेनैवा० । रा$_2$ फ–रोषमेवा० । १६. रा$_2$ फ भ–वर्जं—०नैवं । १७. रा$_1$–०स्त्वं नैव धा० । रा$_2$ फ–स्त्रीत्वं नैवोपधा० । भ–स्त्रीत्वमेव पुरस्कृतं ॥ १८. अत आरभ्य रा$_1$ ल$_1$ ल$_2$ ब अ प्र–२८–शश्लोकं यावन्नास्ति ॥ १९. भ–मम वृत्तं च वृत्तज्ञ बहुधैव परीक्षितम् । २०. रा$_2$ फ–इति ब्रुवती । २१. भ–०दभाषिणी । २२. भ–अब्रवील् । २३. भ–०नमुपागता । २४. भ–देहि । २५. भ–०शापनिहिता । २६. भ–अप्रीतस्य च मे भर्तुस्त्यक्तया । २७. भ–वै गतिं गन्तुं गमिष्ये ।

एवम् उक्तस् तु वैदेह्या लक्ष्मणः पर-वीर-हा ।
२२] विमर्श-वशम् आ-पन्नो राघवं[1] समुद्-ऐक्षत[2] ॥२०॥ [२०
स वि-ज्ञाय ततश् छन्दं रामस्याऽऽकार-सूचितम् ।
२३] चितां चकार सौमित्रिर् मते रामस्य वीर्य-वान् ॥२१॥ [२१
न हि रामं तदा कश्-चित् क्रुद्धाऽन्तक-समं तदा ।
२४] अनु-नेतुम् अथो वक्तुं द्रष्टुं वाऽप्य् अशकत् सु-हृत् ॥२२[2]॥[२२
अधो-मुखं स्थितं रामं ततः कृत्वा प्र-दक्षिणम् ।
२५] उपाऽसर्पत वैदेही दीप्यमानं विभावसुम् ॥२३॥ [२३
प्र-णम्य दैवतेभ्यश्[3] च ब्राह्मणेभ्यश् च मैथिली ।
२६] बद्धाऽञ्जलिपुटा[4] चेदम् उवाचाऽग्नि-समीप-तः ॥२४॥ [२४
यथाऽहं कर्मणा वाचा शरीरेण च राघवम्[5] । [२७पू
२७] मनसा[6] नाऽति-वर्तेयं[6] प्र-काशं वा रहोऽपि वा ॥२५॥ [N
यथा मे हृदयान्[7] नित्यं नाऽप-सर्पति राघवः[8] ।
२८] तथा लोकस्य साक्षी मां सर्व-तः पातु पावकः ॥२६॥ [२५
एवम् उक्त्वा तु वैदेही परि-क्रम्य हुताऽशनम् । [२१पू
२९] प्रवेष्टु-कामा ज्वलनं वाक्यं चैवेदम् अब्रवीत् ॥२७[9]॥ [N
त्वम् अग्ने सर्व-भूतानां शरीराऽन्तर-गोचरः[10] ।
३०] त्वं साक्षी मम देह-स्थः पाहि मां देव-सत्तम ॥२८[11]॥[N
इत्य् उक्त्वाऽश्रूणि मुञ्चन्ती भर्तृ-प्रणिहितेक्षणा ।[12] N
३२] विवेश ज्वलनं देवी[13] निः-शंकेनाऽन्तर्-आत्मना ॥२९॥[२९उ
जनः[14] स[14] सु-महांस् तत्र बाल-वृद्ध-पुरःसरः[15] ।
३३] ददर्श मैथिलीं देवीं[16] प्र-विशन्तीं हुताऽशनम् ॥३०॥ [३०
तस्याम् अग्नि-प्रविष्टायां[17] हा हेति च[18] महा-स्वनः[18] ।
३४] रक्षसां वानराणां च सं-बभूवाऽद्भुतोपमः[19] ॥३१॥ [३१

१. भ–रामाननमुदै० ॥ २. भ–नास्ति । ३. भ–सा देवताश् । ४. भ–कृताञ्ज० । ५. भ–रावणं । ६. भ–सततं नाभिवर्तामि । ७. भ–हृदयं । ८. भ–राघवात् । ९. भ–नास्ति । १०. भ–अन्तश्चरसि गो० । ११. अतः परमधिकः पाठः—रा$_2$ फ–तस्यास्तद् वचनं श्रुत्वा सर्वे ते हरियूथपाः । बाष्परुद्धमुखाश्चासन् रुरुदुश्च शनैर्भयात् ॥ १२. रा$_2$ फ–ततः सा राघवं सीता नमस्कृत्यायतेक्षणा । भ–एवमुक्त्वा वैदेही परिक्रम्य हुताशनं । १३. भ–दीप्तं ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–ततस्तु । १५. भ–०द्धः समागतः । १६. रा$_2$ फ–दीनां । भ–तत्र ॥ १७. भ–अग्निं विशंत्यां तु । १८. भ–विपुलः स्वनः । १९. प्र–०भूव घनोपमः ।

नि-शम्य सीतां तु[1] तदा वि-शङ्कां[1]
हुताऽशनं दीप्तम् अनुप्र-विष्टाम् ।
स-राक्षसा वानरा-पुङ्गवास् ते
N] सु-दुःखिता ध्यान-परा बभूवुः ॥३२॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे[2] सीताऽग्नि-प्रवेशो नाम
सप्तनवतितमः सर्गः ॥ ९७ ॥

---

## [वं-१०२]= [अष्टानवतितमः सर्गः] =[दा-११६,२०]

स तथा हव्यकव्याऽऽशी[3] सं-स्तुतः[4] सीतया[4] तदा ।
N] बभूवाऽऽकृति-सम्पन्नो हूयमान इवाऽध्वरे ॥१[5] ॥ [N
बभूव चाऽस्य तद्[6] रूपं स्तूयमानस्य सीतया ।
N] गङ्गा-ह्रदस्य[7] च यथा[7] वातोद्धूतस्य शीतलम् ॥२ ॥ [N
ये च तस्य समीप-स्था वानरा दीप्यतस् तदा ।
N] ते[8] चाऽस्य शीत-भावं तं स्पृष्ट्वा[8] वि-स्मयम् आ-गताः ॥३ ॥ [N
शुद्धां च मेनिरे सीतां सम्प्र-विष्टां हुताऽशनम् ।
N] अरुन्धतीं वसिष्ठस्य पार्वतीम्[9] इव[9] शूलिनः ॥४ ॥ [N
अभवत् सर्व-सैन्यानां दिदृक्षूणां समा-गमः ।
N] सा रामं मनसा कृत्वा हुताऽशनम् उपाऽऽगता ॥५ [N
संवि-गाह्य ततो देवी दिव्य-भूषण-भूषिता ।[10]
N] हुताऽशनं प्र-विष्टा सा सर्वेषाम् एव पश्यताम् ॥६ ॥ [N
सा तप्तनवहेमाऽऽभा[11] तप्त-काञ्चन-भूषणा ।
N] विवेश मैथिली दीप्तम्[12] अग्निम्[12] अग्नि-शिखा यथा ॥[13]७ ॥ [३१
ददृशुस् ते विशालाऽक्षीं पतन्तीं हव्य-वाहनम् ।[14] [३२पू

---

१. रा$_2$ फ-०दा विसंज्ञां । भ-रुदतीमशंकां ॥ २. ब प्र भ-लंकाकांडे । रा$_2$ फ-आभ्युदयिके ॥ ३. रा$_1$ फ-०व्येशः । ४. रा$_2$ फ-वर्जं—सीतया संस्कृतस् । ५. अत आरभ्य भ-६-ष्ठश्लोकं यावन्नास्ति । ६. प्र-यद् । ७. रा$_2$-वर्जं—०स्य शिशिरे । फ-०दस्यैव यथा ॥ ८. प्र-ते चाथ शीत० । रा$_2$ फ-तथास्य तच्छीतलत्वं दृष्ट्वा ॥ ९. रा$_2$ फ-सतीमिव च । १०. प्र-नास्ति ॥ ११. भ-वर्जं—रक्तनव० । १२. रा$_2$-देवी दीप्तम् । १३. भ-पपात ज्वलने दीप्ते हुताहुतिरिवाध्वरे ॥ १४. भ-ददृशुस्तां महाभागां प्रविशंतीं हुताशनं ।

N] सीतां सर्वाणि भूतानि रुक्म-वेदीम्[1] इवोत्तमाम् ॥८ ॥ [३२
ताम् अपश्यन् सु-मनसः प्र-विशन्तीं हुताऽशनम् ।
N] ऋषयो देव-गन्धर्वा[1] यज्ञे पूर्णाऽऽहुतीम्[2] इव[2] ॥[3]९ ॥ [N
प्र-चुक्रुशुः[4] स्त्रियः सर्वास् तां दृष्ट्वा हव्य-वाहने[5] ।
N] पतन्तीं सं-स्कृतां मन्त्रैर् वसोर् धाराम् इवाऽध्वरे ॥१०॥ [३३
त्रैलोक्य-वासिनः सर्वे सिद्धाः[6] स्व-च्छन्द-चारिणः[6] ।
ते ताम् अभ्य्-एत्य ददृशुः प्र-विष्टां हव्य-वाहनम् ।
N] शास्त्रेण[8] विधिना यज्ञे मन्त्र-युक्ताम् इवाऽऽहुतिम् ॥११[7]॥[N
ततो वैश्रवणो राजा यमश्[9] च पितृभिः सह[9] ।
२] सहस्राऽक्षश् च देवेशो वरुणश् च जलेश्वरः[10] ।१२।[१२०,१२
त्रिशूल-पाणिर्[11] विश्वेशो[11] महा-देवो वृष-ध्वजः ।
३] कर्ता च सर्वस्य लोकस्य[12] ब्रह्मा च[13] भग-वान् प्र-भुः[13] ॥१३॥[३
स च राजा दश-रथो वि-मानेनाऽन्तरिक्ष-गः ।
४] आ-जगामाऽथ[14] तं देशं देवराज-सम-द्युतिः ॥१४॥ [N
ते[15] सर्वे च[15] समा-गम्य वि-मानैः सूर्य-सन्निभैः[16] ।
N] अभ्य्-अभाषंत काकुत्स्थं मधुरं नामगोत्र-तः[17]॥[18]१५॥[N
स-हस्ताऽऽभरणं[19] बाहु[19] प्र-गृह्य परिघोपमम् ।
६] अब्रवीत् त्रिदश-श्रेष्ठो राघवं प्राऽञ्जलिं स्थितम् ॥१६॥ [५
भर्ता[21] त्वं सव-लोकस्य[20] श्रेष्ठो ज्ञान-वतां वरः ।

---

१. भ—नास्ति । २. ब ल१ ल२—०तिं यथा । ३. अत आरभ्य प्र—११—शश्लोकं यावन्नास्ति । भ—शप्तां पतंतीं धरणीं त्रिदिवाद्देवतामिव ॥ ४. भ—प्रशशंसुः । ५. रा१ अ—प्रविशंतीं हुताशनं । ल१ ल२ ब—नास्ति ॥ ६. ब ल१—ये सिद्धाः स्वैरचा० । रा२ फ—ये सिद्धाश्छन्नचा० । ७. अतः परमधिकः पाठः—ल१ ल२ ब अ फ—ददृशुस्तां त्रयो लोका देवगंधर्वदानवाः । मैथिलीं तु विशालाऽक्षीं प्रविशान्तीं हुताशनम् ॥ भ—नास्ति । ८. रा२ फ—वर्जं—सांख्येन । ९. फ—वर्जं—धर्मश्च पि० । रा२—यमः स्वपि० । भ—यमश्चामित्रकर्षणः ॥ १०. भ—सहस्राक्षो महेन्द्रश्च वरुणश्चांभसां पतिः । ११. भ—स च त्रिनयनः श्रीमान् । १२. रा२ फ—जगतो । १३. रा२ फ—चैव महाप्रभुः । भ—च ज्ञानिनां वरः ॥ १४. रा२ फ भ—अभ्याजगाम ॥ १५. रा२ फ—एते सर्वे । भ—ते तु सर्वे । १६. भ—सूर्यवर्चसैः । १७. रा२ फ—पितृगो० । १८. भ—आगत्य नगरीं लंकामभिगम्य च राघवम् ॥ १९. भ—०णान् बाहून् । २०. भ—अब्रुवंस्त्रिदशश्रेष्ठा । २१. रा१ ल१ ल२ प्र ब अ—भर्ता सर्वस्य लो० । रा२—भर्तारं सर्वः० । भ—कर्ता सर्वस्य लो० ।

७] उपेक्षसे कथं सीतां पतन्तीं हव्य-वाहनम्[1] ॥१७॥ [६
कथं देव-गण-श्रेष्ठम् आत्मानं नाऽव-बुध्यसे ।
८] उपेक्षसे च वैदेहीं प्राकृतः प्राकृताम्[2] इव ॥[3]१८[4]॥[९
इत्य् उक्तो देव-राजेन[5] स्वामी लोकस्य राघवः ।
९] अब्रवीत् त्रिदश-श्रेष्ठं रामो धर्म-भृतां वरः ॥[6]१९॥[१०
आत्मानं मानुषं मन्ये रामं दशरथाऽऽत्मजम् ।
१०] योऽहं जातो यथा चाऽहं भग-वांस् तद् ब्रवीतु मे ॥[7]२०॥[११
तम् उवाच सहस्राऽक्षः श्रेष्ठोऽस्माकं पिता-महः ।[8]
N] स्वयं-भूर् भग-वान् ब्रह्मा वक्ष्यत्य्[9] एष यथा[10] भवान् ॥२१[11]॥[N
तम् उवाच ततो देवः स्वयं-भूर् अमित-द्युतिः ।
११] प्र-गृह्य रुचिरं बाहुं स्मारयन् पूर्व-दैहिकम् ॥२२[12]॥[१२
भवान् नारायणः श्री-मान् देवश् चक्राऽऽयुधः प्र-भुः । [१३पू
१२] शार्ङ्ग-धन्वा हृषी-केशः पुराणः[13] पुरुषोत्तमः ॥२३॥
अ-जितः खड्ग-भृद्[14] विष्णुः कृष्णश् चैव सनातनः[14] । [१५
१३] एक-शृङ्गो वराहस् त्वं भूत-भव्य-भवाऽन्तकः[15] ॥२४॥ [१३उ
अ-क्षरं ब्रह्म सत्यं[16] च[16] मध्ये चाऽन्ते च राघव ।
१४] लोकानां त्वं परो धर्मो विष्वक्-सेनश् चतुर्-भुजः ॥२५[17]॥[१४
सेनानीर् अग्रणीश् च त्वं वैकुण्ठश्[18] च महा-भुजः[18] ।[19]
१५] प्र-भवश् चाऽप्य्अयश् च त्वम् उपेन्द्रो मधु-सूदनः ॥[20]२६॥[१६
वृष्णि-गर्भो[21] धृताऽऽर्तिस्[22] त्वं[22] पद्म-नाभो भवाऽन्तकृत्[23] ।

---

१. भ-०हने ॥ २. रा१ अ-०तीमिव । ३. भ-शंकसे चैव वैदेहीमदृष्ट्वा प्राकृतो यथा। ४. प्र-नास्ति ॥ ५. भ-लोकपालैस्तु । ६. प्र-अथ देवगणश्रेष्ठं रामो ध० । भ-०शश्रेष्ठान्राघवः प्रांजलिः स्थितः ॥ ७. भ-योहं देवो यतश्चैव तद्भवान्वक्तुमर्हति ॥ ८. प्र-नास्ति । ९. रा२-वर्ज—वक्षत्य् । १०. ल१ ल२ ब अ प्र-यतो । रा२-ततो । ११. भ-नास्ति ॥ १२. भ-इति ब्रुवाणं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः । अब्रवीच्छृणु काकुत्स्थ सत्यं सत्यपराक्रम ॥ १३. भ-पुरुषः । १४. रा२ फ-शंखभ्राजिष्णुः कृ० । भ-खड्गधृक् जिष्णुर्विष्णुः कृष्णो महाबलः । १५. रा१ ल१ ल२ ब अ-यज्ञनाभो रणाकृतिः । प्र-यज्ञनाभो रणान्तकृत् । रा२-देवदेवो महाभुजः । भ-भूतो भव्यः सपत्नजित् ॥ १६. रा१ ल१ ल२ ब अ प्र-संपन्नं । फ-सत्यं ते । १७. रा२-नास्ति ॥ १८. भ-बुद्धिश्शिता क्षमा दमः । १९. ल१ रा२-नास्ति । २०. फ-नास्ति ॥ २१. रा१ ल१ ल२ ब अ-विष्णुगर्भो । भ-कृतकर्मा । २२. प्र-पदातिस्त्वं । भ-महेंद्रश्च । २३. रा१ ब-नरांतकृत् । ल१ ल२ अ भ-रणांत० ।

१६] शरण्यं शरणं च त्वाम् आहुः सेन्द्राः[1] सुरर्षयः[2] ॥२७॥ [१७
ऋक्-साम-शृङ्गो वेदाऽऽत्मा शत-जिह्वोऽमरर्षभः । [१८पू
१७] त्वं यज्ञस् त्वं वषट्-कारस् त्वम् ओं-कारः परं-तपः ॥२८॥ [१९पू
ऋत-धामा वसुः पूर्वो वसूनां च प्रजा-पतिः ।[3] [N
१८] त्रयाणाम् अपि लोकानाम् आदि-कर्ता स्वयं-प्रभुः ॥२९॥
रुद्राणाम् अष्टमो रुद्रः साध्यानाम् अपि पञ्चमः । [१८उ
१९] अश्विनौ चाऽपि कर्णौ ते चन्द्र-सूर्यौ[4] च चक्षुषी ॥३०॥ [N
अन्ते चाऽऽदौ च मध्ये च दृश्यसे त्वं परं-तप । [N
२०] प्र-भवं नि-धनं चाऽपि न विद्मः[5] को भवान् इति ॥३१॥ [१९उ
दृश्यसे[6] सर्व-भूतेषु गोषु च ब्राह्मणेषु च ।
२१] दिक्षु सर्वासु गगने पर्वतेषु[7] वनेषु[7] च ॥३२॥ [२०
सहस्र-चरणः श्री-माञ् छत-शीर्षः सहस्र-दृक्[8] ।
२२] त्वं धारयसि भूतानि वसु-धां च[9] स-पर्वताम्[9] ॥३३॥ [२१
अन्तः पृथिव्यां[10] सलिले दृश्यसे त्वं महोरगः ।
२३] त्रींल् लोकान् धारयन्[11] राम देव-गन्धर्व-दानवान्[12] ॥३४॥ [२२
अहं ते हृदयं राम जिह्वा देवी सरस्वती ।
२४] देवा रोमाणि गात्रेषु निर्-मितास्[13] ते स्व-मायया[13] ॥[14]३५॥ [२३
नि-मेषस् ते[15] स्मृतो[15] रात्रिर् उन्-मेषो दिवसः स्मृतः[16] ।[14]
२५] संस्-कारस् तेऽभवद् रहो न तद् अस्ति त्वया विना ॥३६॥ [२४
जगत् सर्वं शरीरं ते स्थैर्यं ते वसुधा-तलम्[17] ।
२६] अग्निः कोपः प्र-सादस् ते सोमः श्रीवत्स-लक्षणः[18] ॥३७॥ [२५
त्वया लोकास् त्रयः क्रान्ताः पुराणैर् वि-क्रमैस् त्रिभिः ।
२७] महेन्द्रश् च[19] कृतो राजा[19] बलिं बद्ध्वा महाऽसुरम् ॥३८॥ [२६

---

१. भ–देवाः । २. रा१ ल१ ल२ रा२–महर्षयः । भ–सवासवाः ॥ ३. ल१ प्र–ऋतपूर्वं वसूनां च पावकश्च प्र० ॥ ४. भ–चंद्रादित्यौ ॥ ५. भ–वर्जं—विदुः ॥ ६. रा१ ल१ अ रा२–दृश्यते । ७. भ–सागरेषु नगेषु ॥ ८. रा फ–०त्पात् । ९. रा२–चैव पर्वतात् ॥ १०. रा२ फ भ–०व्याः । ११. रा१ ल१ ल२ व अ–चार० । १२. भ–देवमानुषपन्नगान् ॥ १३. भ–०तानि स्वयंभुवा । १४. अ–नास्ति ॥ १५. भ–तेऽभवद् । १६. ल१ ल२ प्र रा२–तथा । फ–त्वया ॥ १७. रा२ फ–०ले । १८. रा१ ल१ ल२ अ प्र–०लक्ष्मणः । रा२–०लांछनः ॥ १९. रा२ फ–तु कृतो वीर ॥

लोकान् सं-हृत्य काले त्वं नि-वेश्याऽऽत्मनि निश्-चलम् ।
N] कुर्वन् नैकाऽर्णवं घोरं दृश्याऽदृश्येन वर्त्मना ॥३९[1]॥ [N
त्वया सिंह-वपुः कृत्वा हिरण्य-कशिपुर् हतः ।
N] नमस् तुभ्यं भग-वते पुरुषाय महाऽऽत्मने ॥४०॥ [N
सर्व-भूत-निवासाय वासुदेवाय[2] साक्षिणे ।
N] नमस् त आदि-देवाय[2] साक्षि-भूताय ते नमः ॥४१॥ [N
नारायणाय ऋषये[3] नराय हरये नमः ।
N] त्वम् अश्व-वदनो भूत्वा पाताल-तलम् आ-स्थितः ॥४२॥ [N
N] सं-भूतं[4] परमं दिव्यं[5] दहस्य् अम्भः पुनः पुनः ।
यत् परं श्रूयते ज्योतिर् यत् परं श्रूयते तपः ॥४३॥ [N
२८] यत् परं परमश्[6] चैव[7] परमाऽऽत्मेति कथ्यते ।
२९पू] परो मोक्षः परं यच्[8] च तत् त्वम् एव[9] नि-गद्यसे ॥४४॥ [N
N] हव्यं[10] कव्यं पवित्रं च प्राऽऽप्तिः[10] स्वर्गाऽपवर्गयोः ।
२९उ] स्थित्य्-उत्पत्ति-विनाशानां त्वाम्[11] आहुः प्र-कृतिं पराम्[11] ॥४५॥ [N
यज्ञश् च यजमानश् च होता चाऽध्वर्युर् एव च ।
N] भोक्ता यज्ञ-फलानां च त्वम् एव परि-गीयसे ॥४६॥ [N
सीता लक्ष्मीर् भवान् विष्णुर् देवश्[12] चक्राऽऽयुधः प्र-भुः[12] ।
३०] वधाऽर्थं रावणस्येह प्र-विष्टो मानुषीं तनुम् ॥४७॥ [२७
तद् इदं नस् त्वया कार्यं कृतं धर्म-भृतां वर ।
३१] नि-हतो रावणो राम प्र-हृष्टो[13] दिवम्[14] आऽक्रमत्[14] ॥४८॥ [२८
३२पू] अ-मोघं देव वीर्यं ते न ते मोघः परि-श्रमः[15] ।[16] [२९पू
अ-मोघास् ते भविष्यन्ति भक्ति-मन्तो नरा भुवि ॥४९॥ [३०

---

१. रा$_2$ फ भ—अत आरभ्य ४२-शश्लोकपूर्वार्धं यावन्नास्ति ॥ २. अ—नास्ति ॥ ३. ल$_1$ ब प्र—हरये ॥ ४. फ—संभृतो । ५. फ—हर्षं ॥ ६. रा$_2$ फ—वर्जं—परतश् ॥ ७. ल$_1$ ल$_2$ ब प्र—चापि । ८. रा$_2$ फ—वर्जं—यश् । ९. रा$_1$ ल$_1$ ल$_2$—एतन् ॥ १०. रा$_2$ फ—हव्यकव्यप्रवृत्तिं च शक्तिः । ११. रा$_2$ फ—त्वमेव प्रकृतिः परा ॥ १२. रा$_2$ फ—देवः कृष्णः प्रजापतिः ॥ १३. रा$_2$ फ—वर्जं—प्रविष्टो । १४. रा$_1$—दिवमाक्रतात् । प्र ब—दिवसां क्रमात् । ल$_1$ ल$_2$ अ भ—दिवमाक्रमात् ॥ १५. रा$_1$ ब अ फ—शमस्तव । ल$_1$ ल$_2$—श्रमस्तव । प्र—च संस्तवः । १६. अतः परमधिकः पाठः—रा$_2$ फ—अमोघं दर्शनं राम न च मोघस्तवस्तथा ॥

३३] देव[1] त्वां देवतां[1] भक्ताः पुराणं[2] पुरुषोत्तमम्[2] ।[3] [३१पू
३४उ] मृताः स्वर्गं[4] गमिष्यन्ति कीर्तित्वा नाऽत्र सं-शयः ।।५०[4]।।[३२उ

इत्यार्षे रामायणे युद्ध-काण्डे[5] ब्रह्म-प्रोक्तो राम-स्तवो[5]
नामाष्टानवतितमः सर्गः ॥ ९८ ॥

---

## [व–१०३]= [ एकोनशततमः सर्गः ]= [दा–१२१]

N] ततः प्रीत-मना रामः श्रुत्वा तां ब्रह्मणो गिरम्[6] ।
दध्यौ[7] मुहूर्तं धर्माऽऽत्मा हर्ष-व्याकुल-लोचनः[8] ।।१[9] ।। [N
१] एवं[10] श्रुत्वा शुभं वाक्यं पितामह-मुखोद्गतम्[11] ।
N] अङ्केनाऽऽदाय वैदेहीम् उत्-पपात[12] विभावसुः[13] ।।२ ।। [१
तरुणाऽऽदित्य-संकाशां तप्त-काञ्चन-भूषणाम् ।
३] रक्ताऽम्बर-धरां बालां नील-कुञ्चित-मूर्धजाम्[14] ।।३ ।। [३
अक्लिष्ट-माल्याऽऽभरणां तथा-रूपाम् अ-निन्दिताम् ।
४] ततो[15] रामाय वैदेहीम् अङ्के कृत्वा विभावसुः ।।४ ।। [४
अब्रवीत् तु[16] तदा रामं[17] साक्षी[18] लोकस्य[19] पावकः[19] । [५
५] एषा ते राम वैदेही पापम् अस्या न विद्यते ।।५[20]।। [६
नैव वाचा न मनसा नैव[21] बुद्ध्या न चक्षुषा[21] ।
६] सु-वृत्ता वृत्त-शौण्डीर त्वां सीताऽभ्य्-अचरच् छुभा ।।[22]६ ।। [७

---

१. रा२ फ–ये त्वां देववरं । २. रा१ फ–०णपु० । ३. अतः परमधिकः पाठः—रा२ फ भ–इदमार्षं स्तवं दिव्यमितिहासं पुरातनम् । ४. रा२ फ भ–ये नराः कीर्तयिष्यंति नास्ति तेषां पराभवं । अतः परमधिकश्च पाठः—कथमिव पराभवं व्रजेयुः पुरुषाश्रयेण युक्ताः । नहि जगति चतुर्भुजाश्रयाणां त्रिदश इहास्ति वरप्रदो बलिष्ठः ।। ५. प्र–लंकाकांडे ब्रह्म० । रा२ फ–आभ्युदयिके पर्वणि महापुरुषस्तवो ।। भ–लंकाकांडेऽमोघस्तवदेवसमागमो ॥ ६. भ–नास्ति । ७. रा२ फ–वर्जं—ध्यात्वा । भ–अभून् । ८. रा१ ल१ ल२ ब अ प्र–गृहीत्वा जनकात्मजाम् । भ–रामो बाष्पाकुलेक्षणः । ९. अतः परमधिकः पाठः—रा२ फ भ–विधूयाग्निचितां तां तु जानकीमन्ववेद्य च । उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ॥ १०. भ–एतद् । ११. भ–०हसमीरितं । १२. रा२ फ–स्वसुतेव । १३. भ–ससंभ्रमः ।। १४. ल१ ल२ ब–नीलां कु० ।। १५. भ–ददौ ।। १६. भ–च । १७. रा१ ल१ ल२ ब अ–रामः । १८. रा१ अ–पावकं । ल१ ल२ ब–साक्षिणं । १९. रा२ फ भ–वर्जं—लोकपावनं।। २०. रा१ ल१ल२ ब अ प्र–अत आरभ्य २०-शश्लोकपूर्वार्धं यावन्नास्ति ।। २१. भ–न बुद्ध्या न च च० । २२. भ–सुवृत्ता वृत्तसंपन्ना न त्वामभिचरत्यसौ ॥

रावणेनाऽपि नीतैषा वीर्योत्सिक्तेन रक्षसा ।
७] त्वया वि-रहिता सीता[1] वि-वशा जनकाऽऽत्मजा[2] ॥७ ॥ [८
रुद्धा चाऽन्तः-पुरे दीना त्वच्-चित्ता त्वत्-परायणा ।
८] रक्षिता राक्षसीभिश् च घोराभिर्[3] घोर-बुद्धिभिः[3] ॥८ ॥ [९
प्र-लोभ्यमाना वि-विधं भर्त्स्यमाना च मैथिली ।
९] तन्[4] न चिन्तयते[4] रक्षस् त्वद्-गतेनाऽन्तर्-आत्मना ॥९ ॥ [१०
वि-शुद्धां[5] वि-रजस्कां त्वं[5] प्रति-गृह्णीष्व मैथिलीम्[6] ।
१०] न किं-चिद् अपि वक्तव्यम् अहम् आ-ज्ञापयामि ते ॥१०॥ [११
प्र-च्छन्नं वा प्र-काशं वा सर्वम् अग्निर् अवेक्षते[7] ।
११] तस्मान्[8] मे[8] विदिता सीता प्रत्य्-अक्षम् अनु-पश्यतः ॥११॥ [N
एवम् उक्तो महा-तेजा धृति-मान् उरु-विक्रमः ।
१२] उवाच[9] त्रिदश-श्रेष्ठं रामो धर्म-भृतां वरः[10] ॥१२॥ [१३
भग-वन् हव्यकव्येश लोक-पावन पावक ।
N] शृणु मेऽस्याः परि-त्यागे कारणं त्वं विभावसो ॥१३॥ [N
जानाम्य् एताम् अहं साध्वीम् अनु-रक्तां जितेन्द्रियाम् ।
N] दृढ-व्रत-समाचारां वाङ्-मनः-कर्म-संयताम्[11] ॥१४॥ [N
यस् तु मायां समा-रुह्य जिह्म-मार्गेण रक्षसा ।
N] मया वि-रहिता बाला प्र-सह्याऽप-हृता[12] बलात् ॥१५॥ [N
न ते शङ्का भवेल् लोके स्त्री-त्वं प्रति ममैव[13] हि[13] ।
N] अवश्यम् अपि दुर्-वृत्ता राक्षसाश् च वि-धर्मिणः ॥१६॥ [N
अवश्यं त्रिषु[14] लोकेषु न[15] सीता पापम्[15] अर्हति ।
१३] दीर्घकालोषिता हीऽयं रावणाऽन्तःपुरे शुभा ॥१७॥ [१४
बालिशो बत[16] कामाऽऽत्मा रामो दशरथाऽऽत्मजः ।
१४] इति वक्ष्यति मां लोको जानक्या ह्य् अ-विशोधने ॥[17]१८॥ [१५
सीतायाश् चाऽप्य् उप-क्रोशश् चारित्र-प्रतिगर्हितः[18] ।

---

१. भ–दीना । २ भ–निर्जनाद्वनात् ॥ ३. भ–विकृताभिः समंततः ॥ ४. भ–न चाथाचिंतयद् ॥ ५. भ–विशुद्धभावां निष्पापां । ६. भ–राघव ॥ ७. भ–उदीक्षते । ८. रा₂ फ–तस्मात्ते ॥ ९. भ–अब्रवीत् । १०. फ–वरम् ॥ ११. भ–आत्मनो धर्मसंयुताम् ॥ १२. रा फ–प्रमथ्याप० ॥ १३. भ–हुताशन ॥ १४. रा₂ फ–चापि । १५. रा₂ फ–सीता पावनम् ॥ १६. भ–खलु । १७. भ–इति वक्ष्यंति मां संतो जानकीमविशोध्य वै ॥ १८. भ–०र्हितम् ।

१५] आत्मनश् चाऽयशो लोके युगपत् सम्प्र-मार्जितम् ॥१९॥ [N
अनन्य-हृदयां भक्तां मम[1] चित्ताऽनुवर्तिनीम्[1] ।
१६] अहम् अप्य् अव-गच्छामि मैथिलीं जनकाऽऽत्मजाम् ॥२०॥ [१६
सम्प्रत्ययाऽर्थं लोकानां त्रयाणां तेन[2] हेतुना[2] ।
१७] हुताऽशनम्[3] इयं सीता[3] प्र-विशन्ती न[4] वारिता[4] ॥२१॥ [१७
इमाम् अपि विशालाऽक्षीं रक्षितां स्वेन तेजसा ।
१८] रावणो नाऽति-वर्तेत[5] वेलाम् इव महोदधिः ॥२२॥ [१८
न हि शक्तः सु-दुष्टाऽऽत्मा मनसाऽपीऽह मैथिलीम् ।
१९] सं-स्पर्शयितुम्[6] अ-प्राऽऽप्यां दीप्ताम् अग्नि-शिखाम् इव[7] ॥२३[8]॥ [१९
नेयम् अर्हति चैश्वर्यं[9] रावणाऽन्तःपुरे शुभा ।
२०] अ-त्याज्या[10] हि मया सीता भास्-करेण[11] प्र-भा यथा ॥२४॥ [२०
वि-शुद्धा त्रिषु लोकेषु मैथिली जनकाऽऽत्मजा ।
२१] न हि[12] हातुं[12] मया शक्या कीर्तिर् आत्म-वता[13] यथा ॥२५॥ [२१
अवश्यं च वचः कार्यं सर्वेषां भवतां मया ।
२२] स्निग्धानां लोक-नाथानाम्[14] एवं[15] हि वदतां हितम्[15] ॥२६॥ [२२

इत्य् एवम् उक्त्वा वि-जयी महा-बलः
प्र-शस्यमानः सु-कृतेन[16] कर्मणा ।
सम्-एत्य रामः प्रियया महा-यशाः
२३] सुखी सुखाऽर्हः स[17] बभूव राघवः[17] ॥२७॥ [२३

इत्यार्षे रामायणे युद्ध-काण्डे[18] सीता-शुद्धि[19] र्नामैकोन-
शततमः सर्गः ॥ ९९ ॥

---

१. भ–मच्चित्तपरिव० । २. रा$_2$ फ–यत्र हे० । भ–अत्र संसदि । ३. भ–उपेक्षिता हि वैदेही । ४. रा$_2$ फ–न रक्षिता । भ–हुताशनं ॥ ५. भ–नाभिव० ॥ ६. रा$_1$ ल$_1$ ल ब अ प्र–संदूषयितुम् । भ–प्रमोहयितुम् । ७. रा फ–यथा । ८. अतः परमधिकः पाठः—रा$_2$ फ भ–लक्ष्मणस्य हि शापेन हता हीयं न संशयः । पर्णशालागता बाला परुषं यदवोचत ॥ ९. भ–दौश्वर्यं । १०. रा$_2$ फ भ–अनन्या । ११. रा$_2$ फ–०रस्य ॥ १२. रा$_2$ फ भ–विहातुं । १३. ल$_1$ ल ब प्र–०वतो ॥ १४. भ–लोकपालानाम् । १५. रा$_1$ अ–चैव हि निखिलं मतम् । ल$_1$ ल$_2$ ब–दैवं निखिलं मतम् । प्र–दैवं निखिलं महत् । भ–एवं विब्रुवतां हितं ॥ १६. रा$_1$ ल$_1$–स्वकृ० । १७. भ–सुसुखं मुमोद ॥ १८. प्र भ–लंकाकांडे । रा$_2$ फ–आभ्युदयिके । १९. रा$_2$ फ–अग्निदर्शनं ॥

## [वं-१०४]= [ शततमः सर्गः ] =[ दा-१२२ ]

एतच् छ्रुत्वा शुभं वाक्यं राघवस्य महाऽऽत्मनः ।
१] ततो रामं शुभं[१] वाक्यं व्या-जहार महेश्वरः[२] ॥१ ॥[१
सं-मतं[३] मधुरं श्लक्ष्णम् अर्थ-वद् धर्म-संहितम्[४] ।
२] स्वयं-भूश् चाऽपि भग-वान् प्र-हृष्टेनाऽन्तर्-आत्मना[५] ॥२ ॥[N
पुष्कराऽक्ष महा-बाहो कृतं[६] कर्म महत् त्वया[६] ।
३] दिष्टया शत्रुस् त्वया पापः सुराणां रावणो हतः ॥[७]३ ॥[२
दिष्टया सर्वस्य लोकस्य प्र-वृद्धं दारुणं तमः ।
४] समुद्-[८]धूतं त्वया सं-ख्ये[८] राम रावण-जं महत् ॥४ ॥[३
आ-श्वास्य भरतं[९] दीनं कौसल्यां च तपस्विनीम्[९] ।
५] कैकेयीं च सु-मित्रां च दृष्ट्वा[१०] लक्ष्मण-मातरम् ॥५ ॥[४
प्राऽऽप्य राज्यम्[११] अयोध्यायां[११] नन्दयित्वा सुहृज्-जनम्[१२] ।
६] इक्ष्वाकूणां कुले वंशं स्थापयित्वा महा-बल[१३] ॥६ ॥[५
इष्ट्वा तुरग-मेधेन[१४] प्राऽऽप्य चाऽनू-उत्तमं[१५] यशः ।
७] ब्राह्मणेभ्यो धनं दत्त्वा त्रि-दिवं गन्तुम् अर्हसि ॥७ ॥[६
एष राजा विमान-स्थः[१६] पिता दश-रथस् तव ।
८] काकुत्स्थ मानुषे लोके गुरुस् तव महा-यशाः ॥८ ॥[७
इन्द्र-लोकं[१७] गतः[१७] श्री-मांस् त्वया पुत्रेण तारितः[१८] ।
९] लक्ष्मणेन सह भ्रात्रा[१९] त्वम्[२०] एनम् अभि-वादय[२०] ॥९ ॥[८
महादेव-वचः[२१] श्रुत्वा काकुत्स्थः सह-लक्ष्मणः ।
१०] विमान-शिखर-स्थस्य पितुः पादौ सम्-अस्पृशत् ॥[२२]१०॥[९

---

१. रा$_{२}$ फ भ-प्रियं। २. भ-पितामहः ॥ ३. फ-हृद्गतं। भ-संस्कृतं । ४. अतः परमधिकः पाठः-भ-रामं तत्र महातेजा प्रहृष्टो वाक्यमब्रवीत् ॥ ५. ल$_{२}$ अ प्र-सुहृ० । ६. भ-शृणु वाक्यं परंतप। ७. भ-दिष्ट्या कृतमिदं कर्म त्वया धर्मभृतां वर ॥ ८. रा$_{२}$ फ-त्वत्तेजसा विनिहतं । भ-समुद्धृतं त्व०॥ ९. रा$_{२}$ फ-भरतादींस्त्वं कौसल्यामभिवाद्य च । १०. रा$_{२}$ फ-देवीं ॥ ११. रा$_{२}$ फ-राज्यश्रियं दीप्तां । १२. रा$_{१}$-०नान् । १३. रा$_{२}$ फ-०ली । भ-वर्जं—०लः ॥ १४. रा$_{२}$ फ-वर्जं—०धैश्च । १५. प्र-चानन्तरं ॥ १६. भ-महातेजाः ॥ १७. रा$_{१}$ ल$_{१}$ ल$_{२}$ अ-०लोकगतः । १८. भ-भावितः । १९. रा$_{१}$ ल$_{१}$ ल$_{२}$ प्र-भ्राता । २०. रा$_{१}$-दृष्ट्वा स पितरं तदा । ल$_{१}$-त्वमेवमभि० ॥ २१. रा$_{१}$ ल$_{१}$ ल$_{२}$ ब अ-महेश्वरवचः । प्र भ-पितामहवचः । २२. रा$_{२}$ फ भ-विमानस्थस्य सहसा प्रणाममकरोत्पितुः ॥

दीप्यमानं स्वया[1] लक्ष्म्या विरजोऽम्बर-धारिणम्[2] ।
११] लक्ष्मणेन सह भ्रात्रा ददर्श[3] पितरं तदा [१०
N] आसीनम् आसने दिव्ये दिव्याऽऽभरण-भूषितम् ॥११॥ [N
हर्षेण महताऽऽविष्टो विमान-स्थो मही-पतिः
१२] प्राणैः प्रिय-तरौ दृष्ट्वा पुत्रौ दश-रथस् तदा । [११
स्नुषां च सीतां सं-पश्यन् परं[4] वि-स्मयम् आ-गतः[4] ॥१२॥ [N
१३] आ-रोप्याऽङ्के महा-बाहुर् वराऽऽसन-गतः प्र-भुः ।
बाहुभ्यां सम्परि-ष्वज्य ततो वाक्यम् उवाच[5] ह[5] ॥१३[6]॥ [१२
१४] न मे बहु-मतः स्वर्गः सं-वासो[7] वा सुरर्षभैः[7] ।[8]
१५पू] त्वया राम[9] वि-हीनस्य सत्यं प्रति-शृणोमि[10] ते[10] ॥१४॥ [१३
पश्यतस् त्वां वन-गतं क्लिश्यन्तं चीर-वाससम् ।
N] स्वर्गो बहु-मतो नाऽयं सम-त्वं च सुरैर् इदम् ॥[11]१५॥ [N
अद्य त्वां निहताऽमित्रं दृष्ट्वा सम्पूर्ण-मानसम् ।[12]
N] निस्तीर्ण-वनवासं च प्रीतिर् अस्ति परा मम ॥१६[13]॥ [१४
१५उ] कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर ।
तदा[14] प्रव्रजनाऽर्थं ते[14] स्थितानि हृदये मम ॥[15]१७॥ [१५
१६] त्वां च दृष्ट्वा कुशलिनं परि-ष्वज्य च राघव ।
अद्य दुःखाद् वि-मुक्तोऽहं नी-हाराद् इव भास्करः ॥१८[15]॥ [१६
१७] तारितोऽहं त्वया पुत्र सु-पुत्रेण महाऽऽत्मना ।
अष्टा-वक्रेण धर्माऽऽत्मा पिता[16] वै तारितो यथा ॥१९॥ [१७
१८] इदानीम् अव-गच्छामि[17] यथा सौम्य सुराऽसुरैः ।
वधाऽर्थं रावणस्य त्वम् इह[18] चैवाऽव-तारितः[18] ॥२०॥ [१८
१९] सिद्धाऽर्था खलु कौसल्या[19] या त्वां राम गृहं गतम्[19] ।

---

१. रा$_2$ फ भ–वर्जं—स्वयं । २. रा$_2$ फ भ–दिवाकरमिवोदितं । ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–दृष्ट्वा स ॥ ४. फ–प्रहर्षं परमं गतः ॥ ५. भ–समाददे । ६. रा$_2$ फ–नात्युच्चैः स्थितः काकुत्स्थो भूमिमस्पृश्य पार्थिवः । पुत्रं दशरथो राजा सांत्वयन्निदमब्रवीत् ॥ ७. रा$_2$ फ–संग्रामो वा सुरर्षिभिः । ८. अतः परमधिकः पाठः—भ–तदा ते प्रोष्यतः पुत्र वनं प्राणा गता मम । ९. भ–पुत्र । १०. भ–मे वचनं शृणु ॥ ११. रा$_2$–वर्जं—नास्ति । १२. फ–नास्ति । १३. भ–नास्ति ॥ १४. भ–तव प्रव्रजनार्थं वै । रा$_2$–तथा प्रवर्तनार्थं ते । १५. रा$_2$ फ भ–वर्जं—नास्ति ॥ १६. रा$_2$ फ–शिविर् ॥ १७. रा$_2$ फ–वर्जं—चैव जानामि । १८. रा$_2$–वनवासाय दीक्षितः । भ–इतो गामवतारितः ॥ १९. ल$_1$ रा$_2$–नास्ति ।

वनान्[१] नि-वृत्तं[१] सं-हृष्टा ईक्षते शत्रु-भेदनम्[२] ॥[३]२१॥ [१९
२०] सिद्धाऽर्थाः खलु ते राम नरा ये त्वां पुरीं गतम् ।[३]
राज्ये[४] चैवाऽभि-षिक्तं[४] वै[५] द्रक्ष्यन्ति पुरुषोत्तमम्[५] ॥२२॥ [२०
२१] धन्योऽयं लक्ष्मणो भ्राता तव धर्म-परायणः ।
यस्य[६] कीर्तिर् दिवं खं च[६] महीं चाऽऽवृत्य तिष्ठति ॥२३[७]॥ [N
२२] अ-पापा पुत्र वैदेही धर्म-ज्ञा धर्म-दर्शिनी[८] ।
देवाः सर्वस्य मर्त्यस्य कुशलाऽकुशलं विदुः ॥२४॥ [N
२३] अहं च त्वां वदाम्य्[९] एष[९] पिता दश-रथः स्वयम् ।
निः-शङ्को[१०] गत-हृल्-लेखः प्रति-गृह्णीष्व जानकीम् ॥२५॥ [N
२४] अनु-रक्तेन विदुषा[११] शुचिना धर्म-चारिणा ।
इच्छेयम् त्वाम् अहं द्रष्टुं भरतेन समा-गतम् ॥[१२]२६॥ [२१
२५] कुमारो लालनीयस् ते शत्रु-घ्नो दयितो मम ।
यथा पिता तथा भ्राता ज्येष्ठो भवति धर्म-तः ॥२७॥ [N
२६] चतुर्दश समाः सौम्य[१३] वने[१४] निर्-यातितास् त्वया[१४] ।
वसता सीतया[१५] सार्धं[१५] सत्-प्रीत्या[१६] लक्ष्मणेन च[१६] ॥२८॥ [२२
२७] विमुक्त-वनवासेन[१७] प्रति-ज्ञा पूरिता[१८] त्वया[१९] ।
सत्य-वादी त्व्[२०] अहं[२०] पुत्र सत्-पुत्रेण[२१] कृतोऽद्य[२२] वै[२२] ॥२९॥ [२३
२८] रावणं च रणे हत्वा देवास्[२३] ते[२३] परि-तोषिताः ।
N] मत्-प्रसादाद् यशः प्राऽऽप्य दीर्घम् आयुर् अवाऽऽप्नुहि ॥[२४]३०॥ [N
कृतं[२५] कर्म यशः-श्लाघ्यम् अनु-रक्ता[२५] वयं गुणैः ।

---

१. रा$_2$ फ–व्रताद्विमुक्तं । २. भ–शत्रुसूदनं । ३. ल$_1$ ल$_2$ ब–नास्ति ॥ ४. रा$_2$ फ–जलार्द्रमभि० । ५. रा$_2$–च द्रक्ष्यंति वसुधाधिपं ॥ ६. रा$_2$–अस्य कीर्तिर्दिवं याता । ७. फ–नास्ति ॥ ८. रा$_2$ फ–धर्मवत्सला ॥ ९. रा$_2$ फ–ब्रवीम्येवं । १०. फ भ–वर्जं—निःशोको ॥ ११. रा$_2$ फ–वर्जं—बालेन । १२. रा$_2$ फ–भरतेन यथान्याय्यं समागच्छस्व तले महान् ॥ १३. रा$_2$ फ भ–वर्जं—वीर । १४. रा$_2$ फ–त्वया निर्यातिताः स्वयम् । १५. भ–वर्जं–मन्नियोगेन । ल$_1$–सन्नियोगेन । १६. रा$_1$ ल$_2$ ब अ–मत्प्रीत्या ल० । ल$_1$–मत्प्रीत्या तं च लक्ष्मणे । प्र–मत्प्रीत्या चैव लक्ष्मण । रा$_2$ फ–तेनाऽहं पूजितो ह्यसि ॥ १७. रा$_2$ फ–निवृत्तव० । १८. रा$_2$ फ–सफला । १९. ल$_1$ ल$_2$ ब–मम । रा$_2$ फ–कृता । २०. रा$_2$–वर्जं—त्वया । २१. रा$_2$–वर्जं—सत्यपु० । २२. रा$_2$–वर्जं—०तो ह्यहं ॥ २३. रा$_2$ भ–देवताः । २४. अतः परमधिकः पाठः—रा$_2$ भ–वर्जं—स्वच्छंदतस्ते वैदेह्या वियोगो भविता पुनः ॥ २५. फ भ–वर्जं—कृतकर्मा यशःश्लाघ्यः स त्वं रक्ता ।

२९] भ्रातृभिः सह राज्य-स्थो दीर्घम् आयुर् अवाऽऽप्नुहि ॥३१[1]॥ [२४उ
ईदृशो हि सुतो यस्य कीर्ति-मान् अमित-द्युतिः ।
३०] मृतोऽपि जीवति व्यक्तं यथाऽहं तारितस् त्वया ॥३२[2]॥ [N
इति ब्रुवाणं राजानं[3] रामः प्राऽञ्जलिर् अब्रवीत् । [२४उ
३१] भोस् तातऽनु-गृहीतोऽस्मि यत् प्रीतोऽसि भवान् गुरुः ॥[4]३३॥ [N
३२पू] इदम् एकं त्व् इहेच्छामि भवत्-प्रीत्या[5] वरं हितम् ।
N] दीयमानम् अभि-प्रेतं ममाऽनुग्रह-कारणात्[6] ॥३४[5]॥ [N
३२उ] कुरु प्र-सादं धर्म-ज्ञ कैकेय्या भरतस्य च ।
स-पुत्रां त्वां त्यजामीऽति यद् उक्ता कैकयी तदा[7] ॥[8]३५॥ [२५
३३] स शापः कैकयीं घोरः स-पुत्रां न स्पृशेत् प्र-भो । [२६
N] तत् तस्याः कुरु धर्म-ज्ञ प्र-सादं भरतस्य च ॥[9]३६॥ [N
तथेति स महा-बाहुर् उक्त्वा चैनं कृताऽञ्जलिम् ।[10] [२७
३४] किम् अन्यत् करवाणीऽति मति-मांश् चेदम् अब्रवीत् ॥[11]३७॥ [N
कृतम् इत्य् अब्रवीद् रामः शिवेनेच्छस्व माम् इति ।[11] [N
३५] लक्ष्मणं च परि-ष्वज्य पुनर् वाक्यम् उवाच ह ॥[12]३८॥ [२७उ
भ्रातृ-शुश्रूषया युक्त एवम् एव सदा भव ।
N] अस्य प्र-सादाद् विपुलां कीर्तिं त्वं समवाऽऽप्स्यसि ॥३९[13]॥ [N
धर्मं प्राऽऽप्स्यसि धर्म-ज्ञ यशश् च विपुलं भुवि ।[14]
३६] रामे प्र-सन्ने स्वर्गं च[15] महिमानं तथोत्तमम्[15] ॥४०॥ [२९
रामं शुश्रूष भद्रं ते सुमित्राऽऽनन्द-वर्धन ।
३७] रामः[16] सर्वस्य[16] लोकस्य हितेषु[17] नि-रतः[17] सदा ॥४१॥ [३०
एते सेन्द्रास् त्रयो लोकाः सिद्धाश् च परमर्षयः ।
३८] अभि-वाद्य[18] महाऽऽत्मानः स्तुवन्ति[18] पुरुषोत्तमम् ॥४२॥ [३१
एतावद् उक्तम् अ-मृतम् अ-क्षरं ब्रह्म शाश्वतम् ।[19]

---

१. रा₂–नास्ति ॥ २. रा₂ फ–नास्ति ॥ ३. रा₂ फ–नृपतिं । ४. रा₂–नास्ति ॥ ५. फ भ–वर्जं—०प्राप्स्या । ६. रा१ अ–०हकाम्यया ॥ ७. भ–त्वया । ८. अ रा₂ फ–नास्ति ॥ ९. अ रा₂ फ–नास्ति ॥ १०. रा₂ फ–तथेत्येव पिता पुत्रं रामं दशरथोऽब्रवीत् । ११. रा₂ भ–नास्ति ॥ १२. रा₂–नास्ति । फ–ततो लक्ष्मणमामंत्र्य पिता दशरथोऽब्रवीत् ॥ १३. भ–नास्ति ॥ १४. रा₂ फ–नास्ति । १५. रा₂ फ–वाप्यतुलं समवाप्स्यसि ॥ १६. रा₂ फ भ–रामो हि सर्वलो० । १७. ल१ल₂ ब–०ते च नि० । रा₂ फ–प्रियेष्वभिरतः । भ–हितेष्वभिरतः ॥ १८. रा फ–अर्चयंति महात्मानं शाश्वतं ॥ १९. रा₂ फ–एतत्तदुक्तमव्यग्रमक्षरं ब्रह्मनिर्मितम् ।

३९] देवानां हृदयं सौम्य[1] गुह्यं रामः[2] सनातनम्[2] ॥४३॥ [३२
४०पू] अवाऽऽप्तं धर्म-चरणं यशश् च विपुलं त्वया ।
N] रामं शुश्रूषता[3] भक्त्या[3] वैदेह्या सह सीतया । [३३
४०उ] सौभ्रात्रम् एतल् लोकेषु कथयिष्यन्ति मानवाः ॥४४॥ [N
इत्य् उक्त्वा लक्ष्मणं राजा स्नुषां बद्धाऽञ्जलिं स्थिताम् ।
४१] पुत्रीऽत्य्[4] आ-भाष्य[4] मधुरं[5] शनैर् एताम्[5] उवाच ह ॥४५॥ [३४
कर्तव्यो[6] न तु वैदेहि[6] मन्यू राम-समाश्रितः[7] ।
४२] रामेणेदं विशुद्ध्य्-अर्थं कृतं वै त्वद्-धितैषिणा ॥[8]४६॥ [३५
सु-दुष्करम् इदं पुत्रि तव[9] चारित्र-लक्षणम् ।
४३] कृतं यत्नेन नारीणां[10] यशो ह्य् अभि-भविष्यसि[10] ॥४७॥ [३६
कामम् एवाऽसि[11] सं-देश्या[11] भर्तृ-शुश्रूषणं[12] प्रति ।
४४] अवश्यं तु मया वाच्यम् एष ते दैवतं पतिः[13] ॥४८॥ [३७
इति चैव समा-दिश्य पुत्रौ सीतां तथा[14] स्नुषाम्[14] ।
४५] इन्द्र-लोकं वि-मानेन ययौ दश-रथो नृपः[15] ॥४९॥ [३८

वि-मानम् आ-स्थाय महाऽनुभावः
श्रिया च सन्दीप्त-तनुर् नृपोत्तमः ।
आ-मन्त्र्य पुत्रौ सह सीतया च
N] स्वर्गं[16] जगाम प्र-वरांश्[16] च लोकान् ॥५०॥ [३९
स्व-गतिम्[17] अनु-सरन् सुराऽभिदृष्टां[18]
विबुध-निशाकर-वद्[19] वि-राजमानः ।
क्षिति-तलम् अव-लोकयन् प्र-यातः
४६] सुत-वदनं[20] शशि-वन् निर्-ईक्षमाणः ॥५१॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे[21] दशरथ-राम-संवादो नाम शततमः सर्गः ॥१००॥

---

१. रा$_1$ अ-सोम्य । रा$_2$ फ भ-तात । २. रा$_2$ फ-वर्ज—राम परंतप ॥ ३. रा$_2$ फ-वर्ज—०श्रूषणं व्यक्तं ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-सुप्रीतो भाष्य । ५. रा$_2$ फ-दीर्घेण स्वरेणेदम् ॥ ६. रा$_2$ फ-पुत्री । ७. रा$_2$ फ-मन्युस्ते कार्यस्त्यागकारितः । ८. रा$_2$ फ-विशुद्धिरेषा विहिता सर्वलोकेषु दैवतैः ॥ ९. रा$_2$ फ-त्वया । १०. रा$_2$ फ-नारीस्त्वं यशसाभि० ॥ ११. भ-एव त्वया कार्यं । १२. रा$_2$-वर्ज—भर्तुः शु० । १३. रा$_2$ फ-वर्ज—परम् ॥ १४. रा$_2$ फ-वर्ज-च राघवः । १५. रा फ-ज्वलन् ॥ १६. भ-जगाम देव प्र० ॥ १७. रा$_2$-स गतिं । १८. भ-वर्ज—पुराभि० । रा$_2$-०भिजुष्टां । १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०शाचरवद् । २०. रा$_2$ फ-शुभव० ॥ २१. ब प्र भ-लंकाकांडे । रा$_2$ फ-आभ्युदयिके ॥

## [वं–१०५]= [ एकोत्तरशततमः सर्गः ] =[दा–१२३]

प्रति-प्रयाते[1] काकुत्स्थे[1] महेन्द्रः पाक-शासनः ।
१] अब्रवीत् परम-प्रीतो राघवं प्राऽञ्जलिं स्थितम् ॥१ ॥[१
कौसल्या सु-प्रजा राम त्वया पुत्रेण धी-मता ।
N] प्रीतोऽस्मि वद किं कार्यं[2] करोमि त्वत्-प्रिये[2] स्थितः[2] ॥२ ॥[N
N] पुष्कराक्ष महा-बाहो शृणु मे रघु-नन्दन । [N
अ-मोघं दर्शनं राम त्व् अस्माकं[3] नरर्षभ[3] ।
२] प्रीति-युक्ताः[4] स्म ते सर्वे ब्रूहि[5] राजन् यथेच्छसि[5] ॥३ ॥[२
एवम् उक्तो महेन्द्रेण प्र-सन्नेन महाऽऽत्मना ।
३] सुप्रसन्न-मना हृष्टो वचनं प्राऽऽह राघवः ॥४ [6]॥ [३
यदि प्रीतिः समुत्-पन्ना मयि ते विबुधेश्वर ।[7]
४] वक्ष्यामि च[8] वरं किं-चित् तन् मे त्वं दातुम् अर्हसि[8] ॥५ ॥[४
मम हेतोः पराऽऽक्रान्ता गता ये यम-सादनम् ।
५] ते सर्वे जीवितं प्राऽऽप्य समुत्-तिष्ठन्तु वानराः ॥६ ॥[५
वि-क्रान्ताश् चाऽपि शूराश् च न मृत्युं गणयन्ति च[9] । [६उ
६] कृत्वा[10] कर्म[10] वि-पन्नाश् च जीवयैतान्[11] पुरं-दर[11] ॥७ ॥[N
७पू] मत्-कृते नि-हताः शूरा मत्-प्रिये सततं स्थिताः । [N
N] ऋक्ष-वानर-गोपुच्छा ये[12] च स्युः परमेश्वर[12] ॥८ ॥[११उ
N] मत्-प्रियेष्व् अभि-युक्ता[13] ये मित्रैर् भृत्यैश्[13] च वानराः ।
७उ] तव[14] प्र-सादाज् जीवन्तु वरम् एनम्[14] अहं वृणे ॥९ ॥[६
नी-रुजो निर्-व्रणांश् चैव सम्पन्न-बल-पौरुषान् ।
८] गो-लाङ्गूलांस् तथैवर्क्षान्[15] द्रष्टुम् इच्छे[16] सुरेश्वर[16] ॥१०॥[७

---

१. भ–प्रतियाते दशरथे ॥ २. भ–त्वत्प्रियमास्थितः ॥ ३. रा$_2$ फ–तवास्माकं नरर्षभ । भ–अस्माकं वै नरर्षभ । ४. भ–परितुष्टाः । ५. रा$_2$ फ–वद यन्मनसि स्थितम् । भ–ब्रूहि यन्मनसेप्सितम् ॥ ६. रा$_2$ फ–एवमुक्तः स काकुत्स्थः प्रत्युवाच पुरंदरम् । लक्ष्मणेन सह भ्रात्रा रामः सत्त्वहिते रतः ॥ ७. रा$_2$ फ–यदि प्रीतोऽसि मे देव सर्वामरजगत्पते । ८. भ–कुरु मे सत्यं वचनं वदतां वरम् ॥ ९. रा$_2$ भ–ये । १०. रा$_2$ फ–कृतकृत्या । ११. रा$_2$ फ–०युस्तेमराधिप ॥ १२. रा$_2$–जीवेयुः पर० । फ भ–जीवेयुरमरेश्वर ॥ १३. रा$_2$ फ–अनुरक्ता हि भृत्यैर्दारैश् । १४. रा$_2$–मत्प्रसादाद्गमेयुस्ते वरमेतम् । फ–त्वत्प्रसादाद्गमेयुस्ते वरमेतम् ॥ १५. रा$_2$ फ–वर्जं—तथर्क्षांश्च । १६. रा$_2$ फ–वर्जं—इच्छामि मानद ॥

अ-काले चाऽपि पुष्पाणि[1] मूलानि च फलानि च ।
९] नद्यश् च वि-मलास् तत्र तिष्ठेयुर् यत्र वानराः ॥११॥ [८
बहु-मूल-फलाः स्वाद्याः सु-शीता विमलोदकाः ।
N] भवेयुस् ते वनोद्देशास् तिष्ठेयुर् यत्र वानराः ॥१२॥ [N
श्रुत्वा तु वचनं तस्य राघवस्य महाऽऽत्मनः ।
१०] महेन्द्रः प्रत्य्-उवाचेदं वचनं प्रीति-संयुतम्[2] ॥१३॥ [N
तद्[3] युक्तम् अनु-रूपं च कौसल्याऽऽनन्द-वर्धन ।
११] यत् त्वं कृतोपकाराणां सु-हृदां हितम् इच्छसि ॥१४॥ [N
N] यस्मात् त्रैलोक्य-शत्रुः स रावणो लोक-रावणः ।
आ-हतः स त्वया राम तस्माद् देयो वरस् तव ॥१५॥ [N
१२] साऽमरेष्व्[4] अपि लोकेषु न त्वद्-अन्यः करिष्यति ।
१३पू] ऋते[5] त्वया महा-बाहो हतानां[6] दर्शनं कुतः[7] ॥१६॥ [N
N] महान् अयं वरस् तात यस् त्वयोक्तो रघूत्तम[8] ।
१३उ] यत् त्वयोक्तं[9] वचः पूर्वं[9] तस्माद् एवं भविष्यति ॥१७॥ [१०
त्वत्-प्रियाऽर्थम् अहं सत्यम्[10] इदं कर्म महाऽद्भुतम्[11] ।
N] हत-सञ्जीवनं[12] त्व् अद्य कर्ताऽस्मि तव कारणात् ॥१८[13]॥ [N
समुत्था (द्-स्था) स्यन्ति[14] हरयः सुप्ता[15] निद्रा-क्षये यथा[15] । [१२उ
१४] गो-लाङ्गूलास् तथर्क्षाश् च वानराश् च स-यूथपाः ॥[16]१९॥ [N
१५पू] सम्पूर्ण-बल-वीर्यास् ते रूढ-व्रण-शरीरिणः ।[17] [N
N] राक्षसैर् नि-हता ये तु सर्वे प्राऽऽप्स्यन्ति[18] जीवितम् ।[19]२०[20]॥ [११पू
सु-हृद्भिः सह[21] मित्रैश् च बान्धवैः स्व-जनेन च[21] ।
१६] सर्वं एव समेष्यन्ति युक्ताः[22] परमया मुदा[22] ॥२१॥ [१३

---

१. रा$_2$ फ-मुख्यानि । २. रा$_2$ फ-प्रीतमानसः ॥ ३. रा$_2$ फ-त्वद्० ॥ ४. रा$_1$ ल$_1$ ब अ प्र-सासुरेष्व् । ल$_2$-ससुरेष्व् । भ-सकलेष्व् । ५. रा$_2$-कृते । ६. फ भ-ज्ञातीनां । ७. रा$_2$ फ भ-पुनः ॥ ८. रा$_2$ फ म-नरेश्वर । ९. रा$_2$ फ म-मया नोक्तपूर्वं चेत् ॥ १०. रा$_2$-कर्म । म-सर्वम् । ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-त्विद्दा० । १२. रा$_2$ फ-वर्जं—हतान्संजीवयाम्य् । १३. भ-नास्ति ॥ १४. ल$_2$ ब-०स्यंतु । १५. रा$_2$ फ-ये गता यमसादनम् । म-ये हतास्मिन्रणाजिरे । १६. रा$_2$ फ-ऋक्षाश्च सह गोपुच्छैः सर्वे सुप्तोत्थिता इव । म-नास्ति ॥ १७. भ-नास्ति । १८. ल$_1$ ब अ प्र-०तु । १९. रा$_2$ फ-समुत्थास्यंति हरयो निहता ये रणाजिरे । २०. म-नास्ति ॥ २१. रा$_2$ फ म-बांधवैर्मित्रैर्ज्ञातिभिः स्वजनैस्तथा । २२. रा$_2$ फ म-समग्रबलपौरुषाः ॥

अ-काले फल-वन्तश्[1] च पुष्प-वन्तश्[1] च पाद-पाः ।
१७] भविष्यन्ति महेष्वास नद्यश् च सलिलैर् युताः ॥[2]२२॥[१४
एवम् उक्त्वा स[3] शक्रस् तु[3] देव-राजो महा-यशाः ।
१८] वर्षेणाऽमृत-युक्तेन ववर्षाऽऽयोधनं प्रति ॥२३[4]॥[N
ततोऽमृत-संस्पर्शात् सर्वे ते लब्ध-जीविताः ।
१९] ऋक्ष-वानर-गोपुच्छाः समुत्-तस्थुः सहस्र-शः ॥२४[5]॥ [१६
ते वीर-शयनाद् वीराः समुत्था (द्-स्था)य मुदाऽन्विताः[6] । [N
२०] अन्योऽन्यं सम्परि-ष्वज्य राघवं चाऽभ्य्-अवादयन्[7] ॥२५॥ [१७
स-व्रणैः प्रथमं गात्रैर् इदानीं निर्-व्रणैः समैः ।
२१] अब्रुवन् वानराः सर्वे किम् एतद् इति वि-स्मिताः ॥२६[8]॥ [१५
२२पू] काकुत्स्थं परिपूर्णाऽर्थं दृष्ट्वा[9] रामं[9] सुरोत्तमाः ।[10]
N] स्वयं-भुवं[11] पुरस्-कृत्य[12] सं-देशायोप-चक्रमुः ॥[13]२७॥ [N
पिता-महस् तु भग-वान् सहितः शूल-पाणिना ।
N] राघवं सर्वसिद्धाऽर्थम् इदं वचनम् अब्रवीत् ॥२८[13]॥[N
गच्छाऽयोध्याम्[14] इतो राम[15] वि-सर्जय च[16] वानरान् ।
२३] मैथिलीं सान्त्वयस्वैनाम् अनु-रक्तां यशस्विनीम् ॥[17]२९॥[१९
२४पू] भ्रातरं भरतं पश्य[18] त्वद्-अर्थं व्रत-कर्षितम्[18] । [२०पू
N] सम्-एत्य पितृ-वद् बालं शत्रु-घ्नं[19] लाडय प्र-भो[19] ॥[20]३०॥ [N

---

१. रा$_2$ फ म-वर्जं—पुष्पशबलाः फलवंतश् । २. रा$_2$ फ म-भविष्यति जलं चैव यत्र तिष्ठन्ति वानराः ॥ ३. म-ततः शक्रो । ४. अतः परमधिकः पाठः—रा$_2$ फ म-वर्जं—प्रादाच्च जीवितं तेषां वानराणां सहस्रशः ॥ ५. भ-ततस्तेऽमृत-संस्पर्शात्तत्क्षणाल्लब्धजीविताः । समुत्तस्थुर्महात्मानः सर्वे स्वप्नक्षयादिव ॥ ६. भ-सहस्रशः । ७. म-त्वभ्यनंद० ॥ ८. रा$_2$ फ म-सव्रणैः पतिता गात्रैर्निर्व्रणाः पुनरुत्थिताः । बभूवुर्वानराः सर्वे विस्मयोत्फुल्ललोचनाः ॥ ९. रा$_2$ फ-सर्वे दृष्ट्वा । १०. म-नास्ति । अतः परमधिकः पाठः—रा$_2$ फ म-वर्जं—अब्रुवन्परमप्रीताः स्तुत्वा रामं सलक्ष्मणम् । ११. ल$_1$ ल$_2$ ब-०वे । १२. फ-वर्जं—नमस्कृत्य । १३. भ-नास्ति ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-गतोऽयो० । १५. रा$_2$ फ म-वीर । भ-राजन् । १६. रा$_2$ फ भ म-वर्जं— तु । १७. अतः परमधिकः पाठः—फ-लक्ष्मणेन सहायेन नित्यवाक्ये त्वमर्हसि ॥ १८. रा$_2$ फ म-प्राज्ञं शत्रुघ्नं च यशस्विनम् । १९. रा$_2$-त्वं वोढयितुमर्हसि । फ-त्वं लाडयितुमर्हसि । म-तं ताडयितुमर्हसि । २०. भ-नास्ति ॥

N ] कृत-कर्मा परि-श्रान्तः सुखम् आप्नोतु लक्ष्मणः ।[1] [ N
२४उ] अभि-षेचय चाऽऽत्मानं पौरान् अपि हर्षय ॥[2]३१॥ [२०उ
एवम् उक्त्वा तम्[3] आ-मन्त्र्य[3] रामं सौमित्रिणा सह ।
२५] वि-मानैः सूर्य-सङ्काशैर् जग्मुर्[4] हृष्टाः सुरा दिवम्[4] ॥३२॥ [२१
अभि-वाद्य च काकुत्स्थः सर्वांस् तांस् त्रिदशोत्तमान्[5] ।
२६] लक्ष्मणेन सह भ्रात्रा वासम् आऽज्ञापयत् तदा ॥३३॥ [२२
ततस् तु सा राघव-बाहु-पालिता[6]
महा-चमूर् हृष्ट-जना[7] यशस्विनी ।
श्रिया ज्वलन्ती वि-रराज सर्व-तो
N ] निशा प्र-णीतेव[8] हि[8] शीत-रश्मिना ॥३४॥ [२३

इत्यार्षे रामायणे[9] युद्ध-काण्डेऽमृत-वृष्ट्या वानरसंजीवनं[9]
नामैकोत्तरशततमः सर्गः ॥ १०१ ॥

---

## [ वं-१०६ ]= [ द्व्युत्तरशततमः सर्गः ] =[ दा-१२४ ]

तां रात्रिम् उषितं रामं तथैव[10] व्रतम् आ-स्थितम्[10] ।
१] अब्रवीत् प्राऽञ्जलिर्[11] वाक्यं वाक्य-ज्ञः स[11] वि-भीषणः ॥१ ॥ [१
स्नानानि[12] चाऽङ्ग-रागाणि माल्यानि[13] वि-विधानि[13] च ।
२] चन्दनानि[14] च मुख्यानि[14] वासांसि वि-विधानि[15] च ॥२ ॥ [२
अलङ्कार-विधौ युक्तास् तान्य् आ-दाय वर-स्त्रियः ।[16]

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–नास्ति । २. रा$_2$ फ म–समाप्तवनवासश्च आत्मानमभिषेचय । भ–०नं पौरान्गत्वा प्रहर्षय ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–सहस्राक्षो । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ–ययौ हृष्टः सुरैः सह ॥ ५. भ–त्रिदिवौकसः ॥ ६. रा$_2$ फ म–वर्जं—लक्ष्मणरामपा० । ७. रा$_2$ फ म–हृष्टमना । ८. रा$_2$ फ–निशेव याता सह । रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०तेन ॥ ९. ब–०णे लंकाकाण्डेऽमृ० । रा$_2$ फ–०णे आभ्युदयिके वानरोपस्थापनं । म–सुंदरकांडे आभ्युदयिके वानरोपस्थापनं । भ–लंकाकांडे वानरजीवनं ॥ १०. रा$_2$ फ–वर्जं—सुखमासीनमरिंदमं । म–तत्रैव समुपस्थितः । ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०क्यं वाक्यज्ञं । रा$_2$ फ–०लिः काले जयं पृष्ट्वा । म–०लिर्वाक्यं जयं दृष्ट्वा ॥ १२. म–शीतानि । १३. रा$_2$ फ म भ–वस्त्राण्याभरणानि । १४. फ–चन्दनागरुयुक्तानि । १५. रा फ म भ–माल्यानि ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अलंकारविदश्चेमा रामं पद्मदलेक्षणाः । भ–अंगरागं च संगृह्य नार्यः पद्मनिभेक्षणाः ।

३] उप-स्थितास् त्वां विधिना[1] स्नापयिष्यन्ति राघव ॥३ ॥ [३
स्व-वृत्त-कोविदां[1] देवीं वैदेहीं[2] लक्ष्मणं तथा ।
प्रति-गृह्णीष्व तत् सर्वं मद्-अनुग्रह-काम्यया[3] ।
N ] मुनि-वेशं समुत्-सृज्य राज्यर्द्धिर् अनु-भूयताम् ॥४[4] ॥ [N
४पू] एवम् उक्तस् तु काकुत्स्थः प्रत्य्-उवाच वि-भीषणम् ।
N ] धर्म-ज्ञो[5] धर्म-विद्[5] वाक्यं न्याय-तो[6] न्याय-कोविदम् ॥५ ॥ [N
हरीन् सुग्रीव-मुख्यांस तु स्नानेनोपनि-मन्त्रय ।[7] [४उ
N ] उप-पन्नम् इदं राजंस्[8] त्वयि[8] कल्याण-चेतसि ॥६ ॥ [N
सौहार्दे वर्तमानस्य ग्राह्यश्[9] च प्र-णयो मया[9] ।
N ] समान-व्रत-चारी च भरतः कैकयी-सुतः ॥७[10] ॥ [N
N ] शत्रुघ्न-सहितः श्री-मान्[11] ममाऽऽगमन-लालसः ।[10]
४उ] स तपस्वी तपो-युक्तो महा-तेजाः सु-दुःखितः ॥[12] ८ ॥[N
सु-कुमारो महा-बाहुर् भरतः सत्य-सङ्गरः ।
५] तं विना कैकयी-पुत्रं धर्म-ज्ञं[13] धर्म-वत्सलम्[13] ।
N ] न मे स्नानं[14] बहु-मतं[14] वस्त्राण्य् आ-भरणानि च ॥[15] ९ ॥ [६
राज्य-श्रियं परि-त्यज्य मुनि-वेश-धरः किल ।
N ] तपस् तप्यति मे भ्राता नन्दि-ग्रामे[16] कृताऽऽलयः[16] ॥१०[17] ॥[N
N ] शत्रुघ्न-सहितो धी-मान् स मां नूनं प्रतीऽऽक्षते ।[17]
६उ] एतत् पश्य यथा क्षिप्रं प्रति-गच्छाम्य्[18] अहं पुरीम्[18] । [N
अयोध्या-गमिको[19] ह्य् एष पन्थाः परम-दुर्गमः[20] ॥११॥ [७
७] एवम् उक्तस् तु[21] काकुत्स्थं[22] प्रत्य्-उवाच वि-भीषणः ।
अहं[23] त्वा प्राऽऽपयिष्यामि तां पुरीं पुरुषर्षभ[24] ॥१२॥ [८

१. रा$_{2}$ फ म–नास्ति ॥ २. फ–वैदेह्यां । ३. म–०कांक्षया । ४. भ–नास्ति ॥ ५. म–०ज्ञं ध० । रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र भ–०ज्ञो धर्मभृद् । ६. म–न्यायज्ञं । भ–धर्मज्ञं ॥ ७. रा$_{2}$ फ म–नास्ति । ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–वाक्यं तव ॥ ९. फ–ग्राह्यं वचनं मया । म–ग्राह्यमेव वचस्तव । १०. रा$_{2}$ भ–नास्ति ॥ ११. फ–विद्वान् । म–वीर । १२. रा$_{2}$ फ म–नास्ति ॥ १३. रा$_{2}$ फ म भ–भरतं धर्मचारिणं । १४. रा$_{2}$ फ म–बहुमतं स्वं । १५. प्र–नास्ति ॥ १६. ल$_{1}$–वर्जं—०मक्र० । १७. भ–नास्ति ॥ १८. म–गच्छेम महापुरीम् । १९. रा$_{2}$ फ म–०ध्यामागतो । भ–०ध्यां गच्छतो । २०. प्र–०दुर्जयः ॥ २१. रा$_{2}$ फ–स । २२. भ–रामेण । २३. प्र–अहो । रा$_{2}$ म–अह्ना । भ–मद्य । २४. रा$_{2}$ फ म भ–पार्थिवात्मज ॥

८] पुष्प-कं नाम भद्रं ते वि-मानं सूर्य-वर्चसम्[1] ।
मम भ्रातुः कुबेरस्य रावणेन बलीयसा ॥[2]१३॥[९
९] हृतं निर्-जित्य सं-ग्रामे काम-गं दिव्यम् उत्-तमम् ।
N] त्वद्-अर्थं पालितं चैव तिष्ठत्य् अमित-विक्रम[3] ॥१४[4]॥[१०
तद् इदं सूर्य-सङ्काशं[5] वि-मानम् इह तिष्ठति[5] ।
१०] तेन[6] आऽऽप्स्यसि[7] यानेन त्वम्[8] अयोध्यां गत-ज्वरः[8] ॥१५॥[११
अहं[9] ते यद्य् अनु-ग्राह्यो यदि[10] स्मरसि मे गुणान्[10] ।[11]
११] वस तावद् इह प्राज्ञ यद्य्[12] अस्ति मम सौहृदम्[12] ॥१६॥[१२
लक्ष्मणेन सह भ्रात्रा वैदेह्या भार्यया सह ।[13]
१२] अर्चितः सर्व-कामैश्[14] च ततो राम[15] गमिष्यसि ॥१७॥[१३
प्रीति-युक्तस्य मे राम स-सैन्यः स-सुहृद्गणः[16] ।
१३] सत्-कारं[17] विधि-वत् त्वं च[17] प्रति-गृह्णीष्व राघव[18] ॥१८॥ [१४
प्र-णयाद् बहु-मानाच् च सौहार्देन[19] च राघव ।[20]
१४] प्र-सादयामि प्रेष्योऽहं[21] न खल्व् आ-ज्ञापयामि ते ॥१९॥ [१५
एवम् उक्तस् ततो रामः प्रत्य्-उवाच वि-भीषणम् ।
१५] रक्षसां वानराणां च सर्वेषाम् एव शृण्वताम् ॥२०॥ [१६
१६पू] पूजितोऽस्मि त्वया वीर साचिव्येन[22] पदेन हि[22] ।
N] सर्वाऽऽत्मना च वसुभिः[23] सौहार्देन परेण च ॥२१ ।[24] [१७
१६उ] न खल्व् एतन् न कुर्यां ते वचनं राक्षसेश्वर[25] ।

---

१. रा$_{2}$ फ म–सूर्यसन्निभं । २. रा$_{2}$ फ म–पुरा वैश्रवणस्यासीद्रावणेनाहृतं बलात् ॥ ३. भ–अतुलवि० । ४. रा$_{2}$ फ म–नास्ति ॥ ५. भ–मेघसंकाशं नानारत्नं समुज्ज्वलं । रा$_{2}$ फ म–०शं विमानमधिति० । ६. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–येन । ७. रा$_{2}$ फ म भ–यास्यसि । ८. रा$_{2}$ फ म–वोढुं त्वां च तदर्हति ॥ ९. फ–यदि तेहमनुग्राह्यो । म–यदि ते हनूमान्ग्राह्यो । १०. फ म–धारणीयोऽस्मि ते यदि । ११. रा$_{2}$–नास्ति । १२. रा$_{2}$ फ म–मया त्वमभिपूजितः । भ–०स्ति मयि सौ० ॥ १३. रा$_{2}$ फ म–सदारो भ्रातृसहितः सहैभिर्हरियूथपैः । १४. रा$_{1}$ ल$_{1}$ ल ब–सह का० । १५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–राजन् ॥ १६. रा$_{2}$ फ म–०हृज्जनः । १७. रा फ म–०वत्तात । भ–सत्क्रियां विपुलां तावत् । १८. रा$_{2}$ फ म–चोद्यतं ॥ १९. म–सौभद्रेण । २०. रा$_{1}$ प्र भ–नास्ति । २१. रा$_{2}$ फ म–भृत्योहं ॥ २२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब–पांडित्येन प० । अ प्र–पांडित्येन परेण हि । भ–०व्येन परेण च । २३. प्र–कर्मभिः । भ–चेष्टाभिः । २४. रा$_{2}$ फ म–नास्ति ॥ २५. रा$_{2}$ फ म–नैर्ऋताधिप ।

सोत्कण्ठं[१] भ्रातरं द्रष्टुं भरतं त्वरते[२] मनः ॥२२॥ [१८
१७] मां नि-वर्तयितुं[३] योऽसौ चित्र-कूटम् उपाऽऽगतः ।
शिरसा याचमानस्य न कृतं वचनं मया ॥२३॥ [१९
१८] कौसल्यां च सु-मित्रां च कैकेयीं चाऽपि[४] मातरम्[४] ।
दिदृक्षुं[५] सु-हृदश् चैव गुरून्[५] पौरांस्[६] तथैव च[६] ॥२४॥ [२०
१९] अनु-जानीहि मां सौम्य[७] पूजितोऽस्मि वि-भीषण ।
मन्युर् न[८] मयि[८] कर्तव्यः सखि-त्वं[९] चाऽनु-मानय[१०] ॥२५॥ [२२
२०] उप-स्थापय मे शीघ्रं[११] वि-मानं राक्षसेश्वर[१२] ।
२१पू] कृत-कार्यस्य मे वासः कथं स्याद् इह[१३] सं-गतः[१३] ॥२६॥ [२१
इमम्[१४] अर्चय[१४] सु-ग्रीवं साऽमात्यं स-पुरःसरम् ।
N ] पूजिते वानरेन्द्रेऽस्मिन् पूजितो वै[१५] भवाम्य् अहम् ॥[१६]२७॥ [ N
यम् एव दिवसं वीर त्वम् अस्मान् समुपाऽऽगतः[१७] ।
N ] तस्मिन्न् अहनि लङ्कायां मया त्वम्[१८] अभि-षेचितः[१८] ॥२८॥ [ N
अवश्यं[१९] तु प्र-कृतिभिर्[१९] महा-राज्येन रक्षसाम्[२०] ।[२१]
N ] अभि-षेक्तव्यम्[२२] आत्मानं[२२] तस्मात् त्वम् अभि-षेचय ॥२९॥ [ N
सुग्रीव-प्रमुखैर्[२३] वीरैः सहितो[२४] हरि-यूथपैः ।
N ] लक्ष्मणेन सह भ्रात्रा लङ्काम् आ-विश[२५] मा चिरम् ॥३०॥ [ N
तत्र त्वाम् अभि-षिञ्चन्तु सर्वाः प्र-कृतयो[२६] मुदा[२६] ।
N ] ततो माम् अभि-गच्छस्व प्र-स्थापय[२७] च माम् इतः[२७] ॥३१॥ [ N

---

१. रा१ अ प्र–उक्तं मे । रा२ फ म भ–तं तु मे ॥ २. रा२ फ म–वर्जं—त्वरितं ॥ ३. रा१ ल१ ल२ ब अ प्र–निवारयितुं ॥ ४. रा१ अ प्र भ–च यशस्विनीं । ल१ ल२ ब–च तपस्विनीं । म भ–चैव मा० । ५. ल१ ल२ ब अ प्र–०क्षुः । रा फ म भ–गुरूंश्च । ६. रा२ फ म–द्रष्टुमिच्छति मे मनः । भ–पौरान् जानपदैः सह ॥ ७. रा१ ल१ ल२ ब–सोऽद्य । ८. रा२ फ म भ–खलु न । ९. रा२ फ–त्वरितं । भ–सखे त्वां । १०. रा२ फ म–वर्जं—०नये ॥ ११. रा२ फ म भ–तूर्णं । १२. रा२ फ म भ–नैर्ऋताधिप । १३. रा२ फ म–इति मे मतिः ॥ १४. रा२ फ म–वर्जं—अनुमर्षय । १५. रा२ फ म–वर्जं—हि । १६. भ–एवमुक्त्वा पुनः प्राह विभीषणममित्रहा ॥ १७. रा२ फ म भ–समुपस्थितः । १८. रा१ ल१ ल२ ब अ प्र–चैवाभि० ॥ १९. रा१ ल१ ल२ ब अ प्र–तव संति प्रकृतयो । २०. रा२ फ म–वर्जं—०सा । २१. भ–नास्ति । २२. रा१ ल१ ल२ ब प्र–०षेचंतु ते च त्वां ॥ २३. म–०वसहितैर् । २४. म–प्रमुखैर् । २५. ल१ ल२ ब अ प्र–०श्य ॥ २६. भ–०यस्तथा । २७. भ–मानितः सर्वराक्षसैः ॥

वैदेह्या[1] या[1] सखी तत्र त्रि-जटा नाम राक्षसी ।
N] अस्यास् तु प्रिय-हेतोस् त्वं ताम्[2] अनु-ज्ञातुम् अर्हसि ॥३२[3]॥ [N
अ-विन्ध्यो नाम मेधावी मान्यश्[4] च सततं त्वया[4] ।
N] मत्-प्रियाऽर्थं त्वम् अद्यैनं[5] पूजयेथा[6] यथैव माम्[6] ॥३३॥ [N
वैदेह्या[7] कथिताव् एतौ[7] प्रीयमाणौ यथा[8] भृशम् ।
N] उभौ कृतोपकारौ तौ पूजनीयौ सदा त्वया ॥३४[9]॥ [N
प्रति-गृह्य तु रामस्य वचनं[10] स[10] वि-भीषणः ।
N] सम्प्र-तस्थे ततो[11] रक्षो यत्र[12] लङ्का महा-पुरी ॥[13]३५॥ [N
स[14] प्र-विश्य[14] पुरीं लङ्कां स-सुग्रीवः स-लक्ष्मणः[15] ।
N] आभि-षेचनिकं सर्वं स्वयम् आऽज्ञापयत् तदा ॥३६॥ [N
ततोऽभ्य्-अषिञ्चन् विधि-वत्[16] सर्वाः प्र-कृतयस् तदा ।[17]
N] तौ च लक्ष्मण-सुग्रीवौ सहितौ राघवाऽऽज्ञया ॥[18]३७॥ [N
ततो वाद्यानि[19] लङ्कायां शङ्ख-भेरी-विमिश्रितैः[20] ।
N] सं-नादैः[21] पूरयामासुर्[21] लङ्कां स-वनकाननाम्[22] ॥३८॥ [N
अभि-षिक्तः स धर्माऽऽत्मा सर्व-राक्षस-पार्थिवः[23] ।
N] शुशुभेऽभ्य्-अधिकं लक्ष्म्या कुबेर इव यक्ष-राट्[24] ॥३९॥ [N
सोऽभि-षिक्तो वचः कुर्वन्[25] रामस्य विदिताऽऽत्मनः ।
N] अर्चयामास सु-ग्रीवं पाद्याऽऽदिभिर्[26] अनु-उत्तमैः ॥४०॥ [N
लक्ष्मणं च महाऽऽत्मानं विधि-दृष्टेन कर्मणा ।

---

१. भ—०ह्याश्च । २. म भ—वर्जं—माम् । ३. अ—नास्ति ॥ ४. रा$_{2}$—स्त्व्यध्यक्षस्तव सांप्रतं । फ—अध्यक्षस्तव सांप्रतं । म—स्त्व्यध्यक्ष इव सांप्रतं । भ—तत्रास्ते राक्षसेश्वर । ५. रा$_{2}$ फ म भ—अप्यद्य । ६. रा$_{2}$ फ—०व हि । भ—पूजयाशु महाबलं ॥ ७. प्र—०ह्याः । ८. रा$_{2}$ फ—वर्जं—मया । ९. अतः परमधिकः पाठः—भ—सरमां च मम प्रीत्या वैदेह्याः प्रीतिहेतवे । पश्येथास्त्वं यथा सीतां पूजार्हां च सर्वदा ॥ १०. रा$_{2}$—वचस्तस्य । फ—वचस्तच्च । म—वचस्तत्तु । भ—वचः पथ्यं । ११. रा$_{2}$ फ—तदा । भ—तथा । १२. प्र—येयं । फ म भ—येन । १३. म—अभिषेक्तुं स धर्मात्मा सर्वैर्हरिगणैर्वृतः ॥ १४. रा$_{2}$ फ भ—प्रविश्य च । म—महाबाहुः । १५. प्र—सुग्रीवः सहल० ॥ १६. रा$_{1}$ ल$_{2}$ ब अ प्र—विविधैः । १७. ल$_{1}$—नास्ति । १८. रा$_{2}$—नास्ति ॥ १९. फ म भ—जयाशीर् । २०. फ म—०श्रिता । भ—०विचित्रिता । २१. रा$_{2}$ फ भ—नादेन पूरयामास । म—वाद्येन पूरयामास । २२. भ—चाऽपि सका० ॥ २३. ल$_{1}$ ल$_{2}$ ब अ प्र म—०सपुंगवः । २४. अ प्र रा$_{2}$ फ म—राजराट् ॥ २५. म—श्रुत्वा । २६. रा$_{2}$ फ भ—अर्घ्यादि० । म—अर्च्चादि० ।

N] रत्नैश् च वि-विधैर् दिव्यैर् महेन्द्र-भवनाऽऽहृतैः ॥४१॥ [N
त्रैलोक्यम् अभिनिर्-मथ्य रावणो यान्य्[१] उपाऽऽहरत्[१] ।
N] तैः सर्वैः पूजयामास[२] वानरेन्द्रं वि-भीषणः ॥४२॥ [N
ततः सुवेल-शैल-स्थं[३] रामं प्र-हरतां वरम् ।
N] अभ्य्-अगच्छद् अ-दीनाऽऽत्मा सोऽभि-षिक्तो वि-भीषणः॥४३[४]॥[N
N] वि-मानं सूर्य-सङ्काशम् आ-जहार त्वराऽन्वितः ।[५]
दिव्यम्[६] अत्य्-अद्भुताऽऽकारं[६] मनः-काम-गम् अ-व्ययम् ॥४४॥[N
२२] मणि-काञ्चन-चित्राऽङ्गं वैडूर्य-मणि-वेदिकम्[७] ।[८]
N] क्रीडाऽऽगारैः[९] परि-क्षिप्तं तप्त-काञ्चन-भूषणैः[१०] ॥४५॥[२४
पाण्डुराभिः पताकाभिर् ध्वजैश्[११] च बहुभिर् वृतम्[११] ।
२३] शोभितं हर्म्य-वृन्दैश्[१२] च हेम-कुड्य-विभूषितम्[१३] ।[१४] [२५
N] मण्डितं[१५] जलजाऽऽकारैः[१६] पुण्डरीकैश् च काञ्चनैः ॥[१७]४६॥[N
N] रुचिरैः किङ्किणी-जालैर् मुक्ता-मणि-गवाऽक्षकम्[१८] ।[१९]
२४पू] हेम-जालैः परि-क्षिप्तं सर्व-तो मधुर-स्वनम् ॥[२०]४७॥[२६
तन्[२१] मेरुशिखराऽऽकारं निर्-मितं विश्व-कर्मणा ।
२५] बहुभिर्[२२] भूषितं चित्रैर्[२२] मुक्ता-रजत-शोभितम्[२३] ॥[२४]४८॥[२७
२४उ] दन्त-स्फटिक-चित्राऽङ्गैर्[२५] वैडूर्यैश्[२६] च वराऽऽसनैः[२६] ।

---

१. म–यद्यदाह० । २. रा$_2$ फ म भ–अर्चया० ॥ ३. रा$_2$ फ–०लशृंगस्थं । भ–सुवेले संप्राप्य । ४. प्र–नास्ति ॥ ५. रा$_2$ फ म–विमानमादाय महन्महाभ्र-शिखरोपमम् । भ–दिव्यमादाय च महन्महेंद्रशिखरोपमं । ६. भ–विमानमद्भुता० ॥ ७. रा$_2$ फ म–तप्तकांचनवे० । भ–मुक्तामणिवरांकितं । ८. अतः परमधिकः पाठः— भ–घंटाजालनिनादितं प्रगीतमिव सर्वतः । एवमुक्तस्तु रामेण राक्षसेन्द्रो विभीषणः ॥ विमानं सूर्यसंकाशमाजुहाव त्वरान्वितः । ततः कांचनचित्रांगं वैडूर्यमणिवेदिकम् ॥ ९. रा$_2$–कूटाकारप० । फ–कूटागारप० । म–कूटागमप० । भ–कूटागारैः प० । १०. रा$_2$ फ म–सर्वतो मधुरस्वरं ॥ ११. रा$_2$ फ–समंतादवभासितं । म–समंतात्परिशोभितम् । भ–ध्वजैश्च विविधैस्तथा । १२. भ–हर्म्यकंठैश् । १३. भ–हेमपादा० । १४. रा$_2$ फ म–नास्ति । १५. रा$_2$ फ म–शोभितं । १६. प्र रा$_2$ फ म–०जलदाका० । १७. भ–नास्ति ॥ १८. फ–०क्षकैः । म–०गणाचितैः ॥ १९. भ–नास्ति । २०. रा फ म–घंटाजालप्रणादितं प्रगीतमिव सर्वशः ॥ २१. भ–तं ॥ २२. भ–बृहद्भिर्भूषितं हर्म्यैर् । २३. भ–०भितैः । २४. रा$_2$ फ म–कामगं रुचिरं दिव्यं मनोऽभिप्रेतमव्ययं ॥ २५. प्र रा$_2$ फ–दंतास्फा० । भ–धातुस्फटि० ॥ २६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०र्यस्य वरा० । म–०र्यपरमासनैः ।

N] महाऽर्हाऽऽस्तरणोपेतम् उप-पन्नं महा-धनैः ॥[1]४९॥[२८
उप-स्थितम् अन्-आधृष्यं तद् विमानं मनो-जवम् ।
२६] ततो[1] नि-वेद्य[2] रामाय तस्थौ तत्र वि-भीषणः ॥५०॥ [२९
तत् पुष्प-कं काम-गमं वि-मानम्[3]
उप-स्थितं[4] प्रेक्ष्य हि दिव्य-रूपम्[4] ।
रामः प्र-हृष्टः सह लक्ष्मणेन
N] पुरा यथा वृत्र-वधे शत-क्रतुः ॥[5]५१॥ [३०

इत्यार्षे रामायणे युद्ध-काण्डे[6] पुष्पकोपस्थानं[7] नाम
द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

---

## [वं–१०६]= [ त्र्युत्तरशततमः सर्गः ] =[दा–१२५]

१पू] उप-स्थितं तु तं दृष्ट्वा वि-मानं[8] पुष्प-कं ततः[8] ।
N] अ-विदूरे[9] स्थितं रामम्[10] इत्य् उवाच वि-भीषणः[10] ॥१[11]॥ [१
N] स तु बद्धाऽञ्जलिपुटो वि-नीतो राक्षसेश्वरः[12] ।
१उ] अब्रवीत्[13] त्वरयोपेतः किं करोमीऽति राघवम् ॥२[14]॥ [२
तम् अब्रवीन्[15] महा-तेजा लक्ष्मणस्योप-शृण्वतः ।
२] वि-मृश्य[16] राघवो वाक्यम् इदं स्नेहोपबृंहितम्[17] ॥३ ॥ [३
३पू] इमे तु कृत-कर्माणः सर्वे[18] एव वनौकसः ।[18] [४पू
N] सहैभिर् भवता लङ्का जिता मम नि-वेदिता ॥[19]४॥ [N

---

१. भ—नास्ति ॥ २. रा$_2$ फ म—निवेदयित्वा ॥ ३. म—ह्युपस्थितं । ४. म—तदा तु संप्रेक्ष्य च दि० । भ—०तं भूधरसन्निकाशं । ५. भ—दृष्ट्वा तदा विस्मयमाजगाम रामः ससौमित्रिरुदारसत्त्वः ॥ ६. ब प्र भ—लंकाकाण्डे । रा$_2$ फ—आभ्युदयिके । ७. प्र म—०कोत्थापनं । भ—विभीषणाभ्युदयिके पु० ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—पुष्पकं पुष्पभूषितं । ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—नातिदूरे । १०. रा$_2$—वर्जं—रामः प्रत्युवाच विभीषणम् । ११. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब—कृतं साध्विव-त्युवाचैनं रामः सम्यग्विभीषणम् ॥ १२. रा$_2$ फ म—०साधिपः । १३. रा$_2$ फ म—उवाच । १४. अ—नास्ति ॥ १५. रा$_2$ म—उवाच । १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—विस्पष्टं । १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—०हपुरस्कृतं । रा$_2$ फ—०पगुंठितं ॥ १८. रा$_2$ फ म—कृतप्रत्युपकर्माणो विभीषणवनौकसः । १९. भ—नास्ति ॥

त्यक्त्वा प्राणान् परं शक्त्या तोषितोऽस्मि वि-भीषण ।[1]
N] एभिः सं-पूजितैः वीरैः पूजितोऽहं त्वया ध्रुवम् ॥५ ॥ [N
ममाऽर्थे[2] ये पराऽऽक्रान्ताश् चिरं[2] वानर-पुङ्गवाः ।
N] सर्व-शः[3] पूजनीयास् तु[4] ऋक्ष-वानर-संहताः[4] ॥६ ॥ [N
३उ] रत्नैर् अर्थैश् च वि-विधैः सं-पूज्यन्तां वि-भीषण ।[5] [४उ
सहाऽमीभिर्[6] जिता लङ्का निर्-जितो[6] राक्षसेश्वरः ॥७ ॥
४] दूरे प्राण-भयं त्यक्त्वा सं-ग्रामेष्व् अभि-वर्तिनः ।[7] [५
एवं सु-सम्मताश्[8] चैव मानाऽर्हा मानितास् त्वया ।
५] भविष्यन्ति कृत-ज्ञेन निर्-वृत्ता हरि-यूथपाः ॥८[9] ॥ [७
त्यागिनं सं-ग्रहीतारं साऽनुक्रोशं यशस्विनम्[9] ।
६] यतस् त्वाम् अव-गच्छामि ततः सं-बोधयाम्य्[10] अहम् ॥९ ॥ [८
हीनं क्लीब-गुणैः[11] सर्वैर् अरि-हन्तारम् आ-हवे ।
N] सेना भजति राजानम् एतद् भूमि-पतेर्[12] व्रतम्[12] ॥१०[13]॥ [९
धर्माऽर्थ-विदुषं[14] वीरम्[14] अति-दातारम् आर्जवम् ।
७] योधा भजन्ति राजानम् एतद् भूमि-पतेर् व्रतम् ॥११[15]॥ [N
एवम् उक्तस् तु रामेण वानरांस् तान् वि-भीषणः ।
८] धन-रत्न-प्रदानेन सर्वान् एवाऽभ्य्-अपूजयत् ॥[16]१२॥ [१०
९पू] ततस् तान् वानरान्[17] दृष्ट्वा धन-रत्नैश्[18] च पूजितान्[18] । [११पू
N] सान्त्वयित्वा यथा-न्यायम्[19] इदं वचनम् अब्रवीत् ।१३[20]॥ [N
परि-तुष्टोऽस्मि[21] भद्रं ते कृतं साह्यं महन् मम ।
N] लब्धा सीता हतः शत्रुः कुलम् अत्युद्-धृतं[22] च मे ॥१४॥ [N

१. अतः परमधिकः पाठः—प्र रा$_2$ फ म–रत्नैः सममभिपूज्यंतामपि प्रत्यवराश्च ये । यो यदिच्छति यावच्च तत्तद्देयं विभीषण ॥ २. म–सुसमर्थाः पराक्रान्ताः सर्वे । ३. रा$_2$ फ–सर्वथा । ४. रा$_2$ फ म–ते रक्ष्याश्च सुतवत्सदा ॥ ५. रा$_2$ फ म–नास्ति । ६. भ–०भिस्त्वया लंका निर्जिता ॥ ७. अतः परमधिकः पाठः—भ–त इमे कृतकर्माणः सर्व एव वनौकसः । धनरत्नप्रदानैश्च कोशैश्च सफलान्कुरु ॥ ८. भ–सम्मानिताश् ॥ ९. रा$_2$ म–मनस्विनं । भ–जितेंद्रियं । १०. रा$_2$ फ म–त्वां प्रब्रवीम्य् ॥ ११. भ–ह्यपि गुणैः । १२. भ–०ते श्रुतम् । १३. रा$_2$ फ म–नास्ति ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–श्रुतं धर्मार्थविदुषं । १५. भ–नास्ति ॥ १६. रा$_2$ फ म–ववर्ष रत्नवर्षेण वर्षेण मघवानिव ॥ १७. फ म–पूजितान् । १८. रा$_2$ फ म–रामः संपूर्णमानसः । १९. रा$_1$ ल$_1$ प्र–०न्याय्यं । म–इदं वाक्यं । २०. भ–अत आरभ्य-२०-शश्लोकं यावन्नास्ति ॥ २१. फ–वर्जं—परिपुष्टो० । २२. रा$_2$–अभ्यु० ।

अ-शून्या मे दिशः सर्वा भवद्भिर् देव-विक्रमैः ।
N] नास्त्य् अ-देयं हि मे किं-चिद् देव-राज्यम् अपि ध्रुवम् ॥१५॥ [N
अनु-जानामि वः सर्वान् यथेष्टं गम्यताम् इति ।
N] तेनैव सेतुना तीर्त्वा मकराऽऽलयम् अ-व्ययम् ॥१६॥ [N
सु-ग्रीवस् तु मया सार्धं वि-मानेन गमिष्यति ।
N] साऽमात्यो युव-राजश् च[1] यथा मुख्याश् च[2] वानराः ॥१७॥ [N
इत्य् उक्तास् ते महा-काया वानराः काम-रूपिणः ।
N] प्र-दक्षिणम् अवर्तन्त[3] दृष्ट्वा रामं स-लक्ष्मणम् ॥१८॥ [N
सु-ग्रीवम् अङ्ग-दं चैव राजानं चैव वि-भीषणम् ।[4]
N] प्र-णम्य च शिरोभिस् ते[5] प्र-ययुर् हरि-यूथपाः ॥१९॥ [N
यथोत्-साहं यथा-प्रीति यथाऽऽगतम् अरिं-दमाः ।
N] के-चिद्[6] रवान्[6] वि-मुञ्चन्तः सिंह-नादांश् च पुष्कलान् ॥२०॥ [N
९उ] आ-रुरोह तदा रामस् तद्[7] वि-मानं मनो-जवम्[7] । [११उ
अङ्केनाऽऽदाय[8] वैदेहीं लज्जमानां[9] यशस्विनीम्[9] ।
१०] लक्ष्मणेन सह भ्रात्रा वि-क्रान्तेन धनुष्-मता ॥[10]२१॥ [१२
अब्रवीच् च विमान-स्थः काकुत्स्थः सर्व-वानरान् ।
११] सु-ग्रीवं च महा-वीर्यं राक्षसं च वि-भीषणम् ॥२२[11]॥ [१३
N] सर्वेषां वः प्र-भावेन दुर्-आत्मा रावणो हतः ।[12] [N
मित्र-कार्यं कृतम् इदं भवद्भिर् वानरर्षभाः ।[13]
१२] अनु-ज्ञाता मया सर्वे यथेष्टं गन्तुम्[14] अर्हथ[14] ॥२३॥ [१४
यत् तु कार्यं वयस्येन स्निग्धेन च हितेन च ।
१३] कृतं सु-ग्रीव तत् सर्वं भवता धर्म-चारिणा ।[15]
१४पू] किष्किन्धां गच्छ सु-ग्रीव स्व-राज्यम् अनु-पालय ॥२४[13]॥ [१५

---

१. फ म—वर्जं—तु । अ—ते । २. ल$_1$—तु ॥ ३. म—अकुर्वन्त ॥ ४. प्र रा$_2$ फ—नास्ति । ५. रा$_2$ फ—तान् । म—तं । ६. म—कलर० । प्र—केचिद्वाचा ॥ ७. रा$_2$ फ म—विमानमभिपूज्य च । ८. रा$_2$ फ—अंके चादाय । रा$_1$ ल$_1$ ल$_2$ ब अ प्र—०नारुह्य । ९. रा$_2$ फ म—श्रियं नारायणो यथा । १०. रा$_2$ फ म—अथारुरोह तं राजा सुग्रीवः सह मंत्रिभिः ॥ ११. रा$_2$ फ म—लक्ष्मणश्च महाधन्वी युवराजोंगदस्तथा । सुग्रीवानुमता ये च विद्वांसो हरियूथपाः ॥ १२. रा$_2$ फ म—ऋक्षराजो गवाक्षश्च सुषेणश्च हरीश्वरः । १३. रा$_2$ फ म—नास्ति । १४. भ—प्रतिगच्छथ । १५. भ—अत आरभ्य २७-शश्लोकस्य पूर्वार्धं यावन्नास्ति ॥

अब्रवीद् च विमान-स्थो राघवो राक्षसेश्वरम् ।[१]
N] वि-भीषणम् अमित्र-घ्नम् इदं वचनम् अर्थ-वत् ॥२५॥ [N
मित्र-कार्यं महद् इदं भवता पुष्कलं कृतम् ।
N] स्व-पक्षं पृष्ठ-तः कृत्वा धर्मम् आ-लम्ब्य केवलम् ॥२६॥ [N
लङ्काम् आ-वस भद्रं ते मया दत्तां वि-भीषण ।[१]
N] वि-भीषण महा-बाहो कुल-धर्म-भृतां वर ॥[२]२७॥[N
स्व-राज्यं ते मया दत्तं लङ्कायां राक्षसेश्वर ।[२]
१५] न त्व्[३] आ-धर्षयितुं[३] शक्ताः सेन्द्रा अपि सुराऽसुराः[४] ॥२८॥ [१६
अयोध्याम् अभि-गच्छामि[५] राज-धानीम् अहं[६] पितुः[६] ।
१६] अभ्यनु-ज्ञातुम् इच्छामि सर्वांश्[७] चाऽऽमन्त्रयामि[७] वः ॥२९॥ [१७
एवम् उक्तास्[८] तु रामेण हरीऽन्द्रा[९] हरयस् तथा[९] ।[१०]
१७] ऊचुः प्राऽञ्जलयः सर्वे राक्षसश् च वि-भीषणः ॥[११]३०॥[१८
१८पू] अयोध्याम् अभि-गच्छामः सर्वान् नयतु नो भवान् ।[१२]
N] ऊर्जिता वि-चरिष्यामो वनान्य् उप-वनानि च ॥[१३]३१॥[१९
१९पू] दृष्ट्वा तवाऽभि-षेकं च कौसल्याम् अभि-वाद्य च ।[१४] [२०पू
N] दृष्ट्वा भरत-शत्रुघ्नौ सु-मित्रां[१५] कैकयीं तथा[१५] ॥३२॥ [N
N] अयोध्यां नगरीं दृष्ट्वा रम्योद्यानवनाऽन्तराम्[१६] ।
१९उ] न चिराद् आ-गमिष्यामः स्व-गृहान् रघु-सत्तम ॥[१७]३३॥[२०उ
एवम् उक्तस् तु धर्माऽऽत्मा वानरैः[१८] स-विभीषणैः[१८] ।
२०] अब्रवीद् वानरान् रामः स-सुग्रीवविभीषणान् ॥[१९]३४॥[२१
प्रियात् प्रिय-तरं लब्धम् अद्य[२०] यद्य् आ-गमिष्यथ[२०] ।

---

१. भ-नास्ति । २. रा$_2$ फ म-नास्ति ॥ ३. रा$_2$ फ म भ-त्वां ध० । ४. रा$_2$ फ म-दिवौकसः ॥ ५. रा$_2$ फ म-प्रतियास्यामि । ६. रा$_2$ फ म-पितुर्मम । ७. रा$_1$ ल$_1$ ल$_2$ व अ प्र भ-सर्वानामं० ॥ ८. रा$_2$ फ म भ-उक्तस । ९. रा$_2$ फ म-स राजा रावणानुजः । १०. भ-अत आरभ्य ३३-शश्लोकं यावन्नास्ति । ११. रा$_2$ फ म-उवाच रामं प्रणतः प्रसृतं हेतुमद्वचः ॥ १२. रा$_2$ फ म-अयोध्यां नगरीं गंतुमिच्छामि सहितस्त्वया । १३. रा$_2$ फ म-नास्ति ॥ १४. भ-तवाभिषेकमिच्छामि द्रष्टुं हृदयकांक्षितं । कौशल्यामभिवाद्याहं सुमित्रां कैकयीं तथा । १५. रा$_2$ फ म-भविष्याम्यात्मनोऽनृणः ॥ १६. म-नानोद्या० । १७. रा फ म-पुनरेष्याम्यनुज्ञातो भवता यदि मन्यसे ॥ १८. रा फ म-रामस्तेन महात्मना । १९. रा$_2$ फ म-बभूव प्रीतिमान्रामस्तस्य भक्त्याभिजातया ॥ २०. भ-मया यदि ग० ।

२१] सर्वैर् भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥३५[1]॥[२२
क्षिप्रम् आ-रुह सु-ग्रीव वि-मानं सह वानरैः ।
२२] त्वम् अप्य् आ-रुह साऽमात्यो राक्षसेन्द्र वि-भीषण ॥३६[2]॥ [२३
आ-रुरोह ततो राजा सु-ग्रीवः सह मन्त्रिभिः ।[3] [२४पू
२३] अथाऽऽजग्मुस् तथा हृष्टाः सर्वे ते हरि-यूथपाः ॥[4]३७[5]॥[N
ततो वि-भीषणो राजा वि-धाय नगरे विधिम् ।
N ] आ-मन्त्र्य मातरं धी-मान् सं-दिश्य[6] च[6] सुहृज्-जनम् ॥३८॥ [ N
वि-मानं पुष्प-कं श्री-मांश् चतुर्भिः सचिवैः सह ।[4]
N ] धर्माऽर्थ-कुशलैर् वीरैर्[7] आ-रुरोह[8] यथा-विधि[8] ॥[9]३९॥[ N
तेष्व् आ-रूढेषु सर्वेषु कौबेरं[10] यानम् उत्-तमम्[10] ।
२४] राघवेणाऽभ्यनु-ज्ञातम् उत्-पपात[11] ततो नभः[11] ॥४०॥ [२५
ख-गमेन[12] वि-मानेन काम-गेन च[13] भास्-वता[13] ।
२५] सुहृद्-वृतस्[14] तथा हृष्टो[14] ययौ[15] रामः कुबेर-वत् ॥४१॥ [२६
स तु पवन-पथं गते[16] वि-माने[16]
दशरथ-वंश-विवर्धनः[17] प्रतीऽतः ।
क्षिति-तलम् अव-लोकयन् प्र-हृष्टो
N] नगर-शतैर् उप-शोभितं सम्-ऋद्धैः[18] ॥४२॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे[19] पुष्पकाऽऽरोहणं[20] नाम
त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

---

१. रा$_2$ फ म–उवाच चैनं काकुत्स्थः प्रियं मे राक्षसेश्वर । यत्त्वमेवं गतो विद्वन्कार्यनिश्चयतत्त्ववित् ॥ २. रा$_2$ फ म–क्षिप्रमारोहतु भवान्सामात्यः सपुरःसरः। पुरे प्रतिविधिं कृत्वा कर्तव्यमिति चेति च ॥ ३. भ–स ततो पुष्पकं दिव्यं सुग्रीवः सह वानरैः । ४. भ–नास्ति । ५. रा$_2$ फ म–नास्ति ॥ ६. म–संदिदेश ॥ ७. रा$_2$ फ म–शूरैर् । ८. रा$_2$ फ–०रोहाथ पुष्पकं । ९. भ–आरुरोह मुदा युक्तः सामात्यश्च विभीषणः ॥ १०. रा$_2$ फ म–सुखासीनेषु सर्वशः । ११. रा$_2$ फ म–विमानं दिवमुत्पतत् ॥ १२. रा$_2$ फ म–खेचरेण । १३. रा$_2$ फ म–विराजता । १४. रा$_2$ फ–सुप्रीतश्च प्रहृष्टश्च । १५. रा$_2$ फ म–वर्जं—बभौ ॥ १६. म–०थविमानशाली । १७. रा$_2$ फ म–०विभूषणः । १८. रा$_1$ अ भ–प्रहृष्टैः ॥ म भ–वर्जं—समृद्धं ॥ १९. ब प्र भ–लंकाकांडे । रा$_2$ फ म–आभ्युदयिके । २०. ल$_1$–पुष्पकविमानं । रा$_2$–०कावरोहणो ॥

## [वं-१०८]= [ चतुरुत्तरशततमः सर्गः ]= [दा-१२६]

अनु-ज्ञातं[१] तु रामेण[१] तद् वि-मानं मनो-जवम् ।

१] उत्-पपात महा-मेघः[२] श्वसनेनोद्-धतो[२] यथा ॥१ ॥[१

N] देशान् बहु-विधान् पश्यंल् लङ्कायां बहु-पादपान् ।[३]

पातयित्वा ततश् चक्षुः सर्व-तो रघु-नन्दनः ।[४] [N

२] अब्रवीन् मैथिलीं सीतां रामः शशिनिभाऽऽननाम्[५] ॥२ ॥[२

कैलासशिखराऽऽकारे त्रिकूट-शिखरे स्थिताम् ।

३] पश्य[६] लङ्कां तु[६] वैदेहि निर्-मितां विश्व-कर्मणा ॥३ ॥[३

एतद् आ-योधनं पश्य[७] मांस-शोणित-कर्दमम् ।

४] हरीणां राक्षसानां[८] च सीते वि-शसनं[९] महत्[९] ॥४ ॥[४

N] अत्राऽसौ रावणो दग्धः पूर्व-दग्धः शरैर् मम ।[१०]

कुम्भ-कर्णोऽत्र[११] नि-हतः[११] प्र-हस्तश्[१२] च निशा-चरः[१२] ॥५ ॥[६ पू

५] इन्द्र-जिच् चाऽत्र मायावी हतः सौमित्रिणा बली ।[१३] [८पू

तव हेतोर् विशालाऽक्षि नि-कुम्भश्[१४] च नि-पातितः[१४] ॥[१५]६ ॥[N

६] विरूपाऽक्षश् च दुर्-धर्षो महापार्श्व-महोदरौ ।[१६]

अ-कम्पनश् च नि-हतो धूम्राऽक्षश् च महा-बलः ॥[१७]७ ॥[९

७] विद्युज्-जिह्वश् च सं-पातिर् देवाऽन्तक-नराऽन्तकौ[१८] । [१०

८पू] अन्ये च बहवः शूरा राक्षसेन्द्रपदाऽनुगाः ॥[१९]८ ॥[N

एष लब्ध-वरः सीते प्र-माथी राक्षसाऽधिपः ।[२०]

---

१. रा₂ फ म–राघवेणाभ्यनुज्ञातं । २. म–महावेगः श्वसनेन हतो ॥ ३. टि–इतोऽग्रे श्लोकार्धं त्रुटितमिव स्यात्? । ४. रा₂ फ म–नास्ति । ५. रा₂ फ म–चंद्रनि० ॥ ६. रा₂ फ म–अवेक्ष्य लंकां ॥ ७. रा₂ फ म–घोरं । ८. रा₂ फ–नैर्ऋतानां । ९. रा₂ फ म–पश्य विनाशनं ॥ १०. भ–नास्ति । ११. रा१ ल१ ल₂ ब अ प्र–०णश्च नि० । म–०र्णो विनि० । १२. रा₂ फ म–महाकायो महाबलः ॥ १३. रा फ म–अत्रेन्द्रजिन्महावीर्यो लक्ष्मणेन हतो रणे । १४. रा₂ फ–विरूपाक्षश्च राक्षसः । भ–वर्जं—कुम्भकर्णश्च पातितः । १५. म–अत आरभ्य १४-शश्लोकस्य पूर्वार्धं याव-न्नास्ति । १६. रा₂ फ–महापार्श्वः सुदुर्धर्षस्तथैव च महोदरः । अतः परमधिकः पाठः—भ–अतिकायश्च तेजस्वी देवांतकनरांतकौ । १७. रा₂ फ–धूम्राक्षो निहतोऽत्रैव निकुंभश्च वरानने ॥ १८. भ–मकराक्षश्च दुर्जयः । १९. रा₂ फ–अंकपनश्च निहतो बहवोऽन्ये च नैर्ऋताः । २०. रा₂ फ–यज्ञकोपप्रभृतयश्चात्रैव शतशो हताः ।

११] तव हेतोर् विशालाऽक्षि रावणो[1] नि-हतो मया[1] ॥९ ॥[५
अत्राऽऽवां मेघ-नादेन बद्धौ मैथिलि मायया ।
९] निर्-आशा वानराश् चैव स-सुग्रीवविभीषणाः ॥१०[2]॥[N
तारा-पित्रा च सम्प्रोक्तो[3] हनू-मान् मारुताऽऽत्मजः ।
N] जीवनीम् आ-नयस्वेति रामस्य प्रिय-काम्यया ॥११[4]॥ [N
पद्म-गन्धिश् (?न्धि) च सूक्ष्मा(?क्ष्मां)च सूक्ष्म-पत्रा(?त्रां) तथैव च ।
N] महौषधीः(?धीं)कपि-श्रेष्ठ राजपुत्रे(त्र-इ[5]) पु-कांक्षिताः(?ताम्) १२।[5][N
१०पू] रुरुदुर् वानराः सर्वे रामे[6] नि-धनम् आ-गते[6] ।
N] कथं पारं[7] गमिष्यामस् तं विना पार्थिवाऽऽत्मजम् ॥१३॥ [N
१०उ] वैनतेयो मुहूर्ताच् च वि-मुच्य[8] शर-बन्धनात्[8] ।
N] परि-ष्वज्य प्र-यातोऽभूत् सुर-लोकं महा-यशाः ॥१४॥ [N
अत्र मन्दोदरी नाम करुणं पर्य्-अदेवयत् ।
१२] पत्नी राक्षस-राजस्य रावणस्य दुर्-आत्मनः ।[9]
N] स-पत्नीनां सहस्रेण साऽग्रेण परि-वारिता[10] ॥१५॥ [१५पू
अत्राऽयं लक्ष्मणो वीरः शक्त्या परमया[11] तया[11] ।
N] अ-मोघया रावणेन भृशं वक्षसि ताडितः ॥१६[12]॥[N
पतितं लक्ष्मणं दृष्ट्वा मां विषण्ण-मुखं तदा[13] ।
N] सु-षेणो वानर-श्रेष्ठः प्रेषयामास वानरम् ॥१७॥[N
हनू-मन्तं महा-वीर्यम् ओषध्य्-अर्थं महा-जवम् ।
N] जम्बू-द्वीपम् अति-क्रम्य वि-शल्याम् आऽनयत् कपिः ॥१८॥ [N
चन्द्रस्य च[14] गिरेः पादे सा च जाता महौषधी ।
N] ताम् आऽनयन् महा-बाहुर् जीवयामास लक्ष्मणम् ॥१९[12]॥ [N
एष[15] सं-दृश्यते देवि[15] सम्-उद्रः सरितां पतिः[16] ।

---

१. रा$_2$ फ म—राक्षसाः क्रूरबुद्धयः ॥ २. रा$_2$ फ —अत आरभ्य १४-शश्लोकं यावन्नास्ति । ३. ल$_1$ ल$_2$ ब अ प्र—संदिष्टो । ४. भ—नास्ति ॥ ५. टि.—मध्यपदलोपः कर्मधारयसमासः द्र. ॥ ६. भ—मयि मृत्युमुपागते । ७ भ—वयं । ८. भ—विदार्य शरबंधनं ॥ ९. रा$_2$ फ—नास्ति । म—अत आरभ्य २०-शश्लोक-पूर्वार्धं यावन्नास्ति । १०. रा$_2$—पतिता भुवि ॥ ११. रा$_1$ अ—०या तदा । भ—०मभीमया । १२. रा$_2$ फ—नास्ति । १३. भ—तथा । १४. भ—हि ॥ १५. रा$_2$ फ—वर्जं—दृश्यते चैव वैदेहि । १६. रा$_1$ ल$_2$ ब अ प्र—गतिः ।

१३] पूर्व[१]-जो[१] ज्ञातिर्[१] अस्माकं येन साह्यं महत्[२] कृतम्[२] ॥२०॥ [N
एतत् तु दृश्यते तीरं[३] सु-वेलस्य वराऽऽनने[३] ।[४]
१४] सु-वेलोऽयं महा-शैलः सुखं यत्रोषिता वयम् ॥२१॥ [N
लङ्कां प्रत्यर्थि-भूतोऽसौ[५] दृश्यते काल-पर्वतः ।[६]
N] यत्र सागरम् उत्-तीर्य तां[७] रात्रिम्[७] उषिता वयम् ॥२२॥ [N
एष सेतुर् मया बद्धः सागरे मकराऽऽलये[८] ।
१५] तव हेतोर् विशालाऽक्षि नल-सेतुर्[९] इति[१०] स्मृतः[१०] ॥२३॥ [१७
यावत् स्थास्यन्ति गिरयो यावत् स्थास्यन्ति सागराः ।
१६] तावत्[११] सेतुर् अयं स्थाता[११] यावच् च पृथिवी ध्रुवम् ॥२४[१२]॥ [N
नलेन वि-हितः सेतुस् त्वद्-अर्थं वै[१३] समा-हितः ।
N] एष देवि[१४] मनुष्येषु[१४] कीर्ति-भूतो[१५] भविष्यति[१५] ॥२५[१२]॥ [N
दश-योजन-विस्तीर्णं(?र्णः) शत-योजनम् आ-यतम् (?तः) ।
N] सागरेऽत्र[१६] वि(?नि)-बद्धोऽयं नलेन सु-महाऽऽत्मना ॥२६[१७]॥ [N
पश्य सागरम् अ-क्षोभ्यं वैदेहि वरुणाऽऽलयम् । [१८पू
१७] अ-पारम् इव गर्जन्तं शङ्ख-शुक्ति-समाकुलम्[१८] ॥२७॥ [N
आकाश-सदृशं पश्य चलं तिमि-समाकुलम् ।[१९]
N] जलं वैदेहि राजन्तं यादो-गण-निषेवितम् ॥[२०]२८॥ [१८
सु-रसा[२१] राक्षसी चाऽत्र दूतस्य किल[२१] मैथिलि ।
१८] विघ्नं हनु-मतश् चक्रे क्रम-तः किल मारुतेः ॥२९[२२]॥ [N
ताम्[२३] एव हरि-शार्दूलः[२३] सं-क्षिप्याऽऽत्मानम् आत्मना ।

---

१. भ-पूर्वज्ञातिभिर् । २. रा$_2$ फ म-कृतं मम ॥ ३. भ-पृष्ठं सु० । रा फ-देवि तीरे नदनदीपतेः । ४. म-नास्ति । ५. रा$_2$ फ-लंकाप्रत्यद्रिभू० । ६. अतः परमधिकः पाठः— रा फ-वर्जं—एष संदृश्यते देवि समुद्रः सरितां पतिः । ७. रा$_2$ फ म-रजनीम् । ८. रा$_2$ फ म-सलिलार्णवे । भ-सलिलाकरे । ९. भ-कीर्तिरेषा । १०. रा$_1$ अ म-०ति श्रुतः । भ-भविष्यति । ११. म-नलसेतुरिति ख्यातो । १२. भ-नास्ति ॥ १३. फ म-च । १४. रा -वर्जं—देवम० । १५. म-कथाभूतो भ० । रा$_2$ फ-नैतदन्यः करिष्यति । १६. भ-वर्जं—०रोऽग्र० । १७. म-पश्य सागरमक्षोभ्यं धर्षितं नलसेतुना । देवदैत्यमनुष्येषु नैतदन्यः करिष्यति । रा$_2$ फ-नास्ति । १८. रा$_2$ फ म-वर्जं—शंखमीनस० ॥ १९. ल$_1$ ल$_2$ ब-नास्ति । रा$_2$ फ म-जलमाकाशसदृशं तिमिमत्स्यसमाचितं । २०. रा$_2$-अपारमिव गर्जंतं यादो० । प्र म भ-नास्ति ॥ २१. अ-सिंहिका राहुमाता च दू० । फ-०सा चागमद्यऽत्र दू० । भ-०सा नागमाता च तव दूतस्य । रा$_2$-०सा त्वागमच्चात्र दू० । २२. म-नास्ति ॥ २३. म-पश्य वैदेहि शार्दूलं ।

N] वञ्चयामास मेधावी काम-रूपी मनो-जवः ॥३०[1]॥[N
हिरण्य-नाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि ।[2]
१९] विश्रमाऽर्थं[2] हनु-मतो भित्त्वा[3] सागरम् उत्थि(द्-स्थि)तम्[3]॥३१॥[१९
एतद् वेला-वनं देवि तमाल-वन-शोभितम् ।
२०] हिन्ताल-ताल-गहनं रक्त-माल-समाकुलम् ॥३२॥ [N
एष तीरे सम्-उद्रस्य नि-वासो[4] मम जानकि[4] । [N
२१] यत्र राक्षस-राजोऽयम् आ-जगाम वि-भीषणः ॥३३॥[२३
अत्राऽस्मि शयितो देवि कुशाऽऽस्तीर्णे मही-तले ।
२२] दर्शनाऽर्थे[5] सम्-उद्रस्य त्रि-रात्रं नर-रूपिणः ॥३४॥ [N
दुर्-धरश् चाऽपि शैलोऽयं महामेघौघ-सन्निभः[6] ।
२३] महेन्द्रस्य[7] गिरेः पादौ यत्र[8] क्रान्तं हनू-मता ॥३५[9]॥[N
एषा सा दृश्यते सीते किष्किन्धा चित्र-कानना ।
२४] सुग्रीव-नगरी रम्या यत्र वाली हतो मया[10] ॥३६[11]॥[२४
एतन् माल्य-वतः शृङ्गं किष्किन्धा-धारि[12] भास्वरम् ।
२५] चत्वारो वार्षिका मासा यत्र देव्य्[13] उषिता[13] मया ॥[14]३७॥[N
त्वया विना विशालाऽक्षि दुःखं यत्र धृतं[15] मया ।
२६] नि-हत्य वालिनं[16] वीरं[17] सु-ग्रीवम् अभ्य्-अषेचयम्[18] ॥३८॥ [N
N] मयाऽनुज-द्वितीयेन क्षिप्तः कालस् त्वया विना ।[19]
एषोऽत्र[20] दृश्यते देवि[20] स-विद्युद् इव तोय-दः ।

---

१. भ–नास्ति ॥ २. रा$_2$ फ म–अत्रैव च सुरलौघः सुनाभो नाम शैलराट् । ३. रा$_2$ फ म–समुद्रादुत्थितोऽभवत् ॥ ४. भ–स्कंधावारो यशस्विनि ॥ ५. फ रा$_2$ फ म भ–०नार्थं । ६. रा$_2$ फ म–महाजलदस० । ७. म भ–मलयस्य । ८. म–यतः । ९. अतः परमधिकः पाठः—रा$_2$ फ भ–एष विंध्यो महाशैलो नदीनदशतान्वितः ॥ १०. रा$_2$–महान् । ११. अतः परमधिकः पाठः—रा$_2$–वैदेहि वानरेंद्रस्य शुद्धांतमधिरोहय । विमानं तं समाहूय सभाजय सखीरिमाः ॥ श्रुत्वा भर्तुर्वचः सीता राममेवान्वमोदयत् । त्वमाज्ञापय राजेंद्र वानरेंद्रस्य योषितः । यथा नयति साकेतं वानरीर्मम कारणात् ॥ राघवेणाभ्यनुज्ञातः सुग्रीवो वानरेश्वरः । सर्वाः समारोपयत वानरीस्तु स्वलंकृताः ॥ १२. रा$_2$ फ म–०न्धोपरि । १३. रा फ–देवि घृता । १४. प्र–नास्ति ॥ १५. रा१ ल१ ल$_2$ ब अ प्र–श्रितं । म–कृतं । १६. प्र–वानरं । १७. रा$_2$ फ भ–घोरं । १८. रा फ–अभिषिच्य च ॥ १९. टि.-इत उपरि श्लोकार्धच्योतः स्यात् ! । भ–नास्ति । २०. रा१ ल१ ल$_2$ ब अ भ–वीक्ष्यते सुमहान्सीते ।

२७] ऋष्य-मूको गिरि-वरः सुग्रीवभवनाऽङ्कितः[1] ॥३९॥ [३९
अत्राऽहं वानरेन्द्रेण सु-ग्रीवेण समा-गतः[2] ।
२८] समयश् च[3] कृतः सीते[3] वधाऽर्थं[4] वालिनो[4] मया[4] ॥४०[5]॥[४०
एषा सा दृश्यते पम्पा नलिनी चित्र-कानना[6] ।
२९] त्वया वि-हीनो यत्राऽहम् उन्-मादेन[7] प्र-धर्षितः[7] ॥४१॥ [४१
पम्पा-तीरे[8] मया दृष्टा शबरी धर्म-चारिणी ।
३०] अत्र[9] योजन-बाहुश् च कवन्धो नि-हतो मया ॥[10]४२॥[४२
एष देशः स यत्राऽऽस्ते गृध्र-राजो महा-बलः ।[11] [N
३१] जटायुस् तव[12] स त्राता[12] रावणेन नि-पातितः ॥[13]४३॥[४३उ
दृश्यतेऽसौ जन-स्थाने श्री-मान् सीते वनस्पतिः । [N
३२] यत्र युद्धं महद् भूतं तव हेतोर् विलासिनि ।४४[14]॥[४३उ
खरश् च नि-हतः संख्ये दूषणस् त्रि-शिरास्[15] तथा[15] । [४४पू
३३] रक्षसां च सहस्राणि हतानि च चतुर्-दश ।
N] अन्ये च बहवो[16] वीरा[16] निर्-अस्ता वै निशा-चराः ॥४५[17]॥[N
एषा च पर्ण-शाला सा दृश्यते जनकाऽऽत्मजे ।[18]
३४] यतस् त्वं राक्षसेन्द्रेण रावणेन[19] हृता छलात्[19] ॥४६॥ [४५

---

१. रा१ ल१ ल२ ब अ प्र–दृश्यते धातुभिर्वृतः । भ–धातुभिर्बहुभिर्वृतः । २. रा२ फ म–महात्मना । ३. फ म–चाप्युपगतः । ४. रा२ फ म–०नः कपेः ॥ ५. अतः परमधिकः पाठः—रा१ ल१ ल२ ब अ प्र–प्रत्युवाच ततः सीता रामं दशरथात्मजम् । स्वामिन्सुग्रीवरमणीं द्रष्टुमिच्छामि राघव ॥ तया सहैव यास्यामि त्वयोध्यां नगरीं प्रभो । विहस्य रामः सुग्रीवं प्रत्युवाच कपीश्वरम् ॥ सखे त्वद् गृहिणीं तारां द्रष्टुमिच्छति जानकी । तया सहैव याहि त्वमयोध्यां नगरीं मम ॥ राघवाज्ञां स्वशिरसा निधायाथाब्रवीद्वचः । यद्रोचते बहुमतं स्वामिने चास्तु तत्तथा ॥ आनाययामास स तदा तारां तां राघवाज्ञया । आरोप्य पुष्पके तां तु जानकीमभ्यवादयत् ॥ पुनराह ततो सीतां रामो राजीवलोचनः ॥ ६. भ–०कांचना । ७. प्र–प्रमादेन प्र० । भ–तद्बहुविप्लवान् ॥ ८. रा२ फ म भ–अस्यास्तीरे । ९. रा१ ल१ ल२ ब अ–यत्र० । १०. रा२ फ म–कबंधो राक्षसश्चापि दारुणो नि० ॥ ११. रा२ फ म–नास्ति । १२. भ–ते परित्राता । १३. रा२ फ म–युयुधे राक्षसेंद्रेण त्वदर्थं यत्र गृध्रराट् ॥ १४. रा२ फ म–नास्ति ॥ १५. रा२ फ म–च महाबलः । १६. अ प्र भ–०वः शूरा । १७. रा२ फ म–चतुर्दश सहस्राणि रक्षसां भीमकर्मणां । त्रिशिराश्च महावीर्यो यत्र बाणैरजिह्मगैः ॥ १८. रा२ फ म–पर्णशाला तथैवैषा दृश्यते चारुलोचने । १९. रा२ फ म–प्रमथ्यापहृता पुरा ॥

अत्र शूर्प-णखा[1] रौद्री[1] राक्षसी समुपाऽऽगमत्[2] ।
३५] यत्राऽस्याः कर्णनासौष्ठं छिन्नवान् देवि लक्ष्मणः ॥[3]४७॥ [N
३६पू] एषा गोदावरी रम्या प्रसन्न-सलिला[4] शुभा[4] ।
N] एष प्र-स्रवणः शैलो बहु-कन्दर-निर्झरः ॥[5]४८॥ [N
३६उ] अ-गस्त्यस्याऽऽश्रमश् चैव दृश्यते[6] कदली-वृतः ।[7] [४६उ
दृश्यते[8] चैव वैदेहि[8] शरभङ्गाऽऽश्रमो महान् ।[6]
३७] उपाऽऽयातः सहस्राऽक्षो यत्र शक्रः पुरं-दरः ॥४९॥ [४८
एते ते तापसाऽऽवासा[9] दृश्यन्ते तनु-मध्यमे ।
३८] अत्रिः कुल-पतिर् अत्र सूर्यवैश्वानरोपमः[10] ॥५०॥
अनू-असूया त्वया दृष्टा पत्नी तस्य महाऽऽत्मनः । [५०
N] यस्याः सकाशात् प्राऽऽप्तं तद् दिव्यं गात्र-विभूषणम् ॥५१[11]॥ [N
३९पू] अस्मिन् देशे महा-कायो वि-राधो नि-हतो मया ।
N] असौ सु-तनु शैलेन्द्रश् चित्र-कूटः प्र-काशते ॥[12]५२॥ [५१पू
एषा मन्दाकिनी पुण्या नदीऽयं विमलोदका । [४९
४२] पितुर् निर्-वापणं यत्र मया मूल-फलैः कृतम् ॥५३।[13] [N
दृश्यते चैव वैदेहि चित्रकूटशिलोच्चयः[14] ।[15] [N
४१] अत्र मां कैकयी-पुत्रः प्र-सादयितुम् आ-गतः ॥५४[16]॥ [५१उ
पुरो-हितो वसिष्ठश् च वाम-देवश् च कश्य-पः[17] । [N
N] नागरश् च जनः सर्वः प्र-सादयितुम् आ-गतः ।५५[18] [५५उ
४३पू] एषा सा यमुना रम्या दृश्यते यत्र[19] काननम्[19] ।[18] [५२
N] दृश्यते ह्य् अत्र[20] वैदेहि वाल्मीकेर् आ-श्रमो महान् ॥५६[21]॥ [N
४३उ] भरद्वाजाऽऽश्रमः श्री-मान्[22] दृश्यते चैव मैथिलि[22] । [५३

---

१. भ–०खा रौद्रा । रा२ फ म–शूर्पणखी रौद्री । २. रा२ फ म–मासु० । ३. रा२ फ म–यस्याः कर्णौ च नासां च चकर्त भुवि लक्ष्मणः ॥ ४. रा२ फ म–नदी पंचवटीं प्रति । ५. भ–नास्ति ॥ ६. रा२–नास्ति । ७. अतः परमधिकः पाठः—फ म–अगस्त्यभ्रातुरपरस्त्वाश्रमः प्रतिदृश्यते । ८. फ म–वैदेहि दृश्यते चासौ ॥ ९. रा२ फ भ–तापसा देवि । १०. रा२ फ–०नरप्रभः । म–वैश्वानरसमप्रभः । ११. भ–नास्ति । १२. भ–अत्र सीते त्वया दृष्टा तापसी धर्मचारिणी । १३. भ–दृश्यते चैव वैदेहि मुनेरत्रेर्महाश्रमः । यस्यासीदंगरागस्ते दत्तः पत्न्याऽनसूयया ॥ १४. रा१ ल१ ल२ ब अ रा२–विंध्यकू० । १५. फ म–नास्ति । १६. प्र–नास्ति ॥ १७. भ–काश्यपः । १८. प्र फ म–नास्ति ॥ १९. भ–चित्रकानना ॥ २०. फ म–एष । २१. भ–नास्ति ॥ २२. फ म–ह्येष प्रयागमभितः शिवः ।

इयं च दृश्यते सीते गङ्गा त्रि-पथ-गा नदी ।।[१]५७।।[५४पू
४४] शृङ्गवेर-पुरं रम्यं[२] गुहो[३] यत्र सखा मम[३] । [५५उ
N] द्वितीयां यत्र रात्रिं[४] वै[५] सु-मन्त्रेण[५] सहाऽवसम्[६] ।।[७]५८।।[N
इङ्गुदी-मूलम् एतच् च दृश्यते तनु-मध्यमे ।
४५] एकरात्रोषिता यत्र तीर्त्वा भागीरथीं वयम् ।।५९[८]।।[N
एषा सा दृश्यते सीते सरयूर् यूप-मालिनी[९] ।
N] नाना-तरु-लताऽऽकीर्णा सम्प्रपुष्पित-पादपा ।।६०[१०]।।[५६
एषा सा दृश्यते सीते राज-धानी पितुर् मम ।
४६] अयोध्यां कुरु वैदेहि प्र-णामं पुनर् आ-गता । [५७
N] जनन्यो मे स्थिता यत्र पौराश् च वश-वर्तिनः ।।[११]६१।।[N
ततस् ते वानराः सर्वे राक्षसाः स-विभीषणाः ।
४७] उत्-पत्योत्-पत्य सं-हृष्टास[१२] तां पुरीं ददृशुस् तदा[१२] ।।६२।।[५८
ततस् तु तां पाण्डुर-हर्म्य-मालिनीं[१३]
विशाल-रथ्याऽऽपणगोपुरैर्[१४] वृताम्[१४] ।
पुरीम् अपश्यन्[१५] प्लव-गाः स-राक्षसाः[१५]
N] पुरन्दरस्येव[१६] यथाऽमरावतीम्[१६] ।।६३।। [५९

इत्यार्षे रामायणे युद्ध-काण्डे[१७] रामाऽऽख्यापिको[१७] नाम
चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

---

१. फ म–दृश्यते देवि गंगैषा नदी त्रिपथगा शुभा । अतः परमधिकश्च पाठः—यमुना च महाभागा सान्निध्यं च तदुत्तमम् ॥ २. फ म भ–चैव । ३. फ म–गुहस्य भवनं शुभं । ४. रा$_२$–तां रात्रिं । ५. फ म–वर्जं—सौमित्रेण । ६. प्र–यथाव० । ७. भ–नास्ति ॥ ८. फ म–नास्ति ॥ ९. रा$_१$ ल$_१$ ल$_२$ रा$_२$ फ–यूथमा० ।१०. ब भ–नास्ति ॥ ११ फ म–नास्ति ॥ १२. फ म–ददृशुस्तां पुरीं शुभकाननां ॥ १३. रा$_२$–पांडर० । १४. फ म–वर्जं—०थ्यां गजवाजिभिर् । फ–०गोपुरायुतां । १५. फ म–अयोध्यां ददृशुः प्लवंगमाः । १६. फ म भ–पुरीं महेंद्रस्य यथामरावतीं ॥ १७. प्र–लंकाकांडे रा० । रा$_१$ ल$_१$ ल$_२$ ब अ–आभ्युदयिके रामप्राप्तिर् । भ–लंकाकाण्डे अयोध्याप्रत्यागमनं ॥

# [वं-१०६]= [ पञ्चोत्तरशततमः सर्गः ]= [दा-१२७]

अथैवं कथयन् एव सीतायै रघु-नन्दनः । [N
१] भरद्वाजस्य सम्प्राऽऽपद् आ-श्रमं स महा-मुनेः ॥१[1]॥
२पू] पूर्णे चतुर्-दशे वर्षे पञ्चम्यां[2] भरताऽग्रजः[2] । [१
N ] फाल्गुनस्य सिते पक्षे राघवः पुनर् आ-गतः ।[3] [N
२उ] भरद्वाजम् उपाऽऽगम्य प्र-णम्योवाच राघवः ॥[4]२ ॥ [२पू
३पू] श्रुतं भग-वता किं-स्विन्[5] मत्-प्रजानाम् अन्-आमयम् ।[6] [N
N ] शृणोषि कच्-चिद्[7] भग-वन् सु-भिक्षं वि-षये मम ।[8]
३उ] कच्-चिच्[9] च भरतो युक्तो[9] जीवन्त्य् अपि च मातरः ॥३ ॥ [२उ
एवम् उक्तो भरद्वाजो राघवं प्रत्य्-अभाषत ।
४] शृणु वत्स यथा-तत्त्वं भरतस्य वि-चेष्टितम् ॥४ ॥ [३
जटिलो[10] मल-दिग्धाऽङ्गो[10] भरतस् त्वाम् उद्-ईक्षते[11] ।
५] पादुके ते[12] पुरस्-कृत्य सर्वत्र कुशलं गृहे ॥५ ॥ [४
६पू] यत्[13] पुरा चीर-वसनं त्वां[14] दृष्ट्वा वन-वासिनम्[14] ।
N ] स्त्री-तृतीयं च्युतं राज्याद् अभि-षेकाच् च केवलात् ॥६ ॥ [५
पदातिनम् अ-पेताऽर्थं पितुर् वचन-कारिणम्[15] ।
N ] सर्वान्[16] भोगान् परि-त्यज्य[16] स्वर्ग-च्युतम् इवाऽमरम् ॥७ ॥ [६
६उ] कारुण्यम्[17] अभवद् भूयो ममेह[17] समितिं-जय ।
N ] कैकेय्या बाधितं[18] वीऽऽक्ष्य वन्यमूलफलाऽऽशिनम्[19] ॥८ ॥ [७
तत् सम्प्रति[20] समृद्धाऽर्थं सम्-इद्धम् इव पावकम् ।
७] सम्-ईक्ष्य[20] विजिताऽरिं[21] त्वां मम प्रीतिर् अन्-उत्तमा ॥९ ॥ [८

---

१. फ म–नास्ति ॥ २. म–पंचदश्यां रघूत्तमः । भ–०म्यां लक्ष्मणाग्रजः । ३. फ–वर्जं—नास्ति । ४. फ म–भरद्वाजाश्रमं प्रेक्ष्य ववंदे नियतो मुनिं ॥ ५. रा२–किंचिन् । भ–कच्चित् । ६. फ–सत्कृतो विधिवत्तेन भरद्वाजमथाब्रवीत् । म–नास्ति । ७. फ–वर्जं—कश्चिद् । ८. भ–नास्ति । ९. रा१ ल१ ल२ ब अ प्र–कश्चिच्च भरतो राज्ये ॥ १०. फ म–मलपंकजटाधारी । ११. फ म–अवेक्षते । १२. रा१ ल१ ल२ ब अ प्र रा२ भ–स ॥ १३. फ म–त्वां । १४. फ म–महारण्यनिवा० ॥ १५. फ–०कारकं । १६. फ म–सर्वभोगैः परित्यक्तं । भ–सर्वभोगान्परित्यज्य ॥ १७.रा१–०वद् भूयो मुमोह । फ–बभूवाकारणं राज्यं भवतः । म–बभूव कारणं पूर्वं मत्त्वैहि । १८. रा१ ल१ ल२ ब अ प्र रा२–याचितं । म–वासितं । भ–यापितं । १९. फ म–वर्जं--वने मूल० ॥ २०. रा२–सांप्रतं । २१. फ म–निहता० ॥

तव[1] सर्वं सुखं दुःखं[1] विदितं मम राघव[2] । [९
८] यत्[3] त्वया वि-मलं प्राऽऽप्तं[3] जन-स्थाने[4] महद् यशः[4] ।।[5]१०।।
ब्राह्मणाऽर्थे नि-युक्तेन रक्षता सर्व-तापसान् ।[6] [१०
९] मारीच-दर्शनं[7] चैव सीताया[8] हरणं तथा[8] ।।११[9]।[११उ
कबन्ध-दर्शनं चैव पम्पाया दर्शनं तथा ।[9]
१०] सु-ग्रीवेण[10] च[10] सख्यं च यत्र[11] वाली हतस्[11] त्वया ।।१२।। [१२
मार्गणं चाऽपि[12] वैदेह्याः कर्म वाताऽऽत्मजस्य च ।
११] विदितायां च सीतायां[13] नल-सेतुर् यथा कृतः ।।[14]१३।। [१३
यथा च दीपिता लङ्का प्र-हृष्टैर् हरि-यूथपैः । [१४पू
१२] यथा च नि-हते तस्मिन् रावणे लोक-कण्टके[15] ।।१४[15]।[१५पू
विभीषणाऽभिषेकं[16] च सत्-कारं[16] रावणस्य च ।[17] [N
१३] समा-गमश् च त्रि-दशैर् यथा[18] दत्तो वरश् च तैः[18] ।।१५।। [१५उ
अहम् अप्य् एष ते राम ददामि वरम् ईप्सितम् ।[19]
१४] वसाऽर्घं[20] प्रति-गृह्येह[20] श्वश् चाऽयोध्यां गमिष्यसि ।।१६।। [१७
तस्य तच् छिरसा वाक्यं प्रति-गृह्य च[21] राघवः ।
१५] बाढम्[22] इत्य् एव सं-हृष्ट[23] इमं[23] वरम् अयाचत ।।१७।। [१८
अ-काले फलिता वृक्षाः सर्व-तश्[24] च मधु-च्युतः[24] ।
१६] भवन्तु भग-वन् नित्यं वानराणां वरो[25] मम ।।[26]१८।। [१९

---

१. रा$_1$–तत्सर्वं सु० । फ म–सर्वं च सुखं दुःखं ते । भ–सर्वं हि सु० ॥ २. प्र–नास्ति । ३. म–यशस्ते विपुलं प्राप्तं । भ–०यः विपुलं प्राप्तं । ४. म–०स्थानवधात्कृतं । भ–०ने वधाद्यशः । ५. फ–नास्ति ॥ ६. म–०र्थेन युक्तस्य निघ्नतः सर्वराक्षसान् । अतः परमधिकः पाठः—भ–रावणेन हृता सीता बभूवेयमनिंदिता । ७. रा$_1$ ल$_1$ ब अ प्र–०चेर्द० । ल$_2$ रा$_2$–०ची द० । म–०चधर्षणं । ८. भ–सीताप० । म–सीतार्थे तद्वने तदा ॥ ९. ल$_1$ ल$_2$ ब–नास्ति । १०. प्र–०वेणापि । फ–०ण तथा । ११. फ म–स च वालिवधस् । भ–यथा वा० ॥ १२. प्र–चैव । १३. म–वैदेह्यां । १४. प्र–नास्ति ॥ १५. फ म भ–देवकं० ॥ १६. भ–०कश्च सत्कारो । १७. प्र म–नास्ति । १८. म–सर्वैर्दत्तो वरश्च ते । भ–तथा दत्तवराश्च ते ॥ १९. फ–ददामि तेऽहमप्यद्य वरं सत्यपराक्रम । म–प्रददामि तेऽहमपि वरं सत्यपराक्रम । भ–अहमप्यद्य ते राम द० । २०. रा$_1$–त्वत्सकाशं प्र० । ल$_1$ ल$_2$ ब अ प्र रा$_2$–तत्साक्ष्यं प्र० । फ म–अर्घं च प्रतिगृह्णीष्व ॥ २१. भ–तु । २२. ल$_2$–धाराम् । २३. भ-तत्सर्वमिदं ॥ २४. प्र–पर्वताश्च म० । फ म–सर्वे चापि मधुच्यवाः । २५. भ–कृते । २६. फ म भ–भवन्तु मार्गे भगवन्नयोध्यां प्रतिगच्छतः ॥

निष्-फलाः सन्तु स-फला अ-पुष्पाः[1] पुष्प-शोभिताः[1] ।
१७] शुष्काश् चैव स-पत्राश् च[2] स्रवन्तु मधु चोत्-तमम्[2] ॥१९॥ [२१
रामेणोद्-ईरितं[3] श्रुत्वा भरद्वाजो महा-तपाः ।
१८] एवम् अस्त्व् इति चोवाच वरस् ते भुवि दुर्-लभः ॥२०॥ [N
मत्-प्रसादाद्[4] रघु-श्रेष्ठ भविष्यति न सं-शयः ।
१९] वरं लब्ध्वा तु सु-प्रीतो निशां तां सुखम् आऽवसत् ॥२१[5]॥[N

इत्यार्षे रामायणे युद्ध-काण्डे[6] भरद्वाजाऽऽश्रम-निवासो[7] नाम
पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

---

## [वं-१०६ ]= [ षडुत्तरशततमः सर्गः ] =[ दा-१२८ ]

२०पू] अथ[8] रात्र्यां[8] व्य्-अतीतायां[9] सूर्यस्योद्-अयनं प्रति । [N
N] अयोध्यां स्वां पुरीं दृष्ट्वा चिन्तयामास राघवः ॥[10]१ ॥ [१पू
N] काल-तत्त्व-प्रभाव-ज्ञो[11] भ्रातरं भरतं प्रति ।
२०उ] चिन्तयित्वा ततो दृष्टिं वानरेषु न्य्-अपातयत् ॥२ ॥[N
प्रिय-कामं हितं[12] रामस् ततस् त्वरित-विक्रमम्[13] । [N
२१] मति-मन्तं हनू-मन्तम् इदं वचनम् अब्रवीत् ॥३ ॥[१उ
एहि मत्-प्रहितो याहि त्वम् अयोध्यां वने-चर ।[14] [N
२२] कुशलं भरतं ब्रूहि राज-पुत्रं यशस्विनम् ।[15] [N
जानीहि कुशलं कच्-चिद्[16] इक्ष्वाकु-कुल-मन्दिरे ॥४ ॥[२
२३] शृङ्गबेर-पुरं प्राऽऽप्य[17] गुहं गहन-चारिणम्[18] ।
ब्रूया निषादाऽधिपतिं कौशल्यं[19] वचनान् मम ॥५ ॥[३

---

१. फ-ह्यपुष्पाः पुष्पशालिनः । म-०ष्पशालिनः । ल१ प्र भ-०भिनः । २. फ म-स्युः स्र० । भ-ते स्रवेयुश्च मधूत्तमं ॥ ३. फ भ-०णोदाहृतं ॥ ४. फ-वरदानाद् । ५. म-नास्ति ॥ ६. ब प्र भ-लंकाकांडे । फ म-आभ्युदयिके । ७. रा१ ल१ ल२ ब अ प्र रा२-०द्वाजसमागमो । फ-आभ्युदयिके भरद्वाजाश्रमगमनं । म-०श्रमदर्शनो ॥ ८. रा१ ल१ ल२ ब अ प्र भ-तस्यां निशि । ९. भ-प्रभातायां । १०. भ-नास्ति ॥ ११. रा१ ल१ ल२ ब अ प्र-०त्रयविभावज्ञो । म-कालतत्त्ववि० । भ-०त्रयविभागज्ञो ॥ १२. रा२ फ-प्रियं । १३. म-०क्रमः ॥ १४. रा२ फ-अयोध्यां त्वरितो गच्छ त्वरितं वनगोचर । म-अयोध्यां त्वरितो गच्छ त्वमितो वनगोचर । १५. रा२ फ म-नास्ति । १६. भ-वर्जं—किंचिद् ॥ १७. रा१ ल१ ल२ ब अ प्र-रम्यं । १८. रा२ फ-०नगोचरं । म-गगनगोचरम् । १९. रा१ ल१ ल२ ब अ प्र भ-कुशलं ॥

२४] श्रुत्वा हि मां कुशलिनं स्वस्ति-मन्तं[१] गत-ज्वरम्[१] ।
भविष्यति गुहः प्रीतः स ममाऽऽत्म-समः सखा ॥६ ॥ [४
२५] पश्य[२] हि त्वम्[२] अयोध्यायाः प्र-वृत्तिं भरतस्य च । [५पू
वेदयिष्यति ते प्रीतो वाच्यश् च भरतस् त्वया ॥७ ॥
२६] कुशली[३] सर्वसिद्धाऽर्थः स-भार्यः सह-लक्ष्मणः । [६
सह राक्षस-राजेन हरीणाम् ईश्वरेण च ॥[४]८॥ [११उ
२७] जित्वा शत्रु-गणं रामः प्राऽऽप्य चाऽन्-उत्तमं यशः ।
उपाऽऽयातः[५] समृद्धाऽर्थो राघवः[६] स[६] महा-बलः ॥९[७]॥ [१२
२८] हरणं चाऽपि[८] वैदेह्या रावणेन बलीयसा ।
सुग्रीव-समवायं च वालिनश्[९] च रणे वधम्[९] ॥१०॥ [७
२९] सीताया[१०] मार्गणं[१०] चैव यथा चाऽधि-गता[११] त्वया ।
लङ्घयित्वा महा-वेगम्[१२] आपगा-पतिम्[१३] अ-व्ययम्[१३] ॥११॥ [८
३०] उपाऽयनं सम्-उद्रस्य[१४] सागरस्य च[१५] लङ्घनम्[१५] ।
यथा तत्र[१६] कृतः[१६] सेतू रावणश् च यथा हतः ॥१२॥ [९
३१] वर-दानं महेन्द्रेण ब्रह्मणा वरुणेन च ।
वैवस्वत-प्रसादेन[१७] पित्रा च[१८] मम सं-गमम्[१८] ॥१३॥ [१०
३२] एतच् छ्रुत्वा समा-चारं[१९] भरतो यद् वदेन्[१९] मयि[२०] ।
तच्[२१] च(?चाऽऽ)वेदयितव्यं[२१] स्यात्[२२] समा-गत्य महा-मते[२२] ।१४[१२
३३] ज्ञेयाः सर्वे च वृत्ताऽन्ता[२३] भरतस्येङ्गितानि च ।

---

१. रा१ ल१ ल२ ब अ प्र–अरोगं विग० । २. रा२ फ म–पंथानं चाप्य् ॥ ३. रा२ फ म–कौशल्यं । ४. रा२ फ–परिपृच्छति रामस्त्वां पश्चाद्वाक्यं यथार्थकम् । म–नास्ति ॥ ५. म भ–०याति । ६. म–सह भृत्यैर् । ७. फ–नास्ति ॥ ८. रा२ फ–चैव । ९. रा१ ल१ ल२ ब अ प्र–०नोऽरण्यके वधः ॥ १०. रा२ फ म–सीतामन्वेषणं । ११. भ–वर्जं—वाधि० । १२. रा१ ल१ ल२ ब अ प्र–महातोयं । १३. भ–०गाधिपतिं तदा ॥ १४. रा२ फ म–च सैन्यस्य । रा१ अ प्र–समुद्रस्य । १५. रा२–विभीमतां । फ म–च भीमतां । १६. रा२ फ म–च कारितः ॥ १७. रा२ फ म–०सादाच्च । भ–०दं च । १८. रा१ ल१ ल२ ब अ–च मम संगमः । रा२ फ–मम समागमः । म–सह समागमः । भ–मम च संगतिः ॥ १९. रा१ अ प्र भ–०रं भरतो यद्वदेत् । म–यथावाचं चरेत न कुतो । २०. रा१ ल१ ल२ ब अ प्र भ–त्वयि । २१. रा२ फ म भ–तथावे० । २२. रा२ फ म–वर्जं—तु मम चात्र महद्यशः । भ–ते मम प्रति महायशः ॥ २३. रा१ ल१ ल२ ब अ प्र–तृष्यन्ता ।

सत्त्वेन[1] मुख-वर्णेन दृष्ट्या चाऽऽभाषितेन च ॥१५॥ [१४
३४] सर्व-काम-समृद्धं हि हस्त्य्-अश्व-रथ-सङ्कुलम् ।
पितृ-पैतामहं राज्यं कस्य नाऽऽवर्तयेन् मनः ॥१६॥ [१५
३५] सं-भूत्या भरतः श्री-मान् राज्येनाऽर्थी[2] भवेद्[2] यदि ।
प्र-शास्तु वसु-धां[3] सर्वां चिराय[4] रघु-नन्दनः ॥१७॥ [१६
३६] तस्य बुद्धिं च वि-ज्ञाय व्यव-सायं च वानर ।
यावन् न दूर-याताः स्म क्षिप्रम् आ-गन्तुम् अर्हसि ॥[5]१८॥ [१७
३७] न तस्यैवं-विधं चित्तं[6] भूत-पूर्वं[6] कदा-चन ।
प्र-कृतिर् नीति-शास्त्राणां येनैवं[7] क्रियते मया[7] ॥१९[8]॥ [N
३८] कामान्[9] न स[10] नर-व्याघ्रः कृतां सं-स्थाम् अति-क्रमेत् ।
न स्व-मार्गात्[11] तु वि-चलेद् धर्मो मानुष-विग्रहः ॥२०॥ [N
३९] हृदयेनाऽभि-जानामि भरतस्य तु[12] हृद्-गतम्[12] ।
मन्-निमित्तम् अपि प्राणांस् त्यजेन् नाऽस्त्य् अत्र सं-शयः ॥२१॥ [N
४०] न चाऽस्ति सु-कृते[13] दोषः[14] कृते चैव[14] गवेषणे ।[8] [N
४१पू] इति प्रतिसमा-दिष्टो हनू-मान् मारुताऽऽत्मजः ॥२२॥ [१८पू
अथोत्-पपात वेगेन बल-वान् कपि-कुञ्जरः ।
N] गरुत्-मान्[15] वेग-सम्पन्नो जिघृक्षुर् इव पन्न-गम् ॥२३[16]॥ [१९
४१उ] गङ्गा-यमुनयोः सं-गं[17] नमस्-कृत्य[18] महा-बलः[18] ।
लङ्घयित्वा त्रि-पथ-गां भुजगेन्द्राऽऽलयां शुभाम् । [२०
४२] मानुषेणाऽथ[19] रूपेण[19] शृङ्गबेर-पुरं ययौ ॥[20]२४॥ [१८उ
शृङ्गबेर-पुरं प्राऽऽप्य गुहम् आ-साद्य वीर्य-वान् ।[21]
४३] वाचा च शुभया हृष्टो[22] हनू-मान् इदम् अब्रवीत् ॥२५॥ [२१

---

१. भ-शांतेन ॥ २. रा१ ल१ ल२ ब अ प्र-०नार्थे पतेद् । ३. रा२ म-पृथिवीं । ४. रा२ फ म-अखिलां ॥ ५. रा२ फ म-०रमायातास्तावत्तूर्ण-मुपाव्रज ॥ ६. रा१ ल१ ल२ ब अ प्र-छिद्रं । ७. रा१ ल१ ल२ ब अ प्र-येनांधी-क्रियते नृणां । ८. रा२ फ म-नास्ति ॥ ९. भ-कामं । १०. भ-वर्जं—तां । ११. भ-वर्जं—स मा० ॥ १२. भ-वर्जं—सुहृद्० ॥ १३. रा१ ल१ ल२ भ-स्वकृतो । ल२ ब-सुकृतो । १४. भ-दोषोऽदोष एव ॥ १५. रा२ फ म-गरुडो । १६. भ-नास्ति ॥ १७. रा१ ल१ ल२ ब अ प्र-संगे । रा२ फ म-भीमं । १८. रा२ फ म-सन्निपातं महार्णवं । १९. भ-०नुषं धारयन्रूपं । २०. रा२ फ म-नास्ति ॥ २१. म-नास्ति । २२. रा२ फ म-वीरो ॥

सखा यस्[1] तव काकुत्स्थो रामः सत्य-पराऽऽक्रमः ।
४४] सह-सीतः स-सौमित्रिः स त्वां कौशल्यम् अब्रवीत् ॥[2]२६॥[२२
गुहस् तद्[3] वचनं श्रुत्वा[4] दृष्ट्वा[5] परम-हर्षितः ।
४५] हर्ष-गद्गदया[5] वाचा पप्रच्छ गत-सम्भ्रमः ॥२७[6]॥ [N
क्व स रामः क्व वैदेही धृति-मान् क्व च लक्ष्मणः ।
४६] ह्लादितोऽस्मि[7] त्वयाऽत्य्-अर्थं घनौघेनेव[8] मेदिनी[9] ॥[10]२८॥[N
४७पू] ततस् तु[11] हनू-मांस् तस्य यथा-तथ्यं[12] न्य्-अवेदयत् ।
N] भरद्वाजाऽऽश्रमे रामः स-सीतः सह-लक्ष्मणः ॥२९[10]॥[N
४७उ] स हीऽमां रजनीम् अद्य उषितो[13] वचनान् मुनेः ।[14]
भरद्वाजाऽभ्यनुज्ञात इहाऽऽगन्ता न सं-शयः ॥[15]३०॥[२३
४८] एवम् उक्त्वा महा-तेजा हनू-मान् मारुताऽऽत्मजः ।
अथोत्-पपात वेगेन वेग-वान्[16] अ-विचारयन्[16] ॥३१॥ [२४
४९] सोऽपश्यद्[17] राम-तीर्थं[17] च नदीं शालूकिनीं[18] तथा ।
पौरुषीं[19] गो-मतीं चैव भीमं साल-वनं तथा ॥[20]३२॥[२५
५०] स गत्वा दूरम्[21] अध्वानं महाऽऽत्मा कपि-कुञ्जरः ।
आ-ससाद द्रुमान् फुल्लान् नन्दिग्राम-समीपगान्[22] ॥३३॥ [२६
५१] क्रोश-मात्रे त्व् अयोध्यायाश् चीर-कृष्णाऽजिनाऽम्बरम्[23]।
ददर्श[24] भरतं दीनं कृशम् आश्रम-वासिनम् ॥३४॥ [२८
५२] जटिलं मल-दिग्धाऽङ्गं भ्रातृ-व्यसन-कर्षितम्[25] ।

---

१. रा$_{2}$ फ म भ–वै । २. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र भ–अब्रवीत्कुशलं वीरः ससीतस्सहलक्ष्मणः ॥ ३. भ–तु । ४. भ–तस्य श्रुत्वा । ५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–ईषद्ग० । ६. रा$_{2}$ फ म–एवमुक्तस्तु सुप्रीतः संपरिष्वज्य तं कपिं। हर्षेण महताविष्टः सत्वरः पर्यपृच्छत ॥ ७. रा$_{2}$ फ–आह्ला० । ८. रा$_{2}$ फ–जलौघे० । म–जलौघेन च । ९. म–पर्वतः । १०. रा$_{1}$–नास्ति ॥ ११. रा$_{2}$ फ म–स । १२. रा$_{2}$ फ–०तत्त्वं । म–यथासंख्यं ॥ १३. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–उषित्वा । १४. म–नास्ति । १५. रा$_{2}$ फ म–वर्जं—०ज्ञातं द्रक्ष्यस्यद्यैव राघवं ॥ १६. रा$_{2}$ फ–बलवानवि० । म–बलवान-वधारयन् ॥ १७. रा$_{2}$ फ म–पश्यन्रामस्य तीर्थं । १८. म–साफलिनीं । भ–शालु० । १९. अ प्र–पारुषीं । रा$_{2}$ फ म–जाह्नवीं । भ–पौरुषिं । २०. अतः परमधिकः पाठः—रा$_{2}$ फ–तमसां च व्यतिक्रम्य ययौ वायुसुतो बली ॥ २१. म–दीर्घम् । २२. रा$_{2}$ फ भ–०पतः ॥ २३. रा$_{2}$ फ म–कृतचीराजिनांबरं । २४. प्र–ददर्शे ॥ २५. रा$_{2}$ फ म–०कर्शितं ।

N] फलमूलाऽऽशिनं दान्तं[1] तापसं धर्म-चारिणम् ॥[2]३५॥[२९
समुन्नद्ध-जटाभारं चीर-वल्कल-धारिणम्[3] ।
N] नि-यतं भाविताऽऽत्मानं देवब्रह्मर्षि-सम्मतम् ॥३६॥[३०
पादुके तु[4] पुरस्-कृत्य पालयन्तं[4] वसुं-धराम् ।
५३] चातुर्वर्ण्यस्य लोकस्य[5] त्रातारं सर्व-तो भयात् ॥३७॥ [३१
उप-स्थितम् अमात्यैश् च शुचिभिश्[6] च पुरो-हितैः ।
५४] बल-मुख्यैः[7] सु-युक्तैश्[7] च काषायाऽम्बर-धारिभिः[8] ॥३८॥ [३२
न हि ते राज-पुत्रं तं चीर-कृष्णाऽजिनाऽम्बरम्[9] ।
५५] परि-त्यक्तुं व्यव-स्यन्ति पौरा वै पौर-वत्सलम् ॥३९॥ [३३
तं धर्मम् इव धर्म-ज्ञं दहन्तम्[10] इव पावकम्[10] ।[11] [३४पू
५६] राम-चिन्ता-परिद्यूनं[12] पितृ-दुःख-समाकुलम्[12] ॥४०॥[N
उपाऽऽगम्य[13] हनू-मांस् तु भरतं धर्म-चारिणम् । [N
५७] अब्रवीत् प्राऽञ्जलिर् वाक्यम् इदं[14] प्लवग-सत्तमः[14] ॥४१॥ [३४उ
वसन्तं दण्डकाऽरण्ये यं त्वं चीर-जटा-धरम्[15] ।
५८] अनु-शोचसि काकुत्स्थं स त्वां कौशल्यम्[16] अब्रवीत् ॥४२॥ [३५
प्रियम् आ-ख्यामि ते देव शोकं[17] त्यक्ष्यसि दारुणम्[17] ।
N] अस्मिन् मुहूर्ते रामेण भ्रात्रा ज्येष्ठेन[18] सं-गतः ॥४३॥ [३६
नि-हत्य रावणं रामः प्रति-लभ्य च मैथिलीम् ।
५९] उपाऽऽयातः समृद्धाऽर्थः सह मित्रैर् महा-बलैः । [३७
६०पू] लक्ष्मणश् च महा-तेजा वैदेही च यशस्विनी[19] ॥४४॥
N] सीता समेता रामेण महेन्द्रेण यथा शची । [३८

---

१. फ–श्रांतं ॥ २. म–अत आरभ्य ४१-शश्लोकस्य पूर्वार्धं यावन्नास्ति ॥ ३. भ–०लवाससं ॥ ४. रा$_2$ फ–ते पुरस्कृत्य प्रशासंतं । ५. रा$_2$ फ–सर्वस्य ॥ ६. रा$_2$ फ–बहुभिश् । ७. रा$_2$ फ भ–०ख्यैश्च यु० । ८. फ–कृपाणवर० ॥ ९. रा$_2$ फ–वर्जं—काषायांबरधारिणं ॥ १०. रा$_2$ फ–देहवन्तमिवामरं । ११. अतः परमधिकः पाठः—भ–वर्जं—न हि ते नगरे पौराः सुखानि परिभुंजते । १२. रा$_2$ फ–०द्यूतं पितुर्व्यसनकर्शितं । भ–०परिक्लांतं पितृ० ॥ १३. रा$_2$ फ भ–उपगम्य । १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–इति प्लु० । रा$_2$ फ–हनुमान्पवनात्मजः । म–हनुमान्मारुतात्मजः ॥ १५. रा$_2$–वर्जं—वीर ज० । १६. रा$_1$ ल$_1$ ल ब अ प्र–कुशलम् ॥ १७. रा$_2$ फ म–जहि शोकं सु० । १८. रा$_2$ फ म–नाथेन ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तपस्विनी ॥

६०उ] नन्दिष्यसे[१] महा-बाहो सु-वर्षेणेव[२] कर्षकः ।।[३]४५।।[N
स[४] त्वम्[४] उत्-तिष्ठ भद्रं ते पश्य भ्रातरम् आ-गतम् ।
६१] वि-जित्य[५] लोकांस् त्रीन् विष्णुः सहस्राऽक्षम् इवाऽऽगतम् ।।[६]४६।।[N
एतत् तु दृश्यते दूराद् धर्म्य-युक्तं मनो-जवम् ।
६२] तरुणाऽऽदित्य-सङ्काशं वि-मानं राम-वाहनम् ।।४७[७]।।[N
एवम् उक्तो हनू-मता[८] भरतः कैकयी-सुतः ।
६३] उत्-पपाताऽऽसनात्[९] तूर्णं[९] हर्षान् मोहं जगाम च ।।४८[१०]।।[३९
ततो मुहूर्ताद् उत्था(द्-स्था)य प्रत्या-श्वस्य[११] च राघवः[११] ।
६४] प्रत्य्-उवाच[१२] हनू-मन्तं भरतः प्रिय-वादिनम् ।।४९।। [४०
अशोक-जैः प्रीति-मयैः[१३] प्रियं[१४] प्राऽऽप्य स-सम्भ्रमम्[१४] ।
६५] सिषेच[१५] कपि-मुख्यस्य गात्रम् एवाऽस्रु-बिन्दुभिः ।।५०।। [४१
देवो वा मानुषो[१६] वा त्वम् अनु-क्रोशाद्[१६] इहाऽऽगतः ।
६६] प्रियाऽऽख्यानस्य[१७] ते सौम्य[१७] ददामि वद[१८] किं प्रियम्[१८] ।।५१।। [४२
गवां शत-सहस्राणि[१९] ग्रामाणां च शतानि[२०] वै[२०] ।
६७] स-कुण्डलाः[२१] शुभाऽऽचारा[२१] भार्या[२२] धन्याश् च[२२] षोडश ।।५२।। [४३
दासी-शत-परीवाराः शशि-सौम्याऽऽननाः स्त्रियः ।
६८] सर्व-लक्षण-सम्पन्नाः सं-पन्नाः कुल-जातिभिः ।।५३[२३]।।[४४
६९पू] सु-वर्णस्य सहस्रे द्वे दासीनां च शतं तथा ।[२४]
N] हिरण्य-कोट्यो रत्नानि वस्त्राणि वि-विधानि च ।[२४]
६९उ] यद् वाऽन्यन् मन्यसे सौम्य तच् च सर्वं ददानि[२५] ते ।।[२६]५४।। [N

---

१. प्र—निर्दिश्यसे । भ—नंदिष्यसि । २. भ—सुवृष्टेनेव । ३. रा$_2$ फ म—नास्ति ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—क्षिप्रम् । ५. रा$_2$ फ—निर्जित्य । ६. ब म—नास्ति ॥ ७. रा$_2$ फ म—नास्ति ॥ ८. रा$_2$ फ—हनु० । ९. रा$_2$ फ—वर्जं— ०पात तदा हृष्टो । १०. म—नास्ति ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र भ—भरतो भ्रातृवत्सलः । १२. म—उवाच तं ॥ १३. रा$_2$ फ म—प्रीतिकरैः । १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—प्रीतिमावेद्य संभ्रमैः । भ—प्रियमासाद्य संभ्रमैः । १५. रा$_1$ ल$_1$ ल$_2$ ब अ—सखेव । प्र—सख्ये च ॥ १६. रा$_2$ फ म—यदि वा यक्षो ह्यनु० । १७. रा$_2$ फ म—०ख्यानाद्य ते वीर । १८. म—च मनः प्रि० । भ—ब्रुवतः प्रि० ॥ १९. रा$_2$ फ म—०हस्रं च । म—०हस्राणां । २०. रा$_2$ फ म—शतं वरं । २१. रा$_2$ फ—सकुटुंबाः सहचाराः । म—सकुटुम्बाः शु० । २२. रा$_2$ फ म—पत्नीश्चैव हि ॥ २३. फ म—नास्ति ॥ २४. भ—नास्ति ॥ २५. रा$_2$ म—ददामि ॥ २६. फ म—नास्ति ॥

नि-शम्य रम्यं[१] वचनं हनू-मतः
सु-शोभनं[२] शोक-विनाशनं च[२] ॥ [४५पू
उवाच हृष्टो[३] भरतः पृथु-श्रीर्[४]
N] द्रक्ष्येऽचिरस्याऽऽगतम्[५] आयतेक्षणम्[६] ॥५५॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे[७] भरत-विशोकीकरणं[८] नाम
षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

## [वं-११०]= [ सप्तोत्तरशततमः सर्गः ] =[दा-१२६]

योे बहूनि तु[९] वर्षाणि सुखं हित्वा गतो वनम् ।[१०]
१] तस्याऽद्य[११] प्रीति-जननं[११] श्रुतं[१२] रामस्य कीर्तनम्[१२] ॥[१३]१ ॥[१
२उ] कल्याणी बत[१४] गाथेयं लौकिकी[१५] प्रति-भाति मे ।
एति[१६] जीवन्तम् आ-नन्दो नरं[१६] वर्ष-शताद् अपि ॥२ ॥ [२
३] एवम् उक्त्वा महा-बाहुर्[१७] भरतः स[१८] महा-यशाः[१८] ।
४पू] पप्रच्छ तं हनू-मन्तं महाऽऽत्मानं प्लवं-गमम्[१९] ॥३ ॥ [N
राघवस्य[२०] हरीणां च कथं वृत्तः[२१] समा-गमः ।
N] कस्मिन् देशे किम् आ-श्रित्य[२२] तन् ममाऽऽचक्ष्व तत्त्व-तः[२३] ॥४॥[६
४उ] यच्[२४] च सं-श्रुतवान्[२४] अस्मि वि-ग्रहं रावणं प्रति ।
चारेण सम्प्र-युक्तेन[२५] कृतोद्योगं[२६] रणं प्रति[२७] ॥५ ॥ [N

---

१. रा₂ फ म–काम्यं । २. रा₂ फ म–तदा स शोकापनुदं सुखावहं। ३. रा₂ फ–तुष्टो । म–पूर्वं । ४. रा₂ फ म–कपिप्रियं । ५. रा₂ फ म–चिरस्य द्रक्ष्याम्यहम् । ६. रा१ ल१ ल२ ब अ प्र–०ताक्षं ॥ ७. प्र भ–लंकाकांडे । म–आभ्युदयिके । ८. रा२ फ–भरतहनुमत्समागमो ॥ ९. म–हि । १०. रा२ फ म–वर्जं—बहूनामपि वर्षाणामिदं श्रुतिरसायनं । ११. रा१ ल१ ल२ ब अ प्र भ–शृणोम्यहं प्रीतिकरं । १२. रा१ ल१ ल२ ब अ प्र–मम नाथस्य कीर्तनम् । भ–यन्नाथस्याद्य दर्शनं । १३. अतः परमधिकः पाठः—भ–अद्य श्रुतिप्रीतिकरं मम नाथस्य कीर्तनम् ॥ १४. फ–वर्जं—तव । १५. रा१ ल१ ल२ ब अ प्र रा२–लौकिका ॥ १६. प्र रा२ भ–वर्जं—पंतिं जी० । म–पुनर्जीवन्तमात्मानं न च । १७. रा२ फ म–महातेजा । १८. रा२ फ म–वर्जं—च म० । भ–सुम० । १९. रा२ फ–हरीश्वरं । म–यतः स्वयं ॥ २०. रा२ फ म–रामस्य च । २१. रा२ फ म–आसीत् । २२. रा१ ल१ ल२ ब–आवृत्य । २३. रा१ ल१ ल२ ब अ प्र भ–पृच्छतः ॥ २४. भ–यद्यपि श्रु० । २५. रा१ ल१ ल२ ब अ–सुप्र० । २६. भ–०द्योगो । २७. प्र–नास्ति ॥

५] त्वयि मे प्रत्य्-अयः सौम्य[१] यस् त्वं[१] रामाद् उपाऽऽगतः ।
N] कथं कृताऽर्थः स श्री-मान् राघवः पुनर् आ-गतः ॥[२]६ ॥[N
स पृष्ठो राज-पुत्रेण वि-मृश्य[३] कपि-कुञ्जरः[३] ।
६] आ-चचक्षे ततः[४] सर्वं[५] रामस्य चरितं महत्[५] ॥७ ॥[४
यथा प्र-व्रजितो रामो मातुर्[६] दत्ते वरे तव[६] ।
७] यथा च पुत्र-शोकेन राजा दश-रथो मृतः[७] ॥८ ॥[५
यथा दूतैस् त्वम् आ-नीतस् तूर्णं[९] राज-गृहात् प्र-भो ।
८] त्वयाऽयोध्यां[८] प्र-विष्टेन यथा राज्यं च नेप्सितम् ॥९ ॥[६
चित्र-कूटं गिरिं गत्वा राज्येनाऽमित्र-कर्षणः[९] ।
९] नि-मन्त्रितस् त्वया भ्राता धर्मम् आ-चरता सता ॥१०॥[७
स्थितेन वचने राज्ञो न[१०] च ते वचनं कृतम्[१०] ।
१०] तत्-पादुके त्वम् आ-दाय यथा च पुनर् आ-गतः ॥११॥[८
सर्वम् एतन् महा-बाहो यथा-वद् विदितं[११] तव[११] ।
११] त्वयि प्रति-प्रयाते[१२] तु[१२] यद् वृत्तं[१३] तन् नि-बोध मे ॥१२॥[९
१२पू] अप-याते त्वयि तदा राघवः[१४] सह-लक्ष्मणः[१४] ।
N] परि-द्यूनम् अरण्यं तु तद् वनं सम्-अपद्यत ॥[१५]१३॥[१०
N] तद्[१६] धस्ति-चरितं[१६] वीर सिंह-व्याघ्र-मृगाऽऽयुतम् ।
१२उ] निर्-जनं व्याल-सम्पन्नं[१७] प्राऽविशद् गहनं[१८] वनम् ॥१४॥[११
तेषां पुरस्-ताद् बल-वान् गच्छतां गहने वने ।[१९]
१३] राक्षसः[२०] सु-महावीर्यो[२०] वि-राधः प्रत्य्-अदृश्यत ॥१५॥[१२
तं नि-हत्य महा-कायम् ऊर्ध्व-पाश(?द)म्[२१] अवाङ्-मुखम्[२२] ।

---

१. रा१ ल१ ल२ ब अ प्र—तात कथं । भ—तात यत्वं । २. प्र भ—नास्ति ॥ ३. रा१ ल१ ल२ ब अ प्र भ—बृस्यां समुपवेशितः । म—पृष्टा स कथयंति मां । ४. रा२ फ म—वर्जं—तदा । ५. रा२ फ म—वने ॥ ६. रा२ फ म—मात्रे दत्तौ वरौ च तौ । ७. रा१ ल१ ल२ ब अ प्र—हतः ॥ ८. रा२ फ म—अयोध्यायां ॥ ९. रा२—०र्षितः । फ—०कर्मणा ॥ १०. रा२ फ म—यथा राज्यं च नेप्सितं । भ—न ते तेन वचः कृतं ॥ ११. म—वेत्सि तत्त्वतः । १२. रा२ फ—प्रयाते तु तदा ॥ १३. रा१ ल१ ल२ ब अ भ—कृतं ॥ १४. फ म—समुद्विग्नमृगद्विजः । १५. म—परिगम्यमरण्यं स तत्सर्वं समपद्यत । भ—नास्ति ॥ १६. म—स हस्ति० । १७. फ म—०संकीर्णं ॥ १८. भ—दंडके ॥ १९. रा२—नास्ति । २०. रा२ फ म—नर्दमानो महानादान् ॥ २१. रा१ भ—वर्जं—ऊर्ध्वकेसं । म—ऊर्ध्वकायं । २२. रा२ फ म—महाबलं ।

१४] अवटे प्राऽक्षिपद् रामो नदन्तम् इव कुञ्जरम् ॥[1]१६॥[१३
तत् कृत्वा दुष्-करं[2] कर्म भ्रातरौ राम-लक्ष्मणौ ।
१५] सायाऽन्हे शर-भङ्गस्य सम्प्राऽऽप्तौ[3] रम्यम् आ-श्रमम्[3] ॥[4]१७॥[१४
शर-भङ्गे दिवं याते[5] रामः सत्य-पराऽऽक्रमः ।
१६] तांस् तापसान्[6] अर्चयित्वा[6] जन-स्थानम् उपाऽऽगतः[7] ॥१८[8]॥[१५
अगस्त्यम् अभि-वाद्याऽथ परमर्षिम् अरिं-दमः ।
१७] ततः पञ्च-वटीं[9] यातो सीतया सह राघवः ॥१९[10] ॥१९॥ [N
ततः शूर्प-णखा[11] नाम भ्रातरौ[12] राम-लक्ष्मणौ[12] ।[13] [१६
१८] आत्म-प्रदान-लोभेन न्य्-अमन्त्रयत राक्षसी ॥[14]२०[15]॥[N
सु-स्मितौ ताव् उभौ कृत्वा ताम् अधर्षयतां[16] तदा ।
१९] कर्णनासाऽपहारेण वि-कृतां विकृताऽऽननाम् ॥२१[17]॥[N
खरं भ्रातरम् आ-साद्य कथयामास[18] राघवौ[18] ।[17] [N
२०] चतुर्दश-सहस्राणि जन-स्थान-निवासिनाम् ।
२१पू] हतानि रक्षसां तत्र हतौ च खर-दूषणौ ॥[19]२२॥[१८
एकेन सह सं-गम्य रणे रामेण राघव ।
अह्नश् चतुर्थ-भागेन निः-शेषा राक्षसाः कृताः[20] । [१९
N] महा-बला महा-वीर्यास् तापसानां भयं-कराः ॥२३[21]॥[२०पू
२१उ] शूर्प-णखा च सा गत्वा रावणं लोक-रावणम् ।[22]
वधस् तेषां समा-ख्यातः सीता चाऽप्रतिमा भुवि ॥२४[23]॥ [N
२२] श्रुत्वा तद् अ-प्रियं घोरं रक्षस् त्रैलोक्य-रावणम् ।
मारीचम् अगमच् छीघ्रं मदनेन समा-हतः ॥२५॥ [N
२३] कथं सीताम् अहं रामात् प्राऽऽमुयां सुहृदां वर ।

---

१. रा$_2$ फ म–संप्राक्षिपेतामवटे नर्दंतमिव कुंजरं ॥ २. म–दुष्कृतं । ३. रा$_2$ फ–रम्यमाश्रममागतौ । म–शुभमाश्रममागतौ । ४. अ–नास्ति ॥ ५. भ–प्राप्ते । ६. रा$_2$–तापसांस्तु पुरस्कृत्य । म–०स्तान् पुरस्कृत्य । ७. रा$_2$ म भ–०गमत् । ८. अ फ–नास्ति ॥ ९. प्र–०टे । १०. अ रा$_2$ फ म–नास्ति ॥ ११. रा$_2$ फ–०णखा । १२. रा फ–राक्षसी घोरदर्शना । १३. अ–नास्ति । १४. रा$_2$ फ–कामरागाभिसंतप्ता लक्ष्मणेन विरूपिता । १५. म–नास्ति ॥ १६. भ–अबोधयतां । १७. रा$_2$ फ म–नास्ति ॥ १८. भ–राघवौतौन्यवेदयत् । १९. रा$_2$ फ म–राममासाद्य नष्टानि खरश्च निहतोऽग्रतः ॥ २०. ल$_1$ ल$_2$–हताः । २१. रा$_2$ फ म भ–नास्ति ॥ २२. भ–शूर्पणख्या तदा गत्वा रावणे लोकरावणे । २३. रा$_2$ फ म–अत आरभ्य ३०-शश्लोकं यावन्नास्ति ॥

त्वयि सं-भावना मेऽस्ति सर्व-कार्येषु राक्षस ॥२६॥ [N
२४] स त्वम् अद्यैव गच्छस्व मृग-रूपी भवाऽग्र-तः ।
सीतायाः काञ्चनो भूत्वा रूप्य-बिन्दु-चितश् चर ॥२७॥ [N
२५] लोभिता सा त्वया व्य्-अक्तं रामं वक्ष्यति भामिनी ।
अहोऽद्भुतम् इदं रूपं मृगस्य भुवि दुर्-लभम् ॥२८॥ [२४
२६] प्राऽऽमुयाम् अपि चर्माऽस्य चित्र-रूपं मनो-हरम्[1] ।
सीतायास् तु वचः श्रुत्वा रामस् त्वाम्[2] अभि-यास्यति[2] ॥२९॥ [N
२७] ततोऽप-वाहिते रामे लक्ष्मणे चाऽप-वाहिते ।
२८पू] सुखं सीतां हरिष्यामि एवं प्रति-कृतं भवेत् ॥३०॥ [N
ततो रावण-मारीचौ वि-मानम् इव तं रथम् ।
N] समा-रुह्य गतौ शीघ्रं यत्र[3] रामः स-लक्ष्मणः[3] ॥३१[4]॥ [N
N] आ-साद्य दण्डकाऽरण्यं रामाऽऽश्रम-पदं महत् ।[5]
२८उ] ददर्श सह-मारीचो रावणो राक्षसेश्वरः ॥३२॥ [N
अव-तीर्य रथात् तस्मात् तप्त-काञ्चन-भूषणात् ।
N] हस्ते गृहीत्वा मारीचं रावणो वाक्यम् अब्रवीत् ॥३३॥ [N
एतद् रामाऽऽश्रम-पदं दृश्यते कदली-वृतम् ।
N] क्रियतां तत् स-शीघ्रं यद्-अर्थं वयम् आ-गताः ॥३४[7]॥ [N
स[6] रावण-वचः[6] श्रुत्वा मारीचो राक्षसेश्वरः ।[8]
N] मृगो भूत्वाऽऽश्रमे चैव रामस्य वि-चचार ह ॥[9]३५[9]॥ [N
रुक्म-बिन्दु-शतैश् चित्रैः प्रवाल-मणि-भूषितैः ।
मुक्ता-जाल-परिच्छन्नः सर्व-भूत-मनो-हरः ।
N] सवैडूर्य-मयैः शृङ्गैश् चतुर्भिर् हेम-भूषितैः ॥३६॥ [N
स रामं पर्ण-शालायाम् उप-विष्टं[10] महा-रथम्[11] ।
N] मृगो[12] जगाम[12] सौवर्णः सर्व-गात्राणि दर्शयन् ॥३७॥ [N

१. भ-मनोरमम् । २. रा१ ल१ ल२ ब अ प्र-त्वाभिभविष्यति ॥ ३. रा२ फ म-रामाश्रमपदं प्रति । ४. भ-नास्ति ॥ ५. रा२ फ म-वर्जं—नास्ति । ६. रा१ ल१ ल२ ब प्र-रावणस्य वचः । ७. अतः परमधिकः पाठः—रा२ फ म-वर्जं—बलज्ञश्चापि रामस्य मारीचस्तु तदाकरोत् । ८. ल१ ल२ ब-रामस्य त्वाश्रमे रक्षो मृगरूपी चचार ह । ९. भ-अत आरभ्य ४६-श्लोकं यावन्नास्ति । १०. रा१ अ प्र फ-उपतिष्ठन् । ११. रा१ फ-महाबलं । १२. रा२ फ-मृगराजः स ॥

तं मृगं काञ्चनं दृष्ट्वा दिव्यं मृगम् इवाऽम्बरे ।
N] उवाच राघवं सीता स्मितपूर्वाऽभिभाषिणी[1] ॥३८॥ [N
इमं मणि-विचित्राऽङ्गं पश्य हेम-मयं मृगम् ।
N] त्वचा सनाथा(?थां) माम् अस्य[2] कुरु शीघ्रं महा-भुज ॥३९॥ [N
स[3] सीताया[3] वचः श्रुत्वा रामः सत्य-पराऽऽक्रमः ।
उवाच संहृष्ट-मनाः सौमित्रिम् अथ राघवः ।
N] पश्य लक्ष्मण वैदेह्या मृग-त्वचि गता स्पृहा ॥४०॥ [N
अ-प्रमत्तेन ते भाव्यं राज-पुत्र्यां नृपाऽऽत्मज[4] ।
N] यावत् पृषतम् एकेन सायकेन नि-हन्म्य्[5] अहम् ॥४१॥ [N
तेन मर्मणि निर्-भिन्नः शरेणाऽप्रतिमेन सः ।
N] हा लक्ष्मणेति वि-क्रुश्य जहौ रूपं मृगस्य[6] तत् ॥४२॥ [N
आर्तं[8] स्वरं तु तं[7] भर्तुर् वि-ज्ञाय सदृशं वने ।
N] उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥४३॥ [N
स सीतां प्रत्य्-उवाचाऽथ केनाऽप्य् एतद् उदा-हृतम् ।
एवम् उक्ता लक्ष्मणेन सीता शोक-परायणा[9] ।
N] परि-देवमाना[9] रूक्षां वाचम्[9] अश्रावयत्[10] तदा ॥४४॥ [N
एवम् उक्तस् तु सौमित्रिः सीतया परुषं[11] वचः ।
N] पिधाय कर्णौ दुःखाऽऽर्तो मैथिलीं पुनर् अब्रवीत् ॥४५॥ [N
यास्यामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वराऽऽनने ।
N] रक्षन्तु त्वां विशालाऽक्षि सम्-अग्रा वन-देवताः ॥४६॥ [N
२९पू ] अप-नीते[12] तदा रामे लक्ष्मणे च महा-बले ।[13]
एतद् अन्तरम् आ-साद्य दश-ग्रीवः प्रताप-वान् ।[14]
N] परिव्राजक-रूपेण[15] वैदेहीं ताम् उपाऽगमत् ॥४७॥ [N
ताम् आ-ससादाऽति-बलो भर्त्रा वि-रहितां वने ।[16]

---

१. म-०षणं ॥ २. रा₂ फ-वर्जं—त्वगासनस्थां मां त्वस्य ॥ ३. म-सीतायाश्च ॥ ४. म-परंतप । ५. म-हिरण्मयम् ॥ ६. रा₂ म-वर्जं—तु तस्य ॥ ७. रा₂-वर्जं—तद् ॥ ८. म-भर्तृप० । ९. रा₂ फ म-परिदेवयमाना तं रूक्षम् । १०. ल₂ अ-आश्रा० ॥ ११. ल₁ल -सीतायाः परमं ॥ १२. भ-वृते तेन । १३. रा₂ फ म-नास्ति । १४. भ-अत आरभ्य ४९-शश्लोकपूर्वार्धं यावन्नास्ति । १५. म-०कवेषेन ॥ १६. म-तामासाद्य स बलेन भ्रातृभ्यां रहितां वेन ।

N] रोहिणीं शशिना हीनां दिवि घोर इव ग्रहः ।।४८।। [N
N] स पापः साधु-रूपेण[1] तृणैः कूप इवाऽऽवृतः ।
२९उ] आ-दाय रावणः सीताम् उत्-पपात ततो नभः ।।[2]४९।।[N
रोरुद्यमानाम् अ-सकृद् रामरामेति-वादिनीम् ।
३०] लक्ष्मणेति च क्रोशन्तीं गृध्र-राजो ददर्श ताम् ।।५०[3]।।[N
पितुस् ते स सखि-त्वं च पालयन् गृध्र-राट् तदा ।
३१] सहायम् अकरोत् तस्या देव्याः स सु-महाबलः ।
३२पू] अ-भयं च स दत्त्वाऽस्या युयुधे तेन रक्षसा ।।[4]५१।। [N
ततः पर्वत-सङ्काशस् तीक्ष्ण-तुण्डः खगोत्तमः ।[5]
N] वनस्पति-गतः श्री-मान् व्या-जहार शुभां गिरम् ।।५२।। [N
जटाऽऽयुर् नाम नाम्नाऽहं पक्षि-राजो महा-बलः ।[4]
N] इत्य् एवम् उक्त्वा दुद्राव पतगेन्द्रो दशाऽऽननम् ।।५३।। [N
स सम्प्र-हारस् तुमुलस् तयोस् तस्मिन् महाऽऽहवे[6] ।
N] बभूव वातोद्धूतयोर् मेघयोर् गगने यथा ।।५४।।[N
३२उ] युद्धं तु सु-महत् कृत्वा[7] परि-श्रान्तो बभूव ह ।
उच्-छ्वसन्तं[8] समा-लक्ष्य रावणो लोक-रावणः[9] ।
३३] त्वरमाणो दश-ग्रीवश् छित्त्वा पक्षौ जटाऽऽयुषः ।।५५[10]।।[N
स छिन्न-पक्षः सहसा रावणेन दुर्-आत्मना ।
N] नि-पपात तदा गृध्रो जटाऽऽयुः क्षीण-जीवितः ।।५६[11]।।[N
गृध्र-राजं तु तं हत्वा दश-ग्रीवो महा-बलः ।
N] जगामाऽऽकाशम् आ-दाय वैदेहीं राक्षसेश्वरः ।।५७[11]।[२८
वृक्ष-गुल्मेषु धावन्तीम् अ-नाथां नाथम् इच्छतीम् ।
३४] जग्राह तरसा सीतां ग्रहः खे रोहिणीम् इव ।५८[12]।[२७उ
३५पू] सा हेम-वर्णा ललना नीलाऽङ्गेनाऽथ रक्षसा ।[13]

---

१. अ प्र रा$_2$–साधुवेशेन । २. रा$_2$ फ म–अंकेनादाय वैदेहीं रथमारोपयत्तदा ॥ ३. रा$_2$ फ म–नास्ति ॥ ४. प्र–नास्ति ॥ ५. भ–नास्ति ॥ ६. म–महावने ॥ ७. भ–दत्त्वा । ८. भ–तदैवं तं । ९. भ–लोककंटकः । १०. रा$_2$ फ म–नास्ति ॥ ११. भ–नास्ति ॥ १२. रा$_2$ फ म–नास्ति ॥ १३. भ–ततस्तां नवहेमाभां स्थितां पर्वतमूर्धनि ।

हियमाणा ह्य् अ-पश्यन्ती कं-चिन् नाथं सु-मध्यमा ।[1] [N
N] ददर्श गिरि-शृङ्ग-स्थान् पञ्च वानर-पुङ्गवान् ॥५९॥ [२९पू
तेषां मध्ये विशालाऽक्षी कौशेयं कनक-प्रभम् ।
N] उत्तरीयं वराऽऽरोहा शुभान्य् आ-भरणानि च ॥६०॥ [N
वि-सृज्य सा वि-चुक्रोश रामं च प्र-शशंस ह ।
N] नेत्राभ्यां वारि मुञ्चन्ती पश्यन्ती च वसुं-धराम् ॥६१॥ [N
पिङ्गाऽक्षास्[2] ते[2] विशालाऽक्षा नेत्रैर् अ-निमिषैर् अपि ।
N] वि-क्रोशन्तीं तदा सीतां ददृशुर् वानरर्षभाः ॥६२॥ [२९उ
स तु पम्पाम् अति-क्रम्य लङ्काम् अभि-मुखं पुरीम् ।
N] जगाम रुदतीं गृह्य मैथिलीं राक्षसेश्वरः ॥६३॥ [N
तां जहार सु-संहृष्टो मैथिलीं[3] मृत्युम् आत्मनः ।
N] वैदेह्यां ह्रियमाणायां चुक्षुभे वरुणाऽऽलयः ॥६४॥ [N
अन्तरिक्ष-गता वाचः ससृजुर् दारुणास् तथा[4] ।
N] एतद्-अन्तो दश-ग्रीव इति सिद्धा महर्षयः ॥६५॥ [N
N] स तु सीतां वि-चेष्टन्तीम् अङ्केनाऽऽदाय रावणः ।
३५उ] प्राऽवेशयत् पुरीं लङ्कां रावणो[5] राक्षसाऽधिपः[5] ॥६६॥ [३०उ
N] सोऽभि-गम्य पुरीं लङ्कां सुविभक्त-महापथाम् ।[6]
प्र-वेश्य मैथिलीं वाक्यैः सान्त्वयामास निष्-फलम् ॥[7]६७॥ [N
३६] तां सुवर्ण-परिक्रान्ते[8] शुभे महति वेश्मनि ।
N] नि-दध्यौ रावणः सीतां मयो मायाम् इवाऽसुरीम् ॥[9]६८॥ [N
राक्षसं मृग-रूपेण चरन्तं काम-रूपिणम् । [N
N] नि-हत्य रामो मारीचं न्य्-अवर्तत पुनर् बली ॥६९॥ [३३पू
स वै[10] सं-त्वरमाणोहि द्रष्टु-कामोऽथ[10] मैथिलीम् ।
N] स[11] त्व् एकस्याऽथ गोमायोः[11] स्वरेण परि-शङ्कितः ॥७०॥ [N
स्वस्ति स्याद् अथ वैदेह्या रक्षोभ्यो लक्ष्मणं विना ।

---

१. अत आरभ्य भ-६६-शश्लोकपूर्वार्धं यावन्नास्ति ॥ २. म-पिंगलाक्षा ॥ ३. रा$_2$ फ म-रावणो । ४. अ-तदा । रा$_2$ फ म-ततः ॥ ५. रा$_2$ फ-रूपिणीं मृत्युमात्मनः । म-नास्ति ॥ ६. रा$_2$ फ-वर्जं—नास्ति । ७. रा$_2$ फ म-नास्ति ॥ ८. म-स्वर्णपरिकान्तेव । भ-०रिक्षिसे । ९. अत आरभ्य ८०-तितमश्लोकं यावन्नास्ति ॥ १०. म-चैव स्वरमाणोऽभूद् द्रष्टुकामश्च । ११. प्रं रा$_2$ फ म-एकः प्रोवाच गोमायुः ॥

N] मारीचेन हि वि-ज्ञाय स्वरम् आ-लम्ब्य मामकम् ॥[1]७१॥ [N
इत्य् एवं चिन्तयन् रामः श्रुत्वा गोमायु-तो[2] रवम्[2] ।
नि-वर्तमानस् त्वरितो जवेनाऽऽश्रमम् आत्मनः ।
N] आ-जगाम जन-स्थानं राघवः[3] परि-शङ्कितः[3] ॥[4]७२॥ [N
ततो लक्ष्मणम् आ-यान्तं ददर्श विगत-प्रभम् ।
N] तम् उवाच किम्-अर्थं[5] त्वं त्यक्त्वा सीताम् उपाऽऽगतः[5] ॥७३॥ [N
नूनं वै भक्षिता सीता राक्षसैः सा मनस्विनी ।
N] धिक् त्वां लक्ष्मण वैदेहीं यो हित्वा त्वम् उपाऽऽगतः[6] ॥७४[7]॥[N
राज्य-भ्रष्टस्य दीनस्य दण्डकान् परि-धावतः ।
N] क्व सा दुःख-सहाया मे वैदेही तनु-मध्यमा ॥[8]७५॥[७६
यां विना नोत्-सहे सौम्य मुहूर्तम् अपि जीवितुम्[9] ।
N] क्व सा[10] प्राण-सहाया मे[10] सीता सुर-सुतोपमा ॥७६॥ [N
यक्ष-त्वम् अमर-त्वं वा पृथिवीं चाऽपि[11] लक्ष्मण ।
N] विना तां नव-हेमाऽऽभां नेच्छेयं जनकाऽऽत्मजाम् ॥७७॥ [N
कच्-चिज्[12] जीवति वैदेही प्राणैः प्रिय-तरा मम ।
N] कच्-चित् प्र-व्रजनं सौम्य न मे मिथ्या भविष्यति ॥[13]७८॥[N
ब्रूहि लक्ष्मण वैदेही यदि जीवति मां विना ।
त्वयि प्र-मत्ते रक्षोभिर् भक्षिता वा तपस्विनी ।
N] सु-कुमारा च बाला च नित्यं सा दुःख-भागिनी ॥७९॥ [N
इति सीतां वराऽऽरोहां चिन्तयन्न्[14] एव[14] राघवः ।
N] आ-जगाम जन-स्थानं शून्यं सं-दृश्य राघवः ॥८०॥ [N
रावणेन हृतां सीतां वैदेहीं[15] रहितां[16] वनात्[16] । [N
३७] तौ मार्गमाणौ काकुत्स्थौ हतं गृध्रम् अपश्यताम् ॥[17]८१॥[३३उ

---

१. टि.–'स्वर आलम्बितो मम' इति पादः ।। २. म–०युभाषितं । ३. रा₂ फ–जगाम मनसा प्रियां । ४. अतः परमधिकः पाठः—रा₂ फ–वर्जं—सीतामेव जनस्थाने जगाम मनसा प्रियाम् ॥ ५. रा₂ फ म–इहागतः ॥ ६. प्र–इहागतः । ७. ल₂ फ म–नास्ति ॥ ८. प्र म–नास्ति । ९. प्र–नास्ति । १०. रा₂ फ–वर्जं—०समा सा मे । म–मत्प्राणसमा देवी ॥ ११. रा₂–वापि ॥ १२. रा₂–कच्चिज् । १३. प्र म–नास्ति ॥ १४. म–चिंतयानः स ॥ १५. रा₂ फ–वर्जं—स श्रुत्वा । म–भ्रातृभ्यां । १६. रा₂ फ–रहिते वने । म–रहितां वने । १७. रा फ म–वर्जं—निवर्तमानः काकुत्स्थो विव्यथे गृध्रराजतः । भ–निवर्तमानः काकुत्स्थो गृध्रं दृष्ट्वा तु विव्यथे ॥

गृध्र-राजं तु[1] सत्-कृत्य[1] पितुः प्रिय-सखं हतम्[2] ।
३८] मन्दाकिनीं व्य्-अचरतां[3] वनोद्देशांश्[4] च पुष्पितान्[4] ॥८२॥
ततस् तौ सु-महावीरौ भ्रातरौ राम-लक्ष्मणौ ।[5] [३४
३९] आ-सेदतुर् महाऽरण्ये कबन्धं रोम-हर्षणम्[6] । [३५
तं हत्वा चैव खड्गाभ्यां महा-बल-पराऽऽक्रमौ ॥[7]८३॥ [N
४०] ततः कबन्ध-वचनाद् रामः सत्य-पराऽऽक्रमः ।
ऋष्य-मूकं गिरिं गत्वा सु-ग्रीवेण समा-गतः ॥८४॥ [३६
४१] ततस् तं मनसा गत्वा सखि-त्वम् अकरोत् तदा ।[8] [३७पू
इतरेतरम् अब्रूतां कुरुष्व[9] करवाणि च ॥८५॥ [३८
४२] तं रामो बाहु-वीर्येण स्वं राज्यं प्रत्य्-अपादयत् ।
वालिनं सम्-अरे हत्वा महा-कायं महा-बलम् ॥८६॥ [३९
४३] ततोऽभि-षिक्तः सु-ग्रीवो वानरेन्द्रो महा-बलः ।
प्रत्य्-अजानीत[10] रामस्य स सीताऽन्वेषणं[10] प्रति ॥८७॥ [४०
४४] आ-दिष्टा वानरेन्द्रेण[11] सु-ग्रीवेण महाऽऽत्मना ।
दश कोटयः प्लवं-गानां दिशः[12] सर्वाः प्र-तस्थिरे[12] ॥८८॥ [४१
४५] अस्माकं[13] चोप-विष्टानां[13] विन्ध्ये पर्वत-सत्तमे[14] ।
भृशं[15] शोकाऽभितप्तानां[15] पर्य्-अदेवयद् अङ्ग-दः[16] ॥८९॥ [४२
४६] भ्राता तु गृध्र-राजस्य सं-पातिर् नाम वीर्य-वान् ।
सीताम् आऽचष्ट[17] सर्वेषां[17] वसन्तीं रावणाऽऽलये ॥९०॥ [४३
४७] सोऽहं दुःख-परीऽतानां ज्ञातीनां दुःखम्[18] उद्-वहन्[18] ।
आत्म-वीर्यं[19] समा-साद्य[20] प्लुतवान्[21] छत-योजनम् ॥९१॥ [४४

१. रा$_2$ फ—ततो दृष्ट्वा । भ—तु तं दृष्ट्वा । २. रा$_2$ फ—हि तं । ३. फ-वर्जं—अनुचरन् । म—विचिन्वातां । ४. रा$_2$ फ म भ—वर्जं—द्रुमान्पश्यन् सुपु० ॥ ५. रा$_2$ फ म—नास्ति । ६. रा$_1$ म—लोम० । ७. रा$_2$ फ म—नास्ति ॥ ८. रा$_2$ फ—तयोः सह समागम्य प्रीत्या हार्दमयाचत । भ—ततस्ते समागम्य प्रीतिहार्दमजायत । म—नास्ति । ९. रा$_2$ फ म—किं तेऽहं ॥ १०. प्र—प्रत्ययार्थं तु रा० । रा$_2$ फ म—रामस्य प्रत्यजानात्स सीताया मार्गणं । म—रामस्य प्रतिज्ञातं सीताया मार्गणं ॥ ११. रा$_2$ फ म—वर्जं—०नराः सर्वे । १२. रा$_2$ फ म—सर्वाः प्रस्थापिता दिशः । १३. रा$_1$ ल$_1$ ल$_2$ ब अ भ—०कं चोप० । रा$_2$ फ म—तेषां समुप० । १४. म—०तमस्तके । १५. रा$_2$ फ म—महात्मा वालिसूनुर्वै ॥ १६. भ—वर्जं—आगतः ॥ १७. रा$_2$ फ—आख्यातवांस्तेषां ॥ म—आख्यापयत्तेषां ॥ १८. रा$_2$ फ म—दुःखशांतये । १९. रा$_2$ फ—आत्मधैर्यं । २०. रा$_2$ फ म—विकुर्वाणः । भ—समाश्रित्य ॥ २१. रा$_2$ फ—संतीर्णः ॥

४८] तत्राऽहम् एकाम्[1] अद्राक्षम् अशोकवनिका-गताम्[2] ।
४९पू] कौशेय-वस्त्रां मलिनां निर्-आनन्दां धृत-व्रताम् ॥९२॥ [४५
तया समेत्य त्वरितो[3] दृष्ट्वा सीताम्[3] अ-निन्दिताम् । [४६पू
N] राक्षसीभी रक्ष्यमाणां सीतां सुरसुतोपमाम् ॥[4]९३॥[N
N] सु-भ्रूं सु-केशीं सु-श्रोणीं सु-कुचां[5] सु-द्विजाऽऽननाम् ।[4] [N
४९उ] अभिज्ञान-मणिं गृह्य[6] चरिताऽर्थोऽहम्[7] आ-गतः[7] ॥९४॥[४९उ
हत्वा घोराणि रक्षांसि कृत्वा च कदनं महत् । [४८उ
५०] दग्ध्वा वाऽशेष-तो लङ्कां ततोऽस्मि पुनर् आ-गतः ॥९५[8]॥[४९पू
मया च पुनर् आ-गत्य रामस्याऽक्लिष्ट-कर्मणः ।
५१] अभि-ज्ञानं शुभं[9] दत्तम् अर्चिष्-मान् स महा-मणिः ॥९६॥[५०
श्रुत्वा[10] तु मैथिलीं दृष्ट्वा (?ष्टां) मया संहृष्ट-मानसः[11] ।
५२] जीविताऽऽशाम्[12] अनु-प्राऽऽप्तः[12] पीत्वाऽमृतम् इवाऽऽतुरः॥९७॥[५१
अयोजयद् बलोद्योगं[13] दधौ[14] लङ्का-वधे मनः[14] ।
५३] जिघांसुर् इव लोकांस् त्रीन् अनन्ताऽऽख्यो विभावसुः ॥[15]९८॥[५२
ततः[16] सम्-उद्रम् आ-साद्य नल-सेतुम्[15] अकारयत् ।
५४] सा मुहूर्तेन सं-तीर्णा वाहिनी तेन सेतुना ॥९९॥ [५३
प्र-हस्तम् अवधीन् नीलः कुम्भ-कर्णं च राघवः ।
५५] लक्ष्मणो रावण-सुतं[17] स्वयं रामस् तु रावणम् ॥१००॥[५४
स[18] शक्रेण[18] समा-गम्य यमेन वरुणेन च । [५५पू
५६] सुरर्षिभिश्[19] च काकुत्स्थो वरं लेभे ततस्[20] तु स[20] ।१०१॥[५६उ
स तु दत्त-वरः पित्रा मुनिभिश् च परं-तपः[21] ।
५७] पुष्प-केन वि-मानेन किष्किन्धां समुपाऽगमत्[22] ॥१०२॥ [५७

---

१. ल$_2$–सीतां । २. रा$_2$ फ म–०निकांतरे ॥ ३. रा$_2$ म–संजल्प्य पृष्ट्वा सर्वम् । फ–संपूज्य पृष्ट्वा सर्वम् । ४. भ–नास्ति ॥ ५. रा$_1$ ल$_1$ व प्र–सुकर्णां । ६. रा$_2$ फ म–प्राप्य । ७. रा$_2$ फ–त्वरितार्थोहमा० । म–त्वरितार्थं समागतः ॥ ८. प्र रा$_2$ फ म–नास्ति ॥ ९. रा$_2$ फ म–वर्जं—महद् ॥ १०. रा$_2$ फ म–वर्जं—ज्ञात्वा । ११. रा$_2$ फ म–वर्जं—संहृतमा० । १२. रा$_2$ फ–जीवितस्तं मणिं दृष्ट्वा ॥ १३. रा–बलं घोरं । १४. रा$_2$ फ म–दध्रे लं० । भ–वानराणां स राघवः । १५. भ–सुग्रीवांगदमुख्यैश्च जगाम मकरालयं ॥ १६. भ–तत्रोदधौ तदा रामो शैलैः सेतुम् ॥ १७. रा$_2$ फ–शक्रजयिनं । म–शक्रजेतारं ॥ १८. रा$_2$ फ म–इन्द्रेण तु । १९. रा$_2$ फ म–महर्षिभिश् । २०. रा$_2$ फ म–परंतपः ॥ २१. रा$_2$ फ म–समागतः ॥ २२. रा$_2$ फ–अभ्युपा० ॥

भरद्वाजाऽऽश्रमं प्राऽऽप्तः स-सीतः सह-लक्ष्मणः ।[1]
५८] अ-विघ्नं पुष्य-योगेन श्वो रामं द्रष्टुम् अर्हसि ॥१०३॥[५८
ततः स सम्यग्[2] घनुमद्-वचो भृशं[2]
नि-शम्य हृष्टो भरतः कृताऽञ्जलिः ।
उवाच वाक्यं मनसः प्र-हर्षणं
N] कुतश्[3] चिराद् राम-कथा प्र-वृत्ता[3] ॥१०४॥[५९
इत्य् एवम् उक्त्वा वचनं प्रतीतः[4] [दा-१२८
कपि-प्रवीरस्य वचो नि-शम्य[5] ।
प्र-हर्षितो राम-दिदृक्षयाऽभवत्
N] पुनश् च हर्षाद् इदम् अब्रवीद् वचः ।१०५[6]॥[४५

इत्यार्षे रामायणे युद्ध-काण्डे[7] भरत-प्रहर्षणं[8] नाम
सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

## [वं-१११]= [ अष्टोत्तरशततमः सर्गः ] =[दा-१३०]

स श्रुत्वा परमाऽऽनन्दं भरतः सत्य-सङ्गरः ।[9]
१] हृष्ट[10] आ-ज्ञापयामास शत्रु-घ्नं पर-वीर-हा ॥१ ॥[१
दैवतानि च सर्वाणि चैत्या ये नगरस्य च ।
२] वि-चित्रैर्[11] गन्ध-माल्यैश् च[11] पूज्यताम्[12] इति[13] सर्व-शः[13] ॥२ ॥[२
सूताः स्तुति-पराऽर्थ-ज्ञाः सर्वे वैतालिकास् तथा । [३पू
३] ब्राह्मणा वेद-विद्वांसश् चाऽभि-गच्छन्तु[14] राघवम् । [९पू
४पू] कुशलाः सर्व-वाद्यैश्[15] च[15] गणिकाश् चैव सर्व-शः ॥३[16]॥[३उ
N] प्रेष्यैः[17] शिल्पि-सहस्राणि[17] नोदयामास वीर्य-वान् ।[18] [४उ
४उ] समी-क्रियतां[19] निम्नानि वि-षमाणि समानि[20] च[20] ।

१. भ–स गंगां क्षिप्रमासाद्य न्यवसन्मुनिसन्निधौ ॥ २. रा$_2$ फ म–वाक्यं मधुरं ह्यनूपमं । ३. म–श्रुत्वा शिवा रा० ॥ भ–कुतश्चिरस्याद्य कथा समागता ॥ ४. रा$_1$ अ भ–नृपात्मजः । ५. रा$_1$ अ–०म्य सः । भ–निधार्य । ६. रा$_2$ फ म–नास्ति ॥ ७. प्र भ–लंकाकांडे । फ म–आभ्युदयिके ॥ ८. रा$_2$ फ म–हनूमद्वाक्यं । भ–भरतप्रहर्षः ॥ ९. रा$_2$ फ म–श्रुत्वा भ्रातरमायान्तं भरतः सत्यविक्रमः । १०. रा$_2$ फ म–क्षिप्रम् ॥ ११. भ–वादित्रैर् । १२. रा$_2$ फ–चाप्यर्च्यन्ताम् । १३. रा$_2$ फ–अथ स० । भ–शुचिभिर्जलैः ॥ १४. भ–त्वभिग० । १५. रा$_1$ ल$_2$ ब अ–वादिकाश्चैव । ल$_1$ प्र–च सवा० । १६. फ म–नास्ति ॥ १७. म–वर्ज—प्रेष्यशि० । १८. भ–नास्ति । १९. भ–वर्ज—समीकुरुत । २०. फ–च भागशः । म–विभागशः ।

५पू] स्थलानि[1] च वि-रचयतां[1] नन्दि-ग्रामाद् इतः परम् ॥४ ॥[५
N] सिञ्चन्तु पृथिवीं सर्वे[2] हिम-शीतेन[2] वारिणा ।[3]
५उ] ततोऽभ्यव-किरन्त्व् अन्ये पुष्प-लाजैश्[4] च सर्व-शः[4] ॥५ ॥[६
समुच्छ्रित-पताकाश्[5] च[6] रथ्याः पुरवरोत्तमे ।
६] शोभयन्तु स्व-वेश्मानि सूर्यस्योद्-अयनं प्रति ॥६ ॥[७
अपरे मुक्त-पुष्पैश् च सु-गन्धैः पञ्च-वर्णकैः ।
७] राज-मार्गं सु-सम्बाधं[7] किरन्तु[7] शत-शो नराः ॥७ ॥[८
राज्ञो[8] दारास्[8] तथाऽमात्याः सैन्य-श्रेण्यस् तथाऽङ्गनाः[9] । [९पू
८] अभि-क्रामन्तु रामस्य द्रष्टुं शशि-निभं मुखम् ॥[10]८ ॥[३उ
धृष्टिर् जयन्तो वि-जयः सिद्धाऽर्थो राज्य-वर्धनः[11] ।
N] अ-शोको धर्म-पालश् च सु-मन्त्रश्[12] चाऽपि यान्तु[12] ते ॥९[13] ॥[१०पू
भरतस्य वचः श्रुत्वा शत्रु-घ्नः पर-वीर-हा[14] । [४पू
९] सर्वं तत् कारयामास वि-शेषेण[15] नरोत्तमः ॥[16]१०॥[N
मत्तैर् नाग-सहस्रैश् च शातकुम्भ-विभूषितैः[17] । [१०उ
१०] अपरे[18] हेम-कक्ष्याभिः स-घण्टाभिः[19] करेणुभिः[19] ॥११।
निर्-ययुश्[20] च गजाऽध्यक्षा[20] मुख्यैश् च सु-महारथाः । [११
११] तुर-गाणां सहस्रैश् च मुख्यैर्[21] मुख्यतराऽन्वितैः[21] ॥१२॥
शक्त्य-ऋष्टि-पाश-हस्तानां स-ध्वजानां महा-यशाः[22] ।
१२] पदातीनां सहस्रैश् च वीरः परि-वृतस्[23] तदा[23] ॥१३॥[१२
द्विजाति-मुख्यैर् धर्माऽऽत्मा श्रेणी-मुख्यैश् च[24] नैगमैः[25]।

---

१. रा$_{2}$ फ–स्थूलानि च विरूप्यन्तां । म–०नि कुरुतां चैव । भ–स्थानानि च विरज्यंतां ॥ २. रा$_{2}$ फ म–चान्ये सुखशी० । ३. भ–नास्ति । ४. रा$_{2}$ फ म–फलैः पुष्पैश्च सर्वतः ॥ भ–०जैश्च सर्वतः ॥ ५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–समुद्गतप० । ६. भ–तु ॥ ७. म–०धैः कुर्वंतु ॥ ८. रा$_{2}$ फ म भ–राजदा० । ९. रा$_{2}$ फ म–च सर्वशः । भ–तथा गणाः । १०. रा$_{2}$ फ म–त्वरमाणा हि निर्यांतु रामदर्शनकांक्षिणः ॥ भ–०नि-भाननं । ११. रा$_{2}$ फ म–राष्ट्रव० । १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र–०न्त्रोऽथाभियांतु । १३. भ–नास्ति ॥ १४. रा$_{2}$ फ म–स महामतिः । १५. ल$_{1}$ ल$_{2}$ ब प्र–०शेषात्स । १६. रा$_{2}$ फ म–नास्ति ॥ १७. रा$_{1}$ अ फ म–०तकौंभ० । १८. म–अन्ये च । १९. रा$_{2}$ फ म–करेणुभिस्तथा गजैः ॥ २०. रा$_{2}$ फ म–त्वरमाणा हि निर्यांतु । भ–०युस्त्वरया युक्ता । २१. प्र म–अत आरभ्य १३-शश्लोकस्य तृतीयपादं यावन्नास्ति । भ–मंत्रिभिर्भरतो वृतः ॥ २२. रा$_{2}$ फ–पताकिनां । २३. फ–परिवारितस्तथा ॥ २४. भ–महायशाः ।

१३] माल्य-मोदक-हस्तैश् च नागरैर्[1] भरतो वृतः ।।१४।। [१७
शङ्ख-भेरी-निनादेन[2] वन्दिभिश् चाऽभि-नन्दितः[3] ।
१४] पादुके ते[4] गृहीत्वा च[4] शिरसा धर्म-कोविदः ।।१५।। [१८
पाण्डुरं छत्रम् आ-दाय शुक्ल-माल्य-विभूषितम्[5] ।
१५] शुक्ले च बाल-व्यजने रामाऽर्हे-(?र्हे) हेम-भूषिते ।।१६।। [१९
N] उपवास-कृशो दीनश् चीर-कृष्णाऽजिनाम्बरः ।
N] भ्रातुर् आ-गमनं श्रुत्वा तत् पूर्वं हर्षम् आ-गतः ।
प्रत्युद्-ययौ तदा रामं महाऽऽत्मा मन्त्रिभिर् वृतः[6] ।।[7]१७।। [२०
१६] ततो यानान्य् उपाऽऽरूढाः सर्वा दशरथ-स्त्रियः ।
कौसल्यां प्र-मुखे[8] कृत्वा सु-मित्रां चैव[9] निर्-ययुः[9] ।।१८।। [१३
१७] अश्वानां खुर-शब्देन रथ-नेमि-स्वनेन च ।
शङ्ख-दुन्दुभि-नादेन[10] सं-चचाल च[11] मेदिनी[11] ।।१९।। [१६
१८] कृत्स्नं[12] च नगरं तत्र नन्दि-ग्रामम् उपाऽऽगतम्[12] । [१५
सम्-ईक्ष्य भरतो वाक्यम् उवाच कपि-कुञ्जरम् ।।२०।। [२१
१९] कच्-चिद्[13] वानर कापेयी[14] नैव[14] ते चल-चित्तता ।
न हि पश्यामि काकुत्स्थं रामम् आर्यं परं-तपम् ।।२१।। [२२
२०] अथैवम् उक्तो वचनं हनु-मान् इदम्[15] अब्रवीत्[15] ।
N] अर्थं वि-ज्ञापयन्न् एव भरतं सत्य-विक्रमम् ।।२२।। [२३
सदा-फलान्[16] कुसुमितान् पश्य[17] वृक्षान् मधु-च्युतः[17] ।
२१] मुनेः[18] प्र-सादात्[18] सिद्धस्य भरद्वाजस्य धी-मतः ।।२३।। [२४
तेन ह्य् एष वरो दत्तो वने येन परं-तप ।[19]

---

१. फ म–मंत्रिभिर् ॥ २. फ म–०नादैश्च । ३. फ–चैव वंदि० । म–चापि नं० । ४. रा१ ल१ अ प्र–द्वे गृ० । रा२ फ म–तेऽथ संगृह्य । भ–०त्वा तु । ५. रा१ ल१ ल२ ब अ प्र–शुभ्रं मा० । रा२ फ–०ल्योपशोभितं । म–पुष्पमालोपशोभितं ॥ ६. भ–सह । ७. रा२ फ म–नास्ति । ८. रा२ फ म–पुरतः । ९. रा२ फ–चाभिनि० । म–चापि नि० । १०. रा२ फ–०भिनिर्घोषैः । म–०भिशब्देन । ११. रा१ अ–०ल वसुंधरा । प्र–०चालेव मे० ॥ १२. रा१ ल१ ल२ ब भ–०गमत् ॥ १३. ल१ ल२ ब अ प्र–ननु । रा२ फ म–किं तु । १४. रा१ भ–कार्येंपि नैव । ल१ ल२ ब अ प्र–काये या सैव । म–काये या सेयं ॥ १५. रा१ ल१ ल२ ब अ प्र–मारुतात्मजः ॥ १६. रा२ फ–सद्यः फुल्लान् । १७. रा२ फ–०क्षान्मधुस्रवान् । म–कंदमूलानि सर्वशः । १८. रा१ भ–वरप्रदानात् । म–पश्य वृक्षान् ॥ १९. रा२ फ म–नास्ति ।

२२] आतिथ्यं[1] ते ससैन्यस्य[1] कृतं सर्वगुणाऽन्वितम् ।।[2]२४।। [२५
नि-स्वनः श्रूयते चाऽसौ[3] हृष्टानां च[3] वनौकसाम् ।
२३] मन्ये वानर-सेना सा नदीं तरति गो-मतीम् ।।२५।। [२६
रजो-वर्ष-समुद्भूतं[4] पश्य शालूकिनीं[5] प्रति ।
२४] मन्ये साल-वनं रम्यं[6] लोडयन्ति[7] प्लवं-गमाः ।।२६।। [२७
तद् एतद् आकाश-तले[8] भाति चन्द्र इवोदितः[8] ।
२५] वि-मानं पुष्प-कं दिव्यं[9] मनसा[9] ब्रह्म-निर्मितम् ।।२७।। [२८
रावणं बान्धवैः[10] सार्धं हत्वा लब्धं महाऽऽत्मना[11] ।
२६] धन-दस्य प्र-सादेन दिव्यम्[12] एतन् मनो-जवम्[12] ।।२८।। [२९
एतस्मिन् भ्रातरौ[13] वीरौ वैदेह्या[14] सह राघवौ ।
२७] सु-ग्रीवश् च महा-तेजा[15] ऋक्ष-वानर-संवृतः[16] ।
रावणस्याऽनु-जो वीरो[15] राजा चैव वि-भीषणः ।।[17]२९।।[३०
२८] तं दृष्ट्वा तूर्णम् आ-यान्तं द्वितीयम् इव भास्-करम् ।[17] [N
हर्षेणाऽभिसमुत्-क्रुष्टो[18] नि-स्वनो दिवम् अस्पृशत् ।
२९] बाल-स्त्री-वृद्ध-सङ्घानां[19] रामोऽयम् इति शंसताम्[20] ।।३०।। [३१
रथ-कुञ्जर-वाजिभ्यस् तेऽव-तीर्य महीं गताः ।
३०] ददृशुस् तं विमान-स्थं नराः सोमम् इवाऽम्बरे ।।३१[21]।।[३२
प्राऽञ्जलिर् भरतो भूत्वा[22] हृष्टो[22] रामम् उप-स्थितः[23] ।
३१] स्व्-आगतेन[24] यथाऽर्हेण तदा रामम् अपूजयत् ।।[25]३२।।[३३
मनसा ब्रह्मणा सृष्टे वि-माने लक्ष्मणाऽग्रजः ।[26]

---

१. ल१ ल२ ब अ–०थ्यार्थेन सै० । २. रा२ फ म–ससैन्यस्य तवातिथ्यं कृतं तेन महर्षिणा ॥ ३. रा२ फ म–भीमः प्रहृष्टानां । ४. रा२ फ म–रजश्चैतस्स० । ५. रा२ फ–वर्जं–शालु० । ६. म–सर्वे । ७. रा१ ल१ भ–लोलयंति ॥ ८. रा२ फ म–भरताकाशे विमलं चंद्रसन्निभं । ९. रा२–ह्येतन्मानसं ॥ १०. ल१ ल२ अ प्र–वानरैः । ११. फ म–इदं शुभं । १२. रा२ फ म–रामस्य मनसा गतं ॥ १३. ल१ ल२ ब अ–अन्तरे । १४. ल२–नास्ति । १५. ल१ ब अ प्र–महाबाहुर् । १६. फ म–०संमतः । १७. फ म–नास्ति ॥ १८. रा२ फ म–०ण महताविष्टो । १९. रा२–स्त्रीबालप्रवृद्धानां । फ–स्त्रीबालयुववृद्धानां । म–स्त्रीबालपुरवृद्धानां ॥ २०. रा२ फ म–कीर्ततां । २१. रा२ फ म–अवतीर्णं ततः क्षिप्रं रथहस्तितुरंगमम् । तं विमानगतं दृष्ट्वा यतो रिपुनिषूदनम् ॥ २२. रा२ फ म–हृष्टो दृष्ट्वा । २३. रा फ म–०तं । २४. ल१ ल२ ब अ–स्वगात्रेण । प्र–सुगात्रेण । २५. रा२ फ म–स्वागतं ते महाबाहो कौशल्यानंदवर्धनं ॥ २६. रा२ फ–ददृशुर्ब्राह्मणाश्चैनं विमाने लक्ष्मणाग्रजं ।

३२] रराज[1] पृथुताम्राऽक्षो[1] वज्र-पाणिर्[2] इवाऽचले[3] ।।३३।। [३४
ततो विमानाऽग्र-गतं भरतो भ्रातरं मुदा[4] ।
३३] ववन्दे[5] प्र-णतो भूत्वा[6] मेरु-स्थम् इव भास्-करम् ।।३४।। [३५
आ-रोपितो[7] वि-मानं तु[7] भरतः सत्य-विक्रमः[8] ।
३४] रामम् आ-साद्य मुदितो भूय[9] एवाऽभ्य्-अवादयत्[9] ।।३५।। [३७
तं समुत्था(द्-स्था) प्य काकुत्स्थश् चिरस्याऽक्षि-पथं गतम् ।
३५] अङ्के भरतम् आ-रोप्य मुदितः परि-षस्वजे ।।३६[10]।। [३८
न्याय-तश् च समेत्याऽथ भरतेन महाऽऽत्मना ।
३६] वन्दितौ चरणौ देव्याः सीतायाः प्रयताऽऽत्मना[11] ।।३७[12]।। [३९
सु-ग्रीवं[13] कैकयी-पुत्रो जाम्ब-वन्तं तथाऽङ्ग-दम्[14] ।
३७] मैन्द-द्विविद-नीलांश् च ऋषभं चैव[15] सस्वजे । [४०
N] सुमित्रा-तनयं चैव सस्वजे भरतो मुदा ।।[16]३८। [४१उ
ते कृत्वा मानुषं रूपं[17] वानराः काम-रूपिणः ।
३८] कुशलं परि-पप्रच्छुर्[18] भरतं हृष्ट-वत्[18] तदा ।।३९।। [४२
वि-भीषणं च भरतः सान्त्वं वचनम् अब्रवीत् ।[19]
३९] दिष्ट्या त्वया सहायेन[20] कृतं कर्म सु-दुष्करम् ।।४०।। [४५
शत्रु-घ्नश् च तदा रामम् अभि-वाद्य स-लक्ष्मणम् ।
४०] सीतायाश् चरणौ[21] पश्चाद् वि-नयेनाऽभ्य्-अवादयत्[21] ।।४१[22]।। [४६
४१उ] रामो मातरम् आ-साद्य वि-वर्णां[23] शोक-कर्षिताम्[23] ।

---

१. रा$_2$ फ म–आसीनं पृथुदीर्घाक्षं । २. ल$_1$ ल$_2$ ब अ प्र म–चक्रपाणिर् । ३. रा$_2$ फ म–इवामराः ॥ ४. ल$_2$ अ प्र रा$_2$ म–तदा । ५. रा$_2$ फ–प्रांजलिर् । म–शिरसा । ६. म–रामं । ७. रा$_1$ ल$_2$ अ भ–०पितविमानं तं । रा$_2$ फ म–ततो विमानमारुह्य । ८. रा$_2$ फ–शत्रुकर्षणः । ९. रा$_2$ फ म–हर्षादश्रूण्यवर्तयत् ॥ १०. रा$_2$ फ म–नास्ति ॥ ११. अ–संयता० । १२. रा$_1$ ल$_1$ ल$_2$ ब प्र–नास्ति । रा$_2$ फ म–ततो लक्ष्मणमासाद्य वैदेहीं च परंतपः । अभ्यवादयच्छ्रीमान्भरतो नाम चाब्रवीत् ॥ १३. रा$_2$ फ म–ततः स । १४. रा फ म–अथा० । १५. रा$_2$ फ म–चापि । १६. रा$_2$ फ म–नास्ति । १७. रा$_1$ भ–देहं ॥ १८. रा$_2$ फ म–पर्यपृच्छन्त प्रहृष्टा भरतं । १९. रा$_2$ फ म–सुग्रीवं च पुनः प्राह स्मितपूर्वं महाद्युतिं । भ–सुग्रीवं भरतः प्राह नमस्कृत्याग्रतः स्थितः । २०. रा$_1$ भ–सहायेंण ॥ २१. रा$_2$ फ म–च शुभौ पादौ सहसा योभ्यवा० । २२. अतः परमधिकः पाठः –भ–अथ बाष्पपरीताक्षीं कृशां नियममास्थिताम् ॥ २३. रा$_1$ अ–०र्णवदनां कृशां ।

जग्राह[1] प्र-णतः[1] पादौ मनो मातुः प्र-हर्षयन्[2] ॥४२॥ [४७
४२] अभि-वाद्य सु-मित्रां च कैकेयीं च यशस्विनीम्[3] ।
N] स मातॄश्[4] च[4] ततः[5] सर्वाः[6] पुरो-हितम् उपाऽगमत्[6] ॥४३॥ [४८
अभि-गम्य ततो रामो वसिष्ठं सचिवैर् वृतम् ।
४३] तम् अभ्य्-अवादयन् मूर्ध्ना ब्रह्माणम् इव शाश्वतम् ॥४४[7]॥ [N
ददृशुस् तं तदा पौराः सङ्घ-शः समुप-स्थिताः ।
४४] धरणी-स्था विमान-स्थम् उद्-यन्तम् इव भास्-करम् ॥४५[7]॥ [N
स्व्-आगतं ते महा-बाहो कौसल्याऽऽनन्द-वर्धन ।
४५] इति प्राऽञ्जलयः सर्वे नागरा रामम् अब्रुवन् ॥४६॥ [४९
तान्य् अञ्जलि-सहस्राणि समा-नीतानि[8] नागरैः ।
४६] अ-कोशानीऽव[9] पद्मानि ददर्श भरताऽग्रजः ॥४७॥ [५०
ततो रामाऽभ्यनुज्ञातं तद् विमानं मनो-जवम् ।
४७] हंस-युक्तं महा-वेगं नि-पपात मही-तले ॥४८[10]॥ [३६
स[11] पादुके तु रामस्य[11] गृहीत्वा भरतः स्वयम्[12] ।
४८] चरणेषु[13] नरेन्द्रस्य योजयामास धर्म-वित्[14] ॥४९॥ [५१
अब्रवीच् च तदा रामं भरतः संहताऽञ्जलिः[15] ।
४९] दिष्ट्याऽस्मान् स्मरसे नित्यम् अ-नाथान् नाथ सर्व-दा ॥[16]५०॥ [५१
भवद्-भयान् नि-योगाच् च न गृहीतं फलाऽर्थिना ।[16] [N
५०] एतत् ते सकलं राज्यं न्य्-आसो निर्-यातितो मया[17] ॥५१॥
अद्य जन्म[18] यथाऽर्थं मे[18] स-फलश् च[19] मनो-रथः । [५२
५१] यस् त्वां पश्यामि राजानम्[20] अयोध्यां[20] पुनर् आ-गतम् ॥५२॥
अवेक्ष्यतां भवान् कोशं[21] कोशाऽऽगारं[22] बलं पुरम् ।

---

१. रा$_2$ फ म–०हाभिमतः । २. रा$_2$ फ म–प्रसादयन् ॥ ३. रा$_2$ फ म–तपस्विनीं । ४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–मातरस । ५. रा$_2$ फ म–तथा । ६. रा$_2$–सर्वे अभ्यगच्छन् पुरोहिताः । भ–सर्वाः संप्रणम्याभ्यवादयत् ॥ ७. रा$_2$ फ म–नास्ति ॥ ८. रा$_2$ फ म–संगृहीतानि ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अकालेनेव। रा$_2$ फ म–०शानि च ॥ १०. रा$_2$ फ म–नास्ति ॥ ११. रा$_2$ फ म–ततो रामस्य चरणौ । भ–पादुके ते च रा० । १२. रा$_2$ फ म–तदा । १३. रा$_2$ फ म–ते पादुके । भ–०णाभ्यां । रा$_2$ फ म–स मर्धात्मा । १४. रा$_2$ फ म–पादयोः ॥ १५. रा$_2$ फ म–वर्जं—स कृतां० । १६. रा$_2$ फ म–नास्ति ॥ १७. रा$_2$ फ–वर्जं—निष्पादितो । म–०तितं । १८. रा$_2$ फ म–मे सफलं जन्म । १९. रा$_2$ फ–संवृत्तश् । म–संपूर्णश् । २०. रा$_2$ फ–काकुत्स्थं स्वां पुरीं ॥ २१. भ–कोषं । २२. रा फ म–कोषागारं ॥

५२] भवतस् तेजसा सर्वं[1] कृतं बहु-गुणं मया ॥५४॥ [५३
तथा ब्रुवाणं भरतं[2] दृष्ट्वा तं[2] भ्रातृ-वत्सलम् ।
५३] मुमुचुर् वानरा बाष्पं राक्षसश्[3] च वि-भीषणः[3] ॥५५॥ [५४
ततः प्र-हर्षाद् भरतम् अङ्कम् आ-रोप्य राघवः ।
५४] ययौ तेन वि-मानेन स-सैन्यो भरताऽऽश्रमम् ॥५६॥ [५५
भरताऽऽश्रमम् आ-साद्य स-सैन्यो[4] भरताऽग्रजः[4] ।
५५] अव-तीर्य विमानाऽग्रात् ततस्[5] तस्थौ[5] मही-तले ॥[6]५७॥ [५६
अब्रवीच् च तदा रामस् तद् वि-मानं मनो-जवम् ।
५६] वह वैश्रवणं देवम् अहम्[7] आ-ज्ञापयामि ते[7] ॥५८[8]॥ [५७
अथ[8] रामाऽभ्यनुज्ञातं[8] तद् वि-मानं मनो-जवम् ।
५७] उत्-तरां दिशम् आ-स्थाय जगाम धनदाऽऽलयम् ॥५९॥ [५८
वि-मानं पुष्प-कं दिव्यं सर्वर्तुकम् अनु-उत्तमम् ।
N] राम-वाक्य-प्रमुदितं जवेन धन-दं ययौ ॥६०[9]॥ [५९
तत् तु वैश्रवणो दृष्ट्वा स्व-विमानम् उवाच ह ।
५८] रामम् एव वहस्व त्वम् उप-तिष्ठंश् (?ष्ठ) च मां स्मृतः(म्) ॥६१॥ [N
तत्[10] तु[10] वैश्रवणाऽऽज्ञप्तम् उपाऽतिष्ठच् च राघवम् ।
५९] उप-लभ्य च वृत्ताऽन्तं पूजयामास राघवः ॥६२॥ [N

गते तु तस्मिन् कृत-सम्प्रणामो[11]
बद्धाऽञ्जलिर् भ्रातृजनाऽनुयातः ।
प्र-चक्रमे धर्म-विधान-गोप्ता
N] ततो गुरूणाम् अभि-वादनाय ॥६३[12]॥ [N
पुरो-हितस्याऽथ[13] समेत्य[13] राघवो
बृहस्पतेः शक्र इवाऽमराऽधिपः ।
नि-पीडय पादौ पृथग्[14] आसने शुभे[14] ।
N] सहैव तेनोप-विवेश वीर्य-वान् ॥६४॥ [६०

इत्यार्षे रामायणे युद्ध-काण्डे[15] भरत-समागमो[16] नामाऽष्टोत्तरशततमः सर्गः ॥ १०८ ॥

---

१. ल$_2$–पूर्वं ॥ २. भ–रामेण भरतं । ३. रा२ फ–नागरश्च जनस्तथा । म–रक्षसां स्वजनास्तथा ॥ ४. रा२ फ म–राघवः सत्यविक्रमः । ५. फ म–अवतस्थे । ६. अ–नास्ति ॥ ७. रा२ फ म–अनुजानामि गम्यतां ॥ ८. म–ततो राममनु० ॥ ९. रा२ फ म–नास्ति ॥ १०. रा१ प्र भ–तत्र ॥ ११. रा१ ल१ ल२ ब अ प्र–सकृत्प्र० । १२. म भ–नास्ति ॥ .१३ रा२ फ म–०स्यात्मसमस्य । १४. रा२ फ म–ज्वलनार्कसन्निभौ ॥ १५. ब–त्रुटितः । प्र भ–लंकाकांडे । १६. आभ्युदयिके भरत० ॥

सु-षेणं जाम्ब-वन्तं च केसरिं[1] च महा-बलम्[1] ।
१] अभि-वाद्य[2] च सु-ग्रीवं वि-नयेन परं-तपः ॥१ ॥[N
N] अभ्य्-अवादयत प्रीतो भरतः प्लवगर्षभान् ।[3]
अथाऽब्रवीद् राज-पुत्रः सु-ग्रीवं प्लवगेश्वरम् ॥[4]२ ॥[N
२] परि-ष्वज्य महा-तेजा भरतो[4] धर्म-वत्सलः[5] ।
त्वम्[6] अस्माकं चतुर्णां च[6] भ्राता सु-ग्रीव पञ्चमः ।
३] सौहार्दाज् जायते मित्रम् अप-कारोऽरि-लक्षणम् ॥३ ॥[N
शिरस्य् अञ्जलिम् आ-दाय कैकेय्य्-आनन्द-वर्धनः ।
४] बभाषे भ्रातरं ज्येष्ठं रामं सत्य-पराऽऽक्रमम् ॥४ ॥[१
पूजिता मामकी[7] माता दत्तं राज्यम् अरिं-दम[8] ।
५] तथैवाऽहं प्रति-ददे यथैव त्वं स(?च)माऽददः ॥[9]५ ॥[२
धुरम् एकाकिना[10] न्य्-अस्तं[10] वृषभेण बलीयसा ।
६] कु-गौर्[11] इव[11] गुरु-भारं न वोढुम् अहम् उत्-सहे ॥६ ॥[३
वारि-वेगेन महता भिन्नः सेतुर्[12] इव क्षरन्[12] ।
७] वार्य्-ओघम्[13] इव मन्येऽहं राज्यं छिद्रम्[14] अ-संवृतम्[14] ॥७ ॥[४
खरो वा गतिम् अश्वस्य मर्त्यो वा शकुनेर् गतिम् ।[15]
८] नाऽन्वेष्टुम्[16] उत्-सहे देव तव मार्गम् अरिं-दम ॥८ ॥[५
यथा चाऽऽरोपितो[17] वृक्षो जातश्[18] चाऽन्तर्-निवेशने[18] ।
९] महांश् चैव दुरा-रोहो महा-स्कन्धः[19] प्रशाख-वान्[19] ॥[20]९ ॥[६

---

१. रा२ फ म–कपिं केशरिणं तथा । २. रा२ फ म–अभिगम्य ॥ ३. भ–नास्ति । अतः परमधिकः पाठः—रा२ फ म–तं परिष्वज्य सुग्रीवश्चिराच्चात्-समागमे । अंके भरतमारोप्य परिष्वज्य च पीडितम् । ४. रा२ फ म–ततोऽब्रवीत्तं भरतः प्रीतेनाऽन्तरात्मना ॥ ५. रा२ फ म–सुग्रीवं प्लवगोत्तमं । ६. रा२ फ म–भवांश्चतुर्णामस्माकं ॥ ७. रा२ फ म–मेऽधिकं । ८. रा२ फ म–इदं त्वया । ९. रा२ फ म–वर्जं—तद्ददामि पुनस्तुभ्यं यथा मह्यं भवान्ददौ ॥ १०. रा२ फ म–एतां समन्यूढाम् । ११. म–पृथिव्यास्तु ॥ १२. म–सेतुमिवाक्षतम् । १३. रा२ फ म–दुर्वोढुम् । भ–दुर्धर्षम् । १४. रा१ ल१ ल२ व अ प्र–छिन्नमसं० ॥ भ–छिद्रसमन्वितं ॥ १५. रा१ ल१ ल२ व अ प्र भ–गतिं खर इवाश्वस्य हंसस्येव च वायसः । १६. भ–नान्वेतुम् ॥ १७. भ–तु रो० । १८. भ–वर्जं—जनैः श्रान्तनि० । १९. भ–वर्जं—महांश्चैव प्रतापवान् । २०. रा२ फ म–नास्ति ॥

यश् चाऽपि पुष्पितो भूत्वा फलानि न वि-दर्शयेत्[1] ।
१०] तस्य नाऽर्थो(ऽऽप्यो)भवेद् अर्थो यस्य हेतोः स रोप्यते ।।[2]१०।।[७
उपमैषा महा-बाहो तवाऽर्थे रघु-नन्दन ।[3]
११] तद् अस्मान्[4] वत्सलो[4] भूत्वा भृत्यान् भक्तांश् च पोषय ।।११।। [८
अद्य त्वाम् अनु-पश्यन्तु अभि-षिक्तं नराऽधिपाः[5] ।
१२] प्र-तपन्तम् इवाऽऽदित्यं मध्याऽह्ने दीप्त-तेजसम् ।।१२।। [९
तूर्य-सङ्घात-निर्घोषैः काञ्ची-नूपुर-निःस्वनैः ।
१३] मधुरैर् गीत-शब्दैश् च प्र-तुष्यस्व[6] नराऽधिप[6] ।।१३।।[१०
यावद् आ-वर्तते चक्रं तावती ते वसुं-धरा ।
१४] तस्यास् त्वम् अपि सर्वस्याः स्वामि-त्वम् अनु-चिन्तय[7]।।१४।।[११
भरतस्य वचः श्रुत्वा रामः सत्य-पराऽऽक्रमः[8] ।
१५] तथेति सम्प्रति-श्रुत्य आ-सने समुपाऽविशत् ।।१५।।[१२
ततः शत्रुघ्न-वचनान्[9] निपुणाः श्मश्रु-वर्धकाः[10] ।
१६] सुख-हस्ताश् च शीघ्राश्[11] च राघवं पर्युपाऽऽसते[12] ।।१६[13]।।[१३
पूर्वं च भरते स्नाते लक्ष्मणे च महा-बले ।
१७] सु-ग्रीवे वानरेन्द्रे च राक्षसे च वि-भीषणे ।।[14]१७।।[१४
विशोधित-जटः स्नातश् चित्रमाल्याऽनुलेपनः[15] ।

---

१. रा$_2$ फ म–प्रदर्श० । २. रा$_2$ फ म–अर्थं नानुभवे यस्तु यैर्यदर्थं प्ररोपितः । ल$_2$–४-र्थपादादारभ्य ११-शश्लोकस्य तृतीयपादं यावन् नास्ति ॥ ३. रा$_1$ ल$_1$ ब अ प्र–एषोपमा महाराजस्त्वदर्थं कल्पिता मया । भ–एषोपमा महाराजस्त्वदर्थं संहिता मया । ४. रा$_2$ फ–०स्मान्वृषभो । म–०स्माकं पतिर् । भ–०स्मान्नृपतिर् ।। ५. रा$_2$ फ–अरिंदम ॥ ६. फ–०स्व जयस्व च । म–प्रतिबुध्यस्व राघव । भ–तोषयन्त्विह वंदिनः ॥ ७. रा$_2$ फ म भ–अभिवर्तय ॥ ८. रा$_2$ फ म–परपुरंजयः ॥ ९. रा$_2$ फ म–०घ्ननिर्दिष्टा । १०. रा$_1$ ल$_1$ भ–०र्धनाः । ११. रा$_1$ ल$_1$ ल$_2$ ब प्र–श्लाघ्याश् । १२. ल$_2$ ब–०सत । म–पर्युपस्थिताः । १३. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब अ प्र–उपतस्थुर्जलस्नानकर्मदैवविदो जनाः । *वासांसि चांगरागाणि द्रव्याणि सुरभीणि च ॥ माल्यानि च विचित्राणि दिव्यान्याभरणानि च । *तान् दृष्ट्वा राघवो वीरो यथाक्रममुपस्थितान् ॥ उवाच परमप्रीतः सर्वानेवानुजीविनः । भरतं लक्ष्मणं चैव सुग्रीवं सविभीषणम् ॥ तांस्तानिच्छाम्यहं द्रष्टुं पृथक् पृथगुपस्थितान् । *वानरानृक्षरक्षांसि स्नापयामासुरंतरे ॥ १४. म–नास्ति ॥ १५. रा$_2$–०लेपिनः ।

---

*अ–नास्ति ।

१८] दिव्याऽऽभरण-पुष्टाऽङ्गः श्री-माञ् ज्वलित-कुण्डलः ।[1]
१९पू] महाऽर्ह-वसनो रामस् तस्थौ देव-श्रिया ज्वलन् ॥[2]१८॥[१५
सु-ग्रीवो हनु-मांश् चैव महेन्द्रोपेन्द्र-संनिभौ ।
N] स्नातौ दिव्याऽम्बर-धरौ रेजतुः शुभ-कुण्डलौ[3] ॥१९[4]॥[N
१९उ] नन्दि-ग्रामे जटाश्[5] छित्वा[6] भ्रातृभिः सह राघवः ।
N] स्नातो[7] वि-पाप्मा[7] बल-वान् इक्ष्वाकु-कुल-वर्धनः[8] ॥२०॥[N
प्रति-कर्म च रामाय कारयामास वीर्य-वान् ।
N] लक्ष्मणाय च लक्ष्मी-वान् भरतः सत्य-विक्रमः ॥२१[9]॥[१६
प्रति-कर्म च सीतायाः सर्वा[10] दशरथ-स्त्रियः ।
२०] आत्मनैव[11] तदा चक्रुर्[11] मनस्विन्यो मनो-हरम्[12] ॥२२॥[१७
ततो राघव-पत्नीनां[13] सर्वासाम् एव शोभनम्[14] ।
२१] चकार यत्नात् कौसल्या प्र-हृष्टेनान्तर्-आत्मना ॥[15]२३॥[१८
ततः शत्रुघ्न-वचनात्[16] सु-मन्त्रो नाम सारथिः ।
२२] योजयित्वाऽति-चक्राम[17] रथं सर्वाऽङ्ग-भूषितम्[18] ॥२४॥[१९
अर्क-मण्डल-सङ्काशं दिव्यं दृष्ट्वा रथोत्तमम्[19] ।
२३] आ-रुरोह महा-बाहू[20] रामः सत्य-पराऽऽक्रमः ॥२५[21]॥[२०
N] हरि-युक्तं सहस्राऽक्षो रथम् इन्द्र[22] इवाऽन्-अघः[22] ।
२४उ] प्रययौ तैः[23] सहाऽऽस्थाय[23] राघवो ज्वलितः श्रिया ॥२६॥[२७

---

१. रा$_2$ फ–नास्ति ॥ २. म–नास्ति ॥ ३. रा$_2$ फ–शुभलक्षणौ । ४. भ–नास्ति ॥ ५. रा$_2$–वर्जं—जटां । ६. रा$_2$ म भ–हित्वा । ७. म–महावीर्यश्च । ८. म–०लनंदनः ॥ ९. रा१ भ–नास्ति ॥ १०. म–चक्रुर् ॥ ११. फ–आसनेन ततस्तस्या । १२. रा$_2$ फ म–महाप्रभाः ॥ १३. रा$_2$ फ म–वानरप० । १४. म भ–वर्जं—०ना । १५. रा$_2$ फ म–अलंकारं चकाराथ कौशल्या पुत्रगर्धिनी । अतः परमधिकः पाठः—भ–वर्जं—तरुण्यः शौचसंपन्ना एकतः शुभलक्षणाः । सुग्रीवपत्नीं सीतां च द्रष्टुं नार्यः समागताः ॥ १६. रा$_2$ फ म–०घ्ननिर्दिष्टः । १७. रा$_2$ फ म–०स्वाभ्युपागच्छद् । १८. रा$_2$ फ–०ङ्गसुंदरं । म–०ङ्गशोभनं । १९. रा$_2$ फ म–महारथम् । २०. म–महातेजा ॥ २१. अतः परमधिकः पाठः—रा१ ल१ ल$_2$ ब अ प्र भ–सुग्रीवो हनुमांश्चैव राक्षसश्च विभीषणः । स्नाता दिव्यांबरधराः श्लक्ष्णाः कुण्डलधारिणः ॥ वराभरणसंपन्नाः सर्वतस्ते वनौकसः । आरोहत रथं शीघ्रमिति राम उवाच तान् ॥ लक्ष्मणादीन्स्थितान्दृष्ट्वा आरूढो रथिनां वरः । सुग्रीवो राक्षसेन्द्रश्च द्रष्टुं नगरमुत्सुकौ ॥ २२. ल$_2$–०वानुगः । म–इंद्रविमानवत् । २३. रा२ फ म–रथमास्थाय । भ–तैः समास्थाय ॥

जग्राह भरतो रश्मीन्[1] शत्रु-घ्नश् छत्रम् आ-दधे[2] ।
२५] लक्ष्मणो[3] व्यजनं गृह्य राघवं[4] पर्य्-अवीजयत् ।[5] [२८
N] श्वेतं च वाल-व्यजनं सु-ग्रीवो वानरेश्वरः ।।२७।।
अपरं चन्द्र-सङ्काशं दिव्यं[6] दृष्ट्वा महा-रथम् ।
N] आ-रुरोह महा-बाहू[6] राक्षसेन्द्रो वि-भीषणः ।।२८।। [२९
ऋषि-सङ्घैस् तदाऽऽकाशे देवैश् च स-मरुद्गणैः ।
२६] स्तूयमानस्य रामस्य शुश्रुवे मधुरो ध्वनिः[7] ।।[8]२९।।[३०
नव-नाग-सहस्राणि ययुर्[9] आ-स्थाय वानराः[9] ।
२८] मानुषं वि-ग्रहं कृत्वा सर्वाऽऽभरण-भूषिताः ।।३०।। [३२
शङ्ख-भेरी-निनादैश् च दुन्दुभीनां[10] च निः-स्वनैः ।
२९] प्र-ययौ[11] पुरुष-व्याघ्रः[11] स्वां पुरीं सम्प्र-हर्षयन्[12] ।।३१।। [३३
३०पू] अयोध्यायां तु[13] सचिवा राज्ञो दश-रथस्य ये[14] ।
N] शत्रु-घ्नं तु पुरस्-कृत्य मन्त्रयित्वा सु-निश्चितम् ।।[15]३२।।[२३
N] मति-मन्तौ महात्मानाव् अशोक-विजयौ तथा ।[16] [२४पू
३०उ] पुरो-हितं समा-नीय इदं वचनम् अब्रुवन् ।।[17]३३।।[N
भवन्तो[18] राम-तुष्ट्य्-अर्थं[18] वृद्ध्य्-अर्थं नगरस्य च । [२४उ
३१] यथा-वद् द्रव्य-सम्भारं विधि-दृष्टम् अशेष-तः ।।[19]३४।।[N
सर्वम् एवाऽभि-षेकाऽर्थं राज्याऽर्हस्य[20] महाऽऽत्मनः ।
३२] कर्तुम् अर्हथ रामस्य सर्व-मङ्गल-पूर्वकम् ।।३५।।[२५
इति[21] ते[21] मन्त्रिणः सर्वे सं-दिश्याऽथ[22] पुरो-हितम्[22] ।

---

१. भ–धीमान् । २. प्र रा$_2$ फ–आददे । ३. भ–राघवं । ४. भ–लक्ष्मणो । ५. रा$_2$ फ म–गृहीत्वा व्यजनं मूर्ध्नि लक्ष्मणः परवीरहा ॥ ६. रा$_2$ फ म–नास्ति ॥ ७. रा$_2$ फ–स्वरः । भ–स्वनः । ८. अतः परमधिकः पाठः—रा$_2$ फ–वर्जं—

पश्चात् शत्रुंजयं नाम कुंजरं पर्वतोपमम् । आरुरोह महाबाहुः सुग्रीवो वानरेश्वरः ॥

९. रा फ म–आरूढा वानरेश्वराः । भ–आरूढाः शेषवानराः ॥ १०. म–कुंजराणां । ११. रा$_2$ फ म–संप्रयातो नरव्याघ्रः । १२. रा$_2$ फ म–पुरुषर्षभः ॥ १३. रा$_2$ फ–च । १४. रा$_2$ फ म–वर्जं—तु । भ–ते । १५. रा$_2$ फ म–शत्रुघ्नं पुरतः कृत्वामंत्रयन्मंत्रकोविदाः । भ–नास्ति ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–अशोको विजयश्चैव शत्रुघ्नविजयावुभौ । भ–नास्ति । १७. रा$_2$ फ म–नास्ति । भ–शत्रुघ्नश्च महातेजाः पुरोहितमथाब्रुवन् ॥ १८. रा$_2$ फ–ततो रामस्य वृद्ध्यर्थं । म–क्षिप्रं रामस्य वृद्ध्यर्थं । भ–०मवृद्ध्यर्थं ॥ १९. रा$_2$ फ म–नास्ति ॥ २०. रा$_2$ फ म–तदर्हस्य । २१. रा$_2$ फ म–इत्येवं । २२. रा$_2$ फ म–नास्ति ।

३३] नगरान्[1] निर्-ययुर् द्रष्टुं[1] राम-दर्शन-बुद्धयः[2] ।।३६।। [२६
दद्दशुस् ते समा-यान्तं राघवं स-पुरःसरम् ।
३४] भ्राजमानं च वपुषा ज्वलन्तम् इव पावकम् ।।[3]३७।।[३४
ते[4] वर्धयित्वा[4] राजानं[5] रामेण प्रति-नन्दिताः ।
३५] अनु-जग्मुर् महाऽऽत्मानं भ्रातृभिः परि-वारितम् ।।३८।। [३५
अमात्यैर् ब्राह्मणैश्[6] चैव[6] तथा[7] प्र-कृतिभिर् वृतः[7] ।
३६] श्रिया[8] वि-रुरुचे[8] रामो न-क्षत्रैर् इव चन्द्रमाः ।।३९।। [३६
आशाभिर्[9] मधुराभिश् च[9] तथा स्वस्तिक-पाणिभिः[10] ।
३७] प्रत्या-हरद्भिर् मुदितैर् मङ्गलाऽर्थम् अभि-ष्टुतः[11] ।।४०।। [३७
अ-क्षता जात-रूपं च गावः कन्यास् तथा द्वि-जाः ।
३८] नरा मोदक-हस्ताश् च रामस्य[12] पुर-तः स्थिताः[12] ।।४१।। [३८
रामः सख्यं च सु-ग्रीवे प्र-भावं[13] च[13] हनू-मतः ।
३९] वानराणां च तत् कर्म व्या-चचक्षेऽथ मन्त्रिषु ।।[14]४२[14]।।[३९पू
श्रुत्वा च वि-स्मयं जग्मुर् अयोध्या-पुर-वासिनः ।[15] [४०
४०] वानराणां च तत् कर्म राक्षसानां च तद् बलम् ।।४३[17]।।[३९उ
एवं[18] सं-कथयन्न् एव[18] रामो वानर-संवृतः ।[19]
४१] हृष्ट-पुष्ट-जनाऽऽकीर्णाम्[20] अयोध्यां प्र-विवेश[21] ह[21] ।।४४।। [४१
पताक-मालाऽऽभरणां सिक्त-रथ्यां[22] स-तोरणाम्[22] ।
४२] पुष्पाऽऽचित-पथां[23] रम्यां बाल-वृद्ध-निरन्तराम् ।।४५।।[24][N

---

१. रा$_2$ फ म–नास्ति । २. रा$_2$ फ–राममंगलकांक्षिणः । म–रामदर्शन-कांक्षिणः ॥ ३. रा$_2$ फ–विराजमानं वपुषा रथेनादित्यवर्चसा । म–विराजमानं वपुषा रथेनातिरथः स्वयम् । भ–विराजमानं वपुषा ज्व० ॥ ४. भ–वर्जं—ते वंदयित्वा । रा$_2$ फ–तमर्चयित्वा ॥ ५. रा$_2$ फ म–रामं तु । ६. रा$_2$ फ म–वर्जं—०णौघैश्च । भ–०णैः सर्वैर् । ७. रा$_2$ फ म–वर्जं—जातिभिः स्वजनस्तथा । ८. रा$_2$ फ म–वर्जं—पूजितो रु० ॥ ९. रा$_2$ फ म–मधुराभाषितः पौरैस् । १०. रा$_2$ फ–शक्तिकपा० । म–०कवादिभिः । ११. म भ–वर्जं—अभिप्लुतैः ॥ १२. म–राघवं प्रत्युपस्थिताः । भ–०स्य पुरवासिनः ॥ १३. रा$_2$–०वेति विक्रांतं । फ–विक्रांतश्च । म–०वे प्रभावश्च । १४. प्र–नास्ति । १५. भ–नास्ति ॥ १६. प्र भ–नास्ति । १७. रा$_2$ फ म–नास्ति ॥ १८. रा$_2$ फ म–द्युतिमानेतदाख्याय । १९. भ–नास्ति । २०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–हर्षपु० । २१. रा$_2$ फ म–अन्वपद्यत । भ–पुनरागतः ॥ २२. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–तथा सिक्तांतरापथां । २३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–पुष्पचित्ररथां । २४. रा$_2$ फ म–अत आरभ्य ५२-शश्लोकं यावन्नास्ति ॥

हर्म्य-प्रासाद-विवृतां रत्नौघैश्[१] च सु-पूजिताम्[१] ।
४३] ऊचुस् तदा तु वै रामम् इदम् अभ्य्-अन्तराः स्त्रियः ॥४६॥ [N
स-भर्तॄणां[२] स-पुत्राणां तव दर्शन-काङ्क्षिणाम् ।
४४] दिष्ट्या हि[३] नः[३] कृतो देवैः प्र-सादः पुर-वासिनाम् ॥४७॥ [N
भृशं काकुत्स्थ कौसल्या त्वद्-अर्थं[४] परि-तप्यते[४] ।
४५] निर्-विशेषं तदा सर्वे पुरे पुर-निवासिनः ॥४८॥ [N
अ-सूर्यम् इव खं राम हृत-रत्न इवोदधिः ।
४६] त्वया पुरम् इदं हीनं वि-चन्द्रा शर्वरी[५] यथा ॥४९॥ [N
अद्याऽयोध्या महा-बाहो अयोध्या प्रति-भाति नः ।
४७] परेषां प्रार्थमानानां त्वयि सन्नि-हिते हिते ॥५०॥ [N
चतुर्दश समा ह्य्[६] एताः शतानीऽव चतुर्-दश[६] ।
४८] वर्षा हि नो व्यति-क्रान्तास् त्वयि राम वनं गते ॥५१॥ [N
ईदृश-मधुराः[७] स्निग्धाः पथि[८] शुश्राव[८] राघवः ।
४९] नर-नारी-प्रयुक्तास् तु वाचः प्रीति-निदर्शनाः ॥५२॥ [N
आ-विद्धान्य् उत्तरीयाणि नरैस्[९] तत्-पुर-वासिभिः[९] ।
नि-हत्य राघवः[१०] शत्रुम् अयोध्यां पुनर् आ-गतः ।
N] इत्य् एवं वदतां तत्र नराणां श्रूयते[११] ध्वनिः ॥५३॥ [N
इक्ष्वाकव्-अध्युषितां रम्यां प्र-विष्टो[१२] मनुजर्षभः[१३] ।[१४] [४३
५०] पितुर् भवनम् आ-साद्य प्र-विवेश[१५] महा-यशाः[१५] ।
N] कौसल्यां च सु-मित्रां च कैकेयीं चाऽभ्य्-अवादयत् ॥५४॥ [४५
मूर्ध्न्य्[१६] उपाऽऽघ्राय[१६] कौसल्या ताव् उभौ राम-लक्ष्मणौ ।
५१] अङ्के सीतां समा-रोप्य[१७] शोकम्[१८] आत्म-गतं जहौ[१८] ॥५५[१९]॥ [N

---

१. भ—नानास्तम्भसमुच्छ्रितां ॥ २. भ-वर्जं—सभ्रातॄणां । ३. भ-वर्जं—राजन् ॥ ४. भ—अभित० ॥ ५ भ—रजनी ॥ ६. भ-वर्जं—हीमाश्चतुर्दश शतानि च ॥ ७. ल$_1$ ल$_2$ ब भ—ईदृशा म० । ८. भ-वर्जं—विशुश्राव स ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—निर्गत्य पु० । १०. म-वर्जं—रावणं । ११. म—शुश्रुवे ॥ १२. भ—प्रयाते । १३. रा$_2$ फ—०जेश्वरः । भ—०जर्षभे । १४. भ—अतः परं सर्गसमाप्तिर्दृश्यते—इत्यार्षे लंकाकांडे अयोध्याप्रवेशः ॥ १५. रा$_2$ फ—०विश्य सुम० ॥ १६. रा$_2$ फ भ—मूर्धन्याघ्राय । १७. रा$_2$—समारोह्य । १८. रा$_2$ फ म—बाष्पमानन्दहर्षजम् । १९. अतः परमधिकः पाठः—रा$_2$ फ म—मुमोच परमप्रीता प्रहृष्टेनांतरात्मना ॥

अथाऽब्रवीत् तदा[1] रामो[1] भरतं धर्म-चारिणम्[2] ।
५२] अर्थ-संहितया[3] वाचा धर्म-हेत्वर्थ-युक्तया[4] ॥५६॥ [४४
यद् एतद् भवनं[5] श्रेष्ठं[5] साऽशोकवनिकं महत् ।
५३] वैडूर्यकनकाऽऽकीर्णं[6] सु-ग्रीवस् तत्र मोदताम् ॥५७॥ [४६
यश् चैतत् सु-महद् दिव्यम् उप-स्थानं गतं महत् ।[7]
५४] वि-भीषणाय तत् सौम्य दीयतां सुधया सितम् ॥५८[8]॥ [N
५५पू] तथैव वानरेन्द्राणां यथा-क्रम-विहारिणाम् ।
N] भृङ्गार-वाटिकां दिव्यां फल-पुष्पैश् च शोभिताम् ॥[9]५९[10]॥[N
N] अङ्गदप्रमुखाऽऽदीनां शुभान्य् आ-यतनानि च ।[9]
५५उ] दीयतां क्षिप्रम् आ-वासो यथोचितम् अरिं-दम ॥६०[11]॥[N
तस्य तद् वचनं श्रुत्वा भरतः सत्य-विक्रमः ।
५६] पाणौ गृहीत्वा सु-ग्रीवं प्र-विवेश[12] महद् गृहम्[12] । [४७
वि-भीषणं तथा वीरो वानरान् अपरांस् तथा ॥[13]६१॥[N
५७] ततस् तैल-प्रदीपांश् च पर्यङ्काऽऽस्तरणानि च ।
गृहीत्वा प्राऽविशंस्[14] तत्र स्त्रियो भरत-नोदिताः[14] ॥६२॥ [४८
५८] तम्[15] उवाच महा-तेजा[15] सु-ग्रीवं राघवाऽनुजः[16] ।
अभि-षेकाय रामस्य दूतान् आ-ज्ञापय स्वयम् ।[17] [४९
५९] प्र-भाते पुण्य-योगेन राघवः श्वोऽभि-षिच्यताम्[18] ॥[19]६३॥[N
ततः[20] स वानर-श्रेष्ठः[20] सौवर्णांश् चतुरो घटान् ।
६०] चतुर्णां कपि-मुख्यानां ददौ रत्न-विभूषितान् ॥६४॥[५०

---

१. रा१ ब अ प्र रा२ फ भ–राजपुत्रं । ल१ ल२–राजपुत्रो । २. रा२ फ म–धर्मिणां वरं । ३. रा२ फ म–अर्थोपहि० । ४. रा२ फ–वचनमिदमर्थवत् । म–वचनं चेदमुत्तमं ॥ ५. रा१ ल१ ल२ ब अ प्र–रुक्मश्रेष्ठं मे । रा२ फ म–०नं मुख्यं । ६. फ म–मुक्तावैडूर्यसंकीर्णं ॥ ७. म–अत आरभ्य ६०-तमश्लोकं यावन्नास्ति । ८. रा२ फ–नैर्ऋतेंद्राय परमं जाम्बवत्प्रमुखाः कचित् । हरिवृंदाय सर्वेभ्यो वानरेभ्यः पृथक् पृथक् ॥ ९. भ–नास्ति । १०. रा२ फ–शयनासनपानादियुक्तानि भवनानि च । वृक्षोदकस्त्रियोपेता व्यावर्जितवसूनि च ॥ ११. रा२ फ–दिव्यजनहस्ताश्च दासा दास्यश्च संगताः । गायका नर्तकाश्चैव कुर्वंते तेषु संमदम् ॥ १२. रा२ फ म–प्रावेशयत तद् । १३. रा२ फ म–नास्ति ॥ १४. रा२ फ म–वर्जं—०शच्छीघ्रं शत्रुघ्नं (? घ्नः) संप्रचोदितः ॥ १५. रा२ फ म–तत्रोपविष्टं प्रोवाच । १६. रा१–रावणानुगः । १७. रा१ ल१ ल२ ब अ प्र-अभिषेचनार्थं देवस्य द्रुतमाज्ञापय प्रभो । १८. भ–०षेक्ष्यते । १९. रा२ फ म–नास्ति ॥ २०. रा२ फ म–तच्छ्रुत्वा वानरेंद्रस्तु ॥

यथा प्रत्यूष-समये चतुर्णां सागराऽम्भसाम् ।
६१] पूर्णैर् घटैर् अनु-उदिते[1] शीघ्रम्[2] आ-गम्यताम्[3] इति[3] ॥६५॥ [५१
एवम् उक्ता महाऽऽत्मानो वानराः पर्वतोपमाः[4] ।
६२] उत्-पेतुर् गगनं शीघ्रं गरुडा[5] इव वेगिनः[5] ॥६६॥ [५२
जाम्ब-वांश् च सु-षेणश् च वेग-दर्शी च वानरः ।
६३] ऋषभश् च महा-बाहुश् चत्वारोऽपि वनौकसः ॥[6]६७॥ [५३
नदी-पतिभ्यश्[7] चतुर्भ्यो[7] जलं कुम्भैर् उपाऽहरन्[8] । [५४
६४] मैन्द-प्रभृतयस् तत्र वानरेन्द्र-प्रचोदिताः ॥[9]६८॥ [N
ऋषभो दक्षिणात् तूर्णं सम्-उद्राज् जलम् आऽहरत्[10] ।
६५] रक्त-चन्दन-शाखाभिः सं-वृते[11] काञ्चने[12] घटे[12] ॥६९॥ [५६
जाम्ब-वान् पश्चिमात् तोयम् आ-जहार स सागरात् ।[13]
६६] रत्न-कुम्भेन[14] महताऽगुरु-पल्लव-शोभिना[15] ॥७०॥ [५७
वेग-दर्शी[16] व्यति-क्रान्त[16] उत्-तराद् उदधेर् जलम् ।[17] [५८पू
६७] शोभितं फुल्ल-शाखाभिर् अ-चिराद् आनयच् छिवम् ॥[18]७१॥ [N
सु-षेणोऽङ्गद-केयूरैर् मण्डिते[19] कलशे तथा ।[18]
६८] पानीयम् आऽनयत् तत्र सम्-उद्राद् इतरात् त्वरन् ॥[20]७२॥ [५५
एवम् आभिषेचनिकं शत्रु-घ्नः सचिवैर् वृतः ।[21]
६९] पुरो-हिताय श्रेष्ठाय गुरवे स न्य्-अवेदयत् ॥[22]७३॥ [५९उ
ततः प्र-भाते वि-मले मुहूर्तेऽभि-जिति प्र-भुः ।[23] [N
७०] वसिष्ठः पुष्य-योगेन ब्राह्मणैः परि-वारितः ॥[24]७४॥

१. रा$_1$ ल$_1$ प्र म—०दितैः । २. म—तूर्णं । ३. रा$_2$ फ म—आगंतुमर्हथ ॥ ४. रा$_2$ फ म—नगसन्निभाः । ५. भ—पवना इव वेगिताः ॥ ६. रा$_2$ फ म—नास्ति ॥ ७. रा$_2$ फ म—वर्जं—नदीशतानां पंचानां । ८. रा$_2$ फ म—उपस्थिताः । ९. रा$_2$ फ म—नास्ति ॥ १०. रा$_2$ फ म—आनयत् । ११. म भ—०तैः । १२. ल$_1$ म—०नैर्घटैः ॥ १३. रा$_2$ फ—नलश्च पश्चिमात्तूर्णं समुद्राज्जलमानयत् । म—नलस्तु पश्चिमात्तूर्णमाज० । १४. रा$_1$ रा$_2$ फ म भ—रक्तकुं० । १५. रा$_2$ फ म—०ता शिवं मारुतविक्रमः ॥ १६. र$_1$ ल$_1$ ल$_2$ अ प्र—०दर्श्यप्रतिक्रान्ताद् । १७. रा$_2$ फ म—हनुमानथ पूर्वात्तु समुद्राज्जलमानयत् । १८. रा$_2$ फ म—नास्ति ॥ १९. ल$_1$ ल$_2$ ब प्र—भूषिते । २०. रा$_2$—नास्ति । फ म—समुद्रादुत्तरात्तूर्णमंगदो जलमानयत् ॥ २१. रा$_2$—राघवस्याभिषेकार्थमृत्विग्भ्यश्च न्यवेदयत् । फ म—अभिषेकं तु रामस्य शत्रु० । २२. रा$_2$—नास्ति ॥ २३. रा$_2$ फ म—नास्ति । २४. रा$_2$ फ म—ततः पुरोहितो वृद्धो वसिष्ठो ब्राह्मणैः सह ॥

रामं रत्न-मये पीठे प्राङ्-मुखं[1] सह सीतया[1] । [६०
७१] उप-वेश्य महाऽऽत्मानं महर्षि-विदितेन[2] च[2] ।।[3]७५।।[N
शास्त्र-दृष्टेन च तदा विधिना विधि-वद् वि-भुः[4] ।[3]
७२] राघवस्याऽभि-षेकाऽर्थं[6] मन्त्रिभ्यः[5] स[5] न्य्-अवेदयत् ।।[6]७६।।
वसिष्ठो वाम-देवश् च जाबालिः कश्यपस्[7] तथा[7] ।
७३] कात्यायनो भरद्वाजो वि-जयश् च महा-यशाः ।।[8]७७।।[६१
७४उ] अभ्य्-अषिञ्चन् नर-वरं प्र-सन्नेन सु-गन्धिना ।
सलिलेन सहस्राऽक्षं वसवो वासवं यथा ।।७८[8]।।[६२
७५] ऋत्विग्भिर् ब्राह्मणैः पूर्वं कन्याभिर् मन्त्रिभिस् तथा ।[9]
बल-मुखैः प्र-हृष्टैश् च अभि-षिक्तः[10] स राघवः[10] ।।७९।। [६३
७६] सर्वौषधि-रसैश् चैव दैवतैर्[11] नभसि[11] स्थितैः ।
N] चतुर्भिर् लोक-पालैश् च समेतैर् भूत-भावनैः ।[12] [६४
अभि-षिक्तो रराजाऽथ श्रिया परमया युतः ।।[13]८०।।[N
७७] छत्रं तस्य[14] तु जग्राह[14] शत्रु-घ्नः पाण्डुरं शुभम्[15] ।
शुक्लं[16] च वाल-व्यजनं सु-ग्रीवो वानरेश्वरः ।।८१।।
७८] अपरं चन्द्र-सङ्काशं वाल-व्यजनम् उत्-तमम् ।
हृष्टो रामस्य जग्राह राक्षसेन्द्रो वि-भीषणः ।।८२।। [६८
७९] मालां ज्वलन्तीं वपुषा काञ्चनीं शातपुष्कराम् ।[17]
राघवाय ददौ वायुर् वासवेन प्र-चोदितः ।।८३।। [६९

---

१. रा$_2$ फ म–ससीतमुपवेशयत् । २. भ–०विहितेन तु । ३. रा$_2$ फ म–शास्त्रदृष्टेन विधिना महर्षिविदितेन च ॥ ४. ल$_1$ ल$_2$ ब–प्रभुः । ५. भ–सद्भिरेभ्यो । ६. रा$_2$ फ म–नास्ति । अतः परमधिकः पाठः—भ–अभिषेकाय रामस्य शतक्रतुपुरोगमाः । आगच्छन्देवताः सर्वा गगनाद्रथसंस्थिताः ॥ घृताची-प्रमुखास्तत्र आगच्छन्नप्सरोगणाः । विश्वावसुमुखाः सर्वे गन्धर्वा यक्ष-किन्नराः ॥ दिलीपप्रमुखास्तस्य पितरः समुपागताः । ब्रह्मा शम्भुश्च भगवान् बृहस्पतिपुरोगमाः ॥ विश्वेदेवाः समरुतो रामाभ्युदयलालसाः ॥ ७. रा$_2$ फ म–अथ कश्यपः । ८. रा$_2$ म भ–वर्जं—नास्ति ॥ ९. भ–नास्ति । १०. रा$_2$ फ म–सोऽभिक्तः सनैगमैः । भ–०क्तः शनैः शनैः ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–०तैश् च भुवि । १२. भ–नास्ति । १३. रा$_2$ फ म–नास्ति ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र–जग्राह तस्यैव । १५. रा$_2$ फ म–महत् । १६. रा$_2$ फ म–श्वेतं ॥ १७. रा$_2$ फ म–विभ्राजमानो वपुषा मालां कांचनपुष्पिताम् ॥

८०] यक्षाऽध्यक्षः[1] समा-गम्य मणि-रत्नं महा-द्युतिम्[2] ।[3]
मुक्ता-हारं तु[4] रामाय[4] ददौ शक्र-प्रचोदितः[5] ॥८४॥ [७०
८१] ऋषि-सङ्घैस् तदाऽऽकाशे देवैश् च स-मरुद्गणैः ।[6] [N
स्तूयमानस्य रामस्य शुश्रुवे मधुरो ध्वनिः[7] । [N
८२] प्र-गीतं[8] चाऽपि गन्धर्वैः प्र-नृत्तं[8] चाऽप्सरो-गणैः[9] ॥८५[10]॥
अभि-षेके प्र-वृत्ते[11] तु[11] तदा रामस्य धी-मतः । [७१
८३] मही सस्य-वती चैव[12] रस-वन्ति फलानि च[12] ।
गन्ध-वन्ति च माल्यानि तदा रामाऽभि-षेचने ॥८६॥ [७२
८४] ददौ[13] सहस्रम्[13] अश्वानां[14] धेनूनां च शतं शतम्[14] ।
शतं शत-गुणं चैव वृषाणां ब्राह्मणेषु च ॥[15]८७॥ [७३
८५] त्रिंशत् कोटी[16] (?टीर्)हिरण्यस्य ब्राह्मणेभ्यो[16] ददौ पुनः[17] ।
यानाऽऽभरणवस्त्राणि शयनान्य्[18] आ-सनानि च[18] । [७४
८६] ब्राह्मणेभ्यो ददौ हृष्टो ग्रामांश् च बहु-शो वरान्[19] ॥[20]८८॥ [N
अर्क-रश्मि-प्रतीकाशां काञ्चनीं मणि-भूषिताम् ।
८७] सु-ग्रीवाय स्रजं दिव्यां प्राऽयच्छत्[21] स महा-रथः[21] ॥८९॥ [७५
वैडूर्य-मणि-चित्रे च वज्र-रत्न-परिष्कृते ।
८८] प्राऽयच्छद् वालि-पुत्राय सोऽङ्ग-दायाऽङ्ग-दे शुभे ॥९०॥ [७६
तथैव राक्षसेन्द्राय दिव्यान्य् आ-भरणानि च ।
N] ददौ प्रेम-युतान्य् अष्टौ तदा प्रीति-कराणि च ॥९१[23]॥ [N

---

१. भ-धनाध्यक्षः । २. भ-समायुतम् । ३. रा$_{2}$ फ म-रत्नाध्यक्षः समुद्रस्तु मणिरत्नं पुरस्कृतं । ४. रा$_{2}$-स रा० । फ म-समादाय । ५. रा$_{2}$ म-०प्रणोदितः ॥ ६. म-ऋषिसंघैस्तथा सिद्धैर्दैवतैः स० । भ-ऋषयस्तुष्टुवुश्चैनं वर्धयंतो जयाशिषा । ७. भ-स्वनः । ८. म-प्रगीताश्चापि गंधर्वाः प्रनृत्ताश् । भ-प्रजगुर्देवगंधर्वा ननृतुश् । ९. म भ-०गणाः । १०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-नास्ति ॥ ११. रा$_{2}$ फ म-तदर्हस्य । १२. रा$_{2}$ फ म-चापि फलवंतश्च पादपाः ॥ १३. रा$_{2}$ फ म-सहस्रशतं । १४. रा$_{2}$ फ-०नां च शतायुतं । म-इष्टानां धेनूनां च गवां शतम् । भ-धेनूनां सहस्रगुणितं तथा । १५. रा$_{2}$ फ म-ददौ दशवृषं पूर्णं द्विजेभ्यो मनुजर्षभः ॥ १६. रा$_{1}$-०टी सुवर्णस्य ब्राह्म० । रा$_{2}$ फ म-कोटीनां विंशतिं चैव हिरणस्य । भ-कोटिं हि । १७. रा$_{2}$ फ म-तदा । १८. रा$_{2}$ फ म-महार्हाणि च राघवः । १९. भ-बहून् । २०. रा$_{2}$ फ म-नास्ति ॥ २१. रा$_{2}$ फ म-०च्छत रघूत्तमः । भ-०च्छत्स महायशाः ॥ २२. रा$_{2}$ फ भ-नास्ति । म-पुष्पैर्मणिभिराबद्धं कांचनं हेमनिर्मितम् । विभीषणाय च ददौ रामः केयूरमुत्तमम् ॥

मणि-प्रवर-जुष्टं[1] च मुक्ता-हारम्[2] अनु-उत्तमम्[3] ।
८९] ददौ रामोऽथ वैदेह्यै चन्द्र-रश्मि-सम-प्रभम् ॥[3]९२[4]॥[७७
हरीणां[5] चाऽपि मुख्याय[6] शुभान्य् आ-भरणानि च ।
९०] अवेक्ष्य (?क्ष) माणो वैदेहीं प्र-ददौ वायु-सूनवे ॥[7]९३[8]॥[७८
अव-मुच्याऽऽत्मनः कण्ठाद् धारं जनक-नन्दिनी ।
९१] वानरान्[9] वीऽक्ष्य तान्[9] (?०क्षते) सर्वान् भर्तारं च मुहुर्[10] मुहुः[10] ९४[७९
ताम् इङ्गित-ज्ञः सम्प्रेक्ष्य बभाषे रघु-नन्दनः[11] ।
९२] प्र-यच्छ[12] सु-भगे हारं यस्य तुष्टाऽसि मैथिली[13] ॥९५॥
पौरुषं वि-क्रमो बुद्धिर् यस्मिन्न् एतानि सर्व-दा[14] । [८०
९३] सा[15] ददौ[15] वायु-पुत्राय तं हारम् अ-सितेक्षणा ॥९६॥
हनू-मांस् तेन हारेण शुशुभे वानरर्षभः[16] ।
९४] चण्डांऽशूऽत्कट-विद्धेन[17] श्वेताऽभ्रेण यथाऽचलः ॥९७॥ [८१
ततो द्विविद्-मैन्दाभ्यां नीलाय पनसाय च ।
९५] सर्वान् काम-गुणान् हारान् प्र-ददौ वसुधाऽधिपः ॥[18]९८॥[८२
सर्व-वानर-वृन्देभ्यो ये चाऽन्ये[19] वानरेश्वराः[19] ।
९६] स[20] तेभ्यः[20] प्र-ददौ रामो भूषणानि यथाऽर्ह-तः[21] ॥९९[22]॥[८३
वि-भीषणोऽथ सु-ग्रीवो हनू-माञ् जाम्ब-वांस् तथा ।[23]
N] सर्वे वानर-मुख्याश् च रामेणाऽक्लिष्ट-कर्मणा ॥१००॥[८४
एवं ते पूजिताः सर्वे कामैर्[24] अर्थैश् च[24] पुष्कलैः । [८५पू
९७] उषित्वा[25] वानरा मासान् राक्षसर्क्षास् तथैव च ॥१०१॥[N

---

१. म—मणिरत्नजुष्टं । २. रा$_2$ फ—०हारभूषितं । ३. रा$_1$ ल$_1$ ल$_2$ ब—विभीषणसहायानां वासांस्याभरणाणि च । ४. अ प्र—नास्ति ॥ ५. ल$_1$ ल$_2$—हारीणां । ब—हराणां । भ—वासांसि । ६. म—मुख्यानां । ७. रा$_1$—वर्जं—अवेक्ष्य मैथिली चैव हनूमंतं प्लवंगमं । ८. रा$_1$—नास्ति ॥ ९. रा$_2$ फ म—वर्जं—अवेक्ष्य वानरान् । भ—ऐक्षिष्ट वा० । १०. रा$_2$ फ म—पुनः पुनः ॥ ११. रा$_2$ फ म—जनकात्मजां । भ—राघवः प्रियां । १२. रा$_2$ फ म—ददस्व । १३. रा$_2$ फ म—भामिनि ॥ १४. रा$_2$ फ म—नित्यशः । १५. रा$_2$ फ म—प्रददौ ॥ १६. रा$_2$ फ—०रोत्तमः । १७. भ—चंद्रांशुराशिगौरेण ॥ १८. म—नास्ति । भ—सर्वकामगुणान्भक्तान्प्र० ॥ १९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र—चान्ये वानरोत्तमाः । म—चन्द्ररश्मिसमप्रभं । २०. फ म—सर्वेभ्यः । २१. फ—यथादितः । २२. अतः परमधिकः पाठः—भ—वर्जं—वासोभिर्भूषणैश्चैव यथार्हमतिपुष्कलैः ॥ २३. फ म—अत आरभ्य १११-तमश्लोकस्य पूर्वार्धं यावन्नास्ति ॥ २४. रा$_1$ ल$_1$ अ प्र—कामरत्नैश् । ल$_2$ ब—कामै रत्नैश् । २५. ल$_2$—उषिता ॥

आ-सनैः शयनैश् चैव वि-मानैश् चाऽपि पूजिताः ।[1]

९८] वियोगाऽऽकुलितैः[2] सर्वे[3] चेतोभिः सम्प्र-तस्थिरे ॥१०२॥[N

प्र-स्थितं तं हनू-मन्तम् उवाच रघु-नन्दनः ।

९९] हनू-मंस् त्वं मया[4] नाऽति-सत्कृतो[4] हरि-पुङ्गव ॥१०३॥[N

तस्माद् वरं वृणीष्वेह[5] महत् कर्म कृतं त्वया ।

१००] एवम् उक्तोऽब्रवीद् रामं हर्षबाष्पाऽऽकुलेक्षणः[6] ॥१०४॥[N

यावद् राम-कथा[7] देव[7] पृथिव्यां प्र-चरेद् इह ।

१०१] तावद् देहे मम प्राणास् तिष्ठन्तु वर-दोऽसि चेत् ॥१०५॥[N

ततस् तु राघवोऽवोचत्[8] परि-ष्वज्याऽञ्जना-सुतम् ।

१०२] एवं भवतु भद्रं ते यावद् भूमिर् धरिष्यति ॥१०६॥[N

पर्वताश् च सम्-उद्राश् च तावद् आयुर् अवाऽऽप्नुहि ।

१०३] बल-वान् अ-जरश् चैव तरुणो न जराऽन्वितः ॥१०७॥[N

मैथिल्य् अपि तदा चैनम् उवाच वरम् उत्-तमम् ।

१०४] उप-स्थास्यन्ति भोगास् त्वां स्वयम् एव हि मारुते ॥१०८॥[N

देव-दानव-गन्धर्वास् तथैवाऽप्सरसां गणाः ।

१०५] यत्र तिष्ठसि तत्र त्वां सेविष्यन्ते यथा-सुखम्[9] ॥१०९॥[N

फलान्य् अमृत-कल्पानि तोयानि वि-मलानि च ।

१०६] उत्-पत्स्यन्ते यथा-कामं स्मरणेन तवाऽन्-अघ ॥११०॥[N

एवम् अस्त्व् इति चैवोक्त्वा प्र-ययौऽसाव् अञ्जना-सुतः[10] । [N

१०७] ततो यथाऽऽगतं सर्वे यथाऽऽवासं ययुस् तदा ।१११।[८५उ

१०८पू] राम-चन्द्रस्य[11] रम्याश्[11] च कथयन्तः कथाः शुभाः । [१०१पू

N] तुष्टाः[12] सर्वे महाऽऽत्मानस्[13] ततस्[13] ते वानरर्षभाः ॥[14]११२॥

वि-सृष्टाः पार्थिवेन्द्रेण किष्किन्धां पुनर् आ-गताः । [८६

N] वि-भीषणस् तु रामेण प्रेषितः स्वां पुरीं ययौ ॥[15]११३[15]॥[८८उ

---

१. रा$_{२}$ भ—स्वस्त्राः सुशयनाश्चैव मानार्थैश्चाभिपूजिताः । २. रा$_{२}$—०लिताः । ३. रा$_{१}$ ल$_{१}$ प्र भ—सर्वैश् ॥ ४. रा$_{२}$ भ—वर्जं—न जानासि प्रभावं ॥ ५. रा$_{२}$ भ—०णीष्वाद्य । ६. अ प्र रा$_{२}$—वर्जं—हर्षात्तं व्याकु० ॥ ७. रा$_{२}$ भ—राम कथा तेऽस्यां ॥ ८. रा$_{२}$ भ—वर्जं—०वश्चैवं ॥ ९. भ—यथामरं ॥ १०. रा$_{२}$—०नीसुतः । भ—०यौ साश्रुलोचनः ॥ ११. रा$_{२}$ भ—रामानुरागान् रम्यांश् । १२. म—वर्जं—हृष्टाः । १३. म—वर्जं—यथात्मा वै तथा । १४. भ—नास्ति ॥ १५. फ म—नास्ति ॥

ततस् तेषु प्र-यातेषु वानरेषु[१] रघूऽत्तमः[१] । [N
१०८उ] नित्याऽनुरक्तं[२] धर्म-ज्ञं[३] लक्ष्मणं वाक्यम् अब्रवीत् ॥११४॥[९०उ
आ-तिष्ठ धर्म-ज्ञ मया सहेमां[४]
गां[५] पूर्व-राजाऽध्युषितां बलेन[५] ।
तुल्यां पुरस्-तात् पितृभिर् वृतां[६] च[६]
१०९] त्वं यौवराज्ये धुरम् उद्-वहस्व ॥११५॥[९१
सर्वाऽऽत्मना पर्यनु-नीयमानो
यदा न सौमित्रिर् इयाय[७] योगम् ।
नि-युज्यमानो भुवि[८] यौवराज्ये
११०] तदाऽभ्य्-अषिञ्चद्[९] भरतं महाऽऽत्मा[९] ॥११६॥[९२

इत्यार्षे रामायणे युद्ध-काण्डे[१०] रामाऽभिषेको नाम
नवोत्तरशततमः सर्गः ॥ १०९ ॥

---

## [वं–११३]= [ दशोत्तरशततमः सर्गः ] =[दा–१३१]

अहन्य् अहनि रामस् तु कार्याणि स्वयम् एव हि[११] ।[१२]
१] प्रत्यवैक्षत[१३] धर्माऽऽत्मा[१३] सह भ्रातृभिर् अ-च्युतः ।
N] वेद-वेदाऽङ्ग-विद्भिश् च सम्प्र-धार्य[१४] बलाऽबलम् ॥[१५]१॥[N
धर्मेण रक्षतस् तस्य हृष्ट-पुष्ट-जनाऽऽकुला ।
२] बभूव पृथिवी सर्वा धनधान्यसमृद्धिनी ॥२[१५]॥[N
अकाल-मृत्यु-भीर्[१६] नैव[१६] न च व्याल-कृतं भयम् ।
N] न च[१७] व्याधि-भयं तत्र[१७] रामे राज्यं प्र-शासति ॥३ ॥[९७

१. फ म–वर्जं—०रेश्वरिसूदनः । २. रा१ ल१ ल२ ब अ प्र–नित्यं युक्तं च । ३. फ म–मेधावी ॥ ४. रा१ ल१ ल२ ब अ प्र–समेतां । ५. रा२ भ–वर्जं—आसन्न-पूर्वां सुचितां कुलेन । ६. म–प्रवृत्तां ॥ ७. ल१ ल२ ब अ प्र–अवाप । फ म–उपैति । ८. फ म–नृप० । ९. ल१ ल२ ब अ प्र–ततोभ्य० । फ–ततस्तु पश्चाद्भरतोऽभिषिक्तः । भ–ततश्च पश्चाद्भरतोऽभिषिक्तः ॥ १०. रा१ ब प्र रा२ फ भ–लंकाकांडे ॥ ११. ल१ ल२ ब–वा । अ–तु । प्र–च । १२. फ म–नास्ति । १३. फ–ईजे यज्ञैर्बहुविधैः । म–ईजे बहुविधैर्यागैः । १४. ल२ ब प्र–सम्प्रदाय ॥ १५. फ म–नास्ति ॥ १६. रा१ भ–प्रमदा विधवा नासीत् । फ म–नापद्भयं न विधवा । १७. रा२–व्याधिभ्यो भयं किंचिद् ॥

निर्-दस्युर् अभवल् लोको नाऽनु-अर्थं[१] कश्-चिद् आऽविशत्[१] ।
३] न च[२] स्म[२] वृद्धा बालानां प्रेत-कार्याणि[३] कुर्वते ॥[४]४ ॥[९८
सर्वं[५] प्र-मुदितं चाऽऽसीत्[५] सर्वे धर्म-पराऽयणाः[६] ।
४] दृष्ट्वा धर्म-परं रामं नैवाऽहिंसन् परस्परम् ॥[७]५ ॥[९९
आसीद् वर्षसहस्राऽऽयुस् तथा पुत्रसहस्र-वान् ।
५] निर्-आमयो वि-शोकश् च रामे राज्यं प्र-शासति ॥६[८] ॥[१००
६पू] नित्य-पुष्पा नित्य-फलास् तरवस्[९] तत्र निर्-व्रणाः[९] । [१०२पू
N] पुष्प-वन्तस् तथा गुल्मा रामे राज्यं प्र-शासति ॥[१०]७ ॥[N
N] वीर्य-वत्यस्[११] तथौषध्यः सर्वा[१२] रस-समन्विताः[१२] ।[१३] [N
६उ] काले[१४] वर्षति[१४] पर्जन्यः सुख-स्पर्शश् च मारुतः ॥८ ॥[१०२उ
स्व-धर्मेषु[१५] प्र-वृत्ताश् च[१६] वर्णाः स्वैर् एव कर्मभिः ।[१७] [१०३उ
७] आत्म-धर्म-परा लोका रामे राज्यं प्र-शासति ।[१८]
८पू] सर्वे[१९] लक्षण-सम्पन्नाः[१९] सर्वे[२०] धर्म-पराऽयणाः[२०] ॥९ ॥[१०४
N] दश-वर्ष-सहस्राणि दश-वर्ष-शतानि च ।[२१]
८उ] वीत-शोक-भय-क्रोधो[२२] रामो राज्यम् अकारयत्[२३] ॥१०॥[१०५

---

१. ल१ ल२ ब अ प्र—नार्थकः क० । रा१ रा२ भ—०र्थं कश्चिदस्पृशत् । फ म—नानर्थः कंचनास्पृशत् । २. रा१ रा२ भ—चापि । ३. फ—०कार्यं स्म । ४. ल२—नास्ति ॥ ५. ल१ ल२ ब अ प्र—सर्वे प्रमुदिता आसन् । फ म—सर्वं मुदितमेवासीत् । ६. रा१ रा२ फ म भ—सर्वो धर्मपरो जनः । ७. रा१ भ—वर्जं—धर्ममेवानुवर्तंत स्वाचारेण परंतपः । फ म—राममेवानुपश्यंतो न हिंसंति परस्परं ॥ ८. फ म—आसन् वर्षसहस्राणि नराः पुत्रसहस्रिणः । निरामयं वीतशोकं रामो राज्यमकारयत् । ल१ ल२ ब अ प्र—नास्ति ॥ ९. फ म—०वश्चाभवंस्तथा । म—०वश्चाभवंस्तदा । १०. ल१ ल२ ब अ प्र फ म—नास्ति ॥ ११. फ म—फलवत्यस् । १२. फ—सर्वास्ता वै रसान्विताः । म—सर्वाश्च सुरसान्विताः । १३. ल१ ल२ ब अ प्र—नास्ति । १४. ल१ ल२ ब अ प्र—कालवर्षी च ॥ १५. ल१—०मैंऽथ । ल२ ब अ प्र—०र्मे च । १६. ल१ ल२ ब अ प्र—तु । १७. फ—स्वकर्मसु च वर्तंते तुष्टाः स्वैः स्वैः स्वकर्मभिः । म—स्वकर्मस्ववर्तंत तुष्टाः स्वैः स्वैश्च कर्मभिः । १८. रा१ भ—आसन्प्रजा धर्मपरा रा० । फ म—प्रजा धर्मपराः सर्वा नावृत्तो वर्त्तते जनः । १९. रा१ म भ—सर्वलक्षणसम्पन्नोः । २०. रा१ भ—सर्वधर्मपरायणः । फ म—धर्मकर्मरतः सदा ॥ २१. अतः परमधिकः पाठः—ल१ ल२ ब अ प्र—निरामया ह्यशोकाश्च रामे राज्यं प्रशासति । अरयाश्च विनताश्च महासत्त्वा जितेंद्रियाः ॥ अभयाश्च तथा सत्त्वा बलवीर्यसमन्विताः । २२. रा१ रा२ भ—एवं गुणसमायुक्तो । ल१ ल२ ब—०कभयक्रोधो । म—वीतरागभ० । २३. म—चकार ह ॥

स राज्यम् अ-खिलं प्राऽऽप्य निहताऽरिर् महा-यशाः । [८९पू
९] ईजे[१] बहु-विधैर्[२] यज्ञैर् महद्भिश्[३] चाऽऽप्त-दक्षिणैः[३] ॥११॥ [९६उ
दशाऽश्व-मेधान् आ-जह्रे[४] जारूथ्यान्[४] भूरि-दक्षिणान्[५] । [९४उ
१०] पुण्डरीकाऽश्वमेधाभ्यां वाजपेयेन[६] चाऽसकृत्[६] ।
N] अन्यैश्[७] च वि-विधैर्[८] यज्ञैर् अयजत् पार्थिवर्षभः[८] ॥[९]१२॥[९३
आ-जानु-बाहुः सु-मुखो महा-स्कन्धः[१०] प्रताप-वान्[१०] ।
११] लक्ष्मणाऽनुचरो रामः पृथिवीम् अन्व्-अपालयत् ॥[११]१३॥[९५
धन्यं[१२] यशस्यम् आयुष्यं राज्ञां[१२] च विजयाऽऽवहम् ।[१३]
१२] आदि-काव्यं महत् त्व् एतत् पुरा वाल्मीकिना कृतम् ।[१४]१४॥[१०६पू
रामस्य चरितं रम्यं[१५] देव-देवस्य भास्-वतः[१६] ।[१७] [N
१३] शृणुयाद् यः सदा लोके स वै मुच्येत किल्बिषात् ।[१८]१५[१९]॥[१०६उ
पुत्र-कामाश्[२०] च पुत्रान् वै[२०] धन-कामा[२१] धनानि च ।
१४] लभन्ते[२२] मनु-जा[२२] लोके श्रुत्वा रामस्य चेष्टितम् ।[२३]१६॥[१०७
लभते पति-कामा हि पतिं कन्या मनो-रमम् ।
१५] समा-गमं प्रोषितै(?ता)श्[२४] च[२४] लभन्ते[२५] बन्धुभिः[२६] प्रियैः[२६] ॥१७॥[N
यथा[२७] रामेण[२७] कौसल्या सु-मित्रा लक्ष्मणेन च । [१०८उ
N] भरतेन च कैकेयी जीवत्-पुत्रास्[२८] तथा स्त्रियः[२८] ।१८॥[१०९पू

---

१. फ म–रामो । २. ल१ ल२ ब अ प्र–च विविधैर् । ३. फ म–अयजद्भूरिद० ॥ ४. ल१ ल२ ब अ प्र–राजेंद्र आजह्रे । रा२–राजेंद्रश्चकार । ५. रा१ म–०क्षिणः । फ–बहुद० । म–स निरंगलान् । ६. ल१ ल२ ब अ प्र–०न सत्कृतां । फ म–तथा बहुसुवर्णकैः । ७. रा२–अन्यैर्बहुविधैर् । ८. फ–०वात्मजः । ९. रा१ भ–नास्ति । अतः परमधिकः पाठः—फ म–उषित्वा स महाबाहुश्चतुर्दश समा वने ॥ १०. फ म–सिंहस्कंधोऽरिमर्दनः । ११. ल२–नास्ति । अतः परमधिकः पाठः—फ म–ततो रामः स धर्मात्मा प्राप्य राज्यमनुत्तमम् ॥ १२. फ–इदं पुराणमायुष्यं राज्यं । १३. ल१ ल२ म–नास्ति । १४. ल१–कथितं प्रयतेनैव वाल्मीकेन महात्मना । अ–०व्यं पुरा चैतन्महद्वा० । फ–०व्यमिदं वार्षं पुरा वा० । म–०व्यमिदं त्वार्षं पुरा वा० ॥ १५. ल२ ब प्र–पश्य । १६. ल२ ब अ प्र–शाश्वतम् । १७. ल१–एवमेतत्पुरावृत्तमाख्यातं भद्रमस्तु नः । फ–नास्ति । १८. ल१ फ–यः शृणोति सतां मध्ये नरः पापात्प्रमुच्यते । १९. म–नास्ति ॥ २०. ल२ ब अ प्र रा२–०मश्च पु० । फ म–पुत्रार्थी लभते पुत्रान् । २१. रा१ भ–वर्जं—०कामो । २२. ल१ ब–लभेत मनुजो । ल२ अ प्र–लभते मनुजो । २३. फ म–नास्ति ॥ २४. फ म–प्रवासेभ्यो । २५. म–वर्जं—लभते । २६. फ–चापि बांधवे । म–बन्धुबान्धवैः ॥ २७. फ–राघवेणैव । म–राघवेण च । २८. फ म–समेता प्रियवादिना ॥

समा-गता महा-भागा सीता चाऽपि यशस्विनी[1] ।[2]
N] कथां[3] रामायणं श्रुत्वा प्राऽऽप्नोति प्रिय-सङ्गमम् ॥१९॥ [N
शृण्वतः पठतश् चैव[4] सर्वं पापं प्र-णश्यति ।[5] [N
महीं वि-जयते राजा शत्रुश्[6] चाऽस्य वि-नश्यति[6] । [१०८पू
N] श्रुत्वा काव्यम्[7] इदं[7] पुण्यं दीर्घम् आयुश् च विन्दति ।२०।[११०पू
श्रुत्वा रामायणं यो वै भूमि-दानं समा-चरेत् ।
N] स भवेत् पृथिवी-पालश् चक्र-वर्ती पुनः पुनः ॥२१[8]॥[N
गो-भूमि-रत्न-वासांसि भोगांश् च विपुलांस् तथा ।
N] दातव्यं श्रद्-दधानेन ह्य् अ-क्षयं स्वर्गम् इच्छता ॥२२[8]॥ [N
इमं च[9] वि-जयं चित्रं[10] रामस्याऽक्लिष्ट-कर्मणः ।
N] लोक-नाथस्य कृत्स्नस्य सर्वे प्राऽञ्जलयो नराः[11] ॥[12]२३॥[N
शृण्वन्ति लोके य[13] इदम्[13] आर्षं वाल्मीकिना कृतम् ।
N] रामस्य चरितं रम्यं नाऽस्ति तेषां परा-भवः ॥२४॥ [N
N] समा-गमं प्र-वासिनां[14] लभन्ते[15] चाऽपि बान्धवाः[16] ।
१६३] प्राऽर्थितांश् च वरान् सर्वान्[17] आप्नुवन्ति[17] यथेप्सितान् ॥२५॥[११२
श्रवणेन सुराः सर्वे प्रीयन्ते[18] पठनात्[18] तथा ।
वि-नायकाश् च शाम्यन्ति गृहे तिष्ठन्ति[19] यस्य[20] वै । [११३
N] आर्तवे च[21] स्त्रियः श्रुत्वा प्र-सूयन्ते सुताञ् छुभान् ।२६।[११४उ
पूजयंश् च पठंश् चेदं[22] शृण्वञ्[23] च श्रद्-दधन्[23] नरः ।
N] सर्व-पाप-विमुक्ताऽऽत्मा[24] दीर्घम् आयुर् अवाऽऽप्नुयात् ॥२७[25]॥[११५

---

१. ल१ ल२ ब प्र-तपस्विनी । २. भ-नास्ति । ३. रा२ फ भ-तथा । म-एवं ॥ ४. ल१ ल२ ब प्र-चापि । ५. रा२ भ-नास्ति । ६. ल१ ल२ ब प्र-०श्चापि वि० । फ म-शत्रूंश्चाप्यधितिष्ठति । ७. फ म-रामायणं ॥ ८. फ म भ-नास्ति ॥ ९. रा२ फ म भ-तु । १०. फ म-श्रुत्वा । ११. रा२ भ-नृपाः । १२. फ म-अत आरभ्य २७-शश्लोकं यावन्नास्ति ॥ १३. रा२ भ-ये चेदं ॥ १४. रा२ भ-वर्जं—०सिभ्यो । १५. रा१ ल१ ल२ ब अ-लभते । प्र-लभ्यते । १६. रा१ अ-मानुषः । ल१ ल२ ब अ प्र-०वैः । १७. रा२ भ-भोगान् प्राप्नु० । १८. रा२ भ-वर्जं—प्रसन्ना वरदास् । १९. प्र रा२ भ-तिष्ठति । २०. रा२ भ-यत्र । २१. रा१ ल१ ल२ ब अ प्र-वै ॥ २२. रा२ भ-वर्जं—चेमं । २३. रा१-श्रद्धान्वितो । २४. रा१ अ-०विशुद्धात्मा । रा२ भ-०विनिर्मुक्तो । २५. अतः परमधिकः पाठः— रा२-स्वर्णस्तेयी सुरापी च गोहंता ब्राह्मणस्य च ॥

श्लोक-पादं पठेद् यस् तु विष्णु-लोकं स गच्छति ।[1]
N] श्रद्-दधानस्[2] तु सततं भक्तश् चैव[2] वि-शेषतः ॥[3]२८॥ [N
प्रीयते भग-वान् विष्णुः स हि रामो महा-यशाः ।[4] [११७उ
N] आदि-देवो महा-बाहुर् हरिर् नारायणः प्र-भुः ।२९[3]॥[११८पू
द्वि-जश्[5] च[5] वेदान् समवाऽऽप्नुयात् सुखं
राज्यं च राजन्य-वरः सुखाऽऽगतम्[6] ।
धनानि वैश्यश् च सुखेन वै लभेत्
तथैव शूद्रोऽपि[7] परां च सद्-गतिम्[8] ॥३०[9]॥ [N
कुलस्य[10] वृद्धिं[10] धन-धान्य-सङ्कुलां[11]
स्त्रियश्[12] च पुत्रान् सुखम् एव चोत्-तमम् ।
रामस्य शृण्वंश् चरितं महाऽऽत्मनः
N] प्राऽऽप्नोति सर्वाम्[13] इह चाऽर्थ-सिद्धिम् ॥३१[14]॥[११९
आरोग्यम् आयुष्यम् इदं[15] यशस्यं
धन्यं महद् बुद्धि-करं सु-पुण्यम्[16] ।[17]
श्रोतव्यम् एतन् नि-यतं[18] हि[18] सद्भिर्
N] ऊर्जस्-करं[19] वृद्धि-करं च नित्यम्[19] ॥३२॥[१२०

---

१. रा२–एतद्दानात्प्रमुच्येत स याति वैष्णवं पदम् । भ–नास्ति । अतः परमधिकः पाठः—रा२–प्रौष्ठपद्यां पौर्णमास्यां मार्गे चैव विशेषतः । एतद्दानस्य महिमा न भूतो न भविष्यति ॥ २. म–०नस्य सततं मार्गे चैव । भ–०नस्य सततं तद्भक्तस्य । ३. फ म–नास्ति ॥ ४. रा२ भ–वर्जं—प्राप्नोति स हरेर्लोकं स महात्मा महायशाः ॥ ५. रा१ ल१ ल२ ब अ प्र–द्विजोऽपि । ६. भ–कुलाग० । ७. रा१ ल१ ल२ ब अ प्र–शूद्रस्तु । ८. रा१ ल१ ल२ ब अ प्र–संगतिम् । ९. फ म–वेदविच्च भवेद्विप्रः क्षत्रियो राज्यमाप्नुयात् । धनधान्यं तथा वैश्यः शूद्रश्च सुखमाप्नुयात् ॥ १०. रा२ भ–कुटुम्बवृ० । ११. भ–०संचयं । १२. भ–श्रियस् । १३. ल१ ल२ ब–धर्मान् । रा१ अ प्र रा२–चार्थान् । १४. फ म–नास्ति । अतः परमधिकः पाठः—रा१ ल१ ल२ ब अ प्र फ म–कुटुंबवृद्धिं धनधान्यसंचयं स्त्रियश्च मुख्याः सुखमुत्तमं सदा । लभेत लक्ष्मीं विपुलां नरोत्तमो यथाभिषेकं भुवि रामलक्ष्मणौ ॥ १५. भ–०ष्यमथो । १६. ल१ ल२ ब–अत आरभ्य 'वृद्धिकरं' इति यावन्नास्ति । १७. फ–आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिविवर्द्धनं च । म–पुण्यं पवित्रं सुखदं यशस्यं सौभ्रातृकं बुद्धिविपर्ययं च । १८. फ–नियतैश्च । भ–नियतैर्हि । १९. भ–यशस्करं वृ० । रा१ अ प्र रा२–०स्करं बुद्धि० । फ म–आख्यानमूर्जस्करवृद्धिकामैः ॥

ऋषि-कृतम्[1] इति दिव्यं ह्य्[2] आदि-काव्यं[2] त्रि-लोके ।
नि-गदितम् इदम् आर्षं[3] राम-वृत्तं पराऽर्ध्यम्[3] ।
रघु--कुल--वर--जन्म--ख्यापनं[4] पुण्य-कीर्तेः ।
N] दनु-तनय-निहन्तुर् लोक-नाथस्य विष्णोः ॥३३[5]॥[N

इत्यार्षे रामायणे महाकवि-वाल्मीकि-विरचिते[6] युद्ध-काण्डे[7] रामाऽभि-षेको नाम दशोत्तरशततमः सर्गः[7] ॥ ११० ॥[8]

समाप्तश्चाऽयं युद्ध-काण्डः ।

---

१. भ—मुनिकृतं । २. भ—ह्यादि का० । ३. भ—आद्यं पुण्यमत्यद्भुतं च । ४. भ—वर्ज—०न्मस्थापनं । ५. फ म—नास्ति ॥ ६. ल१ ल२ अ प्र फ—महर्षिवा० । ७. ल१ ल२ ब प्र—आभ्युदयिके रा० । ब प्र—लंकाकांडे रा० । फ—आभ्युदयिके पर्वणि रामाभिषेकः समाप्तः । म—चतुर्विंशतिसाहस्र्यां संहितायां सुंदरकांडे रामराज्यवर्णनं समाप्तं । भ—वाल्मीकीये लंकाकांडं समाप्तं ॥ ८. अतः परमादर्शग्रंथानां विशिष्टा उपसंहाराः—रा१ ल१ ल२ अ प्र रा२—कांडेऽस्मिन्परिसंख्यानं कथितं तत्त्वबुद्धिना । सर्गाणां द्वे शते चैव पंचसर्गसमन्विते ॥ अष्टौ श्लोकसहस्राणि पंचश्लोकशतानि च । वृत्तांताश्च समाख्याताः सप्ततिर्द्वे च संयुताः ॥ रा१—अत्रानुक्रमणी । समाप्तोयं युद्ध-कांडो लंकापर्वगर्भः । ओं पुराणं भारतं वापि रामायणमथापि वा । दत्त्वा यत्फलमाप्नोति पार्थ तत्केन वर्ण्यते । यत्फलं तीर्थयात्रायां यत्फलं यज्ञयाजिनाम् । कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम् ॥ तत्फलं समवाप्नोति पुस्तकैकप्रदानतः । वाजपेयसहस्रेण सम्यग्दत्तस्य यत्फलं तत्फलं समवाप्नोति विद्यादानान्न संशयं । धर्माऽधर्मौ न जानाति विद्याविरहितः पुमान् । तस्मात्सर्वधर्मार्थं विद्यादानरतो भवेत् ॥ त्रैलोक्यं चतुरो वर्णाश्चत्वारश्चाश्रमाः पृथक् । ब्रह्माद्या देवताः सर्वा विद्यादाने प्रतिष्ठिताः ॥ चतुर्युगान्न (?) स राजेन्द्र एकसप्ततिसंख्यया । कल्पं विष्णुपुरे तिष्ठन्पूज्यमानः सुरोत्तमैः ॥ क्षितिं चागम्य कल्पांते राजा भवति धार्मिकः । हस्त्यश्वरथसंयुक्तो दीर्घायुर्नीरुजो भवेत् ॥ पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् । इत्यार्षे रामायणे महाकवि-वाल्मीकिविरचिते युद्धकाण्डे समाप्तं संपूर्णः । श्रीरामाय नमः । ल१—समाप्तोऽयं लंकाकांडः—ओं शुभमस्तु सर्वजगताम् । रामः श्रीसीतारामाय सलक्ष्मणाय नमो नमः । भद्रं भद्रं भद्रं ॥ ल२—समाप्तश्चायं युद्धकांडः । ओं तत्सत् । ओं श्रीगणेशाय नमः । शुभं शुभं । पुराणं भारतं वापि रामायणमथापि वा दत्त्वा यत्फलमाप्नोति पार्थ तत्केन वर्ण्यते ॥ यत्फलं तीर्थयात्रायां यत्फलं यज्ञयाजिनाम् । कपिलानां सहस्रेण सम्यग्दत्तेन यत्फलम् । तत्फलं समवाप्नोति पुस्तकैकं न संशयः ॥ शुभमस्तु लेखकपाठकयोः शुभं शुभं । ओं तत्सत् ॥ ओं श्री संवत् ९ ज्येष्ठवदीसप्तम्यां शनिवासरे इदं रामायणपुस्तकं समाप्तं शुभं । समाप्तोयं लंकाकांडः । ओं शुभमस्तु ॥

अ–समाप्तो युद्धकांडः । शुभमस्तु । लिखितं मिश्र रामलाल वासी कोटका अलवर-मध्ये लीषी आश्रै दाउजीकै ॥ प्र–समाप्तोयं लंकाकांडः । शुभमस्तु लेखकपाठकयोः । रा₂–समाप्तोऽयं युद्धकांडः । खखांकनागेंदुमिते ( १८०० ) तु वत्सरे पौषसितस्यैक-तिथौ हि सूर्यजे । अलेषीदमीश्वर एतन्नाम्ना शिवापतिराधनतत्परेण ॥ श्रीरामायनमः । सीतारामचंद्राभ्यां नमो नमः । पुनरपि हनुमते नमः । श्रीराम । श्रीकोशलेंद्राधिपतये नमः । श्रीराम ॥ फ–शुभमस्तु । लंकाकांडः समाप्तः । फाल्गुणस्य पूर्णिमायां गुरुवासरे तथैव च लिखितमिदं पुस्तकं रघुनाथेन धीमता ॥ म–आभ्युदयिकं पर्व सुन्दरकांडं चेति । अतः परमुत्तरकांडस्तृतीयो भविष्यति । यस्यायमादि श्लोकः प्राप्त राज्यस्य रामस्य राक्षसानां वधे कृते । आजग्मुर्ऋषयः सर्वे राघवं प्रति वंदितुं ॥ अस्मिन् कांडेपि संख्यानं कथितं तत्वबुद्धिना । सर्गाणां द्वे शते चैव पंचसर्गसमन्विते ॥ अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ॥ श्लोकाश्च विंशतिः प्रोक्ताः पञ्चश्लोक-समन्विताः ॥ वृत्तान्ताश्च तथा ख्याताः सप्ततिर्द्वे च संयुताः । अत्रानुक्रमणी । वाल्मीकिना कारितमप्रमेयं रामायणं पापतरोः कुठारं । समग्रिमं सुन्दरकांडमे-तत्पठेद्यदीच्छेत्सुखस्वर्गसंपदं ॥ एवं ग्रन्थ संख्या ९५३५ आदर्शशेषान्मतिविभ्रमाद्वा यदर्थहीनं लिखितं मयात्र । तत्सर्वमार्यैः परिशोधनीयं प्रायेण मुह्यंति हि ये लिखंति ॥ युद्धकांड संपूर्ण शुभमस्तु । संवत् १८१० ॥ सावनमासे सुकल पंछ सप्तम्यां सोमवासरे शुभस्थान गीरी मध्ये महाराज श्री राउ खुस्याल सिंघस्य राज्यं । लिखितं वैरागी उधोदास जी ॥ यादिसं पुस्तकं दृष्ट्वा तादिसं लिष्यतो मया । जदिपि सुधमसुधं वा मम दोक्षो न दीयते । भ–शुभमस्तु ॥ सिद्धिरस्तु ॥ संवत् १७०३ समयैवैशा० ।